श्री

# सत्सिद्धांतमार्तंडाख्योयं

ग्रंथः



पंचनद्युपाव्हयविद्वद्रत्नघनश्यामभट्टात्मजेन

गट्टूजीतिनाम्ना प्रसिद्धेन गोवर्द्धनशर्म्मणा रचितो

गोस्वामि



श्रीजीवनजीमहाराजै

मुंबापुर्यां गणपतकृष्णाजीमुद्रायंत्रालये

इक्झिक्युटरसाख्याधिकारिनियुक्तेन डुमाल्लेइत्युपाभिख्येन

नारोकृष्णाभिख्येनांकयित्वा

प्रसिद्धिं नीतः

शाकाब्दाः १७९२.



# प्रस्तावना.



श्रीगोकुलेंदुभक्तिसक्तानामनवद्यविद्यासौजन्यादिसकलगुणगणमंडितानामिदानीं राजकृतातिसत्कारपूर्वकं बीकानेराख्यराजधान्यामंगीकृतनिवासानां गोस्वामिश्रीगोविंदलालजीशर्मणां महाराजानां पत्रादिद्वारा जयपुरे निर्वृत्तं सर्वं वृत्तांतमवगत्य स्वसन्मार्गसंरक्षणे द्विगुणितोत्साहैः श्रौतस्मार्तसद्धर्मोद्धरणधुरीणैर्मोमहथीपत्तनवास्तव्यैर्गोस्वामिश्रीजीवनजीमहाराजप्रभृतिभिर्जयपुराधीशवल्लभतां गतेन केनचिद्दंडिना सकलवैष्णवसंप्रदायानुपक्षेप्तुं कृतांश्चतुःषष्टिप्रश्नानानाय्य तदुत्तरवितरणआज्ञप्तो गोवर्द्धनशर्मा यथामतीमं प्रबंधं प्राणैषीत् ॥ अस्मिन् ग्रंथे प्रश्नोत्तरदानव्याजेन प्रायः सर्वेषां वैष्णवसंप्रदायानां साधारण्येन विशेषतः स्वसंप्रदायस्य चोपयुक्ताबह्वोविषयाः समूलवचनोपन्यासपुरःसरं संगृहीताः संतीति सर्वैरपि गुणैकग्राहिभिर्निर्मत्सरैर्विद्वदग्रेसरैरवश्यं दृश्यतयाऽयमाशास्यते ॥ अत्रच सर्वत्र स्थूलाक्षरैः प्रश्नसंख्यां निर्दिश्य तदधस्तात्तत्कृतप्रश्नवाक्यानि विलिख्य कचित्प्रश्नाशयाविकासोप्युत्तरात्प्रागेव स्वयं विहितोऽस्तीति वेदितव्यं ॥



# सत्सिद्धांतमार्तंडस्यानुक्रमणिकाप्रारभ्यते



| | पृ० | पं० |
|---|---|---|

पृ० पं०

श्री

# सत्सिद्धांत मार्तंडः



श्रीकृष्णायनमः॥ श्रीमद्वल्लभाचार्यश्रीविठ्ठलेश्वरचरणकमलेभ्योन मः॥ श्रीमद्बालमुकुंदमिंदुवदनं वृंदावनानंदिनं वंदे सुंदरमेकमेव न परान्निदामि वृंदारकान्॥ वर्ततामचिरंतनादिविपदोऽनंताअनंता- तले मंतुं ते गणयंतु माऽयमितरान्मूर्धा न नंतुं क्षमः॥ १॥ उद्दा- मदानवमदाऽनवद्यानदुःखव्यद्भूभारहारणविहारकृतावतारः॥ निष्प- क्षभक्तपरिरक्षणदत्तदीक्षचक्रायुधोऽवतु चिरान्मथुराधिपोऽस्मा- न्॥ २॥ सर्वाम्नायमयेन येन वहतांतःपुंडरीकेक्षणं हृत्पद्मानि विकासितानि सुपथा व्यक्तीकृताहर्पिताः॥ हंसालोचनरोधिनः प्रमथितावादाः प्रमादावहागोभिः कर्म सतां प्रवर्तितमसौ श्रीव- ल्लभाऽर्कोऽवतात्॥ ३॥ सुरसार्थसेवनीयं श्रुत्युचितगुणं परप्रभा- वलयं॥ सद्वल्लसूत्रकलितं स्वाचार्याणां वपुर्वचश्च भजे॥ ४॥ स- दालिसेवितौ वंदे परागमहितौ मृदू॥ अरविंदरुचां चोरौ चरणौ विठ्ठलेशितुः॥ ५॥ अथाऽस्ति भारतेऽस्मिन्वर्षे प्राच्योपांतप्रांते- षु ढुंढारोनामविषयविशेषः तस्मिंश्चाऽस्ति श्रीमद्रामचंद्रकुलोद्भव- तया पारंपरिकात्यंतवैष्णवैरुपासनानिर्भरवशात् सर्वत्र सत्कार्येषु जानकीजानिं पुरस्कुर्वद्भिः सकलकलानिधितया सार्थीकितरा- जभावैर्नृपालैः पाल्यमानं जयपुरं नाम नगरं॥ तत्रेदानीं प्रशा- स्ति परमधर्मधुरीणोराजराजपदभाग्रामसिंहोनाम तस्य च निक- टे अस्ति कश्चिल्लक्ष्मणगिरिर्नाम शैवलक्ष्मणाऽन्वितो दंडीति व्यप-

पराहतोत्तरौत्सुक्याः क्षणमेकं व्यमर्शयन् ॥१४॥ पदवाक्यप्रमाणज्ञ आचार्योजीवनाऽभिधः ॥ समाज्ञापयतिस्मेदं सभां तावत्पुरःस्थितं ॥१५॥ विचित्रसंस्कृताः प्रश्नाविचित्रार्थाइमे यतः ॥ विचार्यमाणाआचार्यमुखादर्हंति नोत्तरं ॥१६॥ वेतंडमंडलीगंडकंडूपांडित्यखंडिनः ॥ निपतंति नखानीव हरीणां गिरिकागणे ॥१७॥ तस्मादस्माकमाज्ञातस्त्वमेषांनातिविस्तरात् ॥ वितरोत्तरमाम्नायादिप्रमाणैः प्रपूरितं ॥ १८ ॥ प्रायः सर्वसुबोधार्थं नात्यंतं तर्ककर्कशं ॥ अन्वमोदंत ते संतइमां श्रीजीवनोदितिं ॥ १९ ॥ अथो गुणवतीमेतां हेतुमामोदसंपदां॥ सुमनोनंदितां मूर्ध्नां मालामिव बह्नहं ॥ २० ॥ विद्वन्मणेर्घनश्यामात्स्वतातात्लुब्धशास्त्रदृक्॥ गोवर्धनाभिधोलेखं यथामति समारभे ॥ २१ ॥ सत्पक्षपातिनोहंसा नूनं नालीकवल्लभाः ॥ गुणं गृह्णत मा दोषं नीरक्षीरविवेकिनः ॥ ॥२२॥ इति भूमिका॥अष्टौ प्राधान्यतः प्रश्नाः कृतास्तत्राऽप्यवांतराः ॥ अष्टाष्ट प्रत्येकमित्थं चतुःषष्टिरिहोदिताः ॥ २३ ॥ सर्वांस्तान् क्रमशः प्रश्नान् संख्यानिर्देशपूर्वकं॥ विलिख्यैकैकशस्तेषामत्रोत्तरमुदीर्यते ॥ २४ ॥ संक्षिप्योत्तरसारार्थः कथ्यते कारिकात्मना ॥ पूर्वं पुनः सएवार्थः सप्रमाणं प्रपंच्यते ॥ २५ ॥ अंतेऽतीतार्थनिष्कर्षः पद्यैः सर्वत्र दर्श्यते ॥ सर्वेपूत्तरभागेषु प्रायेणायं क्रमोऽत्रमे ॥ २६ ॥ क्वचित्प्रासंगिकोऽप्यर्थोऽनापृष्टोपि निरूपितः ॥ स्वसिद्धांतोपकाराय भाविप्रश्नापनुत्तये॥ २७॥ इति परिभाषा॥ किंचित्सविस्तरमिदं विफलं किल स्यादित्थं विधाय सहसैव धियं नहेयं॥ संतः परश्रमनिरर्थकताजिहीर्षावंतः कृपालवइहाऽस्ति ममार्थनेयं॥ २८ ॥ किंत्वेकवारमखिलं खलु नेत्रपात्रं का-

दिश्यमानः स्ववचसालंकलहंसतामुद्भाव्य प्रजाः सकलकलाः कुर्वन्जनविशेषः ॥ योहि ॥ पद्यं ॥ कालानुकूलं कलयन् किलाऽखिलं बलान्नृपालस्य मनोऽतिनिर्मलं ॥ सदानवश्रीसहितश्च शैशवाद्धर्मेशमार्गेष्वधिकारितां गतः॥६॥ग०॥ तेनाऽधुनाऽमंदनृपाश्रयात्तुंदिलमदेन स्वच्छंदतया स्वेच्छामात्रमूलांश्चतुःषष्टिप्रश्नान्विधाय वसुधावलये सर्वत्र तत्पत्रकं चतुरोऽपि प्रधानवैष्णवसांप्रदायिकान्प्रति प्रेषितमिति किंवदंती चिरेण संचरंती उत्तराशाभरणमितोभवितेतीव वैश्रवणोपकंठमाससादेहमोहमयीपुरवास्तव्यानां समप्रोदयगुणस्तव्यानां श्रीमदाचार्यवंशमौक्तिकानां गोस्वामिनां तेषुच॥ ( कुलकं ) श्रीवल्लभाचार्यकुलप्रदीपः समस्तदुर्वादतमःप्रमाथी ॥ सुवर्णसत्पात्रकृताऽऽश्रयोयोऽक्षयिष्णुसत्स्नेहरसेन पूर्णः ॥ ॥ ७ ॥ प्रज्वाल्य दारिद्र्यदशाममीषां प्रकाशमानः स्वकरप्रभावान् ॥ विवेकहेतुः सदसत्पथानां श्रीजीवनाख्योजयति प्रधानः ॥८ वेदांतसाहित्यमुखाः सुविद्याः श्रिया समं यत्र कृताधिवासाः ॥ सापत्न्यभावादिव दर्शयंति प्रतिक्षणं स्वस्वगुणातिरेकं ॥ ९ ॥ सर्वैदेव गुरोः कर्तुर्नित्यं सुरसभावनं ॥ जीवस्य जीवनस्याऽपि नतो भेदः परस्परं॥१०॥ अथ स्फुरद्व्याकृतिलब्धकीर्तेर्नव्याकृतिः श्लाघ्यतमाऽस्ति यस्य ॥ परः सवेदांतवनीमृगेंद्रः श्रीगोकुलाधीशइति प्रसिद्धः॥११॥ तथाऽपरःश्रीयदुनाथनामा सदीक्षितोदुर्जनशिक्षणेषु ॥ पात्रं यएकं परमं मतीनामन्येप्यनन्येश्वरभक्तिमंतः॥१२॥ तेचसर्वेऽपि ॥ तदा तदाकर्ण्यजनाननागतं कुतश्चिदानाय्य तदत्र पत्रकं॥श्रीजीवनेशोपवने समुत्सुकाः समेतमेतन्मिलिताव्यलोकयन् ॥१३॥ ततश्च ॥ निरीक्ष्यासंगततरान् प्रश्नांस्ते नितरामिमान्॥

पराहतोत्तरौत्सुक्याः क्षणमेकं व्यमर्शयन् ॥१४॥ पदवाक्यप्रमाणज्ञ आचार्योजीवनाऽभिधः ॥ समाज्ञापयतिस्मेदं सभां तावत्पुरःस्थितं ॥१५॥ विचित्रसंस्कृताः प्रश्नाविचित्रार्थाइमे यतः ॥ विचार्यमाणाआचार्यमुखादर्हंति नोत्तरं ॥१६॥ वेतंडमंडलीगंडकंडूपांडित्यखंडिनः ॥ निपतंति नखानैव हरीणां गिरिकागणे ॥१७॥ तस्मादस्माकमाज्ञातस्त्वमेषांनातिविस्तरात् ॥ वितरोत्तरमाम्नायादिप्रमाणैः प्रपूरितं ॥ १८ ॥ प्रायः सर्वसुबोधार्थं नात्यंतं तर्ककर्कशं ॥ अन्वमोदंत ते संतइमां श्रीजीवनोदितिं ॥ १९ ॥ अथो गुणवतीमेतां हेतुमामोदसंपदां ॥ सुमनोनंदितां मूर्ध्नि मालामिव वहन्नहं ॥ २० ॥ विद्वन्मणेर्घनश्यामात्स्वतातात्लुब्धशास्त्रदृक् ॥ गोवर्धनाभिधोलेखं यथामति समारभे ॥ २१ ॥ सत्पक्षपातिनोहंसा नूनं नालीकवल्लभाः ॥ गुणं गृह्णत मा दोषं नीरक्षीरविवेकिनः ॥ ॥२२॥ इति भूमिका ॥ अष्टौ प्राधान्यतः प्रश्नाः कृतास्तत्राऽप्यवांतराः ॥ अष्टाष्ट प्रत्येकमित्थं चतुःषष्टिरिहोदिताः ॥ २३ ॥ सर्वांस्तान् क्रमशः प्रश्नान् संख्यानिर्देशपूर्वकं ॥ विलिख्यैकैकशस्तेषामत्रोत्तरमुदीर्यते ॥ २४ ॥ संक्षिप्योत्तरसारार्थः कथ्यते कारिकात्मना ॥ पूर्वं पुनः सएवार्थः सप्रमाणं प्रपंच्यते ॥ २५ ॥ अंतेऽतीतार्थनिष्कर्षः पद्यैः सर्वत्र दर्श्यते ॥ सर्वेषूत्तरभागेषु प्रायेणायं क्रमोऽत्रमे ॥ २६ ॥ क्वचित्प्रासंगिकोऽप्यर्थोऽनापृष्टोपि निरूपितः ॥ स्वसिद्धांतोपकाराय भाविप्रश्नापनुत्तये ॥ २७ ॥ इति परिभाषा ॥ किंचित्सविस्तरमिदं विफलं किल स्यादित्थं विधाय सहसैव धियं नहेयं ॥ संतः परश्रमनिरर्थकताजिहीर्षावंतः कृपालवइहाऽस्ति ममार्थनेयं ॥ २८ ॥ कित्येकवारमखिलं खलु नेत्रपातं ...

यं विचार्यमथ योऽत्रगुणश्च दोषः ॥ व्यक्तीभविष्यति स दर्पणमर्पणीयं किं पाणिकंकणपरीक्षणकामनायां ॥ २९ ॥

---

## ॥ अथात्राष्टसु प्रधानप्रश्नेष्वाद्यः प्रश्नः ॥

भवत्संप्रदायः तत्र संप्रदायशब्दस्य कोर्थः ॥

### ॥ उत्तरं ॥

अथ श्रीहरिदासैर्यद्ब्रह्मरुद्रादिभिः सुरैः ॥ पुरा प्राडुष्कृतं वेदाद्वेदा भेदादिभेदतः ॥१॥ सम्यक्परंपराप्राप्तं हरिमंत्रादिकर्मकं ॥ सर्वप्रकर्षवद्दानं संप्रदायइहोच्यते ॥२॥ तथाहि ॥संप्रपूर्वाद्ददातेर्घञि आतोयुक्चिण्कृतोरिति युक्ति निष्पन्नः संप्रदायशब्दः ॥ तत्राऽस्य मंत्रादिकर्मकदानस्य समुपसर्गोक्तं सम्यक्त्वं नाम भगवदाज्ञया तद्भक्तैर्जीवेषु पूर्णकरुणार्णवांतःकरणैर्ब्रह्मरुद्रादिभिरनादिसिद्धवेदादुद्धृत्य प्रवर्त्तितत्वेन तच्छिष्यपरंपराप्राप्तत्वं ॥ संप्रदायानां ब्रह्मादिप्रवर्त्तितत्वं तु भवतामपि संमतं ॥ यथाबृहदारण्यकभाष्यारंभ आहुः शंकराचार्याः ॥ ॐनमोब्रह्मादिभ्योब्रह्मविद्यासंप्रदायकर्तृभ्योवंशर्षिभ्योनमोगुरुभ्यइति ॥ इदंच विशेषतः कियत्कालात्प्रवृत्तइत्यस्योत्तरे प्रपंचयिष्यते ॥ प्रकृष्टत्वं चाऽस्य दानस्य वेदार्थकर्मकत्वादेव ॥ तथाहि ॥ धर्मब्रह्मणी एव कांडभेदेन कृत्स्नस्य वेदस्य प्रेमयत्वादर्थः॥ धर्मब्रह्मप्रतिपादकापौरुषेयवाक्यस्यैव वेदत्वात् ॥ तत्र संप्रदायेषु धर्मप्रदानं तु शिष्येभ्यः शिक्षणोपदेशादिद्वारा ॥ अजिज्ञासितमद्धर्मोगुरुं मुनिमुपाव्रजेदित्यादिषु तदर्थं सांप्रदायिकगुरूपसत्तेर्विहितत्वात् ॥ धर्मदानस्य सर्वोत्कृष्टत्वं तु

तत्रतत्र श्रुतिस्मृतिपुराणेषु प्रसिद्धमेव ॥ अथ ब्रह्मप्रदानमपि तत्तन्महामंत्रोपदेशद्वारा मनननिदिध्यासनोपकृतश्रवणद्वाराच ॥ तत्र आथर्वणानां कैवल्योपनिषदि ॥ ॐ अथाश्वलायनोभगवंतं परमेष्ठिनं परिसमेत्योवाच अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढां यया ऽचिरात् सर्वपापं व्यपोह्य परात्परं पुरुषमुपैति विद्वान् ॥ तस्मै सहोवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवेहि ॥नकर्मणा नप्रजया धनेन त्यागेनैकेनाऽमृतत्वमानशुरिति ॥ गीतायां ॥ भक्त्या त्वनन्यया शक्यः ॥ भक्त्यालभ्यस्त्वनन्यया॥ श्रीभागवते॥ प्रीयते ऽमलया भक्त्या हरिरन्यद्विडंबनं ॥ भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् इत्यादिभिः श्रौतस्मार्तपौराणवचनैर्भगवतोभक्तिमदेकलभ्यत्वश्रावणात् भक्तत्वस्यच एवंधर्मैर्मनुष्याणामुद्धवात्मनिवेदिनां ॥ मयि संजायते भक्तिः ॥ भक्तिरुत्पद्यतेपुंसां ॥ विनाश्रीवैष्णवं धर्मं प्रसादं सद्गुरोर्विना ॥ विना श्रीवैष्णवीं दीक्षां कथं भागवतोभवेदित्यादिश्रीभागवतपाद्मादिवचनैर्वैष्णवमंत्रोपदेशैकसाध्यत्वकथनात् मंत्राणां च पाद्मगौतमीयतंत्रादिषु संप्रदायविहीनाये मंत्रास्ते निष्फलामता इति सर्वथा संप्रदायैकसाध्यग्रहणकत्ववचनात् मंत्रद्वारा ब्रह्मदानं संप्रदायेषु ॥ अथ विविधोपनिषत्सूत्रगीतादिश्रावणद्वारा ब्रह्मप्रदानमपि एतदधीनं ॥ तद्विज्ञानार्थं सगुरुमेवाभिगच्छेदिति नियमेन श्रवणस्य पारंपरिकगुरूपसत्त्येकसाध्यत्वश्रावणात् ॥ श्रवणस्य मनननिदिध्यासनोपकृतस्य ब्रह्मसाक्षात्कारहेतुत्वंतु सतां राजमार्गेषु अनेकोपनिषड्डिंडिभिः सहस्रशोघुष्यतइत्यलं ॥ एवं ब्रह्मसाक्षात्कारहेतुत्वादेव संप्रदायपदार्थस्य सर्वदानेभ्यः प्रकृष्टत्वं ॥

अतएव याज्ञवल्क्यःस्वस्मृतौ (अ० १) दानप्रकरणे विविधदानानि निरूप्य सर्वांते उपदेशादिद्वारकं सर्वफलभूतब्रह्मणः प्रदानं संप्रदायापरपर्यायं सर्वेभ्योप्यत्यंतगरीयस्त्वेनाह (श्लो० १५) सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः॥ तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतं॥ नचाऽत्र ब्रह्मशब्देन वेदमात्रं शंक्यं॥ब्रह्मशब्देन परमात्मनोऽपि स्मृतिषु व्यवह्रियमाणत्वात्॥ एतदग्रे श्राद्धप्रकरणे श्राद्धार्हब्राह्मणेषु वेदविद्भ्यः पार्थक्येन श्रोत्रियोब्रह्मविद्युवेति परमात्मज्ञानिनोगणनेन तद्वदत्रापि ब्रह्मशब्दस्य परमात्मपरत्वावगमाच्च ॥ अतएव द्वितीयाध्याये मनुरपि (श्लो०१४०) उपनीयतु यः शिष्यं वेदमध्यापयेद्द्विजइत्यादिना संपूर्णवेदवेदैकदेशाध्यापकादीन्निरूप्य सर्वांते (श्लो०४४) यआवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ॥ समाता सपिता ज्ञेयस्तं नद्रुह्येत्कदाचनेति सर्वाधिकतया प्रदातुरुत्कर्षमुखेन ब्रह्मदानस्यैव संप्रदायत्वनिर्वाहकं प्रकर्षं ब्रूते ॥कौथुमीयानां साऽहित्युपनिषदि तृतीयखंडे चेदं स्फुटं॥ तादिह याज्ञवल्क्यवचने ब्रह्मशब्देन परमात्मा॥ अथचास्तु वेदोपीह ब्रह्मशब्देन तत्रात्संगृहीतः॥ परमात्मदानस्याऽपि उपनिषदादिरूपवेदोपदेशद्वारकत्वात्॥ तथा संवर्तस्मृतावपि (श्लो०४३) दानंच विधिना देयमशुभांतकरं शुभमित्यादिना दाननिरूपणमुपक्रम्य कियंति दानानि निरूप्य (श्लो०५१) भूताभयप्रदानेन सर्वकामानवाप्नुयादित्यादिना सर्वेभ्योदानेभ्योऽस्य प्रकर्षउक्तः॥ अतिप्रशंसितमभयदानंचेदं ब्रह्मप्रापणरूपमेव॥ सर्वथा भयाभावस्य तदेकसाध्यत्वमिति श्रुतिसिद्धांतात्॥ अतएव तृतीयस्कंधसप्तमाध्याये (श्लो०४०) सर्ववेदाश्च यज्ञाश्च तपोदानानि चाऽन-

घ ॥ जीवाभयप्रदानस्य न कुर्वीरन् कलामपीति मैत्रेयंप्रति त-
त्त्वजिज्ञासोर्विदुरस्य वचने ब्रह्मप्राप्तिहेतुतत्त्वोपदेशद्वारकमेव जी-
वाभयप्रदानं श्रीधरस्वामी व्याचष्टे ॥ एवमेव वारिदस्तृप्तिमाप्नो-
ति सुखमक्षय्यमन्नदइत्यादिना दानेषु देयविशेषेण फलविशेषं व
दन्मनुः सर्वदानांते ब्रह्मदोब्रह्म शाश्वतं ॥ सर्वेषामेव दानानां ब्रह्म-
दानं विशिष्यतइति सर्वदानापेक्षया अस्य दानस्य संप्रदायत्वनि-
र्वाहकं प्रकर्षमाह ॥ तथा माधवकृतायां पराशरव्याख्यायां प्र-
थमाध्याये ( श्लो० ३७ व्याख्याने ) भविष्योत्तरे ॥ अर्त्तानां-
मन्नदानंचेत्याद्युपक्रम्य सुवर्णं याजकानांच विद्यांचैवोर्ध्वरेत-
सां ॥ कन्यां चैवानपत्यानां ददतां गतिरुत्तमेति ॥ विद्या ब्रह्म-
प्रापिका उपनिषन्महामंत्रादिरूपा ॥ ऊर्ध्वरेतसां ब्रह्मचारिप्रभृ-
तीनां त्रयाणां ॥ विद्याशब्दस्येदृशार्थकत्वंतु यदेवविद्ययाकरो-
तीत्यादिषु प्रसिद्धं ॥ नचैवं गृहस्थस्य संप्रदायानधिकारः शं-
क्यः ॥ ऊर्ध्वरेतस्तु विद्यादानस्य शीघ्रं मोक्षरूपफलसंपत्त्या दातुः
फलाधिक्यमित्येव वचनतात्पर्येण इतरत्र तद्दाननिषेधासिद्धेः ॥
सर्वाश्रमेष्वपि संप्रदायावश्यकत्वं च विस्तरात् किमाश्रमनिष्ठ-
इति प्रश्नस्योत्तरे निरूपयिष्यामः ॥ एवमार्त्तादिषु अन्नादिदान-
स्यापि फलाधिक्यमेव विवक्षितं ॥ अन्यथा अनार्त्तादिषु तद्दा-
ननिषेधप्रसंगात् ॥ एवमत्रिस्मृतावपि ( श्लो० ३१६ ) क्षौ-
मजं वाऽथ कार्पासमित्यादिना दानानि निरूप्य सर्वांते ( श्लो०
३२८ ) सर्वेषामेव दानानां विद्यादानं ततोऽधिकं ॥ पुत्रादिस्व-
जने दद्याद्विप्राय च विकैतवे ॥ सकामः स्वर्गमाप्नोति निष्कामो-
मोक्षमाप्नुयादिति फलोत्कर्षकथनेन ब्रह्मविद्यादानापरपर्यायस्य

संप्रदायस्य तत्त्वनिर्वाहकः सर्वापेक्षया प्रकर्षोदर्शितः॥ एतन्मूलभूतां श्रुतिमपि मधुविद्यांते छंदोगाआमनंति ( अ० ३खंड ११ ) तद्धैतद्ब्रह्माप्रजापतयउवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाचं इदंवाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्राणाय्यायवान्तेवासिने नान्यस्मै कस्मैचन यद्यप्यस्माइमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततोभूयइत्येतदेव ततोभूयइतीति ॥ प्राणाय्याय योग्याय ॥ अंतेवासिने शिष्याय ॥ इहापि संप्रदायपदघटकसमुपसर्गार्थनिर्वाहिकां परंपरामुक्त्वा प्रशब्दार्थभूतः सर्वदाननिरूपितः प्रकर्षोपि धनपूर्णसमुद्रांतपृथ्वीदानादपि भूयस्त्वकथनेन दर्शितः॥ बृहस्पतिस्मृतौ ॥ इष्ट्वा क्रतुशतं राजा समाप्तवरदक्षिणं ॥ भगवंतं गुरुश्रेष्ठं पर्यपच्छद्बृहस्पतिं ॥ भगवन् केन दानेन सर्वतः सुखमेधते ॥ यदक्षयं महार्थंच ततोब्रूहि महातपइत्यक्षय्यमहार्थदानविषयप्रश्ने सति एवमिंद्रेण पृष्टोऽसौ देवदेवपुरोहितः ॥ वाचस्पतिर्महाप्राज्ञोबृहस्पतिरुवाच हेत्युपक्रम्य भूम्यादिदानप्रशंसानंतरमुच्यते ॥ त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ॥ तारयंतीहदातारं जपवापनदोहनैरिति सरस्वतीदानमुक्तं॥ इदमेवोत्तममंत्रोत्तमशास्त्रविषयकं पारंपरिकं चेत्संप्रदायशब्दवाच्यं भवति॥ इदंचैतन्मूलभूतायां कौथमीयानां सांहित्योपनिषदि तृतीयचतुर्थखंडविचारेण स्फुटीभवति ॥ इदंवाक्यंच तत्रैव चतुर्थखंडे नरकादुद्धरंत्येते जपवापनदोहनादित्युत्तरार्द्धपाठभेदेन दृश्यते ॥ एवमितराण्यपि अर्थतः संप्रदायोत्कर्षबोधकानि वचनानि तत्रतत्र स्मृतिपुराणादिषु द्रष्टव्यानि ॥ तस्मात्परंपराप्राप्तत्वेन समीचीनं

भगवन्मंत्रादिकर्मकतया मोक्षसाधकत्वेन सर्वेभ्यः प्रकृष्टं उपदेश-रूपं सन्मंत्रादिदानमेव संप्रदायशब्दार्थः ॥ नन्वेवमपि नाऽस्य दानत्वं युक्तं स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोपपादनस्यैव दानत्वात् ॥ इहच शिष्येभ्यउपदिष्टे मंत्रादौ गुरोः स्वत्वनिवृत्त्यभावात् तन्निवृत्त्यंगीकारेच स्वयं तज्जपकरणस्य शिष्यांतराय तद्दानस्य चाऽसंभवापत्तेः ॥ मंत्रादेः सुवर्णादिवद्धस्ते दातुमशक्यत्वाच्चेति चेन्मैवं ॥ धर्मशास्त्रेहि स्वकपोलकल्पितयुक्तिं विहाय व्यवस्थामात्रं शास्त्रानुसारेणैव कर्त्तुमुचितं शास्त्रं चास्य स्पष्टमेव दानत्वं निरूपयति पूर्वोपन्यस्तवचनेभ्यः ॥ अतोऽत्र गुरोर्मंत्रादिषु स्वस्वत्वनिवृत्त्यभावेऽपि तदुपदेशद्वारा परस्वत्वोपपादनरूपमेव दानमित्यादरणीयं ॥ अतएवाचाराध्याये दानप्रकरणे ( श्लो० १५ ) सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतइत्यस्य व्याख्याने विज्ञानेश्वरः ॥ अत्रच ब्रह्मदाने परस्वत्वापादनमात्रं दानं ॥ स्वत्वनिवृत्तेः कर्त्तुमशक्यत्वादित्याह ॥ यत्तु शंकितं हस्ते दातुमशक्यत्वान्नास्य दानत्वं युक्तमिति तत्राप्युत्तरं तत्रैव ( श्लो० १४ ) यानं वृक्षं प्रियं शय्यामित्यस्य व्याख्याने प्रियपदेन धर्मस्यापि प्रदेयत्वं व्याख्यायाह सएव ॥ नचहिरण्यादिवद्धस्ते दातुमशक्यत्वात् धर्मस्य दानासंभवः ॥ भूमिदानादावपि समानत्वात् स्मृत्यंतरेऽपि धर्मदानश्रवणादिति ॥ अतः पारंपरिकत्वात् सम्यङ्मोक्षदातृत्वात् प्रकृष्टं मंत्रादिदानमेव संप्रदायशब्दस्यार्थइत्यत्र नकोऽपि शंकावकाशः ॥ नन्वेवमपि योगबलात्समीचीनप्रकृष्टदानत्वमेव संप्रदायशब्दशक्यतावच्छेदकमित्यवच्छेदकावच्छेदेनैव तादृशशब्दप्रवृ-

त्तिसंभवेऽपि, पारंपरिकत्वावच्छिन्नमंत्राद्युपदेशत्वमेव तदवच्छेदक-मित्यवच्छेदकसंकोचस्तादृशशक्तिग्राहकमानशून्यत्वादयुक्तइति-चेन्मैवं ॥ (कां० २ व० २ श्लो० ७) अथाऽऽम्नायः संप्रदा-यइत्यमरोक्तेरेव शक्तिग्राहकत्वात् ॥ अत्रैव रामाश्रम्यमरविवे-कादिषु तट्टीकासु द्वे परंपरागतगुरुसदुपदेशस्येति व्याख्यानस्या-ऽपि तथात्वाच्च ॥ अत्र परंपराऽऽगतत्वं समुपसर्गार्थः ॥सत्त्वंच प्रो-पसर्गार्थइतितु दर्शितंप्राक् ॥ शक्तिग्राहकाणिहि व्याकरणोपमा-नकोशाप्तवाक्यव्यवहारवाक्यशेषविवृत्यादीनि ॥ तत्रव्याकरण-मुपन्यस्तं कोशश्चोपन्यस्तः ॥ आप्तवाक्यानिच मुंडकभाष्यभावा-र्थदीपिकादिषु विद्यासंप्रदायकर्तृत्वपारंपर्यलक्षणसंबंधमादावेवा-हेति संप्रदायानुरोधेन पौर्वापर्यानुसारतइत्यादीनि शंकराचार्य श्रीधरस्वाम्यादिवचनरूपाणि प्रसिद्धान्येव ॥ व्यवहारश्च अयं विष्णुस्वामिसंप्रदायोऽयं रामानुजसंप्रदायइत्यादिरूपः सर्वजनी नएव ॥ उक्तस्थलव्याख्यासुधाप्रभृतिषु अनेकग्रंथविवृतिषु चेदं स्फुटमेवेति नास्यशक्तिग्रहेसंशयलेशोपि ॥ तस्माद्योगरूढोऽयं संज्ञाशब्दः ॥ संप्रदायशब्दस्य उक्तार्थानुरोधेनभावार्थघञंतत्वं तु व्याख्यासुधादिषु भानुदीक्षितादयोबहवोव्याचख्युः ॥ अन्येतु संप्रदीयतइति व्युत्पत्तिं वदंतः कर्मणि घञंद्योतयंति॥परेच करण-व्युत्पत्तिमाहुः ॥ सतुल्घुटावाधात् दुर्लभोवाकुलकाद्यगतिकगति साध्यश्चेत्युपेक्षंते प्राञ्चः॥किंच तथासति संप्रदीयमानस्य मंत्रादेरेव संप्रदायत्वं सिद्धमिति संप्रदायविहीनाये मंत्रास्ते निष्फलामताइ त्यादिविरोधः॥ ब्रह्मरुद्राद्याचार्याणां तत्तत्संप्रदायकर्तृत्वव्यवहार-विरोधश्च ॥ क्वचिदुपदेशविषयवस्तुन्यपि संप्रदायपदव्यवहारस्तु

कर्मतया शक्यसंबंधाल्लाक्षणिकः ॥ त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वतीत्यादिवत् ॥ तस्मादुक्तएव संप्रदायशब्दार्थः सर्वसंमतः सम्यगिति भाति ॥ करणव्युत्पत्त्यादिप्रत्याख्याने तु नाऽस्माकं निर्बंधः ॥ नन्वेवमपि संप्रदायशब्दार्थकथनस्य प्रक्रांतत्वात् कारिकायां हरिमंत्रादिकर्मकमितिकथनमयुक्तं ॥ शैवादिसंप्रदायेष्वपि संप्रदायशब्दव्यवहारात् तत्रतत्त्वाभावाच्चेति चेन्नैषदोषः ॥ प्रश्ने भवत्संप्रदायस्तत्र संप्रदायशब्दस्य कोर्थइति भवत्संप्रदायपदोपात्तं वैष्णवसंप्रदायमेव तत्रेति सर्वनाम्ना परामृश्य तदर्थस्यैवानुयुक्तत्वेन तल्लक्षणस्यैव वक्तव्यत्वात् ॥ अपरेतु ॥ शैवादिमतेषु संप्रदायशब्द औपचारिकएव ॥ परंपरया वैष्णवसंप्रदायप्रवेशहेतुत्वात् ॥ यथाह ब्राह्मे समाप्तिदशायां मायानुकीर्तनाध्याये व्यासः ॥ अन्यदेवेषु या भक्तिः पुरुषस्येहजायते ॥ कर्मणा मनसा वाचा तद्गतेनांतरात्मना ॥ तेन तस्य भवेद्भक्तिर्यजने मुनिसत्तमाः ॥ सकरोति ततोविप्राभक्तिं चाग्नेः समाहितः ॥ तुष्टे हुताशने तस्य भक्तिर्भवति भास्करे ॥ पूजां करोति सततमादित्यस्य ततोद्विजाः ॥ प्रसन्ने भास्करे तस्य भक्तिर्भवति तत्त्वतः॥सेवां करोति विधिवत् सतु शंभोः प्रयत्नतः ॥ तुष्टे त्रिलोचने तस्य भक्तिर्भवति केशवे ॥ संपूज्य तं जगन्नाथं वासुदेवाख्यमव्ययं ॥ ततोभुक्तिं च मुक्तिंच समाप्नोति द्विजोत्तमाइति ॥ तस्मान्मुख्यतया संप्रदायशब्दप्रवृत्तिर्वैष्णवसंप्रदायेष्वेवेत्यप्याहुः ॥ तस्मात् ॥ सम्यक् प्रकटं दानं स मंत्रादेः श्रुतिमूलकं ॥ इत्यर्थः संप्रदायेति शब्दस्योक्तः पुरातनैः ॥ १ ॥

## ॥ अथास्यैव प्रश्नस्यावांतरप्रश्नाअष्टौ तत्राद्यःप्रश्नः ॥

कतिभेदाः ॥ १ ॥

## ॥ उत्तरं ॥

किमयं संप्रदायत्वव्याप्यविभाजकतावच्छेदकधर्मविशिष्टविशेष्य-कसंख्याप्रकारकः प्रश्नः आहोस्विद्वैष्णवसंप्रदायत्वव्याप्यविभाज-कतावच्छेदकधर्मवद्विशेष्यकसंख्याप्रकारकः॥तत्राद्ये वैष्णवहैरण्य-गर्भशैवप्रभृतयोऽनंताएव ते शास्त्रे लोकेच तत्रतत्र प्रसिद्धाः ॥ अ थद्वितीयश्चेदुच्यते ॥ चतुर्भुजभुजच्छायाव्यवसायात्सुनिर्भयाः ॥ संप्रदायास्तु चत्वारोमहामायाभयापहाः ॥१॥ रुद्रेण भगवत्पत्न्या-ब्रह्मणा सनकादिभिः एतैश्चतुर्भिराचार्यैर्जगदुद्धारकारणैः ॥ २ ॥ समुद्रशायिनः स्वांतःशायितातिदयांबुधेः ॥ प्रभोः सकाशात् सं-प्राप्य प्रकाशं गमिताः पुरा ॥ ३ ॥ द्वापरांते हरीच्छातोमतैः का-पालिकादिभिः ॥ बौद्धैश्चाब्रह्मवादैश्च देवैस्तेशिथिलीकृताः ॥ ४ ॥ श्रीविष्णुस्वामिभीरामानुजैर्माध्वाभिधैस्तदा ॥ निंबार्कैश्चावतीर्णै-स्ते भूयएवसमार्थिताः ॥ ५ ॥ एते प्राधान्यतः प्रोक्ता अन्ये तदुप-जीविनः ॥ प्रकाशानंदमुख्यास्त्वनंताःसंतोजयंति ते ॥ ६ ॥ तथा-हि ॥ श्रीमद्विष्णुभक्तिप्रवर्तकानामनादिसिद्धानां सत्संप्रदायानां चतुष्ट्वमेवाऽभिप्रेत्य प्राह तृतीयस्कंधे द्वात्रिंशाध्याये भगवान् क-पिलः ( श्लो० ३७ ) प्रावोचं भक्तियोगस्य लक्षणं ते चतुर्विध-मिति ॥ इदंच चातुर्विध्यं संप्रदायशब्दवाच्यविष्णुस्वाम्यादिमा-र्गाभिप्रायादेव ॥ ( अ० २९ श्लो० ७ ) भक्तियोगोबहुविधोमा-र्गैर्भामिनि भाव्यतइति पूर्ववाक्यात् ॥ तत्रैवाग्रे अभिसंधाय यो-

हिंसामित्यादिश्लोकत्रयेण द्वैतप्रतिपादकसंप्रदायत्रयस्य मद्गुण-श्रुतिमात्रेणेत्यादिना शुद्धमद्वैतं निरूपयतोभक्तिसंप्रदायस्य च संक्षिप्य स्पष्टतया दर्शितत्वात् पुरतोपि तदवगमाच्च॥मार्गशब्दस्य संप्रदायपर्यायत्वं तु तवाप्यभिमतं ॥ भवत्संप्रदाये इतिवक्तव्ये भवन्मार्गे तिलकं कीदृशमिति कथनात् ॥ एवमेव श्रुतिसिद्धानां सांप्रदायिकधर्माणां चातुर्विध्यं देशधर्मकुलधर्माद्यपेक्षया ॥ तेषामेव प्राथमिकत्वेन प्राधान्यं च स्मर्यते महाभारते आनुशासनिके पर्वणि उमामहेश्वरसंवादे ॥ धर्मोश्चतुर्विधालोके श्रुतिभेदमुखोद्भवाः ॥ देशधर्माश्च दृश्यंते कुलधर्मास्तथैवच ॥ जातिधर्मावयोधर्मागुणधर्माश्च शोभने ॥ शरीरकालधर्माश्च आपद्धर्मास्तथैवच ॥ एतद्धर्मस्य मान्यत्वं क्रियते लोकवासिभिरिति ॥ अन्येत्विमानि पाद्मवचनान्यप्युदाहरंति॥ संप्रदायविहीनाये मंत्रास्ते निष्फलामताः ॥ अतः कलौ भविष्यंति चत्वारः संप्रदायिनः ॥ श्रीब्रह्मरुद्रसनकवैष्णवाः क्षितिपावनाः ॥ चत्वारस्ते कलौभाव्याः संप्रदायप्रवर्तकाः ॥ रामानुजानां सरणी रमातोगौरीपतेर्विष्णुमतानुगानां ॥ निंबार्कगानां सनकादितश्च माध्वानुगानां परमेष्ठितः सेति ॥ तएवच पुनः शिथिलीभूताः संतः श्रीमद्वल्लभाचार्यश्रीलक्ष्मणाचार्यपूर्णप्रज्ञाचार्यप्रभृतिभिर्भगवदाज्ञया प्रादुर्भूतैः स्वाचार्यविष्णुस्वामिनाथयामुनाक्षोभ्यतीर्थाद्युक्तदिशा समर्थिताः ॥ ईदृशानामाचार्याणां प्रादुर्भावकालतयैव कलेः सभाजनपूर्वकं करभाजनेन मुनिना सामान्यतोवैष्णवाचार्याविर्भावो निरूपितएकादशस्कंधे ॥ ( अ० ५ श्लो० ३६ ) कलिं सभाजयंत्यार्यागुणज्ञाः सारभागिनः ॥ यत्र संकीर्तनेनैव सर्वः स्वार्थोऽभि-

लभ्यते ॥ नह्यतः परमोलाभोदेहिनां भ्राम्यतामिह ॥ यतोविंदेत परमां शांति नश्यति संस्तृतिः ॥ कृतादिषु प्रजाराजन् कलाविच्छंति संभवं ॥ कलौ खलु भविष्यंति नारायणपरायणाः ॥ क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ कावेरी च महापुण्या प्रतीची च महानदी ॥ ये पिबंति जलं तासां मनुजामनुजेश्वर ॥ प्रायोभक्ताभविष्यंति वासुदेवे ऽमलाशयाः ॥ देवर्षिभूताप्तनृणां पितॄणां न किंकरोनायमृणी च राजन् ॥ सर्वात्मना यः शरणं शरण्यं गतोमुकुंदं परिहृत्य कर्तमिति॥इदंच भाविवृत्तांतकथनं वैष्णवाचार्यप्रादुर्भावविविधतच्छिष्यसंभवाभिप्रायेणैव ॥ वैष्णवाचार्याणां प्राशयः सर्वेषामपि ·आंध्रकर्णाटकद्रविडप्रांतेष्वेव प्रादुर्भूतत्वात् ॥ इहच द्रविडेषुच भूरिशइति कथनात् ॥ अतएवाचार्योपदेशैकसाध्याभगवच्छरणागतिरपि जीवानां स्वफलविशिष्टा ऽत्रानुपदमेवोक्ता ॥ इदंच भाविवृत्तांतकथनं विस्तराद्याज्ञवल्क्यादिवचनोपन्यासपुरःसरं पुरस्तात्प्रपंचयिष्यामइति शुभं ॥ सामान्यतोनारायणपरायणाइत्युक्त्या चैतन्यप्रकाशानंदादयउपसंप्रदायाअपि पुनर्भावित्वेन संगृहीतावेदितव्याइति सर्वक्षेमं ॥ तस्मात् ॥ सत्संप्रदायस्य भिदाः प्रसिद्धाश्चतस्रएताश्चतुरब्धिकांच्यां ॥ दातुं समर्थाश्चतुरः पुमर्थान् यासु प्रमाणं श्रुतयश्चतस्रः ॥ १ ॥

## ॥ अथद्वितीयोवांतरःप्रश्नः ॥ २ ॥

॥ कस्मैप्रयोजनाय ॥

### ॥ उत्तरं ॥

ब्रह्मज्ञानं श्रवणतः सर्वकर्मसमृद्धता ॥ अंते मुक्तिर्हरेर्भक्तिः फल-

साधनरूपिणी ॥ १ ॥ अनन्यसाध्यं मोक्षस्य द्वारमेकं गतार्गलं ॥ यत्तस्य वैष्णवत्वस्योद्भवोमंत्रोपदेशतः ॥ २ ॥ आचार्यशासनाद्वेदसर्वधर्मानुपप्लवः ॥ ततश्चजगतोरक्षा समयस्य स्वधर्मतः ॥ ३ ॥ एवमादीनि मुख्यानि संप्रदायकृतौ हरेः ॥ प्रयोजनानि दृश्यंते गौणानि तु सहस्रशः ॥ ४ ॥ तथाहि ॥ संप्रदायोहि परंपराप्राप्ताचार्यसदुपदेशइत्युक्तं प्राक् ॥ सएवहि मीमांसाद्वयानुसारात्संदेहवारणपुरःसरं जीवानां समयवेदार्थावगमेन धर्मब्रह्मणोर्ज्ञानं जनयति ॥ अन्यथा अविद्यायामंतरे वर्त्तमानाः स्वयं धीराः पंडितंमन्यमानाः ॥ जंघन्यमानाः परियंति मूढाअन्धेनैव नीयमानायथान्धाः ॥ अविद्यायां बहुधा वर्तमानावयं कृतार्थाइत्यभिमन्यंति वालाइति मुंडकश्रुत्युक्तमेव सर्वत्र प्रसज्येत ॥ अतस्तद्वारणाय तत्रैवोपनिषद्यनुपदं परमानुग्राहिणी श्रुतिर्ज्ञानस्य संप्रदायेतरासाध्यत्वबोधनपुरःसरं सांप्रदायिकगुरूपसत्तिं विधत्ते ॥ तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं ॥ तस्मै सविद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ॥ येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतोब्रह्मविद्यामिति ॥ प्रोवाचेति लकारव्यत्ययः ॥ व्यत्ययमिच्छति शास्त्रकृदेषामित्युक्तेः ॥ व्यत्ययोवहुलमित्यनुशासनाच्च ॥ प्रब्रूयादित्यर्थः ॥ शंकराचार्यैरपि तथैव भाष्ये व्याख्यातं ॥ एवमेव गुरूपसत्तिः श्रीभागवतेऽप्युच्यते ॥ (स्कंध ११ अ० ३ श्लो० २१) तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेयउत्तमं ॥ शाब्दे परेच निष्णातं ब्रह्मण्युपरमाश्रयमित्यादि ॥ सारसंग्रहभगवत्तत्त्वविवेकादिषु च हारीते ॥ आचार्यं संश्रयेत्पूर्वम-

---

१ आत्मनः. २ शमा.

नवद्यं वैष्णवंद्विजः ॥ शुद्धसत्वगुणोपेतं नवेज्याकर्मकारकं ॥ सत्सं-प्रदायसंयुक्तं मंत्ररत्नार्थकोविदं ॥ ज्ञानवैराग्यसंपन्नं वेदवेदांगपा-रगं ॥ शासितारं सदाचारैः सर्वधर्मविदांवरं ॥ महाभागवतं विप्रं सदाचारनिषेविणं ॥ आलोक्य सर्वशास्त्राणि पुराणानि च वैष्ण-वः ॥ तदर्थमाचरेद्यस्तु सआचार्यइतीरितइति ॥ अत्रोक्तश्रुतौ गु-रुमेवेत्यवधारणेन संप्रदायेतरासाध्यत्वं विज्ञानस्य नियम्यते ॥ ते-न पुस्तकलेखदर्शनादिना न ब्रह्मनिष्ठोत्पत्तिः किंतु सांप्रदायिक-गुरूपसत्तिपूर्वकं तन्मुखाच्छ्रवणादिनैवेति निश्चीयते ॥ नन्वत्र गु-रूपसत्तिमात्रमुच्यते नतु सांप्रदायिकगुरूपसत्तिरिति कथं तस्य सांप्रदायिकत्वमेवाऽऽहत्य प्रतिपत्तव्यमितिचेन्न ॥ उक्तरीत्या ब्रह्म-निष्ठायागुरूपसत्त्यतिरिक्तसाधनाऽसाध्यत्वनिश्चयादुपसत्तव्यस्य गुरोश्च अरुणैकहायनीन्यायेन श्रोत्रियत्वब्रह्मनिष्ठत्ववैशिष्ट्यस्या-वश्यमपेक्षितत्वाच्च ॥ तदर्थं गुरोरपि तादृशगुरूपसत्तिर्भूतपूर्वाध्यव-सीयते ॥ पुनस्तद्गुरोरपि तथात्वप्रयोजिका सा भूतपूर्वाऽवगम्यत-इति परमात्मपर्यंतपरंपराप्राप्ता उपसत्तव्यस्य सुखेन सांप्रदायिक-त्वगुणवैशिष्ट्यनिश्चयात् ॥ ननु श्रोत्रियब्रह्मनिष्ठत्वाद्यनेकगुणवि-धाने वाक्यभेदः स्यात् ॥ गुरुमभिगच्छेत् यमभिगच्छेत्सश्रोत्रियो-ब्रह्मनिष्ठश्चापेक्षितइति ॥ सचासंगतः ॥ अन्यथा चित्रयायजेते-त्यादौ-यजेतेत्यनेनाग्नीषोमीयं पशुमालभेतेति विहिताग्नीषोमीय-पशुयागानुवादमंगीकृत्य तत्र चित्रत्वस्त्रीत्वरूपगुणद्वयविधानस्य वक्तुं शक्यत्वेन चित्रापदस्य दध्यादिविचित्रद्रव्यषट्कसंसृष्टप्रा-जापत्ययागनामधेयत्वोद्घोषोमीमांसकानां विरुध्येत ॥ अतोय-

१ ब्रह्मनिष्ठार्थे.

था तत्र वाक्यभेदभयात् बहुगुणविधानं नांगीकृतं तथाऽत्राऽप्य-स्तुग्रहंसंमार्ष्टीत्यादावेकत्वसंख्यायाइव विशेषणयोरविवक्षितत्व-मिति किंतु तत्र यथा पात्रत्वेन सजातीयेषु सोमयागांगेषु चमसे-षु संमार्गवारणायोद्देश्यगतं ग्रहत्वमात्रं विवक्षितं तथाऽत्र गुरुत्व-मेवेतिचेदुच्यते ॥ तत्र पशुयागस्य प्राप्तत्वेन बहुगुणविधानमयो-ग्यं॥अप्राप्तस्थलेतु यदाग्नेयोष्टाकपालोऽमावास्यायां च पूर्णमा-स्यां चाच्युतोभवतीत्यादावनेकगुणविधानस्य स्वीकृतत्वात् ॥ त-थाऽत्राप्युपसत्तेरप्राप्तत्वेन तत्रैकहेलया ऽनेकगुणविधानमविरुद्धं॥ उक्तंच ॥ प्राप्ते कर्मणि नानेकोविधातुं शक्यते गुणः ॥ अप्राप्ते तु विधीयंते बहवोऽप्येकयत्नतइति ॥ यत्तूक्तं ग्रहगतसंख्यावद्विशेष-णयोरविवक्षितत्वमिति॥ तत्रापि ब्रूमः ॥ तत्रहि ग्रहमिति द्वितीया-श्रुत्येप्सिततमत्वेन उद्देश्यत्वात् प्रयोजनवत्वाच्च तस्य प्राधान्यम-ध्यवसीयते ॥ संमार्गस्य तु गुणत्वमिति प्रतिप्रधानं गुणावृत्तिरिति न्यायेन प्रतिग्रहं संमार्गप्राप्त्या कति ग्रहाः संमार्जनीयाइति बुभु-त्सायाअनुदयाच्छ्रूयमाणमप्येकत्वं न विवक्ष्यते इहतु यथा पशु-नायजेतेत्यत्र तृतीयाविभक्त्याऽभिहितयोर्लिंगसंख्ययोः करणका-रकशक्त्यात्मसात्कृतत्वेन कारकाणां च क्रियान्वयित्वनियमेन यागान्वयित्वे प्राप्ते प्रथमं तयोः प्रातिपदिकार्थपशुद्रव्येणान्वयम-नंगीकृत्य द्रव्यवद्गुणत्वेन क्रियायामन्वये कृते पश्चात् परस्परान्व-यः ॥ यागांगत्वेन यः पशुर्विहितः सपुमानेकश्चेति ॥ यथावा अ-रुणया पिंगाक्ष्यैकहायन्या गवा सोमं क्रीणातीत्यत्र कारकाणां सर्वत्र क्रियान्वयनियमात् करणविभक्त्या आरुण्यपिंगाक्षत्वादी-

नां चतुर्णां परस्परमनन्वितानामेव सोमक्रयणांगत्वेनाऽन्वये सति आरुण्यादेर्गुणस्यामूर्तस्य स्वतः क्रियासाधनत्वायोगात् क्रियासाधनगोपरिच्छेदकत्वेन पश्चात्परस्परं पार्ष्णिकान्वयः ॥ या एकहायनी गौः सा पिंगाक्षी अरुणेतीत्युक्तं परिभाषाकृता ॥ एवं प्रकृतेऽपि कर्मकारकविशिष्टानां गुरुश्रोत्रियब्रह्मनिष्ठप्रातिपदिकार्थानां अन्योन्यमनन्वितानामेव ईप्सिततमतया स्वातंत्र्येण अभिगमनक्रियायामन्वये पश्चाद्योगुरुः सः श्रोत्रियोयः श्रोत्रियः स ब्रह्मनिष्ठइति पार्ष्णिकान्वयइति सर्वमनवद्यं ॥ तस्मादुक्तरीत्या सांप्रदायिकस्यैवोपसत्तिरिह ब्रह्मविज्ञानफलकतया[1] विधीयते ॥ नचेयमुपनायकं प्रत्युपनयनकालिक्येवोपसत्तिरिति वाच्यं ॥ इतःपूर्वं परीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमायादिति उपसत्तिप्रयोजकजिज्ञासाजनकनिर्वेदकरणस्य ऐहिकामुष्मिककर्मचितत्व परीक्षाप्रयुक्तस्य विधित्सितोपसत्त्यंगतया विधानात् ॥ स्थानप्रमाणेन सइति पूर्वपरामर्शकसर्वनामबोधितैकवाक्यतया चोपसत्तेस्तदुत्तरकालिकत्वनिश्चयात् ॥ एवं निर्वेदकरणं च माणवकस्याशक्यमिति विधिव्यापारकौंठ्येन तथाकल्पनाऽयोगात् ॥ नह्यशक्ये शास्त्रं प्रवर्ततइति मीमांसककोलाहलात् ॥ नच प्रोवाचतां तत्त्वतोब्रह्मविद्यामिति प्रवचनविधिनियुक्तेनाचार्येण माणवकस्य प्रवर्तनसंभवान्नानुपपत्तिरितिवाच्यं ॥ चित्तप्रशांत्यादिपूर्विकायां सम्यगुपसत्तौ सत्यां प्रवचनमात्रविधानेन उपसत्तेः पूर्वमाचार्यस्य प्रवर्त्तनाऽसंभवात् ॥ नाऽपृष्टः कंचनब्रूयान्नचान्यायेनपृच्छतइति मनुना तन्निषेधाच्च ॥ अतः कृतं प्रसक्तानुप्रसक्त्या ॥ तस्मा-

[1] फलाश्रयतया.

ह्रह्मविज्ञानार्थं सांप्रदायिकाचार्योपसत्तिरावश्यक्येव ॥ श्वेतके-
तुविद्यायामप्येवं भगवन्मार्गप्रदर्शकाचार्यवतएव भगवज्ज्ञानं श्रू-
यते ॥ ( खंड १४ ) यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमा-
नीय तं ततोऽतिजने विसृजेत्सयथाऽत्रप्राङ्वाउदङ्वाऽधराङ्वाप्रध्मा-
यीताभिनद्धाक्षआनीतोभिनद्धाक्षोविसृष्टः तस्य यथाभिनहनं प्र-
मुच्य प्रब्रूयादेतां दिशं गंधाराएतां दिशं व्रजेति सग्रामाद्ग्रा-
मं पृच्छन् पंडितोमेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाचार्य्य
वान् पुरुषोवेद तस्य तावदेवचिरं यावन्नविमोक्ष्येऽथसंपत्स्यइती-
ति ॥ अत्राचार्यवतएव मोक्षस्यातिसान्निध्यमाम्नातं ॥ किंच सां-
प्रदायिकाचार्यसत्वे देवेभ्योऽधिगतब्रह्मविद्यस्यापि पुनराचार्यो-
पदेशमंतरा विद्यायानमोक्षादिरूपसाधुतमफलप्रापकत्वं ॥ यथा-
सत्यकामब्राह्मणे बलीवर्दादिसकाशाच्छ्रुतब्रह्मविद्यस्यापि गुरुगवी-
श्चारयित्वा पुनर्गृहमागतस्य सत्यकामस्य स्वाचार्येण सह संवा-
दः श्रूयते ॥ ( खंड ९ ) प्रापहाचार्यकुलं तमाचार्य्योऽभ्युवादस-
त्यकामइति भगवइतिह प्रतिशुश्राव ॥ ब्रह्मविदिववैसोम्यभासि
कोनुत्वानुशशासेत्यन्येमनुष्येभ्यइतिह प्रतिजज्ञे भगवांस्त्वेवमेका
मेब्रूयात् ॥ श्रुतंह्येवमेभगवद्दृशेभ्यआचार्याद्धैवविद्याविदितासा-
धिष्ठंप्रापयतीति॥नचोक्तसामश्रुतिष्वाचार्यपदेन वैष्णवसांप्रदायि-
कस्य मंत्रोपदेष्ट्राचार्यस्य ग्रहणं न शक्यं कर्तुं तेष्वाचार्यशब्दप्र-
वृत्तेः शास्त्रेष्वदृष्टत्वादिति शंक्यं ॥ उक्तहारीतवचनेषु आलोक्य-
सर्वशास्त्राणि पुराणानि च वैष्णवः ॥ तदर्थमाचरेद्यस्तु सआचार्य-
इतीरितइति ॥ सारसंग्रहेचपाद्मे ॥ यस्तु मंत्रद्वयं सम्यगध्यापय
ति वैष्णवः ॥ सआचार्यस्तु विज्ञेयोभवबंधविनाशकइति ॥ एव-

मादिवचनेषु तत्प्रवृत्तेः सुप्रसिद्धत्वात् ॥ एवंमानवधर्मशास्त्रेऽपि द्वितीयाध्याये (श्लो० १६०.) यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा ॥ सवै सर्वमवाप्नोति वेदांतोपगतं फलमित्यादिना पर-द्रोहराहित्यापमानसहनादीन् वेदांताधिकारजनकधर्मान्निरूप्य तादृशस्य (श्लो० १६४)-गुरौ वसन् संचिनुयाद्ब्रह्माधिगमिकं तपइति ब्रह्माधिगमोविधीयते॥अथ कथं ब्रह्माधिगमः स्यादित्या-कांक्षायां वेदद्वारा मुख्यतया तद्रहस्य भूतोपनिषद्द्वारा चेत्याशये-नोच्यते (१६५) तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ॥ वेदः कृत्स्नोऽधिगंतव्यः सरहस्योद्विजन्मनेति ॥ अत्र रहस्यमुपनिषदः प्राधान्यख्यापनाय पृथङ्निर्देशइति कुल्लूकभट्टः ॥ अयंचोपनि-षदभ्यास स्तत्संशयवारकोत्तरमीमांसाभाष्यकारसांप्रदायिकाचा-र्यमंतरा न संभवतीति तदुपसत्तिरेवाभिप्रेता॥ किंच तत्र (श्लो० २२५) आचार्योब्रह्मणोमूर्त्तिः पिता मूर्त्तिः प्रजापतेरित्यादिना भगवत्स्वरूपत्वादिधर्मैः प्रशंसितात् सांप्रदायिकाचार्यात् मोक्ष-साधकभगवद्धर्मग्रहणस्यावश्यकतां कैमुतिकेन बोधयितुमुच्यते॥ (श्लो० २३८) श्रद्दधानः शुभां विद्यामाददीतावरादपि ॥ अंत्या-दपि परं धर्ममिति ॥ इह परं धर्मं मोक्षोपायमाददीतेति व्याख्यानं॥ नचात्राचार्यशब्देनाध्यापकएवेतिवाच्यं ॥ मनुनैव (अध्याय ४ श्लो० १६५) आचार्यं च प्रवक्तारं पितरं मातरं गुरुमित्य ध्यापकाद्भेदेन निर्देशात् ॥ तस्मात्संप्रदायैकसाध्यब्रह्मज्ञानस्य संभव आद्यं संप्रदायप्रयोजनं ॥ तच्च ज्ञानमावश्यकं ॥ बुध्यादि शोधकत्वात् सर्वकर्मसमृद्धिजनकत्वात् मोक्षफलकत्वाच्च ॥ यथोक्तं स्वमेश्वरभाष्ये चायुर्वेदे अष्टांगहृदये (अ० १ श्लो०

२३) धीर्धैर्यात्मादिविज्ञानं मनोदोषौषधं परमिति ॥ मनुरपि (अध्याय ५ श्लो० १०५) ज्ञानं तपोऽग्निराहारोमृन्मनोवार्य्युपांजनमित्यादिना शुद्धिहेतूनुपक्रम्य (श्लोक १०९) विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यतीत्याह ॥ किंच सर्वथा पापविशोधकत्वेन प्रसिद्धानि प्रायश्चित्तान्यपि किंचिदात्मज्ञानसहकृतान्येव स्मृतिषूच्यंते अतः किंवाच्यं साक्षाज्ज्ञानस्य विशोधकत्वे ॥ यथाह प्रायश्चित्तानि निरूपयन्नेकादशाध्यायेमनुः ॥ (श्लोक ८६) अतोन्यतममास्थाय विधिं विप्रः समाहितः ॥ ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तयेति ॥ गीतायामपि ॥ ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुनेति ॥ दक्षस्मृतौ ॥ सार्वभौतिकमन्नाद्यं कर्त्तव्यं गृहमेधिना ॥ ज्ञानवद्भ्यः प्रदातव्यमन्यथा नरकं व्रजेत् ॥ शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः ॥ शौचाचारविहीनस्य समस्तानिष्फलाः क्रियाः ॥ शौचं च द्विविधं प्रोक्तं बाह्यमाभ्यंतरं तथा ॥ मृज्जलाभ्यां स्मृतं बाह्यं भावशुध्या तथांऽऽतरं ॥ अशौचं तु परं बाह्यं तस्मादाभ्यंतरं परं॥ उभयेन शुचिर्यस्तु सशुचिर्नेतरः शुचिरिति ॥ अत्रशौचस्यात्यावश्यकत्वमुक्त्वा तस्य द्वैविध्यमभिधाय तत्र ज्ञानसाध्यस्य निरतिशयभावशुद्धिलक्षणशौचस्यैव बाह्यशौचोपजीव्यत्वाभिधानात् ज्ञानस्यैव परमविशोधकत्वमत्यावश्यकत्वं च सिध्यति ॥ निरतिशयांतःशुद्धेर्ज्ञानसाध्यत्वं तु बुद्धिर्ज्ञानेन शुध्यतीत्यादौस्फुटं ॥ अथ ज्ञानस्याऽसुलभत्वेन तदनुद्भवेपि तदर्थं यतमानस्य साधनदशायां वर्त्तमानस्यापि संप्रदायानुसाराद्वेदरहस्यभूतोपनिषदादिग्रंथार्थं विजानतः संप्रदायशिक्षितधर्मानाचरतः सद्यः शौ-

चमुच्यते ॥ तत्रैव सूतकमुपक्रम्य ॥ यंथार्थं योविजानाति वेदमंगैःसमन्वितं ॥ सकल्पं सरहस्यं च क्रियावांश्चेन्नसूतकमिति ॥ अतः सद्यः शौचवंतोभवामेति सेव्यः संप्रदायः ॥ एवं ज्ञानोद्भवार्थमिंद्रियनिग्रहादीनि तत्साधनान्याचरतोऽपि परमपाविञ्यं बोधयति स्वस्मृतौ वृद्धशातातपः (श्लो० ६०) निगृहीतेंद्रियग्रामोयत्र तत्र वसेन्नरः ॥ तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्कराणिचेति ॥ तथाचोक्तरीत्या ज्ञानस्य संप्रदायैकसाध्यत्वात् ज्ञानं तदभ्यासं वा विना कथमपि विशुध्यनुदयात् सर्वेषां मूलभूतस्य शौचस्यापि ज्ञानद्वारा तत्साधनद्वारा वा संपादनं संप्रदायप्रयोजनं ॥ एवं बुध्यादिशोधकत्वं ज्ञानस्य व्याख्यातं ॥ अपिच ॥ ब्रह्मज्ञानात्समृद्धानि विफलानि तदंतरा ॥ नित्यनैमित्तिकादीनि सर्वकर्माणि शास्त्रतः ॥ अतः समृद्धिकरणं सर्वावश्यककर्मणाम् ॥ वैफल्यवारणं ज्ञानात्संप्रदायप्रयोजनम् ॥ तत्र विद्यया कर्मसमृद्धिं सामगाः पठंति ॥ यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवतीति ॥ विद्या च संप्रदायलभ्यमैद्वतज्ञानं ॥ विद्याऽऽत्मनि भिदाबाधइत्येकादशस्कंधवाक्यात् ॥ तयैव कर्माणिसमृध्यंते ॥ ज्ञानसंपादकाभगवन्मंत्रसद्ग्रंथादयोऽपि विद्याशब्देनोच्यंते ॥ आथर्वणैर्द्वे विद्ये वेदितव्ये इतिहस्म यद्ब्रह्मविदोवदंति पराचैवापराचेत्युपक्रम्य अथ परा यया तदक्षरमधिगम्यतइत्याम्नानात् ॥ शुक्लयजुःशाखीयानां मैत्रेयीब्राह्मणेऽपि (खं० १०) श्लोकाःसूत्राण्यनुव्याख्यानानि व्याख्यानानीति ब्रह्मसूत्रभाष्यादीनामलौकिकत्वश्रावणाच्च ॥ अतोऽपरोक्षज्ञानसंपत्तिपर्यंतं तत्संपादकसद्ग्रंथाभ्यासेन च ता-

नि समृध्यंते ॥ अन्यच्च स्मृतिष्वपि संध्यावंदनादिनित्यकर्माणि ज्ञानसहकृतान्येवोच्यंते ॥ यथाह माधवीये ॥ ( अध्याय १ श्लोक ॥ ३९ ) व्याख्यायां अत्रिः ॥ संध्यात्रयं तु कर्त्तव्यं द्विजेनात्मविदा सदा ॥ उभे संध्ये तु कर्त्तव्ये ब्राह्मणैश्च गृहेष्वपीति ॥ किंच तत्रैव होमांतमाह्निकं पिरूप्याह माधवः ॥ एतच्च ज्ञात्वैवानुष्ठेयं ॥ अन्यथा दोषस्य श्रवणादिति ॥ दोषंत्वाहांगिराः ॥ स्वाभिप्रायकृतं कर्म यत्किंचिज्ज्ञानवर्जितं ॥ क्रीडाकर्मैव बालानां तत्सर्वं निष्प्रयोजनमिति ॥ चतुर्विंशतिमतेऽपि ॥ हतं ज्ञानं क्रियाहीनं हतास्त्वज्ञानिनः क्रियाः ॥ अपश्यन्नंधको दग्धः पश्यन्नपि च पंगुलइति ॥ अतोज्ञानाभावे कर्मदोषः स्यात् कर्मदोषे च निंद्यत्वमेव ॥ यथाह याज्ञवल्क्यः ॥ कर्मदुष्टाश्च निंदिताइति॥अतः स्वैकसाध्यपरोक्षापरोक्षज्ञानद्वारा सर्वसत्कर्मणां समृद्धिकरणं तद्वैय्यर्थ्यवारणं च सर्वेषामप्यास्तिकानामत्यावश्यकं संप्रदायप्रयोजनम् ॥ किंच पात्रत्वादिसंपत्तयोऽपि संप्रदायात् ॥ तथाहि माधवीयएव ( अ० १ श्लो० ३७ ) व्याख्यायां यमः ॥ विद्यायुक्तोधर्मशीलः प्रशांतः क्षांतोदांतः सत्यवादी कृतज्ञः ॥ स्वाध्यायवान् धृतिमान् गोशरण्योदाता यज्वा ब्राह्मणः पात्रमाहुरिति ॥ अत्रविद्यायुक्तः संप्रदायैकसाध्यब्रह्मविद्यायुक्तः ॥ स्वाध्यायस्य पृथङ्निर्देशात् ॥ तादृशस्यैवच पात्रतोक्ता ॥ अपात्राय च दानं तस्मिन्नेव प्रकरणे बहु निषिद्धं ॥ तस्मात् सात्विकदानादिसंपत्तिरपि संप्रदायप्रयोजनं ॥ अपात्राय दाननिषेधस्तु स्मर्यतेऽत्रिणा ॥ नास्ति दानात्परं मित्रमिहलोके परत्रच ॥ अपात्रेषुतु यद्दत्तं दहत्यासप्तमंकुलं ॥

हव्यं देवा न गृह्णंति कव्यं तु पितरस्तथेति ॥ बृहस्पतिस्मृतौ ॥ आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु ॥ विनश्येत्पात्रदौर्बल्यात्तच्च पात्रं विनश्यति ॥ एवं गां च हिरण्यं च वस्त्रमन्नं महीं तिलान् ॥ अविद्वान् प्रतिगृह्णाति भस्मीभवति काष्ठवदिति प्रतिग्रहीतुरपि असंपादितब्रह्मविद्यस्य प्रतिग्रहे दोषउक्तः ॥ अतोविद्यावते एव दाने दातुः फलं तस्यैव प्रतिग्रहाधिकारश्चेति निश्चीयते ॥ पुनः पराशरव्याख्यायामेव यमः ॥ सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ॥ प्राधीते शतसाहस्रमनंतं वेदपारगे इति ॥ प्राधीतः प्रारब्धाध्ययनइत्यर्थः ॥ अत्रवेदपारगे दानस्यानंतफलत्वमुक्तं॥वेदपारगस्तु संप्रदायलब्धजगदाविर्भावतिरोभावादिसर्वतत्त्वविज्ञानवानेव॥यथाह संवर्त्तः॥उत्पत्तिप्रलयौ चैव भूतानामागतिं गतिं ॥ वेत्ति विद्यामविद्यां च सभवेद्वेदपारगइति॥तथा बृहस्पतिस्मृतावपि भूम्यादिदानानि निरूप्य॥श्रोत्रियाय कुलीनाय दरिद्राय च वासव ॥ संतुष्टाय विनीताय सर्वभूतहितायच॥वेदाभ्यासस्तपोज्ञानमिंद्रियाणां च संयमः ॥ ईदृशाय सुरश्रेष्ठ यद्दत्तं हि तदक्षयमिति ॥ अतोऽनेकेषां ब्रह्मविद्याभ्यासेन पात्रत्वसिध्या लोकेसर्वजगन्मित्रभूतदानव्यवहारस्यानुच्छेदः समग्रविद्यासंपत्त्या तत्फलानंत्यंच संप्रदायप्रयोजनमिति किमाम्रेडितेन ॥ अपिच॥यमस्मृतौ॥रोगी हीनातिरिक्तांगः पिशुनोमत्सरी तथा॥दुर्भगोहि तथा षंढः पाखंडोवेदनिंदकः ॥ हैतुकः शूद्रयाजी च अयाज्यानां च याजकः ॥ नित्यं प्रतिग्रहे लुब्धोयाचकोविषयात्मकइत्यादीनुक्त्वा एते श्राद्धे च दाने च वर्जनीयाः प्रयत्नतइत्यादिना ते निंदिताः॥मनुरपि॥ये स्तेनपतितक्लीबायेच नास्तिकवृत्तयः॥

तान्हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीदिति ॥ अतउपदेशकगुर्वभावात् पाखंडत्वस्य हैतुकत्वस्य च प्राप्त्या निर्यामा भवंतु जना इत्यपि संप्रदायप्रयोजनं ॥ पुनर्यमस्मृतावेवानुपदं ॥ अथ चेन्मंत्रविद्युक्तोवैष्णवोज्ञानवान्हिसः ॥ हव्यकव्ये नियोक्तव्यइति प्राह स्वयंयमः ॥ तस्मात्सर्वप्रयत्नेन श्राद्धे यज्ञे च कर्मणि ॥ अदुष्यश्चैव विप्रेंद्रोयोजनीयः प्रयत्नतः ॥ तथैव मंत्रविद्युक्तः शारीरैः पंक्तिदूषणैः ॥ अवर्ज्यं तं यमः प्राह पंक्तिपावनएवसः ॥ निर्मत्सरः सदाचारः श्रोत्रियोब्रह्मविद्युवा ॥ विद्याविनयसंपन्नः पात्रभूतोद्विजोत्तमः ॥ वेदांतविज्ज्येष्ठसामाप्यलुब्धोवेदतत्परः ॥ योजनीयः प्रयत्नेन दैवे पित्र्ये च कर्मणि ॥ यद्दत्तं च हुतं तस्मैस्त्वनंतं नात्र संशयइति ॥ अतोवैष्णवत्वावाप्त्या वेदांतबोधावाप्त्या ततः फलदशायां ब्रह्मज्ञतयाच श्राद्धयज्ञादिसर्वकर्मार्हत्वसिद्धिर्जनानां ॥ तेन तत्तत्कर्मणामाभासत्वनिवृत्त्या तत्तत्फलसंपत्तिश्चेत्यपि संप्रदायप्रयोजनं ॥ वैष्णवत्वं तु विष्णुमंत्रोपदेशैकसाध्यं उपदेशश्च संप्रदायैकसाध्यइति निरूपयिष्यामः ॥ निर्णयसिंधौ श्राद्धप्रकरणे, तृतीयपरिच्छेदे ॥ शतायुर्वेदार्थविदौ प्रवक्ता स्याद्ब्रह्मचारी च तथाग्निचिच्च ॥ सीदद्वृत्तिः सत्यवाक् पूरुषैः स्वैर्मातापित्रोः पंचभिः ख्याततवंशः ॥ पत्नीयुक्तोज्येष्ठसामा पुराणवेत्ता पुत्री चेतिहासेष्वभिज्ञः ॥ योगी भिक्षुः सामगोब्रह्मवेत्ता पंचाग्निश्च श्रोत्रियस्तत्सुतोवा ॥ शंभुध्यायी श्रीशपादाब्जसेवी पांथश्चैते तूत्तमाः संप्रदिष्टाइति ॥ अत्रापिवेदार्थविदोब्रह्मविदोवैष्णवाश्च उत्तमत्वेनोक्ताः ॥ अन्यच्च माधवीये आचारकांडे हारीतः ॥ वेदांगानि धर्मोध्यात्मविद्यं विज्ञानं

स्मृतिश्चेति षड्विधं श्रुतमिति॥ श्रुतवंतोभवामेति सेव्यः संप्रदायः॥ अपिच ॥ अत्रिस्मृतौ ॥ ( श्लो० २० ) अव्रताश्चानधीयानायत्र भैक्ष्यचराद्विजाः ॥ तं ग्रामं दंडयेद्राजा चौरभुक्तप्रदंडवत् ॥ विद्वद्भोज्यमविद्वांसोयेषु राष्ट्रेषु भुंजते ॥ तेऽप्यनावृष्टिमिच्छंति महद्वाजायते भयम् ॥ ब्राह्मणान्वेदविदुषः सर्वशास्त्रविशारदान् ॥ तत्वं वर्णयतोमान्यान् यत्र तान् पूजयेन्नृपइति ॥ अविद्वांसोमाभूमेति सेव्यः संप्रदायः ॥ किंच संप्रदायानुसरणात् स्वाचार्य सूत्रभाष्यादिदर्शितदिशा वेदार्थज्ञाने सति अत्रिस्मृतौ तृतीयाध्याये ॥ यथाऽतिप्रबलोवन्हिर्दहत्यार्द्रानपि द्रुमान्॥ तथा दहति वेदज्ञः कर्मजं दोपमात्मनइति ॥ अतः सर्वदोषविनिर्मोचकस्य वेदार्थज्ञानस्य सिद्धिरपि संप्रदायप्रयोजनम् ॥ अन्यथाऽनुपपत्तेर्व्युत्पादयिष्यमाणत्वात् ॥ पुनरत्रिस्मृतौ पंचमाध्याये ॥ न स्त्री दुष्यति चारेण न विप्रोवेदपारगः ॥ नापोमूत्रपुरीषेण नाग्निर्दहनकर्मणेति ॥ वेदपारगत्वं च संप्रदायैकसाध्यादाविर्भावतिरोभावविद्याऽविद्यादिज्ञानादेव भवति ॥ उक्तसंवर्तवचनात् ॥ किमनेन प्रासंगिकप्रयोजनांतरकथनेन॥तस्मात्कर्मसमृध्यर्थमपि ज्ञानमावश्यकं ज्ञानार्थं च संप्रदायआवश्यकः ॥ किंच संप्रदायं विना संन्यासानुपपत्तिः स्यात् ॥ पारंपरिकसद्गुरूपसत्तिजनितवेदांतविज्ञानेन सुनिश्चितब्रह्मस्वरूपसाधनफलादिसर्वपदार्थस्य संजातात्मज्ञानस्य संछिन्नसंगस्यैव तत्राधिकारश्रवणात् ॥ तथाच ॥ तैत्तिरीये नारायणोपनिषदि श्रूयते ॥ वेदांतविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः ॥ ते ब्रह्मलोकेतु परांतकाले परामृतात्परिमुच्यंति सर्वेइति ॥ वाजसनेयिब्राह्मणेऽपि ॥ ( पृ० ५९० ) एवंवैतमात्मानं

विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरंतीति ॥ मनुरपि ॥ (अ॰ ६ श्लो॰ ३३) चतुर्थमायुषोभागं त्यक्त्वा संगान्परिव्रजेदिति॥ याज्ञवल्क्यो पि तृतीयाध्याये संन्यासप्रकरणे ॥ (श्लो॰ ६) संनिरुध्येंद्रियग्रामं रागद्वेषौ प्रहायतु॥भयं हृत्वा च भूतानाममृती भवति द्विजइति अत्र तैत्तिरीयश्रुतौ संन्यासस्य वेदांतविज्ञानहेतुकार्थसुनिश्चयावश्यपूर्वकत्वं पाठक्रमादेवावगम्यते ॥ पंचमस्य प्रथमेपादे ॥ अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यादौ श्रुतेरिव समिधोयजति तनूनपातंयजतीत्यादिषु पाठस्यापि क्रमनियामकत्वस्य जैमिनिना स्वीकृतत्वात् ॥ वाजसनेयिश्रुतौ तु क्त्वाश्रुत्यैवात्मवेदनस्य पूर्वकालिकत्वं द्योत्यते ॥ एवं मानवयाज्ञवल्क्यादिष्वपीति कृतमस्मिन्सर्वसंमते विषये बहुप्रपंचनेन ॥ एतच्च वेदांतविज्ञानार्थसुनिश्चयादिकं नहि सांप्रदायिकगुरुमंतरा संभवतीति तु पूर्वमेवावोचाम ॥ संन्यासार्थं ज्ञानस्यावश्यकत्वं तु अन्यत्राप्यनेकत्रोच्यते॥ यथा पराशरमाधवीये द्वितीयाध्याये स्मृत्यंतरे ॥ ऋणत्रयमपाकृत्य निर्ममोनिरहंकृतिः ॥ ब्राह्मणः क्षत्रियोवाथ वैश्योवा प्रव्रजेद्गृहादिति ॥ कूर्मपुराणेपि ॥ अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितोभवेत् ॥ योगाभ्यासरतः शांतोब्रह्मविद्यापरायणइति ॥ बौधायनः ॥ एतद्गृहीत्वा निष्क्रम्य स्वग्रामं बांधवांस्त्यजेत् ॥ निस्पृहोन्यत्र गत्वैव व्रतैः स्वैर्वर्त्तयेत्सदेति ॥ पुनः कूर्मपुराणे ॥ प्राजापत्यां निरूप्येष्टिमाग्नेयीमथवा पुनः ॥ अंतः पक्वकषायोसौ ब्रह्माश्रममुपाश्रयेदिति ॥ इदं निर्ममत्वादिकं संप्रदायैकसाध्यं ॥ एवं संप्रदायमंतरा विद्वत्संन्यासानुपपत्तिर्व्याख्याता ॥ विविदिषुसं-

न्यासेतु ज्ञानार्थं संप्रदायस्यावश्यमुपयोगोस्त्येवेति तु किमाश्रमनिष्ठइत्यस्योत्तरे प्रपंचयिष्यामः ॥ अतएव संप्रदायासेवनादनुत्पन्नज्ञानस्य यतेः फलमाम्नायते आचारमाधवे ॥ काष्ठदंडोधृतोयेन सर्वाशी ज्ञानवर्जितः ॥ सयाति नरकान् घोरान् महारौरवसंज्ञितानिति ॥ इतराण्यप्येतदनुकूलानि कालिकापुराणमनुदक्षादिवचनानि बहूनि किमाश्रमनिष्ठइत्यत्र व्याख्यास्यामः ॥ तथाचातः सर्वकर्मसन्न्यासिहेतोः संन्यासाद्युपजीव्यस्य ज्ञानस्य श्रवणादिद्वाराउपसन्नपुरुषे संपत्तिः संप्रदायप्रयोजनम् ॥ अतएव मनुनापिस्मर्यते षष्ठे ॥(श्लो०८०) यदा भावेन भवति सर्वभावेषु निस्पृहः॥तदा सुखमवाप्नोति प्रेत्यचेहच शाश्वतम् ॥अनेन विधिना सर्वास्त्यक्त्वा संगान् शनैःशनैः ॥ सर्वद्वंद्वविनिर्मुक्तोब्रह्मण्येवावतिष्ठते ॥ ध्यानिकं सर्वमेवेतत् यदेतदभिशब्दितं ॥ नह्यनध्यात्मवित् कश्चित्क्रियाफलमुपाश्नुते ॥ अधियज्ञं ब्रह्म जपेदाधिदैविकमेवच ॥ आध्यात्मिकं च सततं वेदांताभिहितं चयत् ॥ इदं शरणमज्ञानामिदमेव विजानतां ॥ इदमन्विच्छतां स्वर्गमिदमानंत्यमिच्छताम् ॥ अनेन क्रमयोगेन परिव्रजति योद्विजः ॥ सविधूयेहपाप्मानं परं ब्रह्माधिगच्छतीति॥ अत्र ध्यानिकंसर्वमेवैतदित्यत्र इतः। पूर्ववाक्येषुचान्वयव्यतिरेकाभ्यां नारायणपरोध्याता ततस्तुतंपश्यतेनिष्कलंध्यायमानइत्याद्युक्तध्यानिकसाध्यत्वं मोक्षस्योद्घुष्य वदता मनुनापि सांप्रदायिकगुरूपसत्तिरंगीकृतैव ॥ अन्यथाश्रवणासंभवात् ॥ श्रवणमननोपजीव्यत्वाच्च निदिध्यासनस्य अत्रच ध्यानशब्देन तस्यैव संग्रहात् ॥ स्वातंत्र्येण साधनत्वेतु श्रोतव्यमंतव्यश्रुतिविरोधात् ॥ तथा अनेकधा ब्रह्मणो-

जप्यत्वविधानेन इदं शरणमज्ञानामित्यनेन तदेवाविदुषांविदुषां चशरणमिति ब्रह्मणएव शरणत्वभावनविधानेनच सर्वेषां भगवदेकशरणत्वबोधकजप्यसन्मंत्रोपदेष्टृवैष्णवसंप्रदायानुसार्येव ज्ञानं मोक्षसाधकत्वेन मनोरभिमतमिति निश्चीयते ॥ अधियज्ञादिस्वरूपंतु गीतायां स्फुटं ॥ नचैवमपि मनुना स्फुटतया संप्रदायपदोपादानपुरःसरं तदुपसत्तेरनुक्तत्वान्नेदं तत्संमतमितिवाच्यं॥श्रुतिसिद्धत्वादुक्तरीत्या स्फुटं तत्सिद्धेः ॥ अन्यथा श्रुतिविरोधोबलिष्ठः ॥ यथाह ॥ प्रथमस्य तृतीयपादे जैमिनिः ( सू० ३ ) विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति ॥ अतएव यद्यपि मनुना ( श्लो० ३४ ) आश्रमादाश्रमं गच्छेदिति पक्षएव पष्ठे स्फुटमुक्तः तथापि जाबालादिश्रुत्युक्तत्वात् यदहरेवविरजेदितिपक्षोपि ( मनु अ० ६ श्लो० ३८ ) ब्राह्मणः प्रव्रजेद्गृहादिति तथा ( श्लो० ३९ ) प्रव्रजत्यभयंगृहात् ॥ तस्यतेजोमयालोकाइति तथा ( श्लो० ४१ ) अगारादभिनिष्क्रांतइति गृहागारपदोपादानात् व्याख्याकृता कुल्लूकभट्टेन स्फुटीकृतः॥एवं पूर्वोक्तमपि प्राक्तनैः ॥ एवमेव याज्ञवल्क्योपि तृतीयाध्याये अध्यात्मप्रकरणे पुनःपुनरवतीर्य सूत्रभाष्यादिकरणादनादिसिद्धवेदांतसंप्रदायप्रवर्त्तकान् महर्षीन् संप्रदायाविच्छेदाय निरूप्य तद्वारा श्रवणादिक माह ॥ ( श्लो० १३६ ) सत्त्वाश्रमैर्विजिज्ञास्यः समस्तैरेवमेवतु॥ द्रष्टव्यस्त्वथ मंतव्यः श्रोतव्यश्च द्विजातिभिरिति ॥ एवं संप्रदायोपसत्तिपूर्वकश्रवणादिनोत्पन्नज्ञानानां अर्चिरादिगत्याऽपुनरावृत्ति चानुपदमाह पुनरावृत्तिस्तेषामिहनविद्यतेइत्यंतेन ॥ किंच संप्रदायाचार्यप्रणीतमीमांसासूत्रभाष्याद्यालोचनान्मीमांसाज्ञाने-

न निर्विचिकित्सब्रह्मज्ञाने सति पंक्तिपावनत्वं सिद्ध्येत् ॥ यथा-हनिर्णयसिंधौ श्राद्धप्रकरणे मात्स्ये मनुः ॥ यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरं ॥ सामस्वरविधिज्ञश्च पंक्तिपावनपावनइति ॥ गारुडेपि॥श्राद्धेषु विनियोज्यास्ते ब्राह्मणाब्रह्मवित्तमाइति॥पराशर-स्मृतिव्याख्यायां च तृतीयाध्याये ॥ शंखः॥नित्यं योगपरोविद्वान् समलोष्ठाश्मकांचनः॥ध्यानशीलोयतिर्विद्वान् ब्राह्मणः पंक्तिपाव-नइत्यलं बहुना॥एवं संप्रदायोपसत्त्या संपादितज्ञानस्य शिक्षित सर्व धर्माचारस्य ज्ञानबलात् समृद्धसर्वसत्कर्मजातस्य दग्धदुष्कर्मतूल-जालस्य भगवद्भक्तस्य नियतं मोक्षः स्यात्॥यथाह मनुः॥ (अ० ४ श्लो० २४३ ) धर्मप्रधानं पुरुषं तपसा हतकिल्बिषं ॥ परलोकं नयत्याशु भास्वंतं खशरीरिणमिति ॥ खशरीरिणं खंब्रह्मेतिश्रु-त्या ब्रह्मस्वरूपं ॥ अतएव भास्वंतमानंदांशप्रकाशाद्दीप्यमानं जी-वं ब्रह्माख्यं परलोकं प्रापयतीत्यर्थः ॥ आपस्तंबस्मृतावपि द-शमाध्याये ॥ न यमं यममित्याहुरात्मा वै यमउच्यते ॥ आत्मा संयमितोयेन तं यमः किंकरिष्यति ॥ न तथासिस्तथा तीक्ष्णः सर्पो वा दुरधिष्ठितः ॥ अरिर्वा नित्यसंक्रुद्धोयथात्मा दुरधिष्ठितः॥ एकः क्षमावतां दोषोद्वितीयोनोपपद्यते ॥ यदेनं क्षमया युक्तम-शक्तं मन्यते जनः ॥ न शब्दशास्त्राभिरतस्य मोक्षोनचैव रम्या-वसथप्रियस्य ॥ न भोजनाच्छादनतत्परस्य न लोकवित्तग्रहणे रतस्य ॥ एकांतशीलस्य दृढव्रतस्य मोक्षोभवेत्प्रीतिनिवर्त्तकस्य ॥ अध्यात्मयोगैकरतस्य सम्यङ्मोक्षोभवेन्नित्यमहिंसकस्येति ॥ अथ श्रुतयोपि सहस्रशः पारंपरिकगुरुलब्धाज्ज्ञानादेव मोक्षमुद्धुष्यंति॥ ब्रह्मविदाप्नोतिपरं तमेवंविद्वानमृतइहभवति नान्यःपंथाविद्यतेय-

नाय तमेवविदित्वातिमृत्युमेति तरतिशोकमात्मवित् आत्मना-विंदते वीर्यंविद्ययाविंदतेमृतमित्याद्यास्तैत्तिरीयबृहदारण्यकच्छंदोगभूमविद्याकेनोपनिषदादिरूपाः ॥ किंचास्यास्तलवकारश्रुतेरर्थं मनुरप्याह॥ (अ० १२ श्लोक १०४) तपोविद्या च विप्रस्य निःश्रेयसकरं परं॥तपसा किल्बिषं हंति विद्ययाऽमृतमश्नुते इति॥ ननुतपसाब्रह्मविजिज्ञासस्वेति तपसएव ज्ञानं प्रति साधनत्वं श्रूयते कथंतर्हि संप्रदायः साधनमितिचेन्नैवं॥यद्धि वेदोक्तेन प्रकारेण तथाचांद्रायणादिभिः॥ शरीरशोषणं यत्तत्तपइत्युच्यते बुधैरिति॥एवमन्यत्रापि कायशोषणात्मकं तपउक्तं तत्सर्वं प्राधान्येन कृतयुगमात्रविषयं ॥ अतएवलघुपराशरः ( अ० १ श्लो० २३ ) तपःपरंकृतयुगइत्याह ॥ त्रेतादिषु तपसोऽप्राधान्ये कारणं तु तत्रैव कृतेत्वस्थिगताः प्राणाइत्यस्य व्याख्यायां माधवेन दर्शितं ॥ नचैवं श्रुतिविरोधः शंक्यः ॥ तपःशब्देनात्रसंप्रदायानुसारात् ब्रह्मविचारस्वधर्मवर्त्तनप्रभृतीनामेव विवक्षितत्वात् ॥ यथोक्तमाचारमाधवे॥ ( श्लोक २३ व्याख्यायां ) स्कांदे ॥ कोहं मोक्षः कथं तेन संसारं प्रतिपत्तवान् ॥ इत्यालोचनमर्थज्ञास्तपः शंसंति पंडिताइति॥ अत्रैव व्यासेनापि स्मर्यते ॥ तपः स्वधर्मवर्तित्वं शौचं संगनिबर्हणमिति ॥ परा० ( श्लो० ३१ ) व्याख्यायामपि ॥ कूर्मपुराणे युगांतराभिप्रायेण तपोंतरं वर्णितं ॥ अहिंसा सत्यवचनमानृशंस्यं दमोघृणा ॥ एतत्तपोविदुर्धीरान शरीरस्य शोषणमिति ॥ अथच श्रुतौ तपःशब्दस्य भाष्यानुसारात् कायशोषणपरत्वादरणेऽपि तस्योक्तरीत्या कृतयुगमात्रविषयत्वम् ॥ तत्रापि सम्प्रदायसहकारेणैव ज्ञानजनकत्वं च बोध्यं ॥ तस्मिन्प्रपाठके भृगोः पुनः

पुनर्गुरूपसत्तिसहकृततपसैव ज्ञानोत्पत्तिश्रवणात् ॥ अतएवान्नि-स्मृतावपि द्वितीयाध्याये ॥ यथाऽश्वारथहीनास्तु रथाश्वाश्वैर्वि-ना यथा ॥ एवं तपोप्यविद्यस्य विद्या चाप्यतपस्विनः ॥ यथाऽन्नं मधुसंयुक्तं मधुचान्नेन संयुतं ॥ एवं तपश्च विद्या च संयुक्तं भे-षजं महत् ॥ विद्यातपोभ्यां संयुक्तं ब्राह्मणं जपतत्परं ॥ कुत्सिते-ष्वपि वर्त्तंतं नैनः संस्पृशते क्वचित् ॥ विद्याहि संप्रदायैकलभ्या ॥ अपरंच लोके संप्रदायप्रवृत्तिमंतरा शासकानां सच्छास्त्रप्रवर्त-कानां सर्वधर्मशिक्षकाणामाचार्याणामभावात् सदसच्छास्त्र-विवेकाभावेन लोकानां प्रवृत्तौस्वाच्छंद्यात् यथेच्छं वहवो-सच्छास्त्राधिगमनेन नास्तिक्येन चोपपातकवंतोधर्माधर्माविवेक-ध्वांतमुष्टदृष्टयोनितांतदुःखदवगिरिदरीभ्रांता वेदांतादिकृतांता-ज्ञानाच्छास्त्रेष्वकृतांताः कृतांताख्यव्याधस्य वेधमृगाभविष्यंति अतस्तद्वारणाय लोकानुग्राहिणा हरिणा विश्वंभरायां धर्मरक्षा-रंभस्तंभास्संप्रदायाः प्रादुष्कृताः ॥ तत्र असच्छास्त्राभ्यासस्योप पातकत्वं तु स्मर्यते याज्ञवल्क्येन ब्रह्महत्यादिप्रायश्चित्तप्रकरणे ॥ (अ० ३ श्लो० ३६) असच्छास्त्राधिगमनमाकरेष्वधिकारिता॥ भार्यायाविक्रयश्चैषामेकैकमुपपातकं ॥ अत्रैव मिताक्षरायां स्मृ-त्यंतरे ॥ असच्छास्त्राभिगमनं नास्तिकता कुशीलता मद्यपस्त्रीनि-षेवणमित्युपपातकानीति ॥ तेन नास्तिक्यमप्युपपातकं ॥ मनुर-प्याह॥ (अ० ११ श्लो० ६६) नास्तिक्यं चोपपातकमिति॥अ-पिच पारंपरिकोपदेष्टॄणां धर्मशासकानामभावेन सर्वं धर्मसमुच्छे-दात् सर्वजनानामत्यधर्मबहुलतया महानेवानर्थोऽस्मिन् प्रपंचे. स्यात् ॥ अतस्तद्वारण संप्रदायप्रयोजनं ॥ अतएव चतुर्थे मनुः ॥

( श्लो० १७० ) अधार्मिकोनरोयोहि यस्य चाप्यनृतं धनम् ॥ हिंसारतश्च योनित्यं नेहासौ सुखमेधते इत्यादिना अधर्मफलं निरूप्य तद्वारणाय सांप्रदायिकान् सदाचार्यान् प्रत्याह ॥ ( श्लो० १७५ ) सत्यधर्मार्य्यवृत्तेषु शौचे चैवारमेत्सदा ॥ शिष्यांश्च शिष्याद्धर्मेण वाग्बाहूदरसंयतइति ॥ तथा दक्षस्मृतावत्रिस्मृतौ च ॥ क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥ व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः॥श्रद्धात्यागविहीनस्य भस्मांतं सूतकं भवेदिति ॥ सर्वप्रशासकजगद्गुरुभूतसांप्रदायिकाचार्याभावात् शिक्षणभयाभावेन क्रियाहीनत्वात् ज्ञानानुत्पत्त्या व्यसनाद्यासक्तत्वात् श्रद्धाशून्यत्वाच्च बहवोभस्मांतसूतकिनोमाभूवन्नित्यपि संप्रदायप्रयोजनम् ॥ वाग्रूपाणां सर्वेषां शास्त्राणां यथाव्यवस्थं सुप्रवृत्तिः संप्रदायैरेवेति तु लोकानुभवसिद्धं ॥ स्वयमेव वेदाद्यर्थानवबोधस्य सर्वजनीनत्वात् ॥ शास्त्रसिद्धंच ॥ लिखितपाठादिनिषेधात् ॥ तादृशविद्यायाः साधुतमफलाजनकत्वाच्च ॥ यथा छंदोगाआमनंति ॥ आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयतीति . स्वयमेव लिखितपाठस्य निषेधं त्वाह स्वशिक्षायां पाणिनिः ॥ गीती शीघ्री शिरःकंपी तथा लिखितपाठकः ॥ अनर्थज्ञोल्पकंठश्च षडेते पाठकाधमाइति॥ माधवीये प्रथमाध्याये नारदोऽपि ॥ पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ ॥ भ्राजते न सभामध्ये जारगर्भइव स्त्रियाइति ॥ अतोवेदोपनिषन्मीमांसाप्रभृतीनां प्रस्थानानां सर्वशास्त्राणां च प्रवृत्तिरपि संप्रदायप्रयोजनं ॥ संप्रदायाभावे हि तत्प्रवृत्तिविच्छेदेन देवलोकेऽपि महत्तरोऽनर्थःस्यात्॥ देवानां वागुप

जीवित्वात्॥ यथा तैत्तिरीयब्राह्मणे आम्नायते॥वाचं देवाउपजीवंति विश्वइत्यादि ॥ किंच इह लोकेऽपि श्रुतिस्मृत्युच्छेदादनर्थःस्यात्॥ श्रुतिस्मृतिविहीनानां निंदां त्वाहात्रिः॥(श्लो० २४०)श्रुतिः स्मृतिश्चविप्राणां नयने द्वे प्रकीर्त्तिते ॥ काणः स्यादेकहीनोऽपि द्वाभ्यामंधः प्रकीर्त्तितः ॥ न श्रुतिर्न स्मृतिर्यस्य न शीलं न कुलं यतः ॥ तस्यश्राद्धं न दातव्यमंधकार्यत्रिरब्रवीदिति ॥ श्रुतिस्मृतिज्ञाने फलं त्वाहांगिराः॥ कृत्वा पापं हि शौचं वै ब्राह्मणोवेदपारगः॥ स्मृत्यर्थं विदते योऽपि तस्मात् पापात्प्रमुच्यते ॥ नैव कुर्यां पुनरिति निवृत्त्यात्मा भवेद्यदि॥ वन्हिर्वेदागमाभ्यासः सर्वं पापं विशुध्यति ॥ यथा जातबलोवन्हिर्दहत्यार्द्रानपि द्रुमान् ॥ एवं दहति वेदज्ञः कर्मजं दोषमात्मनइति ॥ ननु वेदाध्ययने पारंपरिकत्वमात्रमपेक्षितं तच्च यतः कुतश्चापि संभवति न तत्र रूढ्या संप्रदायशब्देन प्रसिद्धानां विष्णुस्वाम्यादिसंप्रदायानामुपयोगइति चेदुच्यते ॥ अक्षरग्रहणस्य यतः कुतश्चित्संभवेऽपि तावन्मात्रेणाध्ययनविधिव्यापारपूर्त्यभावेनार्थज्ञानार्थमुक्तसंप्रदायोपयोगः ॥ यत्तु केचित् विधेरक्षरग्रहणमात्रपर्यवसायित्वं वदंति॥ तत्र भाट्टास्तावत् ॥ अध्ययनविधेरक्षरग्रहणमात्रपर्यवसायित्वे अदृष्टार्थत्वकल्पनापत्त्या तस्योपस्थितार्थज्ञानरूपदृष्टफलकत्वमेव युक्तं॥दृष्टे संभवत्यदृष्टकल्पनायाअन्याय्यत्वात् ॥ उक्तंच ॥ लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना ॥ विधेरस्तु नियमार्थत्वान्नानर्थक्यं भविष्यतीति ॥ एतेन विश्वजिन्न्यायेन स्वर्गार्थत्वकल्पनं प्रत्युक्तं ॥ तथा अर्थज्ञानस्यात्यंतमप्राप्तत्वाभावान्न तद्विधानं योग्यं ॥ विधिरत्यंतमप्राप्ताविस्युक्तेरित्यपि निरस्तं ॥ अर्थज्ञानांशे ऽपूर्वविधित्वाऽसंभवेऽपि नि-

यमविधित्वस्य सुखेन संभवात् ॥ अवघातनखविदलनान्यतरेण वैतुष्यसंभवेऽपि अवघातेन वितुषीकृततंडुलैरेव क्रत्वपूर्वसिद्धिवद्ध्ययनलिखितपाठाद्यन्यतमेनार्थज्ञानसंभवेऽपि अध्ययनलब्धार्थज्ञानेनैव तत्सिद्धिरिति कथने प्रतिबंधकाभावात् ॥ तस्मादध्ययनविधिनैवार्थज्ञानस्याप्यावश्यकत्वं लभ्यतइत्याहुः ॥ तेन व्यवहारे भट्टनयइति वदद्भिरपीदमेव स्वीकार्यं ॥ प्राभाकरास्तु ॥ अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेति विधिवाक्ये संमाननोत्संजनाचार्यकरणज्ञानभृतिविगणनव्ययेषुनियइत्याचार्यकरणरूपेर्थे विहितेनोपनयीतेत्यात्मनेपदेन नियोज्यस्याचार्यत्वकामस्य तमध्यापयीतेत्यग्रिमवाक्येन उपनीय तु यः शिष्यं वेदमध्यापयेद्विजः सकल्पं सरहस्यं च तमाचार्यं प्रचक्षतइति मानवस्मरणेन चोपनयनपूर्वकमुपनिषदादिसहितवेदाध्यापनं विधीयते तच्चोपनयनसंस्कृतस्य माणवकस्याकिंचित्करत्वे न संभवतीति तेनैव तस्याध्ययनमपि लभ्यते ॥ श्रूयमाणमध्ययनविधिवाक्यं तु नित्यानुवादरूपं स्यात् ॥ उक्तं चाधिकरणमालायां ॥ अथवाऽध्यापनात्सिद्धेर्नैवास्त्यध्ययने विधिरिति ॥ अथाध्ययनस्यापि प्रयोजने विचार्यमाणे दृष्टत्वाच्छीघ्रोपस्थितिकत्वाच्चार्थज्ञानमेव तत्सिध्यति ॥ स्वसमवेतत्त्वेनांतरंगत्वाच्च ॥ नत्वाचार्यकरणं बहिरंगत्वात् ॥ तथाचाध्यापनविधिनैवाध्ययनमर्थज्ञानं च लभ्यतइत्याहुः ॥ प्रपंचस्तु न्यायमालाविस्तरादिषु भाष्यप्रकाशाद्यास्माकीनग्रंथेषु चावधेयः ॥ इत्थंच मीमांसकमतद्वयेऽप्यर्थज्ञानस्य तदाक्षिप्तविचारशास्त्रयोश्च वैधत्वात्तच्छास्त्रानुसारेण तदावश्यकत्वमस्त्येव ॥ किंचास्मदाचार्याअपि ॥ कांडद्वयार्थसिध्यर्थं स्वाध्यायविधिरुच्यते ॥

वाक्यत्रयं तथा वेदेऽनारभ्याधीतमेवहि ॥ एकार्थता तु सर्वत्र विशेषोप्युच्यतेस्फुटः ॥ स्वाध्यायशब्दोवेदेहि रूढोयोगोऽपिवर्त्तते ॥ सुष्ठुआसमंताद्ध्येयः शोभनं नियमैर्युतं ॥ देशे काले गुरौ स्वस्मिन्येऽपेक्ष्यंते गुणाइह ॥ आसर्वतः पुनस्तत्र यथा शंका न जायते॥ शब्दे ह्यर्थे ह्यनुष्ठाने तथाऽध्येयोहि वैदिकैरित्याद्याहुः अतः स्वाध्यायविध्यनुरोधात् वाक्यांतरे ज्ञेयश्चेति पृथगर्थज्ञानविधानाच्च स्थाणुरयं भारहारः किलाऽभूदधीत्य वेदं न विजानाति योर्थमित्यर्थज्ञानशून्यस्य निंदाश्रवणात् अनर्थज्ञोऽल्पकंठश्चेत्यधमत्वस्मरणाच्चाधीतस्यवेदस्यार्थज्ञानमावश्यकं ॥ अतएव महाभाष्ये च पस्पशाह्निकइदमुदाहृतं ॥ यदधीतमविज्ञातं निगदेनैव शब्यते ॥ अनग्नाविव शुष्कैधोन तज्ज्वलति कर्हिचिदिति ॥ निगदेन पाठमात्रेण ॥ नतज्ज्वलति निष्फलंभवतीति कैयटः ॥ निरुक्ते तु यद्गृहीतमविज्ञातमितिपाठः ॥ गृहीतं शब्दतः अविज्ञातमर्थतइति विवरणं ॥ तच्चार्थज्ञानं पूर्वोत्तरमीमांसादिसाध्यं ॥ यथाह द्वादशाध्याये मनुः ॥ ( श्लो० १०६ ) आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ॥ यस्तर्केणानुसंधत्ते सधर्मं वेद नेतरइति ॥ अत्रैव ऋषिदृष्टत्वात् आर्षं वेदं धर्मोपदेशं च तन्मूलस्मृत्यादिकं यस्तदविरुद्धेन मीमांसादिन्यायेन विचारयति सधर्मं जानाति नतु मीमांसाऽनभिज्ञः ॥ धर्मे करणं वेदोमीमांसाचेतिकर्त्तव्यतास्थानीयेति कुल्लूकभट्टादयोव्याख्यातारः ॥ उक्तंच भट्टवार्त्तिककृता ॥ धर्मे प्रमीयमाणे हि वेदेन करणात्मना ॥ इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यतीति ॥ एवमुत्तरमीमांसाविषयेऽपि ॥ गीतायां ॥ ऋषिभिर्बहुधा गीतं छंदोभिर्विविधैः पृथक् ॥ ब्रह्मसूत्रपदैश्चैव

हेतुमद्भिर्विनिश्चितैरिति॥श्रीभागवतेपि॥ (स्कं० १ अ० ५ श्लो० ४) जिज्ञासितमधीतं च यत्तद्ब्रह्मसनातनमिति ॥ तथा ॥ (श्लो० ३.) जिज्ञासितं सुसंपन्नमपि ते महदद्भुतमिति॥ पूर्णप्रज्ञभाष्ये च स्कांदे ॥ नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितं ॥ किंचित्तदन्यथा जातं त्रेतायां द्वापरे ऽखिलं ॥ गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ॥ संकीर्णबुद्धयोदेवा ब्रह्मरुद्रपुरःसराः ॥ शरण्यं शरणं जग्मुर्नारायणमनामयं ॥ तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥ अवतीर्णोमहायोगी सत्यवत्यां पराशरात् ॥ उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयं ॥ चतुर्द्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ॥ शतधा चैकधा चैव तथैवच सहस्रधा ॥ कृष्णोद्वादशधा चैव पुनस्तस्यार्थवित्तये ॥ चकार ब्रह्मसूत्राणि येषां सूत्रत्वमंजसा ॥ अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखं ॥ अस्तोभमनवद्यं च सूत्रं सूत्रविदोविदुः ॥ निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ॥ यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात्॥ सविशेषणसूत्राणि ह्यपराणि विदोविदुः॥ मुख्यस्य निर्विशेषेण शब्दोन्येषां विशेषितः ॥ इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ॥ सूत्रेषु येषु सर्वेऽपि निर्णयाः समुदीरिताः ॥ शब्दजातस्य सर्वस्य यत्प्रमाणश्चनिर्णयः ॥ एवंविधानि सूत्राणि कृत्वा व्यासोमहायशाः॥ ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु॥ ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमइत्यादि ॥ एवं मीमांसाद्वयानुसारेणैव वेदार्थोऽवगंतव्यइति सर्वसदास्तिकसंमतं ॥ मीमांसार्थश्च नेदानींतनैः स्वतोऽवगंतुं शक्यइति सर्वजनीनं ॥ सूत्रमात्रावलोकने तदर्थानवबोधदर्शनात् ॥ अतस्तदुभयभाष्यकरणादिना वास्तविकतदर्थ-

बोधनपूर्वकं तन्निर्णयानुसारेण पारमार्थिकवेदार्थबोधनमनन्यसाधारणं रूढिप्रसिद्धसंप्रदायानां प्रयोजनं ॥ ननु तथा पीतैररपि कतिभिश्चिन्मीमांसादिभाष्यकरणात् तदर्थबोधनस्य तद्वाराऽपि संभवान्नेदमनन्यसामान्यं विष्णुस्वाम्यादिसंप्रदायप्रयोजनं भवितुमर्हतीतिचेन्मैवं ॥ पारमार्थिकार्थबोधनस्य सत्संप्रदायैकसाध्यत्वात् ॥ इतरेषांतु कलियुगे ऽसुरप्रभृतिमोहनार्थं शिवकेशवविनिर्मितत्वेन बहूनां प्रस्थानानां वास्तविकवेदार्थख्यापकत्वाभावात्॥ तथाहि ॥ कौर्मे पूर्वभागे द्वादशाध्याये हिमाचलं प्रतिदेवीवाक्यं ॥ नच वेदादृते किंचिच्छास्त्रं ब्रह्माभिधायकं ॥ योऽन्यत्र रमते सोऽसौ न संभाष्योद्विजातिभिः ॥ यानि शास्त्राणि दृश्यंते युगेऽस्मिन् विविधानि तु ॥ श्रुतिस्मृतिविरुद्धानि तेषां निष्ठाहि तामसी ॥ कापालं पंचरात्रं च यामलं वाममार्हतं ॥ एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥ ये कुशास्त्राभियोगेन मोहयंतीव मानवान् ॥ मया सृष्टानि शास्त्राणि मोहायैषां भवांतरइति॥ अत्र पंचरात्रशब्दोमहाभारतमोक्षधर्मादिप्रशंसितनारदपंचरात्रातिरिक्तकापिलादिपंचरात्रविषयइत्यन्यत्र विस्तरः॥ तथा तत्रैवषोडशाध्याये देवदारुवनस्थानां गौतमशप्तानां मुनीनां प्रसंगे शिवं प्रति नारायणवाक्यानि ॥ न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शंकर॥ संगच्छते महादेव धर्मोवेदाद्विनिर्बभौ॥ तथापि भक्तवात्सल्याद्रक्षितव्यामहेश्वर ॥अस्माभिः सर्वएवैते गंतारोनरकानपि॥तस्माद्वैवेदबाह्यानां रक्षणार्थाय पापिनां ॥ विमोहनानि शास्त्राणि करिष्यावोवृषध्वज ॥ एवं संबोधितोरुद्रोमाधवेन मुरारिणा ॥ चकारमोहशास्त्राणि केशवोऽपि शिवेरितः॥मनुस्मृतावपि द्वादशाध्याये॥ (श्लो०

१४)पितृदेवमनुष्याणां वेदश्चक्षुः सनातनं ॥ अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः॥ यावेदवाह्याः स्मृतयोयाश्च काश्च कुदृष्टयः॥सर्वास्तानिष्फलाः प्रेत्य तमोनिष्ठाहिताः स्मृताः॥उत्पद्यंते च्यवंते च यान्यतोऽन्यानि कानिचित् ॥तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥ चातुर्वर्ण्यं त्रयोलोकाश्चत्वारश्चाश्रमाः पृथक्॥ भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिध्यति ॥ अतोमोहार्थं भगवदाज्ञमैः शिवादिदेवैतैरवतीर्य निर्मितानि व्याख्यानादीन्यर्वाचीनानीति सद्भिर्नादर्त्तव्यानि ॥ रुद्राय तथाज्ञापनं तु पुनर्वराहपुराणेऽपि स्फुटं ॥ त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥ अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ॥ प्रकाशं कुरु चात्मानमप्रकाशं च मां कुर्वित्यादि ॥ तथा पद्मपुराणेऽपि विष्णुनामसहस्रे शिवः स्वस्मै भगवता ज्ञप्तं स्वयं पार्वतीं प्रत्याह ॥ त्वामाराध्य तथा शंभोग्रहीष्यामि वरं सदा ॥ द्वापरादौ युगे भूत्वा कलया मानुषादिषु ॥ स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु ॥ मां च गोपाय येन स्यात् सृष्टिरेषोत्तरोत्तरेति॥पुनः पाद्मोत्तरखंडे उमामहेश्वरसंवादे ॥ तामसशास्त्रकथनं प्रतिज्ञाय कानिचिदसच्छास्त्राण्युक्त्वा ॥ मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ॥ मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥ अपार्थं श्रुतिवाक्यानां दर्शितं लोकगर्हितं॥कर्मस्वरूपत्याज्यत्वमत्रैव प्रतिपाद्यते ॥ सर्वकर्मपरिभ्रष्टं विकर्मत्वं तदुच्यते ॥ परेशजीवयोरैक्यं मया त्र प्रतिपाद्यते ॥ ब्रह्मणश्च परं रूपं निर्गुणं वक्ष्यते मया ॥ सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे ॥ वेदार्थवन्महाशास्त्रं मायावादमवैदिकं॥ मयैव वक्ष्यते देवि जगतां नाशकारणादिति ॥

एवमन्यत्रापिं द्रष्टव्यं ॥ प्रकृतमनुसरामः॥तस्मात्पारंपरिकवास्त-
विकवेदार्थज्ञानार्थं कृतयुगे रुद्रसंप्रदायादिशब्दैः प्रसिद्धाइदानीं
विष्णुस्वाम्यादिभिर्भगवदाज्ञयावतीर्णैः सदाचार्यैरुद्धृताः सत्संप्रदा-
याआवश्यकाएव ॥ किंच ॥ धर्मसिंधौ (परि॰ ३पूर्वार्द्धे) आन्हि-
कप्रकरणे ॥दिवसस्य द्वितीयभागे वेदशास्त्राभ्यासः॥ पठेदध्यापये-
द्वेदान् जपेच्चैव विचारयेत् ॥अवेक्षेत च शास्त्राणि धर्मादीनिद्विजो
त्तमइति॥ लघुविष्णुरपिद्वितीयाध्याये (श्लो॰ ५) भुक्तोपविष्टोवि-
श्रांतोब्रह्म किंचिद्विचारयेत्॥ इतिहासं प्रयुंजीत द्विकालसमये
गृहीति ॥ अयंविचारश्च धर्मब्रह्मविचारशास्त्रमीमांसाद्वयनिर्णाय-
कविष्णुस्वाम्यादिसंप्रदायाधीनएवेति तु पूर्वमेवोपापादयाम॥ अ-
तः प्रत्यहं ब्रह्मविचारसिद्धिरपि सत्संप्रदायप्रयोजनम् ॥ अतएव
पराशरमाधवीये ॥ विष्णुपुराणे ॥ अनायासप्रदायीनि कुर्यात्क-
र्माण्यतंद्रितः ॥ सच्छास्त्रादिविनोदेन सन्मार्गादविरोधिना ॥ दिनं
नयेत्ततः संध्यामुपतिष्ठेत्समाहितइति॥ अत्र भोजनानंतरमपि स-
त्संप्रदायाविरोधेनैव सच्छास्त्रादिविनोदउच्यते ॥ मार्गशब्दस्य सं-
प्रदायपर्यायत्वमपीतितु स्वमार्गः परमार्गः शैवमार्गो वैष्णवमार्ग इ
त्यादिविद्वद्व्यवहारप्रसिद्धं ॥ पुरस्तात् भवन्मार्गे तिलकं कीदृश-
मित्यनुयुंजानस्य तवाऽपि चाऽभिमतमिति किमनेन॥ अपिच॥
वैष्णवत्वादिधर्माणां सिद्धिर्मंत्रोपदेशतः ॥ असंप्रदाय वैफल्यात्
संप्रदायप्रयोजनं ॥ तथाहि ॥ वैष्णवत्वं हि वैष्णवसांप्रदायिकगु-
रुसकाशात् भगवन्मंत्रग्रहणादेव सिध्यति ॥ यथाह नारदपंच-
रात्रप्रथमरात्रनवमाध्याये पार्वतीगजवक्त्रनारदान् प्रति शिवः ॥
(श्लो॰२०) कृष्णमंत्रोपासकानां शुद्धं पादोदकं सुत ॥ पुनाति

सर्वतीर्थानि वसुधामपि पावंति ॥ कृष्णमंत्रोद्विजमुखाद्यस्य कर्णं प्रयाति च ॥ तं वैष्णवं जगत्पूतं प्रवदंति पुराविदः ॥ मंत्रग्रहणमात्रेण नरोनारायणात्मकः ॥ पुनाति लीलामात्रेण पुरुषाणां शतं शतमित्यादि ॥ तथा तत्रैव ( श्लो० २६ ) सस्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥ फलं सलेभे पूजानां व्रती सर्वव्रतेषुच ॥ विष्णुमंत्रं योलभेच्च वैष्णवाच्च द्विजोत्तमात् ॥ कोटिजन्मार्जितान् पापान्मुच्यते नाऽत्र संशयइति ॥ ब्रह्मवैवर्त्तीयखंडैकादशाध्याये ॥ गुरोर्मुखाद्विष्णुमंत्रोयस्य कर्णे प्रविश्यति ॥ तं वैष्णवं महापूतं जीवन्मुक्तं वदेद्विधिरिति ॥ नन्वेवं वैष्णवात् गुरोः सकाशात् मंत्रग्रहणमभिधीयते तच्च यस्मात्कस्मादपि द्विजात् संभवतीति नैतन्मात्रेण संप्रदायस्यानन्यसाधारणं प्रयोजनमायाति ॥ संप्रदायपदघटिततादृगावश्यकताबोधकवाक्यानुपलंभात् इति चेन्नैवं ॥ गौतमीये तंत्रे एकोनत्रिंशाध्याये॥ ( श्लो० ५ ) धर्मार्थकाममोक्षाणामालयः सांप्रदायिकः॥ संप्रदायविहीनाये मंत्रास्तेनिष्फलामताइति वचनात् सांप्रदायिकाचार्यभिन्नाद्यस्मात्कस्मादपि वैष्णवाद्गृहीतस्य मंत्रस्य नैष्फल्यकथनेन संप्रदायसेवनस्यावश्यकत्वात् ॥ मंत्रावश्यकतातु ( अ० ३ श्लो० ६५।६६ ) अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणां ॥ कुलान्याशु विनश्यंति यानि हीनानि मंत्रतः ॥ मंत्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ॥ कुलसंख्यां च गच्छंति कर्षंति च महद्यश इत्यन्वयव्यतिरेकाभ्यां तृतीयाध्याये मनुनाऽपि दर्शिता ॥ किंचांगिरःस्मरणेपि ॥ यावतोग्रसते पिंडान् हव्यकव्येष्वमंत्रवित् ॥ तावतोग्रसते प्रेत्य दीप्तान् शूलानयोमयानित्ये-

मंत्रविदोहव्यकव्यानधिकारआमुष्मिकं दुष्फलं चोक्तं ॥ तस्मा-
न्मंत्रग्रहणमावश्यकं॥ नचात्र मंत्रशब्देन मीमांसकादिप्रसिध्यनु-
रोधात् वैदिकमंत्रमात्रं गृह्यतइति शंक्यं॥ तथासति ब्राह्मणभा-
गस्यानादरणीयत्वप्रसंगात्॥ अथ मंत्रशब्देन सोऽपि लक्ष्यतइति-
चेत्तर्ह्येकशेषेण वैष्णवदीक्षामंत्राअपि वेदादिसिद्धाः कुतोन ग्रही-
तुं शक्याः ॥ अदीक्षितस्य वामोरु कृतं सर्वमनर्थकं ॥ पशुयोनि
मवाप्नोति दीक्षाहीनोनरोमृतः ॥ विना श्रीवैष्णवीं दीक्षां प्रसादं
सद्गुरोर्विना ॥ विना श्रीवैष्णवं धर्मं कथं भागवतोभवेदित्यादिपा-
द्मोत्तरखंडादिवाक्यानुरोधात् ॥ श्रीवैष्णवींश्रीयुक्तां वैष्णवीमित्य-
र्थः ॥ शाकपार्थिवादिवत्समासः ॥ मान्यत्वादेवं वचनम् ॥ श्री-
कृष्णइत्यादिवत् ॥ मंत्रसारे ॥ दीक्षिताय विशेषेण प्रसीदेन्नान्य-
था हरिः॥ब्राह्मणः क्षत्रियोवापि वैश्यः शूद्रोऽथवा पुनः ॥ एवं-
स्त्रियोवा यत्नेन गुरुमेव समाश्रयेदिति ॥ तत्वसारे ॥ अवश्यं वैष्ण-
वीं दीक्षां विशेत्सर्वप्रयत्नतः ॥ दीक्षिताय विशेषेण संसिद्धिर्नात्र-
संशयइति ॥ अथ युगेयुगेतु दीक्षा स्यादुपदेशः कलौ युगइत्या-
दिवाक्यानुसारात् पूर्वोक्तपंचरात्रब्रह्मवैवर्त्तादिवचनेषु वैष्णवगुरु-
मुखान्मंत्रश्रवणमात्रस्यैव वैष्णवत्वजनकत्वकथनाच्च बहुशिष्ट-
संमतउपदेशपक्षएवेदानीमाद्रियते तदापि मंत्रोपदेशमात्रेण न-
रामुक्ताश्च भारते ॥ पूर्वैश्चकोटिपुरुषैः परैः सार्द्धं हरेरहो॥ कोटि-
जन्मार्जितात्पापान्मंत्रग्रहणमात्रतः ॥ मुक्ताः शुद्ध्यंति यत्पूर्वं क-
र्म निर्मूलयंति च ॥ पुत्रान्दारांश्च शिष्यांश्च सेवकान्बांधवांस्त
था ॥ योदर्शयति सन्मार्गं सद्गतिस्तद्भवेद्ध्रुवमिति ब्रह्मवैवर्त्तब्रह्म-
खंडाध्याये ब्रह्माणं प्रति नारदवाक्यैरेवमादिभिरुक्त वक्ष्यमाणवच

नांतरैश्चावश्यकताबोधनाद्भगवन्मंत्रग्रहणमावश्यकमेव ॥ नन्वेवं-मंत्रग्रहणे संप्रदायावश्यकत्वमुच्यते ॥ नतु वैष्णवसंप्रदायाव श्यकत्वं ॥ अतोयतः कुतश्चिदपि सांप्रदायिकाच्छैवादेः सकाशादपि वैष्णवमंत्रग्रहणं शक्यवचनमिति नैतदुपदेशोप्यनन्यसामान्यं वैष्णवसंप्रदायानां प्रयोजनं सित्ध्यतीतिचेत् ॥ अलमलं तूष्णीं मैवमनर्थं ब्रूयाः ॥ अवैष्णवोपदिष्टोवैष्णवमंत्रोनरकसाधन-मितिवदद्भिर्वचनसहस्रैः कर्णबधिरीकारात् ॥ तथाहि ॥ सारसंग्रहे पंचरात्रे ॥ न्यासे वाप्यर्चने वापि मंत्रमेकांतिनः श्रयेत् ॥ अवैष्णवोपदिष्टेन मंत्रेण नरकं व्रजेत् ॥ अवैष्णवाऽऽहृतं मंत्रं यः पठेद्वैष्णवोद्विजः ॥ कल्पकोटिसहस्राणि पच्यते नरकाग्निनेति ॥ तत्रैव पद्मपुराणे ॥ अवैष्णवोपदिष्टं च पूर्वमंत्रं परित्यजेत् ॥ पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेन्मनुमिति ॥ पुनः पाद्मएव ॥ सहस्रशाखाध्यायी च सर्वयज्ञेषु दीक्षितः ॥ कुले महति जातोऽपि न गुरुः स्यादवैष्णवः ॥ यस्तु मंत्रद्वयं सम्यगध्यापयति वैष्णवः ॥ सआचार्यस्तु विज्ञेयोभवबंधविनाशकइति ॥ वादावल्यां पंचरात्रे ॥ योवक्ति न्यायरहितं विना न्यायं शृणोति यः ॥ तावुभौ नरकं घोरं व्रजतः कालमक्षयमिति ॥ महाकुलप्रसूतोऽपि सर्वयज्ञेषु दीक्षितः ॥ सहस्रशाखाध्यायी च न गुरुः स्यादवैष्णवइति ॥ अवैष्णवोपदिष्टेन मंत्रेण नरकं व्रजेत् ॥ पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेद्गुरोरिति ॥ पाद्मोत्तरखंडे द्वात्रिंशाध्याये ॥ अवैष्णवोपादिष्टं तु पूर्वमंत्रवरद्वयं ॥ पुनश्चविधिना सम्यग्वैष्णवाद्ग्राहयेद्गुरोरिति ॥ एवमादिष्वनेकवचनेष्ववैष्णवान्मंत्रग्रहणस्य नरकाद्यनिष्टप्राप्तिसाधनत्वकथनेनाधर्मत्वबोधनाद्वैष्णवसांप्रदायिक-

एवगुरुरावश्यकः ॥ नचैवमपि वचनेषु सांप्रदायिकवैष्णवाङ्‌प्रदेशग्रहणस्यानुक्तत्वेन वैष्णवत्वमात्रमेव गुरुविशेषणमस्तु नतु सांप्रदायिकत्वमपीति शंक्यं ॥ दत्तोत्तरत्वात् ॥ पाद्मगौतमतंत्रयोः संप्रदायविहीनायेमंत्रास्तेनिष्फलामताइति वाक्यात् ॥ अपरेतु ॥ न जातु मंत्रदा नारी न शूद्रोनांतरोद्भवः ॥ नाभिशस्तोन पतितः कामकामोप्यकामिनाम् ॥ सप्तपुरुषातिविज्ञेये संततैकांतनिर्मले ॥ कुलेजातोगुणैर्युक्तोविप्रः श्रेष्ठतमोगुरुरिति भारद्वाजसंहितावचनान्यप्युदाहरंति तेनापि परंपरया संप्रदायेन विख्याताचार्यभावस्यैव गुरुत्वं युक्तं नान्यस्यैवेति सिध्यति ॥ किंच गौतमतंत्रेऽपि त्रिशाध्याये संप्रदायलब्धोपदेशत्वमेव मंत्रस्य सिद्धिहेतुत्वेनोच्यते ॥ तथाहि ॥तत्र ( श्लो० ५ ) इदानीं कथय ब्रह्मन् मंत्रसिद्धेस्तु लक्षणं ॥ सिध्युपायः कतिविधः कथयस्वानुकंपयेति गौतमप्रश्ने नारदः ॥ (श्लो० ६ ) मनोरथानामक्लेशं सिद्धेरुत्तमलक्षणमित्यादिना उत्तममध्यमादिसिद्धिलक्षणान्युक्त्वा क्रमप्राप्तं सिध्युपायमाह ॥ (श्लो० १८ ) सिद्धमंत्रस्तु यः साक्षात् सशिवोनात्र संशयः॥सिद्धि लक्षणमित्युक्तं तदुपायइहोच्यते॥पितृमातृविशुद्धायेशुद्धाचारा जितेंद्रियाः ॥ संप्रदायेनोपदिष्टास्तेषां सिद्धिर्द्रुतं भवेदिति ॥ तत्रैवोपसंहारे ॥ ( श्लो० ४२ ) दीयमानस्य मंत्रस्य दशैतामंत्रसंस्क्रियाः ॥ याः कृत्वा संप्रदायेन मंत्री वांछितमश्नुतइति ॥ तस्मात् भगवन्मंत्रोपदेशेन वैष्णवत्वसंपादनमपि सर्वथाऽनन्यसामान्यमेवाऽस्मत्संप्रदायानांप्रयोजनं॥ अपिचैवं मंत्रस्य संप्रदायैकलभ्यत्वे सिद्धे तमंतरा लब्धमंत्रस्यच निष्फलत्वे सिद्धे संप्रदायोपसरणमावश्यकमेव ॥ अन्यथा नित्यत्वेन निरूपितानामपि देवार्चनज

पादीनामसंभवापत्तेः ॥ तथाहि ॥ पराशरमाधवीये ( अ० १ ) कौर्मे ॥ योमोहादथवाऽऽलस्यादकृत्वा देवतार्चनं ॥ भुंक्तेसयाति नरकं सूकरेष्वभिजायतइति देवतार्चनं नित्यं विधीयते॥ तत्रैव हारीतोपि ॥ कुर्वीत देवतापूजां जपयज्ञादनंतरमिति ॥ द्विती याध्याये मनुरपि॥ ( श्लो० १७६ ) नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणं ॥ देवताभ्यर्चनं चैव समिदाधानमेवचेति देवार्चनस्य नित्यत्वमाह ॥ आपस्तंबोऽपि अष्टमाध्याये देवार्चनजपादिनैव ब्राह्मणस्यान्ने ऽमृतत्वमाह ॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतं॥वैश्यस्य त्वन्नमेवान्नं शूद्रस्य रुधिरं स्मृतं॥वैश्वदेवेन होमेन देवताभ्यर्चनैर्जपैः ॥ अमृतं तेन विप्रान्नमृग्यजुःसामसंस्कृतमिति ॥ तत्रापि विष्णवर्चनं त्वत्यावश्यकमेवेति पुरस्तात्प्रपंचयिष्यामः ॥ तच्चार्चनं स्वमंत्रैरेव ॥ आचारमाधवे ॥ निष्पीड्य स्नानवस्त्रं वै समाचम्य च वाग्यतः॥स्वैर्मंत्रैरर्चयेद्देवान् पत्रैः पुष्पैस्तथांऽबुभिरिति कूर्मपुराणात् ॥ मंत्राश्च संप्रदायैकलभ्याइत्युक्तं प्राक्॥ किंच भगवत्सेवनेऽधिकारोऽपि वैष्णवसंप्रदायैकलभ्यइति गौतमतंत्रादिषु स्फुटं ॥ अपिच ॥ अर्चने भगवत्प्रसादोऽपि संप्रदायैकाधीनः ॥ ( स्कं० ५ अ० १२ श्लो० १२ ) रहूगणैतत्तपसा न याति नचेज्यया निर्वपणाद्गृहाद्वा ॥ नच्छंदसा नैव जलाग्निसूर्यैर्विना महत्पादरजोऽभिषेकमित्यादि श्रीभागवतादिवचनेभ्यः ॥ अर्चनातिशायनस्यापि सेवाप्रकारनिर्बंधकसंप्रदायतंत्रत्वाच्च ॥ उदाहृताहिर्धर्मसिंधौ पूर्वार्द्धे स्मृतिः ॥ अर्चकस्य तपोयोगादर्चनस्यातिशायनात् ॥ आभिरूप्याच्च बिंबानां देवः सांनिध्यमृच्छतीति ॥ गौतमतंत्रेऽपि (अध्या० २ श्लो०

११६ ॥ ) भक्त्यातु पूजयेद्देवं सोऽभीष्टं फलमाप्नुयादित्यभक्तिपूजनस्य व्यर्थत्वमुक्तं ॥ पुनस्तत्रैव त्रयोदशाध्याये सांप्रदायिकगुरुसकाशान्मंत्रोपदेशग्रहणनिरूपणानंतरं॥ततः प्रभृति मंत्रज्ञो-गुरुशासनसंस्थितः॥यथा मंत्रे तथा देवे यथादेवे तथा गुरौ॥पश्येद्‌-भेदतोमंत्री एवं भक्तिक्रमोमुने ॥ अभक्तिभजनाल्लोके देवताक्लेशदायकइति ॥ भक्तिश्च संप्रदायादेवेत्याद्यन्यत्र विस्तरः ॥ अथ जपमप्यनेकविधं भगवतः शरणत्वभावनपूर्वकं मुक्तिफलकं कर्तव्यत्वेनाह षष्ठाध्याये मनुः ॥ ( श्लो०८३ ) अधियज्ञं ब्रह्म जपेदाधिदैविकमेवच ॥ आध्यात्मिकं च सततं वेदांताभिहितं च यत् ॥ इदं शरणमज्ञानामिदमेव विजानताम् ॥ इदमन्विच्छतां स्वर्गमिदमानंत्यमिच्छताम् ॥ अनेन क्रमयोगेन परिव्रजति योद्विजः ॥ सविधूयेह पाप्मानं परं ब्रह्माधिगच्छति ॥ दशमाध्याये आपस्तंबोऽपि तपोवृद्धिहेतुत्वेन जपानामावश्यकत्वमाह ॥ अपमानात्तपोवृद्धिः संमानात्तपसः क्षयः ॥ अर्चितः पूजितोविप्रोदुग्धा गौरिव गच्छति ॥ आप्यायतेयथा धेनुस्तृणैरमृतसंभवैः ॥ एवं जप्यैश्च होमैश्च पुनराप्यायते द्विजइति ॥ अत्र जप्यैरिति बहुवचनात् गायत्र्यादयः सांप्रदायिकवैष्णवादिमंत्राश्च संगृह्यन्ते ॥ बृहत्पराशरोऽपि एतानि द्वितीयाध्याये कंठरवेणाह जपप्रकरणे ॥ जपस्याथ प्रवक्ष्यामीत्युपक्रम्य जप्यानि ब्रह्मसूक्तादीन्यारभ्य पौराणिकानि चाऽन्यानि तथा सैद्धांतिकानि चेत्यंतेन ॥ अत्र शैववैष्णवादिमंत्राणामेकीभावेनोक्तानामपि संप्रदायभेदेन जप्यत्वं सूक्तवाके एकीकृत्योक्तानामपि देवतानां दर्शपूर्णमासयागभेदेन प्रस्तरप्रहरणे तत्तद्देवताग्रहणवत् इति प्रासंगिकं ॥ तस्मात् स्वोप-

दिष्टमंत्राणां जीवस्य भगवदेकशरणत्वबोधकानां जपद्वारा मुक्तिप्रापणं साधनदशायामपि तद्वारा तपोवृद्धिकरणं च संप्रदायप्रयोजनं ॥ नच लिखितपत्रादितोऽपि मंत्रलाभसंभवेन नेदं संप्रदायप्रयोजनमिति शंक्यं ॥ संप्रदायहीनमंत्रे नैरर्थक्यस्य पूर्वमेवोपपादितत्वात् ॥ ( स्कंध ३ अ० ८ श्लोक ३ ) आसीनमुर्व्यां भगवंतमाद्यमित्यादिपौराणिकोपदेशेषु ( बृहदारण्यक पृ० ४९५ ) दध्यङ्ङाथर्वणोऽश्विभ्यामुवाचेत्यादिषु श्रौतोपदेशेषु च गुरुपरंपरायाः प्रदर्शनेनाऽपि तथा निश्चयात् ॥ यदृच्छया श्रुतं वाऽपि छन्नेनाऽपि छलेन वा ॥ पत्रे स्थितं वा गाथायां वर्जयेत्तदनर्थवविदिति तंत्रोक्तनियमस्याऽपि सर्वशिष्टादृतत्वाच्च॥अथ संप्रदायान्मंत्रग्रहणे लौकिकालौकिकानि तज्जन्यप्रयोजनान्यनेकविधान्याह गौतमतंत्रप्रथमाध्याये कृष्णमंत्रं प्रशंस्य तद्ग्राहकाणां ब्रह्मादीनां तज्जन्यं फलं चोक्त्वा नारदः ॥ ( श्लो० १८ ) मंत्राणां परमोमंत्रोगुह्यानां गुह्यमुत्तमं ॥ मंत्रराजमिमं ज्ञात्वा कृतार्थो जायते नरः ॥ पुत्रवान् धनवान् वाग्मी लक्ष्मीवान्पशुमान् भवेत् ॥ सुभगः संमतः श्लाघ्योयशस्वी कीर्त्तिमान् भवेत् ॥ सर्वलोकाभिरामः स्यात् सर्वज्ञश्च भवेन्नरः ॥ अनेन त्रिषु लोकेषु यातामुक्तिं मुमुक्षवः ॥ मंत्रेणानेन मंत्रज्ञोभक्तिः स्यात् प्रेमलक्षणा ॥ समस्ततीर्थपूतश्च समस्तक्षेत्रपावनः ॥ रवेरिव दुराधर्षः शुचेरिव शुचिः सदा ॥ शंकरस्येव सिद्धीशोविष्णोरिव सदाश्रयः ॥ बहुना किमिहोक्तेन रहस्यं शृणु गौतम ॥ निर्वाणफलदोमंत्रः किमन्यैर्बहुजल्पितैरिति ॥ किंच वैष्णवत्वे सति सर्वाअपि मुक्तयः करस्थाएव सर्वमुक्त्यधिका भक्तिरपि सुलभैव किमुतान्यत् कु-

तस्तरांच तेषां यमयातनादिकं ॥ अतएव विष्णुपुराणे तृतीयांशे सप्तमाध्याये ॥ ( श्लो० १० ) स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्ण मूले ॥ परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानामित्यादि ॥ श्रीभागवते षष्ठस्कंधतृतीयाध्याये स्वदूतान्प्रति यमः ॥ तान्नोपसीदत हरेर्गदयाऽभिगुप्तान्नैषां वयं नच वयः प्रभवाम दंडे इत्यादि ॥ स्वमेश्वरभाष्ये च वचनं ॥ नरके पच्यमानस्तु यमेन परिभाषितः ॥ किं त्वया नार्चितो देवः केशवः क्लेशनाशनइति ॥ किंच मोक्षोपि सांप्रदायिकगुरुद्वारा भगवच्छरणगमनादेव ॥ अतएव गोपालपूर्वतापनीये मुमुक्षोः शरणगमनं विधीयते ॥ योब्रह्माणं विदधाति पूर्वं योविद्यास्तस्मै गोपायति कृष्णः ॥ यस्तं देवमात्मवृत्तिप्रकाशं मुमुक्षुर्वै शरणमनुव्रजेदिति ॥ गीतायामपि सप्तमाध्याये ॥ ( श्लो० १४ ) दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ मामेव ये प्रपद्यंते मायामेतां तरंति ते इति ॥ पुनर्द्वादशाध्याये ॥ तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ॥ भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ पुनरष्टादशे सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजेति ॥ लघ्वत्रिस्मृतौ नवमाध्याये ॥ विद्वेषादपि गोविंदं दमघोषात्मजः स्मरन् ॥ शिशुपालोगतः स्वर्गं किं पुनस्तत्परायणइति ॥ इदं भक्तिमीमांसाभाष्येऽपि प्रथमान्हिकषष्ठसूत्रव्याख्याने उदाहृतं ॥ इत्थं॥प्रयोजनान्यनंतानि तत्संतानं कियन्मया ॥ सर्वसत्फलसंतानसंप्रदायस्य वर्ण्यतां ॥ १ ॥ विद्विषां रोषपोषार्थं तोषार्थं विदुषां सतां ॥ अज्ञमोहप्रमोषार्थं तथाऽप्युक्तानि कानिचित् ॥ २ ॥

## ॥ अथ तृतीयोवांतरः प्रश्नः ॥ ३॥

॥ केनकेन वैलक्षण्येन संमताः ॥

( इह जिज्ञासाबोधकः किंशब्दोवैलक्षण्ये सामानाधिकरण्येनान्वेति ॥ वैलक्षण्यं त्वसाधारणोधर्मः॥ प्रयोजकत्वं च तृतीयार्थः॥ तत्र प्रकृत्यर्थस्याधेयतासंबंधेनान्वयः ॥ प्रत्ययार्थप्रयोजकत्वस्य तु संमताइत्येकदेशसंमतौ निरूपकतासंबंधेनान्वयः ॥ संमतिश्चात्र तत्तत्संप्रदायानुयोगिकपरस्परप्रतियोगिकभेदप्रकारिकाभिप्रेता स्यादिति प्रकरणानुरोधादवगम्यते॥तथाच पूर्ववाक्ये भेदशब्दोपात्ततत्तत्संप्रदायविशेषविषयकतादृशसंमतिप्रयोजकासाधारणधर्मविषयिणी बुभुत्सा अनुयोजकात्मसमवेतेति ज्ञायते ॥ )

## ॥ उत्तरं ॥

वैलक्षण्यं बहुविधं संप्रदायेषुवर्त्तते॥आचारेषु च चिन्हेषु साधनेषु फलेषु च ॥ १ ॥ भक्त्यादीनां प्रकारेषु सिद्धांतेषु च विस्तरात् ॥ तद्यथा तुलसीकाष्ठघटितां मालिकां गले ॥ २ ॥ दधत्येके सदा देवपूजाद्यवसरे ऽपरे ॥ ऊर्ध्वपुंड्रे च मुद्रादौ सेवादिषु हरेस्तथा ॥३॥ प्रकारभेदाबहवस्तत्तद्ग्रंथेषु दर्शिताः ॥ शुद्धाद्वैतं तथा द्वैतं विशिष्टाद्वैतमप्यथ ॥ ४ ॥ द्वैताद्वैतं चेति भेदाअपि वेदादिनिर्णयात् ॥ विलक्षणत्वमन्योन्यमेवं ग्रंथेषु विस्तरात् ॥ ५ ॥ तेषुतेषु विनिर्णीतमनंताः संति ते भुवि॥ अत्यंतविस्तरभयात्तत्सर्वमिह सर्वथा ॥ ६ ॥ वक्तुं नशक्यते स्याच्चेज्जिज्ञासा ते समुत्कटा ॥ तत्तद्ग्रंथान् समभ्यस्य तत्तदाचार्यसन्निधौ ॥ ७ ॥ कृत्वोपसत्तिं तत्सर्वं वैलक्षण्यं वि-

बुध्यताम् ॥ जीवानानाप्रकृतयः सात्विकादिविभेदतः ॥ ८ ॥ सर्वेषामुद्धृतिस्तेषां तत्तद्योग्योपदेशतः॥कर्तव्या संप्रदायैरित्यन्योन्यमविरोधिता ॥ ९ ॥

## ॥ अथ तुरीयोऽवांतरः प्रश्नः ॥ ४ ॥

॥ भेदेषु भवत्संमतिर्नवा ॥

### ॥ उत्तरं ॥

वेदशास्त्राविरुद्धेषु भेदेष्वस्त्येव संमतिः॥ न कस्याप्यास्तिकस्य स्यात्तद्विरुद्धेषु संमतिः ॥ १ ॥ उक्तंच श्रीमदाचार्यैस्तत्वदीपे ॥ वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हीत्यादिना श्रुतिगीतादीनि प्रमाणानि निरूप्य॥ अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नाऽन्यथा॥ एतद्विरुद्धं यत्सर्वं न तन्मानं कथंचनेति॥ननु वेदाद्यनुरोधाननुरोधाभ्यामेव संप्रदायभेदेषु संमत्यसंमतिस्वीकारे किं बीजमितिचेदुच्यते ॥ सत्संप्रदायभेदाहि मुख्यतया धर्मब्रह्मनिर्णयार्थमेव प्रवृत्ताः ॥ धर्मब्रह्मणोश्च वैदिकगम्यत्वं ॥ तत्तन्मीमांसायां यथायथं चोदनालक्षणादिसूत्रैः शास्त्रयोनित्वादिसूत्रैश्च तयोर्वैदिकमुख्यप्रमाणकत्वस्य सिद्धांतितत्वात् ॥ अतएवाचाराध्याये ब्रह्मचारिप्रकरणे याज्ञवल्क्यः ॥ (अ० १श्लो० ३२) यज्ञानां तपसां चैव शुभानां चैवकर्मणां॥वेदएव द्विजातीनां निःश्रेयसकरः परइति ॥ किंच धर्मस्य वैदिकमूलकत्वं मनुरप्याह द्वितीयाध्याये ॥ (श्लो० ६) वेदोऽखिलोधर्ममूलमिति ॥ पुनर्द्वादशाध्यायेऽपि ॥ आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ॥ यस्तर्केणानुसंधत्ते सधर्मं वेद नेतरइति॥याज्ञवल्क्योऽपि॥(अ० १श्लो० ३) पुराणन्यायमीमांसा-

धर्मशास्त्रांगमिश्रिताः॥वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशे-ति॥श्रीभागवतेऽपि षष्ठस्कंधे॥वेदप्रणिहितोधर्मोह्यधर्मस्तद्विपर्ययइ-ति ॥ पुनरेकादशस्कंधे ॥ कालेन नष्टा प्रलये वाणीयं वेदसंज्ञि-ता ॥ मयादौ ब्रह्मणे प्रोक्ता धर्मोयस्यां मदात्मकइति ॥ कूर्मपुरा-णेऽपि पूर्वभागे षोडशाध्याये शिवं प्रति नारायणः ॥ न वेदवा-ह्ये पुरुषे पुण्यलेशोऽपि शंकर ॥ संगच्छते महादेव धर्मोवेदाद्धि निर्वभावित्यादि ॥ इत्थमन्यत्रापि सहस्रशोद्रष्टव्यं ॥ एवं ब्रह्मणो-ऽपि प्राधान्येन वेदैकप्रमेयत्वं ॥ बृहदारण्यके तमेतंवेदानुवचनेन-ब्राह्मणाविविदिषंति ॥ कठशाखायां सर्वेवेदायत्पदमामनंति ॥ शाकल्यब्राह्मणे तंत्वौपनिषदंपुरुषंपृच्छामि ॥ मांडूक्ये ओमित्ये-तदक्षरमिदंसर्वंतस्योपव्याख्यानं ॥ गीतायां वेदैश्चसर्वैरहमेववेद्य-इत्यादि ॥ उत्तरमीमांसासाधनाध्याये गुणोपसंहारपादे ( सू० १ ) सर्ववेदांतप्रत्ययंचोदनाद्यविशेषात् ॥ एकादशे मांविधत्तेभिधत्ते-मामिति ॥ कौर्मे पूर्वभागे द्वादशाध्याये हिमाचलं प्रति देवीवचः नचवेदादृतेकिंचिच्छास्त्रंब्रह्माभिधायकं योऽन्यत्ररमतेसोसौनसं-भाष्योद्विजातिभिरिति ॥ एवमादिभिस्तैस्तैरनेकैः श्रुतिस्मृतिन्या-यपुराणवचनैर्निरूपितमेवेत्यलं सर्वशिष्टसंमतेऽस्मिन्नर्थे बहुवि-स्तरेण ॥ तस्मात् धर्मब्रह्मणोर्मुख्यतया वेदैकप्रमेयत्वेन संप्रदाया-नां च तदुभयनिर्णयार्थमेव प्रवृत्तत्वेन वेदानुकूलेष्वेव तेषु सं-मतिस्तद्विरुद्धेषु च तेष्वसंमतिर्युक्तैवेति श्रीः ॥ किंचैवमेवप्राचां स्मृतिकारमहर्षीणां परस्परविरुद्धप्रायश्चितादिस्मरणेऽपि नहि परस्परस्योक्तौ विसंमतिरस्ति किंतु व्रतादीनां क्वचित्समुच्चयात् क्वचिद्विकल्पाच्च पुंसां स्वरुच्यनुसारेणान्यतमे प्रवृत्तिरेवाभिप्रेता ॥

आह च लघुपराशरस्मृतिव्याख्यायां माधवः॥ मुनिनैकेन यत्प्रोक्तं तदन्येन निषेधति ॥ प्रत्युतोदाहरेत्तस्मात् सर्वोक्तिः सर्वसंमतेति ॥ तथैव भगवदाज्ञया समयं जगदुद्दिधीर्षतां निरतिशयकारुणिकानां परमाचार्याणां वेदादिमूलकानादिसिद्धसत्संप्रदायभेदप्रवर्त्तने अनेकविधविचित्रप्रकृतिकजीवानां स्वरुच्यनुसारेणान्यतमे प्रवृत्त्या तत्तदिष्टावाप्तिरेव सिसाधयिषितत्वेनाभिप्रायगोचरोनत्वितरेतरराद्धांतेषु विसंमतिरिति वेदाद्यनुकूलेषु शिष्टसंमतभेदेषु सर्वत्र सर्वेषां समुज्जागर्ति संमतिरिति शिवम् ॥ अतः ॥ खेदारण्यस्य लोकानां ये दावाग्नयउत्थिताः ॥ वेदादिमूलकामार्गभेदास्तेष्वस्ति संमतिः ॥ १ ॥

## अथअस्मिन्प्रश्ने उपन्यस्तयोः संमतिभावाभावकोटयोरेकतरस्वीकारे क्रमेण दोषनिक्षेपकं वाक्यद्वयं पंचमषष्ठप्रश्नत्वेन लिखितं॥ तत्राद्यं प्रश्नवाक्यं॥५॥

॥ संमतिश्चेत्तदाचरणं कुतोन ॥

## ॥उत्तरं॥

वेदानुसारिभेदेषु प्रोक्तोभ्युपगमस्तु नः ॥ तथापि न स्वधर्मातिरिक्ताचरणमिष्यते ॥ १ ॥ कृतेर्विधिनिषेधाभ्यां शास्त्रे स्वेतरधर्मयोः ॥ यथास्तिकानां सर्वेषां भिन्नेष्वपि परस्परम् ॥ २ ॥ तत्तच्छाखीयपाठेषु तत्तत्सूत्रोक्तकर्मसु ॥ सत्वेऽपि संमतेः पूर्वं स्वशाखाध्ययनं मतम् ॥ ३ ॥ सदैवाचरणं चापि स्वस्वशाखीयकर्मणां ॥ स्वकीयमेवाचरणं तथास्ते संप्रदायिनाम् ॥ ४ ॥ एवं संमतिसत्वेपि नान्यधर्मकृतिः क्वचित् ॥ प्राप्यते द्वोऽत्ययुक्तोऽपि स्वे-

र्मप्रश्नस्तु चातुरी ॥ ५ ॥ तथाहि ॥ सर्वेषां वेदाद्यऽविरुद्धेषु सर्वस-
दाचारेषु संमतिसत्त्वेऽपि धर्माचरणे स्वसदाचारएव प्रमाणत्वेनो-
क्तोयाज्ञवल्क्येन ॥ ( अ० १ श्लो० ७ ) श्रुतिः स्मृतिः सदाचारः
स्वस्य च प्रियमात्मनः ॥ सम्यक्संकल्पजः कामोधर्ममूलमिदं स्मृ-
तमिति ॥ मनुरपि द्वितीयाध्याये ॥ ( श्लो० १२ ) वेदः स्मृतिः स-
दाचारः स्वस्य च प्रियमात्मनः ॥ एतच्चतुर्विधं प्राहुः साक्षाद्धर्म-
स्य लक्षणमिति ॥ अत्र स्वस्येतिपदं सदाचारेणैव संबध्यते नतु
प्रियमित्यनेन ॥ चकारेणव्यवधानात्॥आत्मनइत्यनेन पौनरुक्त्या-
पत्तेश्च॥सदाचारसंप्रदायशब्दयोश्च परस्परपर्यायत्वमितिप्राञ्चः॥ध-
र्मप्रवृत्तिश्च तत्कार्यमिति॥अतएव धर्माचारयोर्भेदमाह लघुपराशरः
प्रथमाध्याये॥आचारोधर्मपालकः ॥ आचारहीनदेहानां भवेद्धर्मः
पराङ्मुखइति॥एतत्स्मृतिव्याख्यायामितः पूर्वं (अ० १श्लो० ३४)
चातुर्वर्ण्यसमाचारमित्यस्य व्याख्याने माधवोप्याह ॥ समीचीनः
शिष्टाभिमतआचारोयस्य धर्मस्य कारणत्वेन वर्तते सोऽयं यज-
नयाजनादिकर्मलक्षणोधर्मः समाचारः ॥ अतएवाचारधर्मयोर्हे-
तुहेतुमद्रूपेण भेदं वक्ष्यति आचारोधर्मपालकइति ॥ श्रुतिश्च ध-
र्माचारौ भेदेन तथा व्यपदिशति॥यथाकारी यथाचारी तथा भ-
वतीत्यादि ॥ इत्थंकारं ( अ० १श्लो० ११० ) एवमाचारतोदृ-
ष्ट्वा धर्मस्य मुनयोगतिमिति ॥ ( प्रश्न १ खंड १ ) आचाराल्लभते
धर्ममाचारादेव धनमाचारादेव सुखमाचारादेव मोक्षं प्राप्नुयादि-
ति ॥ एवमादिषु मनुस्मृतिगौतमसूत्रादिवचनेष्वपि भेदनिर्देशादा-
चारशब्दः संप्रदायपर्यायएवावगम्यते ॥ संध्यावंदनादिरूपस्याचा
रस्य यजनयाजनादिवद्धर्मांतःपातित्वेन भेदनिर्देशायोगादित्यन्य-

देतत् ॥ एवमाचारस्य धर्मप्रमाणत्वबोधकवचनेषु सामान्यतः संप्रदायपर्यायाचारशब्दप्रयोगेऽपि स्वस्वसंप्रदायएव स्वस्वाचरणीयधर्मे प्रमाणत्वेन निर्दिष्टोबोध्यः ॥ पूर्वोक्ते याज्ञवल्क्यवचने सर्वस्मृतिप्रधानमनुवचने च कंठरवेण तथैवोक्तेः ॥ तस्मात् सर्वसंप्रदायेषु संमतिसत्वेपि धर्माचरणं तु स्वस्वसंप्रदायानुसारेणैव युक्तं॥ अतएवाचारमाधवे प्रथमाध्याये॥वेदोदितं स्वकं कर्म नित्यं कुर्यादतंद्रितः ॥ तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिमिति वेदोदितमपि स्वकं स्वसांप्रदायिकमेव नित्यं कुर्यात् नत्वितरसंप्रदायप्राप्तमपि ॥ धर्माणां संप्रदायभेदेन व्यवस्थितत्वादितिभावः ॥ अत्रैव तृतीयाध्याये यमः॥ वेदविद्याव्रतस्नाताः श्रोत्रियावेदपारगाः ॥ स्वधर्मनिरताः शांताः क्रियावंतस्तपस्विनः ॥ तेभ्योहव्यं च कव्यं च प्रसन्नेभ्यः प्रदीयतामिति ॥ किंच अत्रिस्मृतावपि ॥ तानि कर्माणि कुर्वाणादूरे संतोपि मानवाः ॥ प्रियाभवंति लोकस्य स्वेस्वे कर्मण्युपस्थिताइति ॥ दक्षस्मृतावपि ॥ गृहस्थोऽपि क्रियायुक्तोन गृहेण गृही भवेत् ॥ तथैव पुत्रदारैश्च स्वकर्मपरिवर्जितइति ॥ क्रियायुक्तः स्वाश्रमानुरूपशास्त्रीयक्रियायुक्तः ॥ स्वकर्म स्वसांप्रदायिकं कर्म ॥ अन्यथा क्रियायुक्तस्य कर्मवर्जितत्वासंभवेन वचनव्याघातापातात् ॥ एतेन उक्तवक्ष्यमाणवचनेषु स्वधर्मादिशब्दैः प्रातिस्विकवर्णाश्रमधर्ममात्रं याह्यं नतु स्वसांप्रदायिकधर्मोपीति कुचोद्यमपि निरस्तं वेदितव्यं॥ संकोचे मानाभावाच्च ॥ मनुयाज्ञवल्क्यजैमिन्यादिभिः संप्रदायस्यापि धर्मे प्रमाणत्वादरणाच्च ॥ तथा पुनः सएवाह ॥ विभागशीलसंपन्नः क्षमायुक्तोदयालुकः ॥ स्वकर्मणि सदायुक्तोगृहस्थः शेष

भुग्भवेदिति ॥ अन्यच्च ॥ स्वसांप्रदायिकं कर्म त्यक्त्वाऽन्यसांप्रदा-
यिककर्मकरणे दोषं स्मरत्यत्रिः ॥ येप्यपेताः स्वधर्माद्ये परधर्मे
व्यवस्थिताः॥ तेषां शास्तिकरोराजा स्वर्गलोके महीयते ॥१५॥
आत्मीये संस्थितोधर्मे शूद्रोऽपि स्वर्गमश्नुते ॥ परधर्मोभवेत्त्याज्यः
सुरूपं परदारवत् इति ॥ दक्षोपि ॥ ( श्लो० १८ ) स्वकं कर्म परि
त्यज्य यदन्यत्कुरुते द्विजः ॥ अज्ञानादथवा लोभात्सतेन पति-
तोभवेदिति ॥ नारायणभट्टकृतायां धर्मप्रवृत्तौ वसिष्ठोऽपि ॥ स्व-
कं कर्म परित्यज्य यदन्यत्कुरुते नरः॥अज्ञानादथवा लोभात्सतेन
पतितोभवेदिति ॥ अतः स्वमतपरमतोत्कर्षापकर्षप्रयोजकं प्रमा-
णशून्यं शुष्कवादं त्यक्त्वा स्वरुच्यनुसारेण कंचिदेकं संप्रदाय-
माश्रयेन्नतु एकतरसंप्रदायानवलंबेन शुष्ककर्मवादतर्कपाखंडा-
दिरतः स्यादित्याहोद्धवं प्रत्येकादशस्कंधे भगवान् ॥ ( अ० १८-
श्लो० ३० ) वेदवादरतोन स्यान्न पाखंडीन हैतुकः ॥ शुष्कवाद-
विवादेन कंचित्पक्षं समाश्रयेदिति ॥ अतः सर्वैः स्वसांप्रदायिक-
धर्माचरणमेव विधेयं ॥ अतएव कृच्छ्रादिसाधारणेतिकर्त्तव्यतां
व्याख्यायाह विज्ञानेश्वरः ॥ एवमन्येष्वपि विरोधिपदार्थेषु वि-
कल्पआश्रणीयोऽविरोधिषु समुच्चयः ॥ शाखांतराधिकरणन्याये
न सर्वस्मृतिप्रत्ययत्वात्कर्मणइति ॥ तस्मादामरणमपि स्वसंप्रदा-
यानुसार्येव धर्माचरणं श्रेयस्तदेव च मोक्षसाधनं भवति ॥ य-
थाह गीतायां भगवान् ॥ स्वधर्मे निधनं श्रेयः परधर्मोभयावह-
इति ॥ नारदपंचरात्रेऽपि द्वितीयरात्रे सप्तमाध्याये नारदेन मो-
क्षकारणानि पृष्टस्तानि वदन् शिवः ॥ ( श्लो० ४० ) स्वधर्मा
चरणं शुद्धं विधर्माच्च निवर्त्तनं ॥ वेदोक्ताचरणं विप्र परं नि-

र्णकारणमिति ॥ नापिहि तत्तदाचरणाभावमात्रेण तत्रासंमतिः शक्या वक्तुं ॥ अन्यथा स्वशाखायाःप्रथमतोऽध्ययनं ब्रह्मयज्ञं तदुक्तकर्माणिच तन्मंत्राद्यनुसारेण कुर्वतामपि शाखांतरीयेषु तेष्वसंमतिः प्रसज्येत ॥ विधीयते हि स्वशाखायाएव प्रथमतोऽध्ययनादिकं ॥ यथाह माधवीये ( अ० १ ) वसिष्ठः ॥ पारंपर्यागतोयेषां वेदः सपरिबृंहणः ॥ तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथेति ॥ स्वशाखापरित्यागं च सएव निषेधति ॥ यः स्वशाखां परित्यज्य पारक्यामधिगच्छति ॥ सशूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः ॥ स्वीया शाखोज्झिता येन ब्रह्म तेनोज्झितं परं ॥ ब्रह्महैव सविज्ञेयः सद्भिर्नित्यं विगर्हितः ॥ अधीत्य शाखामात्मीयां परशाखां पठेदिति॥अतएव सायनमाधवीयभाष्ये स्वाध्यायब्राह्मणव्याख्याने स्वाध्यायशब्दः स्वस्याध्यायः स्वाध्यायइति विग्रहेण स्वशाखापरतया व्यवस्थापितः ॥ आस्तां किमिहानेनाप्रकृतेन विचारेण ॥तस्मादन्यशाखीयकर्मवत् अन्यसंप्रदायोक्तप्रकारकं चिन्हधारणभगवत्सेवादिकमपि शिष्टानाचरंति ॥ उक्तवचनेषु तन्निषेधात् ॥ यदि त्वनाचरणमात्रेणैवासंमतिं मन्यते भवान् तर्हि सर्वेषामपि स्वान्यशाखीयं कर्मानाचरतां तत्रतत्रासंमतिमभ्युपगच्छतस्तव सर्वेष्वपि वेदबहिर्मुखत्वादयोदोषाअभिमताभवेयुः ॥ किंच सर्वेषां वर्णानामाश्रमाणां च परस्परस्य विहितान् धर्मान् अननुतिष्ठतामितरेतरधर्मेष्वसंमतिं मन्यमानेन भवता सर्वत्रैव वर्णाश्रमधर्मच्युतत्वमभ्युपगंतव्यं स्यात् ॥ यदि च शास्त्रप्राप्तत्वात् परस्परधर्मानाचरणस्य न दोषप्रयोजकत्वं नाप्यन्योन्यधर्मेष्वसंमतत्वं चेति ब्रूषे ॥ तर्ह्युक्तमनुयाज्ञव-

त्क्यादिवचनवलात्पातिस्विकधर्माचरणे स्वसंप्रदायस्यैव प्रमाणत्वं सिध्यतीत्यन्यत्र संमतिसत्वेऽप्याचरणं तु स्वसंप्रदायानुसारेणैवेत्यत्र न कोऽपि शंकावकाशः ॥ अतएव महाभारते आजगरे युधिष्ठिरवाक्यं ॥ तर्कोऽप्रतिष्ठः श्रुतयोविभिन्नानैकोमुनिर्यस्य वचः प्रमाणं ॥ धर्मस्य तत्वं निहितं गुहायां महाजनोयेन गतः सपंथाइति ॥ साधूनां समयश्चापि प्रमाणं वेदवद्भवेदिति मिताक्षरादिवहुप्रामाणिकनिवंधलिखितब्रह्मांडवाक्ये कलौ तु संप्रदायस्यैव विशेषतः प्रामाण्यं च वोध्यतइति श्रीः ॥ तथाच संमत्याचरणयोर्व्याप्त्यभावात् संमतिश्चेत्तदाचरणं कुतोनेति प्रश्नस्तु प्रष्टुश्चातुर्यख्यापनार्थैवेति दिक् ॥ तस्माच्छाखाधिकरणन्यायेन सर्वैः स्वस्वसंप्रदायानुसारेणैव धर्माचरणं विधेयमित्येव युक्ततरं नत्वितरानुसारेण ॥ जीवानां रुचिभेदेन विविधमतानुसरणं तु भवद्ग्रंथेष्वप्युच्यते ॥ श्लो० रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषामिति ॥ तृतीयस्कंधेच भगवान् कपिलः ॥ ( अ० २९ श्लो० ७ ) भक्तियोगोवहुविधोमार्गैर्भामिनि भाव्यतइति संप्रदायभेदेन भक्तिभेदं प्रतिज्ञाय तत्रतत्र प्रवृत्तौ जीवानां स्वभावभूतगुणवैचित्र्यमेव हेतुत्वेनाह॥स्वभावगुणमार्गेण पुंसां भावोविभिद्यतइति॥ नैतावता सर्वेषां सर्वत्रासंमतिगंधोऽपि इति सर्वं क्षेमं ॥

## ॥ अथावांतरपष्ठप्रश्नरूपं द्वितीयं वाक्यं ॥

॥ असंमतिश्चेत्कुतोंऽगीक्रियते ॥ ६ ॥

॥उत्तरं॥

संमतिर्वैदिकेपृक्ता ततोऽयं सर्वथा वृथा ॥ हेतुपर्यनुयोगोथावैदिकेष्वस्त्वसंमतिः ॥ १ ॥ तत्र चेत्पृच्छ्यते हेतुः सविकल्पद्वयोत्तरे ॥ वेदशास्त्रविरोधाख्यः पूर्वमेवोदितोमया ॥ २ ॥ तस्मान्नायं प्रश्नः पुनरुत्तरमर्हतीति श्रीः ॥ मार्गकुले किल कलया कलहाकुलतां तु कलयितुं प्रश्नः ॥ रचितोऽनुचितोऽन्योन्यं कलहायेरन्यथा कथं संतः ॥ १ ॥

## ॥अथास्यावांतरस्य षष्ठप्रश्नस्यैव कुक्षावेतद्वाक्यं वक्तुर्विविक्ताख्यापकं लिखितमुपलभ्यते॥

॥ किंवर्णनिष्ठः ॥ ६ ॥

( वर्णोब्राह्मणादिः तन्निष्ठत्वं च संप्रदायस्य तदधिकारकत्वं )

॥उत्तरं॥

इह किमिति पृथक्पदात् संप्रदायस्य वर्णनिष्ठत्वमस्ति नवेत्येव जिज्ञासितमाहोस्वित् कस्मिन् वर्णे निष्ठा यस्येति समस्तपदाज्जिज्ञासाबोधकंकिंशब्दस्य वर्णे सामानाधिकरण्येनान्वयात् संप्रदायाधिकृतोवर्णविशेषः ॥ तत्राद्ये वर्णविशिष्टेषु मनुष्येषु संप्रदायप्रवृत्तेः प्रत्यक्षसिद्धत्वेन संशयघटकस्याभावकोटेरनुदयेन प्रथमकोटेरेव विवादानध्यासिततया संशयस्यैवानुदयात्तस्यैकधर्मिकविरुद्धकोटिद्वयावगाहिज्ञानरूपत्वात् व्यर्थः प्रश्नः ॥ अथ किमाश्रमनिष्ठइत्यग्रिमवाक्यानुरोधाज्ज्ञायते धर्माहि द्विविधाएव ॥ वर्णधर्माआश्रमधर्माश्चेतिभेदादितिप्रष्टुर्मतम्॥तत्र भगवन्मंत्रग्रहणतत्सेवादीनां संप्रदायधर्माणां वर्णधर्मत्वमाश्रमधर्मत्वं वेत्येव विचि-

किंस्विदं तस्येति ॥ तत्राप्युच्यते ॥ नहि धर्माणामुक्करीतिकद्वैविध्यमेव शास्त्रसंमतं ॥ तदतिरिक्तानामपि जातिधर्मकुलधर्मदेशधर्मादीनां तत्रतत्र निरूपणात् ॥ किंच ॥ वर्णाश्रमेतराणां नोब्रूहि धर्मानशेषतइत्यत्र धर्माणां षड्विधत्वं विज्ञानेश्वरेणोक्तं ॥ तद्यथा ॥ वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः गुणधर्मः निमित्तधर्मः साधारणधर्मश्चेति ॥ तत्र संप्रदायधर्माणां साधारणधर्मत्वं ॥ संप्रदायसंमततुलसीकाष्ठमालाधारणाद्याचाराणां प्रायेण सर्ववर्णेष्वविशिष्टत्वात् ॥ विज्ञानेश्वरेणाप्यहिंसाशौचाचारादीनां साधारणधर्मत्वं विलिख्य तेषामाचार्यकरणपूर्वकत्वकथनात् ॥ इदं चाचार्यकरणं सांप्रदायिकगुरूपसर्पणरूपमेव ॥ उपनयनकालिकस्य तस्य स्त्रीशूद्रादिष्वसंभवेन साधारणधर्मत्वाभावात् ॥ तथा बाह्यांतरभेदेन द्विविधमपि शौचं संप्रदायैकलभ्यमित्युपपादितं प्राक्॥मनुरपि॥( अ० १०श्लो० ६३ ) अहिंसा सत्यमस्तेयं शौचमिंद्रियनिग्रहः ॥ एतं सामासिकं धर्मं चातुर्वर्ण्ये ऽब्रवीन्मनुरिति॥याज्ञवल्क्योपि॥(अ० १) गृहस्थप्रकरणे वर्णधर्मानुक्त्वा (श्लो० २६) अहिंसा सत्यमस्तेयं शौचमिंद्रियनिग्रहः ॥ दानं दमोदया क्षांतिः सर्वेषां धर्मपालनमिति ॥ इहांतरशौचेंद्रियनिग्रहौ संप्रदायोपजीव्यकौ ॥ एवमन्यत्रापि तद्धर्माणां साधारणधर्मत्वमनेकत्र सिद्धमित्यलं ॥ अथ द्वितीयपक्षावलंबनेन वर्णस्य किंशब्दसामानाधिकरण्यात् संप्रदायाधिकृतं किं वर्णमात्रमुत तद्विशेषएवेत्येव जिज्ञासितं स्यात् ॥ तदातु साधारणधर्मत्वस्थापनेनैव दत्तोत्तरं ॥ अथापि ब्रूमः ॥ कृपालोर्दीननाथस्य सर्वोद्धरणकारिणः ॥ सर्वेशितुर्हरेर्मार्गाः प्रायः सर्वाऽधिकारकाः ॥ १ ॥ दैत्यवद्विषतां चापि नृ-

णां सर्वाऽधिकारकाः ॥ हरेर्मंत्रग्रहे ज्ञाने नानाभक्तिषु मोक्षणे ॥ ॥ २ ॥ चतुर्णामपि वर्णानां श्रुता शास्त्रे धिकारिता ॥ संप्रदायेषु तत्सिध्यै ते सर्वेऽप्यधिकारिणः ॥ ३ ॥ तथाहि ॥ सर्वेषामपि वर्णानां स्वशरणागतिवशान्मोक्षलक्षणपरगतिप्राप्तिं प्रवक्ति भगवान् ॥ (अ० ९श्लो० ३२) मां हिपार्थ व्यपाश्रित्य येपि स्युः पापयोनयः॥ स्त्रियोवैश्यास्तथा शूद्रास्तेऽपि यांति परांगतिं ॥ किं पुनर्ब्राह्मणाः पुण्याभक्ताराजर्षयस्तथेति ॥ व्यपाश्रयः शरणागतिरिति व्याख्यातारः ॥ किंच ॥ भगवन्मंत्राणामपि बहूनां गोपालादीनां सर्ववर्णाधिकारकत्वं तत्रतत्र स्मर्यते ॥ यथोक्तं नारदपंचरात्रे तृतीयरात्रप्रथमाध्याये ॥ ( श्लो० १३ ) सर्वेषु वर्णेषु तथाश्रमेषु नारीषु नानासु यजन्मखेषु॥दाता फलानामभिवांछितानां द्रागेव गोपालकमंत्रएषइत्यादि ॥ पुनः कृष्णमंत्रांतरमुपक्रम्य गौतमीयतंत्रे चतुर्विंशाध्याये ( श्लो० २३ ) रक्तपद्मायुतं हुत्वा द्विजोज्ञानमवाप्नुयात् ॥ सर्वलौकिकशांतिं च क्षत्रियोनात्र संशयः ॥ अन्येषां यद्यदिष्टं तत् साधयेन्मनुनाऽमुनेति ॥ भगवन्मंत्रेषु चातुर्वर्ण्याधिकारोदर्शितः ॥ तत्रैव प्रथमाध्यायेऽपि ॥ एते समफलाः सर्वे समंत्राइति नः श्रुतं ॥ येन सर्वफलावाप्तिः सर्वेषां बंधुरेव सः ॥ सर्ववर्णाधिकारश्च नारीणां योग्यएवयः ॥ तं ब्रूहि भगवन्मंत्रमल्पायासफलप्रदं ॥ इत्यादिना वैष्णवमंत्रोपदेशग्रहणाधिकारश्चातुर्वर्ण्यस्य दर्शितः ॥ एवं दीक्षाधिकारोपि मंत्रसारे ॥ दीक्षिताय विशेषेण प्रसीदेन्नान्यथा हरिः ॥ ब्राह्मणः क्षत्रियोवापि वैश्यः शूद्रोथवा पुनः ॥ एवं स्त्रियोवा यत्नेन गुरुमेव समाश्रयेदिति ॥वादावल्यां विष्णुयामले ॥ब्राह्मणान् क्षत्रियान् वै-

श्यान् सच्छूद्रान् सस्त्रियोपिवा॥ विष्णुभक्तिरतान् साधून् दीक्षयेद्वि धिनागुरुरिति ॥ नचानेकेभ्य उपदेशेन मंत्राणां नैर्बल्यं शंकनीयं ॥ (अ० १) दर्भाः कृष्णाजिनं मंत्राब्राह्मणाश्च विशेषतः ॥ न ते निर्माल्यतां यांति विनियोज्याः पुनःपुनरिति माधवीये शंखवचनात् ॥ किंच मंत्रोपदेशानंतरं भगवत्सेवनादिषु सांप्रदायिकधर्मेषु चतुर्णामपिवर्णानामधिकारस्मरणादपि संप्रदायस्य चतुर्वर्णनिष्ठत्वं स्पष्टमेवोरीकृतं महर्षिभिः ॥ तथाहि॥निर्णयसिंधौ तृतीयपरिच्छेदे देवीपुराणे ॥ ब्राह्मणः क्षत्रियोवैश्यः शूद्रश्च पृथिवीपते ॥ स्वधर्मतत्परोविष्णुमाराधयति नान्यथेति ॥ नारदपंचरात्रे (रात्र २ अ० ७) मुक्तिकारणान्युपक्रम्य शिवः ॥ (श्लो० ३७) चतुर्णामपि वर्णानां गुरुकृष्णार्चनंपरं ॥ द्विजानां वैष्णवानां च सेवनं मुक्तिकारणमिति ॥ गौतमतंत्रे च षोडशाध्याये भगवत्सेवाप्रकारमुक्त्वा निगद्यते ॥ (श्लो० ९१) एवमभ्यर्च्य जगतां पतिं शुद्धमनीषया ॥ धर्मार्थकाममोक्षाणां दायादोभवति ध्रुवं ॥ विप्रोदेवाधिपोभूयात्साक्षाद्भूमिपुरंदरः ॥ क्षत्रियोराजवर्यश्च वैश्योधनसमृद्धिमान् ॥ शूद्रः सुखानि सर्वाणि भुक्त्वा ऽच्युतपुरं व्रजेत् ॥ एवं ते कथितं विप्र संसारभयनाशनं ॥ अर्चनं त्रिविधं यत्ते मूलाविद्यानिकृंतनमिति ॥ नच स्त्रीशूद्रयोर्भगवत्सेवने ऽनधिकारोथ दूरात्पूजनाधिकारसत्वेपि स्पर्शादौ त्वनधिकारएव ॥ शूद्रोवाऽनुपनीतोवा सधवा विधवांगना ॥ दूरादेवास्पृशन्पूजां प्रकुर्याच्छिवकृष्णयोरिति वाक्यादिति शंक्यं ॥ स्पर्शनिषेधस्य शालग्रामविषयकत्वेन भगवत्प्रतिमादौ स्त्रीशूद्रयोरपि पूजाधिकारात् ॥ निर्णयसिंधौ ॥ शालग्रामं न स्पृशेत्तु हीनवर्णोवसुंधरे ॥ स्त्रीशूद्र-

करसंस्पर्शोवज्रस्पर्शाधिकोमतः ॥ मोहाद्यः संस्पृशेच्छूद्रोयोपि-द्वापि कदाचन ॥ स्वपते नरके घोरे यावदाभूतसंप्लवं ॥ यदिभक्ति-र्भवेत्तस्य स्त्रीणां वाऽपि वसुंधरे ॥ दूरादेवास्पृशन्पूजां कारयेत्सु-समाहितइति वाराहोक्तेः शालग्रामशिलामात्रे निर्वंधोन प्रतिमा-दौ ॥ सर्ववर्णैस्तु संपूज्याः प्रतिमाः सर्वदेवताइति तत्रैवोक्तेरिति निर्णीतं ॥ धर्माब्धिसारेऽपि ( प०३ ) स्त्री शूद्रोवा स्पर्शसहितं शालग्रामचक्रांकितवाणलिंगानि नार्चयेदित्यादिना तदेव स्वीकृ-तं ॥ अथ सेवार्थं भगवत्स्वरूपग्रहणेऽपि चतुर्णामपि वर्णानाम-धिकारोदर्शितः कृत्यकल्पतरौ देवीपुराणे ॥ चतुर्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिरिति ॥ इदं सिंधुद्वयेऽप्युदाहृतं ॥ एवं प-वित्रकरणादिषु नैमित्तिकेष्वपि सांप्रदायिकधर्मेषु चातुर्वर्ण्याधि-कारः स्मर्यते ॥ निर्णयसिंधौ ( प०२ ) पवित्रकप्रकरणे विष्णुः रहस्ये॥ब्राह्मणः क्षत्रियोवैश्यस्तथा स्त्री शूद्रएव च॥स्वधर्मावस्थि-ताः सर्वे भक्त्या कुर्युः पवित्रकमिति ॥ एवं संप्रदायैकसाध्यायां भगवद्भक्तावपि चतुर्णामपि वर्णानामधिकारः स्मर्यमाणस्तेषां सं-प्रदायाधिकारं बोधयति ॥ यथा सारसंग्रहे स्कंदपुराणे ॥ विष्णु-भक्तिसमायुक्तोमिथ्याचारोऽप्यनाश्रमी ॥ पुनाति सकलान् लो-कान् सहस्रांशुरिवोदितः ॥ ब्राह्मणः क्षत्रियोवैश्यः शूद्रोवा यदि-वेतरः ॥ विष्णुभक्तिसमायुक्तोज्ञेयः सर्वोत्तमोत्तमः ॥ दुराचारोऽपि सर्वाशी कृतघ्नोनास्तिकः पुरा ॥ समाश्रयेदादिदेवं श्रद्धया शरणं हियः ॥ निर्दोषं विद्धि तं जंतुं प्रभावात्परमात्मनइति ॥ श्रीमद्भाग-वते सप्तमस्कंधे सप्तमाध्याये प्रल्हादः ॥ सर्वेषामपि भूतानां हरि-रात्मेश्वरः प्रियः ॥ भूतैर्महद्भिः स्वकृतैः कृतानां जीवसंज्ञितः ॥दे-

वोऽसुरोमनुष्योवा यक्षोगंधर्वएव च ॥ भजन्मुकुंदचरणं स्वस्तिमान् स्याद्यथा वयम् ॥ नालं द्विजत्वं देवत्वमृषित्वं वा ऽसुरात्मजाः॥ प्रीणनाय मुकुंदस्य न वृत्तं न बहुज्ञता ॥ न दानं न तपोनेज्या न शौचं न व्रतानि च॥प्रीयतेऽमलया भक्त्या हरिरन्यद्विडंवनं ॥ ततो हरौ भगवति भक्तिं कुरुत दानवाः ॥ आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ॥ दैतेयायक्षरक्षांसि स्त्रियः शूद्राव्रजौकसः ॥ खगामृगाः पापजीवाः संति ह्यच्युततां गताः ॥ एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ॥ एकांतभक्तिर्गोविंदे यत्सर्वत्र तदीक्षणमिति ॥ अत्र चतुर्णां वर्णानां देवासुरादीनां च भगवद्भक्ताव-धिकारउक्तः ॥ भक्तिसाधनं च प्रथमतः सांप्रदायिकगुरूपसर्पणं आत्मनिवेदनं ततस्तदनुसारेण सत्संगभगवत्सेवादिकं च इतः पूर्वमेव ( श्लो० २० ) गुरुशुश्रूषया भक्त्या सर्वलब्धार्पणेन चेत्यादिनोक्तं ॥ एवमेवैकादशस्कंधेपि ॥ (अ० १७ श्लो० १) यस्त्वयाऽभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः॥वर्णाश्रमाचारवतां सर्वेषां द्विपदामपीत्युद्धवेनाऽपि भगवद्भक्तौ चातुर्वर्ण्याधिकारउक्तः ॥ तत्रैव द्वादशाध्याये भगवान् ( श्लो० ३ ) सत्संगेन हि दैतेया यातुधानामृगाः खगाः ॥ गंधर्वाप्सरसोनागाः सिद्धाश्चारणगुह्यकाः॥ ॥ ३ ॥ विद्याधरामनुष्येषु वैश्याः शूद्राः स्त्रियोंऽत्यजाः ॥ रजस्तमः प्रकृतयस्तस्मिंस्तस्मिन्युगे ऽनघ ॥ ४ ॥ बहवोमत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ॥ वृषपर्वा वलिर्बाणोमयश्चाऽथविभीषणः ॥ ५ ॥ सुग्रीवोहनुमानृक्षोगजोगृध्रोवणिक्पथः॥व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथाऽपरे इति सर्वेषामपि स्वभक्तावधिकारं वक्ति॥निर्णयसिधौ(परि२)माघस्नानप्रकरणे पाद्मे॥सर्वेऽधिकारिणोह्यत्रविष्णु-

भक्तौयथा नृपेति॥अथ संप्रदायसाध्ये ब्रह्मज्ञानेऽप्यस्ति सर्वेषां वर्णा नामधिकारोऽतः क्रमात्प्रत्येकं सनिरूप्यते॥ तत्र प्रथमं ब्राह्मणेष्व- पि ब्रह्मविदामेवात्युत्कर्षमाह मनुः॥ (अ० १श्लो० ९६) भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः॥ बुद्धिमत्सु नराः श्रेष्ठा न- रेषु ब्राह्मणाः स्मृताः॥ ब्राह्मणेषु च विद्वांसोविद्वत्सु कृतबुद्धयः॥ कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनइति ॥ एवमन्यत्राप्यनेकत्र ब्रह्मविदउत्कर्षोवचनसहस्रैरुक्तः॥ किंच ब्राह्मणस्य भगवद्धर्मा- वश्यकता श्रीभागवतादिष्वनेकत्रोच्यते ॥ (स्कं० ७ अ० ९- श्लो० १०॥) विप्राद्द्विषड्गुणयुतादरविंदनाभपादारविंदविमुखा च्छ्वपचं वरिष्ठं॥ मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति स- कुलं नतु भूरिमानइति॥ एकादशस्कंधे (अ० १७) वर्णधर्मा- नुपक्रम्य भगवान्॥ (श्लो० १५) शमोदमस्तपः शौचं संतोषः क्षांतिरार्जवम्॥ मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाइति॥ सप्तमस्कंधेपि (अ०११) वर्णधर्मानुपक्रम्य नारदः (श्लो०२१) शमोदमस्तपः शौचं संतोषः क्षांतिरार्जवम्॥ ज्ञानं दया ऽच्यु- तात्मत्वं सत्यं च ब्रह्मलक्षणमिति॥ अत्रैव श्रीधरकृतव्याख्यायां वर्णानामभिव्यंजकरूपान् धर्मानाह॥शमइति चतुर्भिः॥ अच्युता- त्मत्वं श्रीविष्णुपरत्वं सर्वेषामिति व्याख्यातं॥ अतः श्रीहरिभक्त- त्वमपि शुद्धकुलोद्भवविप्रस्य स्वाभाविकं॥स्ववर्णाभिव्यंजकत्वात्॥ एवं क्षत्रियस्याऽपि आन्वीक्षिक्यादिवद्ब्रह्मविद्याभ्यासस्याऽप्याव- श्यकतां वक्ति मनूराजधर्मानुपक्रम्य सप्तमे॥ (श्लो० ४३) त्रैविद्येभ्यस्त्रयीं विद्यां दंडनीतिं च शाश्वतीम्॥ आन्वीक्षिकीं चा- त्मविद्यां वार्तारंभांश्च लोकतइति॥ आत्मविद्यां ब्रह्मविद्यां चा-

भ्युदयव्यसनयोर्हर्षविषादप्रशमनहेतुं शिक्षेदिति व्याख्यातं म-न्वर्थमुक्तावल्यां ॥ शाश्वतीमित्यात्मविद्यांतानां सर्वासां विशेषणं॥ विद्यायां नित्यत्वं च पारंपरिकगुरुसदुपदेशापरपर्यायसंप्रदायलब्ध त्वमेव ॥ अतएव पारंपर्यागतत्वेन नित्यामिति कुल्लूकभट्टः ॥ न-चैवमपि अभिषिक्तस्यैव तदावश्यकत्वं नतु क्षत्रियसामान्यस्येति-वाच्यं ॥ लघुपराशरे ( अ० २ श्लो० १ ) वर्णधर्मान् प्रवक्ष्या-मीत्युपक्रम्य ( श्लो० ३ )प्रजानांरक्षणं दानमरीणां निग्रहस्त था॥यजनाध्ययने राज्ञि विषयासक्तिवर्जनमिति ॥ अत्रोपक्रमा नुरोधेन राजशब्दस्य गर्भादेकादशे राज्ञइत्यादिवत् क्षत्रियसा-मान्यपरत्वात् तद्धर्मेषु च ब्रह्मविद्यैकसाध्यस्य विषयासक्तिवर्ज-नस्य परिगणितत्वेन तेष्वपि सत्संप्रदायानुसारेण ज्ञानस्यावश्य-कत्वं निश्चीयते ॥ अपिचाभिषिक्तविषये याज्ञवल्क्यस्मृतावपि ( अ० १ ) राजादिधर्मप्रकरणे ( श्लो० १ ) महोत्साहः स्थूलल क्षइत्यारभ्य ( श्लो०३ ) अस्यां चैव नराधिपइत्यंतं राजस्वरूप-वर्णने स्थूललक्षोवृद्धसेवकः सत्वसंपन्नः शुचिर्धार्मिकोऽव्यसनः प्राज्ञइत्यादिभिः संप्रदायसेवनकार्यभूतविशेषणैराज्ञस्तदधिका-रोगम्यते ॥ इदंच मिताक्षरापर्यालोचनात्सम्यगेव स्फुटति ॥ मा-धवीये ( अ०२ ) राजधर्मप्रकरणे मार्कंडेयः ॥ स्थानवृद्धिक्षय-ज्ञानषाड्गुण्यविजितात्मना ॥ भवितव्यं नरेंद्रेण न कामवशवर्ति-नेति कामासक्तिवर्जनमुखेन ज्ञानावश्यकत्वं वक्ति ॥ अपिच ब्रा-ह्मणस्य संप्रदायलभ्यभगवद्धर्मतज्ज्ञानतत्सेवाद्याचाराणामावश्य-कत्वं साधितमेव तच्चक्षत्रियेऽपि प्राप्नोति ॥ माधवीये ( अ०२ )

वामनपुराणे ॥ क्षत्रियस्यापि कथितायआचाराद्विजस्य हीति त-दतिदेशात् इहापि क्षत्रियपदेन संप्रदायोपसेवनं हि नद्यभिषिक्त-मात्रस्य धर्मः किंतु क्षत्रियसामान्यस्यैवेति बोध्यते॥अपरंच भग-वद्दर्चनस्य सत्संप्रदायैकसाध्यत्वं दिङ्मात्रेण प्रतिपादितं प्राक् कस्मै प्रयोजनायेत्यस्योत्तरे ॥ ग्रंथांतरेषु चेदं स्फुटतरं ॥ त-स्यच ब्राह्मणवत् क्षत्रियादीनामपि कलियुगेऽप्यावश्यकत्वं ॥ यथाह लघुपराशरोद्वितीयाध्याये कलौ गृहस्थस्य धर्मानुपक्र-म्य ॥ (श्लो०१३) क्षत्रियोऽपि कृषिं कृत्वा देवान् विप्रां-श्च पूजयेत् ॥ वैश्यः शूद्रस्तथा कुर्यादिति ॥ तथेति वैश्यशू-द्रयोरपि देवार्चनाद्यतिदिश्यते ॥ किंच माधवीये वैश्यधर्मप्र-करणे आश्वमेधिके ॥ वणिक् धर्ममनुंचन्वै देवब्राह्मणपूजकः ॥ सवणिक् स्वर्गमाप्नोति पूज्यमानोऽप्सरोगणैरिति॥अतस्तयोरपि ब्र-ह्मक्षत्रवत् संप्रदायोपयोगः ॥ तत्र वैश्ये तु शरदि वैश्यमित्यध्य-यनांगभूतोपनयनविधिश्रवणेन गर्भात्तुद्वादशे विशइति स्मरणेन च अध्ययनाधिकारसिध्या पराशरव्याख्यायां (अ०२) वा-राहपुराणे ॥ स्वाध्यायं यजनं दानं कुसीदं पशुपालनं ॥ गोरक्षां कृषिवाणिज्यं कुर्याद्वैश्योयथाविधीति ॥ मार्कंडेयेपि ॥ दानम-ध्ययनं यज्ञोवैश्यस्याऽपि त्रिधैव सइति॥एवमादिषु प्रत्यक्षतोऽध्य-यनविध्युपलब्धेश्च सूत्रानुसारेणोपनिषदध्ययनपूर्वकब्रह्मज्ञानार्थं संप्रदायोपयोगः॥अतएव तृतीयाध्याये अध्यात्मप्रकरणे याज्ञव-ल्क्यः ॥ (श्लो०१३५) सर्वाश्रमैर्विजिज्ञास्यः समस्तैरेवमेवतु॥द्र-ष्टव्यस्त्वथ मंतव्यः श्रोतव्यश्च द्विजातिभिरित्याह॥ द्विजातिभिरिति बहुवचनात् त्रिभिरपि वर्णैरित्यर्थः॥एवमन्यत्राऽपि ब्रह्मक्षत्रवत् सं-

न्यासार्थमपि वैश्यस्य ज्ञानावश्यकत्वमुच्यते॥यथा आचारमाधवे द्वितीयाध्याये स्मृत्यंतरम्॥ऋणत्रयमपाकृत्य निर्ममोनिरहंकृतिः॥ ब्राह्मणः क्षत्रियोवा थ वैश्योवा प्रव्रजेद्गृहादिति॥ किंच श्रीभागवते (स्कं०७अ०११) वर्णधर्मानुपक्रम्य (श्लो०२३) देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणं॥आस्तिक्यमुद्यमोनित्यं नैपुण्यं वैश्यलक्षणमिति॥ अतोवैश्यस्याऽपि ब्रह्मसूत्रानुसार्युपनिषदर्थज्ञानद्वाराब्रह्मज्ञानसंपत्तये भगवत्सेवादिसंपत्तये च संप्रदायसेवनमावश्यकं॥ एवं शूद्रस्याऽप्यस्ति गुरूपदेशद्वारा ब्रह्मज्ञानाद्यधिकारः॥ अतएवाध्यात्मविद्यया शूद्रस्यापि मान्यत्वमाह याज्ञवल्क्यो (अ०१) गृहस्थप्रकरणे॥ (श्लो०२०) विद्याकर्मवयोबंधुवित्तैर्मान्यायथाक्रमं॥एतैः प्रभूतैः शूद्रोऽपि वार्द्धके मानमर्हतीति॥ नचास्य वेदानधिकारात्तदुपजीव्ये ऽध्यात्मविषये ऽनधिकारः शंक्यः॥ श्रुत्युच्चारणमंतरा भाषयैव गुरुणोपदिश्यमाने आध्यात्मिके शूद्रस्याप्यधिकारइत्यनेनैव याज्ञवल्क्यवचनेन ज्ञापनात्॥ इतिहासादिद्वाराऽपीदं संभवति॥ विष्णुनामसहस्रे शूद्रःसुखमवाप्नुयादित्यत्र शंकराचार्यैरपि स्वभाष्ये तस्य श्रवणाधिकारस्वीकारात् श्रावयेच्चतुरोवर्णानिति भारतोक्तेः सुगतिमियाच्छ्रवणाच्च शूद्रयोनिरिति हरिवंशोक्तेश्च॥ एवमितरत्रापि पुराणेतिहासादिषु तत्रतत्रोच्यमानानि शूद्रस्यापि स्वस्वश्रवणादिफलानि तस्य तत् श्रवणाद्यधिकारं तद्द्वारा ज्ञानसंपादनाधिकारं च बोधयंति॥ तथा॥ आचारमाधवे शांतिपर्वणि॥ शास्त्रे स्वाहानमस्कारौ मंत्रः शूद्रेऽभिधीयते॥ ताभ्यांशूद्रः पाकयज्ञैर्यजेत ब्रह्मवान् स्वयमिति॥अत्र ब्रह्मवत्वंहि न वेदवत्वं उपनयनाभावात् किंतु संप्रदायसेवनेना-

वगतब्रह्मस्वरूपज्ञातृत्वमेव॥ स्वयं शास्त्रदर्शनानधिकारात् ॥ एकदे
शे परोक्तेस्त्विति वाक्येन माध्वभाष्यप्रथमसूत्रोदाहृतेन गुरुमु
खाद्ब्रह्मश्रवणे ऽधिकारनिश्चयाच्च ॥ नच वेदार्थत्वाद्ब्रह्मणः श्रव-
णे ऽनधिकारः शंक्यः ॥ वेदश्रवणानधिकारित्वेऽपि भारतादिद्वारा
वेदार्थस्य श्रवणेऽधिकारित्वोक्तेः ॥ यथोक्तं श्रीभागवते ( स्कं० १
अ० ४श्लो० २५) स्त्रीशूद्रद्विजबंधूनां त्रयी न श्रुतिगोचरा॥कर्म-
श्रेयसिमूढानां श्रेयएवं भवेदिह ॥ इति भारतमाख्यानं कृपया मु-
निनाकृतमिति (श्लो० २८) भारतव्यपदेशेनह्याम्नायार्थश्च दर्शि-
तइति च ॥ अतएव कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ॥ वे
दाक्षरविचारेण शूद्रः पतति जातितइति बृहत्पराशरोऽक्षरविचारे-
णैव पातित्यमाह नतु परमुखाच्छ्रुतस्य धर्मादेरर्थमात्रस्य विचा-
रेण ॥ अन्यथा ऽक्षरपदं निरर्थकं स्यात् ॥ एवमेव धर्माब्धिसारे-
ऽपि ॥ ( परि० ३ ) आगमोक्ताविष्णुशिवादिमंत्राःनमोंताः प्रण-
वरहिताः ॥ पुराणादिश्रवणनिदध्यासनादि कृत्वा ब्रह्मज्ञानमपि
स्त्रीशूद्रैः संपाद्यं॥उपनिषच्छ्रवणे तु नाधिकारइत्युक्तं काशीनाथो-
पाध्यायेन॥अतः शूद्रस्यापि ब्रह्मज्ञानार्थं संप्रदायसेवनमावश्यकं॥
यत्तुमनुः ॥ ( अ० ४ श्लो० ८० ) न शूद्राय मतिं दद्यान्नोच्छिष्टं
न हविष्कृतम् ॥ नचास्योपदिशेद्धर्मं नचास्य व्रतमादिशेत् ॥ यो-
ह्यस्य धर्ममाचष्टे यश्चैवादिशति व्रतम् ॥ सोऽसंवृतं नाम तमः सह
तेनैव मज्जतीत्याह॥तत्तूपनिषदुच्चारणपूर्वकज्ञानोपदेशयजनादिवै-
दिकधर्मोपदेशविषयं ॥समन्वयाध्यायतृतीयपादे ( सूत्र ३४ ) शु
गस्यतदनादरश्रवणात्तदाद्रवणात्सूच्यतेहीत्यधिकरणे व्यासेन तथै-
व निर्णीतत्वात् ॥ अन्यच्च ॥ शूद्रधर्मेषु मन्वाद्युक्तं शौचमपि न सं

प्रदायमंतरा सिध्येत् ॥ आंतरशौचाभावात् ॥ याज्ञवल्क्यस्मृतौ (अ० ३) उपपातकप्रायश्चित्तप्रकरणे (श्लो० २१३) ऋषभैक-सहस्राइति वैश्यहाब्दमित्यनयोर्मिताक्षरायां वृत्तस्थविट्शूद्रयोर्वधे ब्रह्महत्याऽष्टमांशषोडशांशौ मनुवचनात् प्रतिपाद्य वृत्तस्वरूपजिज्ञासायां वृत्तशब्देन चात्मगुणादिकमुच्यते ॥ गुरुपूजा घृणाऽशौचं सत्यमिंद्रियनिग्रहः ॥ प्रवर्तनं हितानां च तत्सर्वं वृत्तमुच्यते इति स्मरणादित्युदाहरता विज्ञानेश्वरेण वृत्तांतःपातिनी गुरुपूजा शूद्रस्याऽपि दर्शिता॥नहिच तस्योपनयनमस्ति येन तस्योपनीयाध्यापकएकदेशाध्यापकोवा गुरुः स्यात् ॥ अतः संप्रदायगुरुरेवेह संभवति॥एवं सांप्रदायिकगुरुसकाशाद्वैष्णवदीक्षाग्रहणे शूद्रस्यापीतरशूद्रापेक्षयोत्कर्षबोधनायोच्यते धर्मसिंधौ (प० ३) पूर्वार्धे॥ दीक्षायुक्तैस्तथा शूद्रैर्मद्यपानविवर्जितैः॥ कर्तव्यं ब्राह्मणद्वारा शालग्रामशिलार्चनमिति ॥ एवमितराण्यपि शूद्रस्य वैष्णवसंप्रदायोपसेवनावश्यकताख्यापकानि वहूनि निःसंदिग्धवचनानि महाभारतश्रीभागवतादिष्वार्षग्रंथेषु शूद्रकमलाकरादिप्रामाणिकानार्षग्रंथेषु च वहूनि समुपलभ्यंते तथापि विस्तरभिया स्वल्पप्रश्नोपरि वहुलिखनप्रयासाद्विरम्यते ॥ तस्मादत्यावश्यकभगवन्मंत्रग्रहणार्थं तद्भक्तिसंपत्त्यर्थं यथाधिकारमुपनिषदाद्यनुसारिज्ञानसिध्यर्थं ततोमोक्षार्थं च चतुर्णामपि वर्णानां सत्संप्रदायोपसरणमेव शरणं तदेवच त्रिविधतापार्त्तिदुस्तरसरस्वत्तरणाय तरणिरिति युक्तं संप्रदायस्य चतुर्वर्णनिष्ठत्वं ॥ एवं संप्रदायस्य सर्ववर्णसाधारणत्वेऽपि भगवत्सेवने वैदिकमंत्रोच्चारणादिकं शूद्रानधिकारकं तु त्रैवर्णिकमात्रविषयकं ॥ कलौ ब्राह्मणमात्रविषयकं वा॥इतरत्तु साधारणमे-

वेतिविशेषः॥एवं स्वधर्मशिक्षायै भगवद्भक्तिसिद्धये॥स्वाधिकारानुसारेण ब्रह्मज्ञानाय मुक्तये ॥ १ ॥ तन्मूलभूतभगवन्मंत्रसंग्रहणाय च ॥ चतुर्णामपि वर्णानां संप्रदायोपसेवनम् ॥ २॥ अतोहरेः संप्रदायभुजच्छायाविनिर्भयाः ॥ महर्षिभिः सर्ववर्णनिष्ठाः शास्त्रेषु वर्णिताः ॥ ३ ॥

## ॥ अथाऽस्य षष्ठप्रश्ननिवेशितस्य किंवर्णनिष्ठइति वाक्यस्य शाखाभूतमेव वाक्यं स्वतंत्रतयाऽवांतरसप्तमप्रश्नत्वेन लिखितं तद्यथा ॥

॥ वर्णनिष्ठश्चेत्संप्रदायपूर्वकोवर्णोवर्णपूर्वकः संप्रदायोवा ॥७॥

## ॥ उत्तरं ॥

किमत्र पूर्वत्वं नाम अवश्यक्लृप्तनियतपूर्ववृत्तित्वं पूर्वकालिकत्वमात्रं वा ॥ तत्राद्यश्चेत्संप्रदायानां वेदांतकृद्वेदविदेवचाहमित्यादिस्मृतिभिर्भगवत्कर्तृकत्वप्रतिपादनेन वर्णानामपि ब्राह्मणोऽस्यमुखमासीद्बाहूराजन्यःकृतः मुखबाहूरुपज्जानामित्यादिश्रुतिस्मृतिभिस्तथात्वप्रतिपादनेन चोभयोरपि सृष्यारंभे परमेश्वरकर्तृकत्वनिश्चयाद्वर्णसंप्रदाययोरन्यतरस्यान्यतरकारणकत्वशंकायाः किंचिज्ज्ञबालकबुद्धावप्यनुदयेन प्रश्नएवायुक्ततरः॥अथच यदि सर्ववर्णानामप्यावश्यकोवैष्णवसंप्रदायस्तर्हि संप्रदायग्रहणादेव तेषां तत्तद्वर्णवैशिष्ट्यसिद्धिरुत प्रथमतस्तद्वर्णविशिष्टानामेव संप्रदायग्रहणमभिप्रेयते इत्येव तव विचिकित्सितं स्यात् ॥ तदा तु एतत्समानयोगक्षेमोऽसावपि प्रश्नोभवंतं प्रति कुतोन प्रसरेत् ॥ द्विजमात्राधिकारकस्य गायत्रीमंत्रस्योपदेशादेव द्विजत्वसिद्धिं स्वीकुर्वते।

सर्वशिष्टानां मते गायत्र्युपदेशपूर्वकं द्विजत्वं द्विजत्वपूर्वकस्तदुप-
देशोवेति ॥ तथा सर्वेष्वपि वर्णेषु प्रसस्य भस्मरुद्राक्षधारणादिशि-
वदीक्षाचिन्हाग्रहं कुर्वतोभवतोऽपि मते तद्धारणपूर्वकोवर्णोवर्णपू-
र्वकं तद्धारणं वेतिच ॥ अतः स्वयं प्रदेयेनैतादृशप्रश्नानामुत्तरेणै-
व प्रकृतेऽपि संतुष्यतां समानयोगक्षेमत्वादित्यलं ॥ अनेनैव द्विती-
यपक्षोऽपि दत्तोत्तरः ॥ नित्यत्वाप्रतिद्रुहिणं प्रतिकल्पं चावर्तमा-
नानामुभयेषामपि सृष्टिकालएव भगवता प्रकटितत्वेन समका-
लिकत्वसिध्याऽन्यतरस्मिन् पूर्वकालिकत्वकथनस्य गगनकुसुम-
सुगंधसगंधत्वात् ॥ अतोन वर्णानां संप्रदायपूर्वकत्वं नापि संप्र-
दायस्य तत्पूर्वकत्वं वेति भव्यं ॥

## अथ स्वतंत्रप्रश्नकल्पमपीदं वाक्यमस्य सप्तमप्रश्न स्यैव कुक्षिनिवेशितमुपलभ्यते तद्यथा ॥

॥ किमाश्रमनिष्ठः ॥ ७ ॥

(आश्रमाब्रह्मचर्यादयः ॥ तन्निष्ठत्वं च संप्रदायस्य तदधिकारक-
त्वं ॥ किंपदात्तद्विषयिणी जिज्ञासा प्रष्टुरात्मसमवेताऽस्तीति ज्ञाय-
ते तत्र )

## ॥उत्तरं॥

अथ पूर्ववदत्राऽपि किमिति बुभुत्सावोधकं पृथक् पदमाश्रित्य सं-
प्रदायोपलक्षिततद्धर्माणामाश्रमधर्मत्वमस्ति नवेत्येव जिज्ञासितं
आहोस्वित्कस्मिन्नाश्रमे निष्ठा यस्येति समासमाश्रित्य संप्रदाया-
धिकृताश्रमविशेषः ॥ तत्राद्यपक्षस्य किंवर्णनिष्ठइति प्रश्नाद्यक
त्वसमानयोगक्षेमत्वात्तदुत्तरेणैव दत्तोत्तरत्वम् ॥ द्वितीयश्चेत्प्रथम-

कल्पोत्तरे साधारणधर्मत्वकथनेनैव प्राप्तप्रतिवचनः ॥ अथाप्युच्यते ॥ हरेर्मंत्रग्रहस्तस्य पूजनं वेदचिंतनम् ॥ एकपक्षावलंबेनातृष्णाशमदमादिकं ॥ १ ॥ ब्रह्मज्ञानं ततोमुक्तिः कृष्णभक्तिः सुनिर्मला ॥ सर्वेष्वप्याश्रमेष्वस्तीत्यखिलाश्रमनिष्ठता ॥ २ ॥ बोधिता संप्रदायानां तत्रतत्र महर्षिभिः ॥ स्पष्टा सा बुध्यते सर्वैः सच्छास्त्रश्रमहर्षिभिः ॥ ३ ॥ तत्र भगवन्मंत्राणां सर्वाश्रमाधिकारकत्वं नारदपंचरात्रे॥सर्वेषु वर्णेषु तथाऽश्रमेषु नारीषु नानासु यजन्मखेषु॥ दाता फलानामभिवांच्छितानां द्रागेव गोपालकमंत्रएष- इत्यादिभिर्दर्शितम् ॥ गौतमतंत्रेपि अष्टादशाध्याये कंचिद्भगवन्मंत्रमुक्त्वा ॥ अर्चयेन्मनसा कृष्णं सहस्रं प्रत्यहं जपेत् ॥ वत्सराल्लभते मोक्षं यद्गत्वा नोनिवर्त्तते॥ वर्णिनां च गृहस्थानां न्यासिनामप्ययं विधिरिति ॥ पुनस्तत्रैव द्वितीयाध्याये मंत्रांतरोपक्रमे न्यासमुपक्रम्य (श्लो० २४ ) प्रणवाभ्यां पुटं कृत्वा नमोंतान् दशवर्णकान् ॥ दक्षांगुष्ठादिवामांतं न्यासः स्यात् सृष्टिरीरितः ॥ वामांगुष्ठादिदक्षांतं संहृतिः परिकीर्तिता ॥ उभयोः करयोर्ज्येष्ठापूर्विका स्थितिरीर्यते ॥ संहृतिर्दोषसंघानां हारिणी परिकीर्तिता॥ विद्याप्रदा स्यात्सृष्ट्यंता वर्णिनां शुद्धचेतसाम् ॥ स्थित्यंता स्याद्गृहस्थानां त्रयं काम्यानुरूपतः॥ सहजानौ वानप्रस्थे स्थित्यंतं कश्चिदिच्छति ॥ संहारांतोमुनीनां च विरक्तस्य च सर्वशः॥ न्यासत्रयं सदा कार्यमशक्तावेकमेव हि इति॥तत्रैव सप्तमाध्याये- (श्लो० १६ ) अनेन ध्यानयोगेन मंत्राः सिध्यंति नान्यथेत्यतेन सामान्यतोभगवन्मंत्रेषु ध्यानमुक्त्वोच्यते ( श्लो० १७) परेणच स्वमात्मानं कृष्णाख्येन विभावयेत् ॥ अहं कृष्णोनचा-

न्योऽस्मि ब्रह्मैवाऽहं न शोकभाक् ॥ सच्चिदानंदरूपोऽहं नित्यमुक्त-स्वभाववान् ॥ त्वमेवाऽहमहं त्वं च सच्चिन्मात्रवपुर्भवेत् ॥ आवयोरंतरा कृष्ण नश्यत्वाज्ञावलात्तव ॥ अहं तीर्णोभवं घोरं कृत्यं किंचिन्नमेऽस्त्विति ॥ तथापि देहि मे नाथ आज्ञां तव निषेवणे ॥ जानामि धर्मं नच मे प्रवृत्तिर्जानाम्यधर्मं नच मे निवृत्तिः॥ केनाऽपि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥ एवं संप्रार्थ्य मनसा कुर्यात्पूर्वाण्हिकीं क्रियां॥दीक्षितस्य विधानेन तथा च ब्रह्मचारिणां॥वानप्रस्थस्थितानां च शौचादिद्विगुणक्रिया॥ संन्यासिनां विशेषेण कृत्यं चतुर्गुणं भवेदिति॥एवं चतुर्णामप्याश्रमिणां भगवन्मंत्रग्रहणे तदर्चने चाधिकारः प्रकाशितः॥ अथ मनुरपि द्वादशाध्याये ॥ ( श्लो० ७२ ) यथा यथा निषेवंते विषयान् विषयात्मकाइत्यादिना वैराग्यसाधकान् भवक्लेशान्निरूप्य जातवैराग्यं मुमुक्षुं प्रति नैश्रेयसकरं कर्म विप्रस्येदं निबोधतेत्यादिना संप्रदायेतरसाधनासाध्यं नैश्रेयसमुपक्रम्य समासतस्तत्स्वरूपं च निरूप्य तत्र प्रकृतात्मज्ञानस्य मुख्यसाधनत्वेन पितृदेवमनुष्याणां वेदश्चक्षुः सनातनमित्यादिना वेदशास्त्रं तत्प्रयोजनादिकथनपुरःसरं स्तुत्वा तत्साध्यज्ञानजन्यमोक्षस्य सर्वेष्वप्याश्रमेष्वधिकारोऽस्तीत्याह ॥ वेदशास्त्रार्थतत्वज्ञोयत्र तत्राश्रमे वसन्॥इहैव लोके तिष्ठन्सब्रह्मभूयाय कल्पते इति ॥ अत्र जीवन्मुक्तिफलोपदेशाद्वेदशास्त्रतत्त्वार्थावबोधादिद्वारा तत्सिध्यर्थं संप्रदायाश्रयणमपि सर्वाश्रमेषूपदिष्टं ॥ एतत्पूर्वप्रसंगे.आत्मज्ञानस्य साधनत्वोक्त्या मुक्तेर्भक्तिमार्गीयत्वं फलति अतोऽस्ति सर्वेष्वप्याश्रमेष्ववश्यं सत्सं-

प्रदायोपयोगः ॥ किंचाश्रममात्रं संप्रदायं विना निरर्थकं ॥ लिंगमात्रस्य ब्रह्मज्ञानादिधर्मासाधकत्वात्तस्य च संप्रदायैकसाध्यत्वात् ॥ यथाह याज्ञवल्क्यः ॥ ( अ० ३ ) अध्यात्मप्रकरणे ॥ ( श्लोक १० ) नाश्रमः कारणं धर्मे क्रियमाणोभवेद्धिसः ॥ अतोयदात्मनोऽपथ्यं परेषां न तथाचरेदिति ॥ अत्र धर्मशब्देनात्मोपासनं विज्ञानेश्वरोव्याचख्यौ॥अत्रैव मनुः ॥ भूषितोपि चरेद्धर्मं यत्र तत्राश्रमे वसन्॥समः सर्वेषु भूतेषु न लिंगं धर्मकारणमिति ॥ अयंच संप्रदायगुरूपसत्त्याशयशुद्धिविधिशेष आश्रमनिंदार्थवादोनतु तेषामकर्त्तव्यत्वं ॥ विहितत्वात् ॥ तस्मादाश्रमेष्वपि सत्यादीन्येव दश उत्तरोत्तरोत्कृष्टानि मोक्षफलकानीत्याशयेनास्यैवाधउच्यते ॥ ( श्लो० ११ ) सत्यमस्तेयमक्रोधोन्हीः शौचं धीर्धृतिर्दमः ॥ संयतेंद्रियता विद्या धर्मः सर्वउदाहृतइति ॥ विद्याहि सांप्रदायिकगुरुभिः संप्रदीयमानमात्मज्ञानं ॥ तस्मात्सर्वाश्रमिभिः सत्संप्रदायः सेव्यएव ॥ अन्यथातु माधवीये ( अ० ३ ) श्राद्धवर्ज्यब्राह्मणेषु॥यमः॥पिशुनः कूटसाक्षी च दीर्घरोगी वृथाश्रमीति निंदितत्वमेव स्यात् ॥ आश्रमवैयर्थ्यं तु प्रातिस्विकधर्मानाचरणवत् ब्रह्मावबोधकसूत्रभाष्यकारसंप्रदायप्रवर्त्तकाननुसारेण केवललिंगधारणेऽपि वेदितव्यं॥अतएवाध्यात्मप्रकरणसमाप्तौ याज्ञवल्क्यः (श्लो० १३१) तत्राष्टाशीतिसाहस्राइति त्रिभिः पुनःपुनरवतारेण प्रवृत्तनिवृत्तोभयविधकर्मप्रवर्त्तनेन सत्संप्रदायप्रवर्तकान् मुनीन् निरूप्य ( श्लो० १३४ ) यतोवेदाइति वेदपुराणविद्योपनिषत्सिद्धांतकारिकासूत्रभाष्यादिसर्ववाङ्मयप्रवृत्ति ततएवोक्ता ततः किं तैस्तत्प्रवर्त्तितैः संप्रदायैरित्याकांक्षायां वर्णप्रभृतीनां चतुर्णां

तादृशसंप्रदायद्वारैव संपादितैरध्ययनादिभिः प्रातिस्विकधर्मैस्त-त्तदाश्रमचिन्हधृतिपुरःसरैरुपकृतानि संप्रदायद्वारैवपरमात्मनः श्र-वणमननिदिध्यासनानि विधेयानि नत्वन्यथा फलसंपत्तिरि-त्याशयेनाह ॥ ( श्लो० १३५ ) वेदानुवचनं यज्ञोब्रह्मचर्यं तपो-दमः ॥ श्रद्धोपवासः स्वातंत्र्यमात्मनोज्ञानहेतवः ॥ (श्लो० १३६) सह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ॥ द्रष्टव्यस्त्वथ मंतव्यः श्रो-तव्यश्च द्विजातिभिः ॥ पूर्वोक्तसंप्रदायप्रवर्त्तकऋषिप्रवर्तितावे-दानुवचनादयआत्मज्ञानं फलंति ॥ तेच यथायथं ब्रह्मचार्यादीनां चतुर्णामप्यत्र निर्दिष्टाः॥यथा वेदानुवचनं श्रद्धा च सर्वेषां ब्रह्म-चर्यं प्राधान्येन वर्णिनां यज्ञोगृहमेधिनां तपउपवासश्च वैखा-नसानां यज्ञरहिताः सर्वे दमः आशयशुद्धिसाध्यत्वेनोपदिष्टं स्वा-तंत्र्यं च यतीना मिमे सर्वेऽप्यात्मज्ञानस्य हेतवः ॥ ननु किंस्वभा-वादेव हेतवआहोस्वित् संप्रदायाश्रयणेनैवेतिचेत्तत्राह॥ सह्याश्रमै रिति ॥ सआत्मा॥हिनिश्चयेन ॥ एवमेव उक्तसंप्रदायसरण्यैव॥ स-मस्तैरशेषैरप्याश्रमैः साधकतमैस्तत्तदाश्रमिभिः विजिज्ञासितव्यः॥ तुशब्दोजिज्ञासायां संप्रदायभिन्नप्रकारं वारयति ॥ अतएवेह विज्ञानेश्वरोऽपि उक्तमार्गेणैव सकलाश्रमिभिर्जिज्ञासितव्य इत्या-ह ॥ कथं जिज्ञासितव्यइतिचेदुच्यते ॥ प्रथमं द्विजातिभिः सांप्र-दायिकगुरुसकाशाच्छ्रोतव्यः ॥ तद्विज्ञानार्थं सगुरुमेवाभिगच्छे-दित्यत्र मुंडके असांप्रदायिकगुरूपसत्तिनिषेधद्योतनात् ॥ ततोमं-तव्यः पूर्वोपक्रांतेन स्वगुरूक्तसूत्रभाष्यादिना दर्शितैः प्रमाणा-विरुद्धतर्कैर्विचारयितव्यः॥पश्चान्निदिध्यासितव्यः ॥ अथैवं साध-नसंपत्त्यनंतरं तु द्रष्टव्यः ॥ तुः उक्तसाधनं विना दर्शनासंभवं द्यो-

नयति ॥ एवं संप्रदायाश्रयणादेव फलसंपत्तिर्नत्वन्यथेत्याशयेनाह ॥ ( श्लो० १२७ ) यएवमेनं विदंति येचारण्यकमाश्रिताः॥ उपासते द्विजाः सत्यं श्रद्धया परया युताः॥ क्रमात्ते संभवंत्यर्चिरहः शुक्लं तथोत्तरमित्यादि॥ एवं उक्तसंप्रदायप्रकारेण अयमेवार्थोमिताक्षरायामपि सर्वेषां निपुणधियां प्रतिभास्यतीत्यलं बहुलविलेखेन॥ अपरं च अस्ति सर्वेषामपि आश्रमिणां शमदमादिपूर्वकब्रह्मज्ञानस्य संप्रदायानुसारेण ब्रह्मसंबंधकरणपूर्वकभगवच्छ्रवणकीर्तनस्मरणसेवादास्यादेश्चावश्यकत्वं॥ यथाह श्रीभागवते सप्तमस्कंधे युधिष्ठिरेण सर्ववर्णाश्रमादिधर्मान् पृष्टोनारदः॥(अ० ११ श्लो०८) सत्यं दया तपः शौचं तितिक्षेक्षा शमोदमः॥अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्यायआर्जवम्॥ संतोषः समदृक्सेवा ग्राम्येहोपरमः शनैः॥नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम्॥अन्नाद्यादेःसंविभागोभूतेभ्यश्च यथार्हतः॥ तेष्वात्मदेवताबुद्धिः सुतरां नृषु पांडव॥ श्रवणं कीर्तनं चाऽस्य स्मरणं महतां गतेः॥ सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणं॥ नृणामयं परोधर्मः सर्वेषां समुदाहृतः॥ त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यतीति॥ पुनरेकादशस्कंधेऽपि सप्तदशाध्याये भगवानाह॥ ( श्लो० ३२ ) शौचमाचमनं स्नानं संध्योपासनमार्जवम्॥ तीर्थसेवा जपोऽस्पृश्याऽभक्ष्यासंभाष्यवर्जनं॥ ( श्लो० ३४ ) सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनंदन॥ मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः॥ अत्राऽपि ज्ञानेन सर्वभूतेषु भगवद्भावः सर्वाश्रमसाधारणधर्मतयोक्तः॥अतएवेह सर्वाश्रमसाधारणं धर्ममाह शौचमिति द्वाभ्यामिति श्रीधरस्वामिनाऽवतारितं॥ पुनस्तत्रैवाऽष्टादशाध्याये भिक्षुधर्मांत निरूप्य

(श्लो० ४२) भिक्षोर्धर्मः शमोऽहिंसा तपइज्या वनौकसः ॥ गृहिणोभूतरक्षेज्या द्विजस्याचार्यसेवनं ॥ ब्रह्मचर्यं तपः शौचं संतोषोभूतसौहृदं ॥ गृहस्थस्याप्यृतौ गंतुः सर्वेषां मदुपासनम् ॥ इति मां यः स्वधर्मेण भजन्नित्यमनन्यभाक् ॥ सर्वभूतेषु मद्भावोमद्भक्तिं विंदतेऽचिरात् ॥ भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरं॥ सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ इति स्वधर्मनिर्णिक्तसत्वोनिर्ज्ञातगद्गतिः ॥ ज्ञानविज्ञानसंपन्नोन चिरात्समुपैति माम् ॥ वर्णाश्रमवतां धर्मएषआचारलक्षण. ॥ सएवमद्भक्तियुतोनिःश्रेयसकरः परः ॥ एतत्तेऽभिहितं साधो भवान् पृच्छति यच्चमां ॥ यथा स्वधर्मसंयुक्तोभक्तोमां समियात् परमिति स्वसेवायाः सर्ववर्णाश्रमसाधारणत्वं सर्ववर्णाश्रमधर्माणां स्वभक्तिसहकारेणैव मोक्षजनकत्वं सर्वेषां मोक्षाधिकारित्वं चोक्तं भगवता ॥ अतः सर्वेष्वप्याश्रमेषु भगवत्सेवादिकमावश्यकमेव ॥ अन्यथा तु न मोक्षः स्यात् ॥ अतएव पराशरमाधवीये आन्हिकनिरूपणांते कूर्मपुराणे ॥ नान्योविमुक्तये पंथामुक्त्वाश्रमविधिं स्वकं ॥ तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनइति ॥ श्रुतयश्च नान्यः पंथाविद्यतेऽयनायेत्याद्यास्तदेव वदंति ॥ अतश्चतुर्णामप्याश्रमिणां श्रवणादिद्वाराब्रह्मज्ञानार्थं सेवादिरूपतद्भक्त्यर्थं तत्र फलमुखाधिकारसंपादकमहामंत्रद्वारा शरणगमनात्मनिवेदनाद्यर्थं च सत्संप्रदायोपसेवनमत्यावश्यकमेवातोऽस्तिखलु सत्संप्रदायः सर्वाश्रमनिष्ठः ॥ एवं ॥ सर्वाश्रमेष्वपि विनाश्रममेव मोक्षशिक्षाप्रदायकपुरातनसंप्रदायान् ॥ सेव्यान्वचःप्रचयतः प्रणिगद्य सद्यः प्रत्याश्रमं तदुपयोगमुदीरयामः ॥ १ ॥ तत्रादौ ब्रह्मचारिणो-

विचार्यते ॥ तत्राऽस्तिब्रह्मचारिणउपकुर्वाणकनैष्ठिकभेदेन द्वैविध्यं तत्रोपकुर्वाणकविषये तावत् ब्रूमः ॥ एकादशस्कंधे (अ० १७,) ब्रह्मचारिधर्मान्निरूप्यांते ॥ ( श्लो० ३५ ) एवं बृहद्व्रतधरोब्राह्मणोऽग्निरिव ज्वलन् ॥ मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ॥ अथानंतरमावेक्षन् यथाजिज्ञासितागमः ॥ गुरवे दक्षिणां,दत्वा स्नायाद्गुर्वनुमोदितइति ॥ तस्य समयेऽपि स्वव्रताचरणे स्वभक्तिसहकारावश्यकता भगवतोच्यते ॥ भक्तिस्तु संप्रदायैक साध्येति निरूपितं प्राक् ॥ अतएव तत्रापि ( श्लो० २५ ) अभ्यर्कांचार्यगोविप्रगुरुवृद्धसुरान् शुचिः ॥ समाहितउपासीत संध्ये च यतवाक् जपन्निति ॥ गुरुशब्दनिर्दिष्टाद्वेदाद्यध्यापकाचार्याद्वृद्धशब्दनिर्दिष्टात्पित्रादितश्च भेदेन निर्दिश्याचार्यशब्दोक्तस्य भगवद्भक्तिज्ञानसंपादकस्य सांप्रदायिकाचार्यस्याप्युपासनं वर्णिनोविदधाति ॥ सप्तमस्कंधेऽपि ( अ० १२ ) ब्रह्मचारिधर्मानुपक्रम्य ॥ ( श्लो० १० ) कल्पयित्वात्मना यावदाभासमिदमीश्वरः ॥ द्वैतं तावन्नविरमेत्ततोह्यस्य विपर्ययइति स्त्र्यादिसंगवर्जने हेतुं वदता भगवता नारदेन द्वैतनिवृत्त्युपाये ब्रह्मचारिणः कर्त्तव्यता बोध्यते ॥ तदुपसंहारेऽपि ॥ अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजं ॥ भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥ एवंविधोब्रह्मचारी वानप्रस्थोयतिर्गृही ॥ चरन् विदितविज्ञानः परं ब्रह्माऽधिगच्छतीति ॥ एवं साक्षाद्ब्रह्मविज्ञानं तत्साध्यः पुरुषोत्तमप्राप्तिलक्षणोमोक्षश्च ब्रह्मचारिणोऽप्यभिधीयते ॥ तत्साधनाय तस्य भगवत्सेवाऽप्युच्यते तत्रैव ॥( श्लो० २) सायंप्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमानिति ॥ सुरोत्तमोविष्णुरिति व्याख्यातारः ॥

मनुरपि द्वितीयाध्याये ब्रह्मचारिधर्मानुपक्रम्य ( श्लो० १७६ ) नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणं ॥ देवताऽभ्यर्चनं चैव समिदाधानमेवचेति नित्यं हरिप्रतिमार्चनमप्याह ॥ कुल्लूकशद्वेनाप्येतदूरीकृतं ॥ किंच वेदाध्ययनात्पृथग्वारुण्याद्युपनिषद्विद्याध्ययनमावश्यकत्वद्योतनाय फलकथनपूर्वकं याज्ञवल्क्योविदधाति ( अ० १ ) ब्रह्मचारिप्रकरणे ॥ ( श्लो० ३७ ) इतिहासांस्ततोविद्याः शक्त्याऽधीते हि योऽन्वहमित्यादि ॥ संवर्तश्च ब्रह्मचारिधर्मान्निरूप्य (श्लो० ३२ ) एषधर्मः समाख्यातः प्रथमाश्रमवासिनां ॥ एवं संवर्तमानस्तु प्राप्नोति परमां गतिमिति मोक्षाधिकारित्वमाह ॥ परमागतिर्हि मोक्षः ॥ अथ ब्रह्मचर्याश्रमेऽपि सद्गुरूपसत्तिसार्वदिकवेदांताभ्यासादिना सम्यक् संजातदृढवैराग्यस्य मध्यमाश्रमद्वयाकरणेनैव संन्यासोमाधवादिभिः श्रुत्यादिविहितत्वाद्व्याख्यायते॥तथाच जाबालश्रुतिः॥यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा इति॥इतःपूर्वंब्रह्मचर्यं समाप्य गृहीभवेत् गृही भूत्वा वनी भवेत् वनीभूत्वा प्रव्रजेदित्यविरक्तं जडं प्रति आश्रमसमुच्चयपक्षस्योक्तत्वात् ॥ इदानीं विरक्तंप्रति यदिवेतीदं पक्षांतरमुच्यते॥ इतरथेति वेदांताभ्यासद्वारा दृढवैराग्यसंभवे ॥ अंगिरा अप्याह ॥ संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ॥ प्रव्रजत्यकृतोद्वाहः परं वैराग्यमाश्रितः ॥ प्रव्रजेद्ब्रह्मचर्येण प्रव्रजेच्च गृहादपि ॥ वनाद्वा प्रव्रजेद्विद्वानातुरोवा ऽतिदुःखितइति ॥ लघुविष्णुरपि चतुर्थाध्याये ( श्लो० १ ) ब्रह्मचारी गृहस्थोवा वानप्रस्थोऽथवा मुनिः ॥ विरक्तः सर्वकामेभ्यः परिव्रज्यां समाश्रयेदिति ॥ एतच्च संसारनिःसारत्वदर्शनदृढवैराग्यसारदिदृक्षा

दिकमनुपासितसांप्रदायिकसद्गुरुकस्य कदाचिदपि कथंचिदपि न संभवति ॥ उक्तरीत्या बहुश्रुतिषु तस्य तदेकसाध्यत्वप्रतिपादनात् ॥ अतोब्रह्मचारिणोऽपि सांप्रदायिकगुरुसेवनं विधिसिद्धमस्त्येवेति सिध्यति ॥ येन तत्सेवनात्तस्य कदाचिद्दृढतरवैराग्यसंभवे संन्यासउपदिष्टः ॥ तस्माद्ब्रह्मज्ञानभगवद्भक्तितत्सेवादिशिक्षार्थमुपकुर्वाणकस्य संप्रदायोपयोगोदर्शितः ॥ एवमेव नैष्ठिकविषयेऽपिबोध्यं ॥ तथाहि श्रीभागवते एकादशस्कंधे ॥( अ० १७ श्लो० ३० ) यद्यसौ छंदसां लोकमारोक्षन् ब्रह्मविष्टपम् ॥ गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतइत्यादिना नैष्ठिकब्रह्मचारिधर्मानुपक्रम्य ( श्लो० ३१ ) अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् ॥ अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषइति ॥ सर्वत्र ब्रह्माभेदबुद्धिं करणीयत्वेन विदधाति ॥ मनुरपि द्वितीयाध्याये ) श्लो०-२४३ ) यदित्वात्यंतिकं वासं रोचयेत गुरोः कुले इत्यादिना नैष्ठिकधर्मानुपक्रम्य ( श्लो० २४४ ) संगच्छत्यंजसा विप्रोब्रह्मणः सद्म शाश्वतमिति ॥ तथा उपसंहारे (श्लो० २४९)एवं चरति योविप्रोब्रह्मचर्यमविप्लुतः ॥ सगच्छत्युत्तमं स्थानं नचेहाजायते पुनरिति तस्य मोक्षलक्षणंफलं वदन् ब्रह्मज्ञानस्यावश्यसंपाद्यत्वंबोध यति॥नचेदं ब्रह्मचर्यस्य फलमिति शंक्य॥ऋते ज्ञानान्नमुक्तिरिति नियमविरोधात् ॥ ब्रह्मचर्यस्य तु तत्रोपोद्बलकत्वमेव ॥ एवमेव याज्ञवल्क्योऽपि नैष्ठिकस्य मोक्षमाह ( अ० १ ) ब्रह्मचारिप्रकरणांते ( श्लो० ४२ ) अनेन विधिना देहं साधयन्विजितेंद्रियः ॥ ब्रह्मलोकमवाप्नोति नचेहाजायते पुनरिति ॥ नचात्र मनुयाज्ञवल्क्यवचनयोर्ब्रह्मसद्मब्रह्मलोकशब्दाभ्यां सत्यलोक-

एवेति शंक्यं ॥ कुल्लूकभट्टविज्ञानेश्वरकृतव्याख्याविरोधात् मूले अपुनरावृत्तिकथनलिंगबाधाच्च ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोर्जुनेति तत्र पुनरावृत्तिस्मरणात् ॥ नच तस्य ऋणत्रयनिष्ठस्थभावान्मोक्षाभावः शंक्यः ॥ तन्मोक्षस्य शास्त्रसिद्धत्वात् ॥ यथाह मनुः ॥ ( अ० ५ श्लो० १५९ ) अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ॥ दिवं गतानि विप्राणामकृत्वा कुलसंततिमिति ॥ अतोऽस्ति नैष्ठिकस्याप्यवश्यमेव मोक्षसाधकभक्तिज्ञानाद्यर्थं संप्रदायोपयोगः ॥ अन्यथा उक्तेन प्रकारेणात्मानं निष्ठां उत्क्रांतिकालं नयतीति नैष्ठिकइति मिताक्षरोक्तलक्षणव्याकोपात् ॥ एवं ब्रह्मचारिणः संप्रदायोपयोगोव्याख्यातः ॥ अथ गृहस्थस्यापि तदुपयोगं व्याख्यास्यामः ॥ तत्र श्रीभागवते सप्तमस्कंधे (अ० १४) युधिष्ठिरेण गृहस्थधर्मान्पृष्टोनारदः ॥ ( श्लो० २) गृहेष्ववस्थितोराजन्क्रियाः कुर्वन्यथोचिताः॥ वासुदेवार्पणं साक्षादुपासीत महामुनीनित्यादिना सर्वस्यात्मीयस्य भगवते समर्पणं तत्समर्पणद्वारभूतानां सत्संप्रदायप्रवर्तकानामाचार्यरूपमहामुनीनामुपासनं तत्सकाशात् भगवत्कथाश्रवणादिकं च विधीयते ॥ अग्रे च इदं महामुन्युपासनं सन्मार्गप्रवर्तकानां तत्तत्संप्रदायप्रवेशमूलकं सामान्यं वेति संशयवारणाय ( श्लो० १४ ) पदवीं महतामियादिति स्पष्टतया महत्प्रवर्तितसंप्रदायाश्रयणमुच्यते ॥ ततःपंचदशाध्यायेऽपि ज्ञानसंतोषादिकं च प्रशंस्य ॥ ( श्लो० २२ ) असंकल्पाज्जयेत्काममित्यादिना कामादीनामेकैकशोजयोपायं निरूप्य ( श्लो० २५ ) एतत्सर्वं गुरौ भक्त्या पुरुषोह्यंजसा जये-

न् ॥ यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ ॥ मर्त्यासद्धीः श्रुतं त-स्य सर्वं कुंजरशौचवदिति संप्रदायानुसारेण भगवज्ज्ञानसंपादके-गुरौ भक्तेरेकस्याएव सर्वजयोपायत्वं तदभावे सर्ववैयर्थ्यं चोक्तं ॥ एवमेकादशस्कंधेऽपि (अ० १७ श्लो० ३८) गृहार्थी सदृशीं भा-र्यामित्यादिना गृहिधर्मानुक्रम्य ( श्लो० ४१ ) शिलोंछवृत्त्या प-रितुष्टचित्तोधर्मं महांतं विरजं जुषाणः॥मय्यर्पितात्मा गृहएव ति-ष्ठन्नातिप्रसक्तः समुपैति शांतिमिति विरजःसांप्रदायिकधर्माश्र-यणं भगवते आत्मसमर्पणं च शांतिकारणत्वेनोच्यते॥तथा (श्लो० ५१ ) कुटुंबेषु न सज्जेत न प्रमाद्येत्कुटुंब्यपि ॥ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ पुत्रदाराप्तबंधूनां संगमः पांथसंगमः ॥ अनुदेहं वियंत्येते स्वप्नोनिद्राऽनुगोयथा ॥ इत्थंपरिमृशन्मुक्तोगृ-हेष्वतिथिवद्वसन्॥न गृहैरनुबध्येत निर्ममोनिरहंकृतः ॥ कर्मभिर्गृ-हमेधीयैरिष्ट्वा मामेव भक्तिमान् ॥ तिष्ठेद्वनं वोपविशेत्प्रजावान्वा परिव्रजेदिति गृहस्थस्यापि भगवत्सेवादौ प्रमादाभावोब्रह्मज्ञानं तत्साधकतत्त्वविमर्शोभगवद्भक्तिश्च नैश्रेयससाधनतयोच्यते ॥ ए-तच्छून्यस्य संसारबंधनपूर्वकं नरकाख्यं फलमप्यनुपदमेवोच्यते ( श्लो० ५५ ) यस्त्वासक्तमतिर्गेहे पुत्रवित्तैषणातुरः ॥ स्त्रैणः कृ-पणधी र्मूढोममाहमिति बध्यते इत्यादिना ( श्लो० ५७;) मृ-तोंधंविशतेतमइत्यंतेन॥किंच मनुरपितृतीयाध्याये गृहस्थधर्मानु-पक्रम्य भवगद्बुध्या सर्वभूतसंतोषकस्य ब्रह्मरूपतापत्त्यार्चिर्मा-र्गगत्या मोक्षमाह॥ (श्लो० ९३ ) एवंयः सर्वभूतानि ब्राह्मणोनि-त्यमर्चति॥सगच्छति परं स्थानं तेजोमूर्तिपथर्जुनेति॥पुनश्चतुर्थाध्या-येऽपि सर्वयज्ञापेक्षया ज्ञानयज्ञस्य प्राधान्यमाह सएव ॥ (श्लो०

२२ ) एतानेके महायज्ञान् यज्ञशास्त्रविदोजनाः ॥ अनीहमानाः सततमिंद्रियेष्वेव जुव्हति ॥ वाच्येके जुव्हति प्राणं प्राणे वाचं च सर्वदा ॥ वाचि प्राणे च पश्यंतोयज्ञनिर्वृत्तिमक्षयाम् ॥ ज्ञानेनैवापरे विप्रायजंत्येतैर्मुखैः सदा॥ज्ञानमूलांक्रियामेषां पश्यंतोज्ञानचक्षुषेति॥एवं सर्वसत्कर्मणां ज्ञानमूलकत्वमुक्तं॥पुनस्तत्रैव ज्ञानसंपत्त्यर्थं वेदाभ्यासं ततोज्ञानसंभवे पूर्वजन्मस्मरणादिकं ब्रह्मभावान्मोक्षलक्षणसुखं चाह ॥ ( श्लो० १४८ ) वेदाभ्यासेन सततं शौचेन तपसैवच॥अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीं॥पौर्विकींसंस्मरन् जातिं ब्रह्मैवाभ्यसते पुनः॥ब्रह्माभ्यासेन चाजस्रमनंतं सुखमश्नुतइति॥अपिच ब्रह्माद्वैतज्ञानसिध्यर्थं सांप्रदायिकगुरुसकाशाद्दीक्षाग्रहणपूर्वकमुपनिषद्विद्याभ्यासस्य सर्वाश्रमेष्वावश्यकत्वमाह षष्ठे सएव॥ ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः ॥ विद्यातपोविवृध्यर्थं शरीरस्य च शुद्धयइति ॥ एतद्विद्यासेवनस्य दीक्षापूर्वकत्वं पूर्वश्लोके स्फुटं॥ अत्र ब्राह्मणैर्ब्रह्मचारिभिः ऋषिभिः परिव्राजकैः उपक्रमानुरोधाच्चाद्वनस्थैश्चेति मेधातिथिकुल्लूकभट्टाद्याशयः ॥ अत्र गृहस्थस्याऽपि तदावश्यकत्वं सिद्धमेव ॥ किंच ब्रह्मविद्यायाः प्रत्यहाभ्यासेनैव जपयज्ञसिद्धिं स्मरत्याचाराध्याये याज्ञवल्क्यो गृहस्थप्रकरणे ( श्लो० ५ ) वेदाथर्वपुराणानि सेतिहासानि शक्तितः ॥ जपयज्ञप्रसिध्यर्थं विद्यां चाध्यात्मिकीं जपेदिति ॥ अन्यच्च ॥ ब्रह्ममीमांसाद्यनुसारेण वेदार्थविचारस्य प्रत्यहकर्त्तव्यतामपि सएवाह तत्रैव ॥ ( श्लो० ३ ) हुत्वाग्नीन् सूर्यदैवत्यान् जपेन्मंत्रान् समाहितः ॥ वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि चेति ॥ प्रजापतिः ॥ श्रुतिं वचानात्कुर्वन् नि-

वृत्तिमपि कर्मणां ॥ एवंव्यवहरे न्नित्यं गृहस्थोपि हिमुच्यते ॥ अ-त्रिः ॥ यश्चैतैर्लक्षणैर्युक्तोगृहस्थोऽपि भवेद्द्विजः ॥ सगच्छति परं स्थानं जायते नेह वैपुनः ॥ पुनरत्रिः शौचविधिं निरूप्य ॥ वेदा-भ्यासरतः क्षांतोनित्यं शास्त्राण्यवेक्षयेत् ॥ शौचमृद्वारिभिरतोगृ-हस्थोऽपि हि मुच्यते ॥ लघुविष्णुरपि द्वितीयाध्याये ( श्लो० १ ) अथातः संप्रवक्ष्यामीति गृहस्थधर्मानुपक्रम्य, तान्निरूप्य चांते प्राह ( श्लो० ४५।४६ ) श्रौतस्मार्त्तं तु यत्किंचित् व्यसनं ध-र्मसाधनं ॥ गृहे तद्वसता कार्यमन्यथा दोषमृच्छति ॥ एवं दां-तोगृही तुस्याच्छांतः शुक्लांबरः शुचिः ॥ प्राजापत्यं परं स्थानं प्राप्नोति विजितेंद्रियइति ॥ संवर्तोपि ॥ ( श्लो० ३२ ) अथोद्वि-जः समावृत्तः सवर्णां स्त्रियमुद्वहेदित्यादिना गृहस्थधर्मानुपक्रम्य कृत्वा गार्ह्याणि कर्माणि स्वभार्यापोषणं नरः ॥ ऋतुकालाभिगा-मी स्यात्प्राप्नोति परमां गतिमिति मोक्षाधिकारित्वमाह ॥ बृहत्प-राशरोऽपि द्वितीयाध्याये ॥ ( श्लो० ८ ) अथ संध्यांप्रवक्ष्यामी-त्युपक्रम्य संध्यास्नानादि सप्रपंचं निरूप्य ( श्लो० २१७ ) कुर्याद्योऽहरहश्चैवं सम्यग्ज्ञात्वा विधानतः ॥ समाप्नुयाद्गृहस्थो-ऽपि ब्रह्मणः पदमव्ययमिति ज्ञानपूर्वककर्मकरणे मोक्षमाह॥तथा च साक्षान्मोक्षफलकब्रह्मज्ञानसंपत्त्यर्थमुक्तविधब्रह्मविद्याभ्यास-स्तद्वारा विष्णूक्तं शांतत्वं दांतत्वं जितेंद्रियत्वं च न संप्रदायमं-तरा संभवति॥प्रजापत्यत्रिसंवर्तोक्तोमोक्षश्च क्षांतिवेदाभ्यासादि-पुरःसरतदुपयोग्युत्तरमीमांसादिसहकृतकर्मभिरेव बोध्यः ॥ केव-लकर्मभिर्मोक्षांगीकारे तमेवं विद्वानमृतइहभवति नान्यःपंथा-वियतेयनाय तमेवविदित्वातिमृत्युमेति ऋतेज्ञानान्नमुक्तिः ब्रह्म-

संस्थोऽमृतत्वमेति तेषां सततयुक्तानां भजतां प्रीतिपूर्वकं ॥ ददा- मि बुद्धियोगं तं (स्कंध० १० उ०) मयिभक्तिर्हिभूतानाममृ- तत्वाय कल्पते ॥ तं भजन्निर्गुणोभवेदित्यादिविरोधापत्तेः ॥ भक्ति- ज्ञानभगवत्सेवाधिकारादिकं च सत्सांप्रदायिकगुरुकृपैकसाध्य- मित्युक्तं प्राक् ॥ अपिच मनुः (अध्याय १४ श्लो० १५२) मै- त्रं प्रसाधनं स्नानं दंतधावनमंजनम् ॥ पूर्वाण्हएव कुर्वीत देवता- नां च पूजनं ॥ दैवतान्यभिगच्छेत्तु धार्मिकांश्च द्विजोत्तमानिति देवार्चनादिकं तत्सिध्यर्थं धर्मोपदेष्टसत्सांप्रदायिकोपसर्पणं च विदधाति ॥ लघुपराशरोऽपि ॥ (अ० २ श्लो० १) अतःपरं गृ- स्थस्य धर्माचारं कलौ युगेइत्यादिना गृहस्थधर्मकथनमुपक्र- म्य जप्यं देवार्चनं होमं स्वाध्यायं चैवमभ्यसेदिति तदेव वदति॥ तत्रापि विष्णवर्चनमेव सर्वेष्वपि वर्णेष्वाश्रमेषु चावश्यकत्वात् प्र- धानं ॥ तथाच ब्रह्मवैवर्त्तब्रह्मखंडेकादशाध्याये नारदं प्रति- परमेष्ठी ॥ वैष्णवानां हरेरर्चा तपस्या च श्रुतौ श्रुता ॥ वैष्णव- स्त्वं गृहे तिष्ठ कुरु कृष्णपदार्चनं ॥ अंतर्बाह्ये हरिर्यस्य तस्य किं तपसा सुत ॥ नांतर्बाह्ये हरिर्यस्य तस्य किं तपसा वृथा ॥ तपसा हरिराराध्योनान्यः कश्चन विद्यते ॥ यत्रतत्र कृतं कृष्णसेवनं परमं तपइति॥तथा ब्रह्मवैवर्तएव प्रकृतिखंडे सावित्रीं प्रत्याह विधिरेव॥ वत्से चतुर्षु वेदेषु धर्मेषु संहितासु च ॥ पुराणेष्वितिहासेषु पंचरा- त्रादिकेषु च ॥ अन्येषु धर्मशास्त्रेषु वेदांगेषु च सुव्रते ॥ सर्वेष्टं सा- रभूतं च मंगलं कृष्णसेवनमिति ॥ कृष्णसेवनस्यैव परमतपस्त्वेन सर्वेष्टादिरूपत्वेन च कथनात्तदेवावश्यकं ॥ तस्य च कायिकादि- व्यापाररूपस्यापि शिष्टाः भक्तित्वं मन्यंते॥उक्तंच गारुडसमाविद-

शायां विष्णुभक्त्यध्याये ॥ भजइत्येषवै धातुः सेवायां परिकीर्तितः ॥ तस्मात्सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसीति ॥ अलमग्रे प्रपंचनीयस्येह प्रपंचनेन ॥ अत्रउक्तब्रह्मवैवर्तवचनेषु स्पष्टतया गृहस्थस्यापिऽहरिसेवाऽवश्यकत्वकथनात्तत्सिध्यर्थमपि तस्य सत्संप्रदायसेवनमावश्यकं ॥ अन्यथा तु भगवत्सेवाद्यभावात्स्वकर्मशून्यत्वेनाश्रमवैय्यर्थ्यं स्यात्॥यथाह दक्षः॥ गृहस्थोऽपि क्रियायुक्तोन गृहेण गृही भवेत् ॥ तथैव पुत्रदारैश्च स्वकर्मपरिवर्जितइति ॥ पुनः सएव ॥ विभागशीलसंपन्नः क्षमायुक्तोदयालुकः ॥ स्वकर्मणि सदा युक्तोगृहस्थः शेषभुग्भवेदिति ॥ शेषभुक् भगवत्प्रसादभुक् ॥ इदं भगन्निवेदितग्रहणविषयकप्रश्नस्योत्तरे प्रपंचयिष्यामः ॥ अथ द्वितीयाध्याये वृहत्पराशरः ॥ ( श्लो०८२ ) मांत्रं पार्थिवमाग्नेयं वायव्यं दिव्यमेवच ॥ वारुणं मानसं चेति सप्तस्नानान्यनुक्रमादिति सप्तविधस्नानान्यनुक्रम्य तल्लक्षणानि वदन् ( श्लो०८५ ) यद्ध्यानं मनसा विष्णोर्मानसं कथ्यते बुधैरित्याह ॥ अग्रेच ( श्लो०८६ ) स्नानानां मानसं स्नानं मन्वाद्यैःपरमं स्मृतं ॥ कृतेन येन मुच्यंते गृहस्थाअपि सद्विजाइति हरिध्यानेनैव गृहमेधिनामपि मुक्तिं वक्ति ॥ एवं गृहस्थस्याप्युपयोगोव्याख्यातः ॥ अथ वानप्रस्थस्यापि तदुपयोगं व्याख्यास्यामः॥ तत्रैकादशस्कंधेऽष्टादशाध्याये श्रीभगवान् ॥ वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वेत्यादिना वानप्रस्थधर्मानुपक्रम्य ॥ ( श्लो-९ ) एवं चीर्णेन तपसा मुनिर्धमनिसंततः ॥ मां तपोमयमाराध्य ऋषिलोकादुपैति मामिति॥ ऋषिलोकान्महर्लोकात् ॥ एवं वानप्रस्थस्यापि भगवदाराधनं साधनत्वेन तत्प्राप्तिरेव च फलत्वेन स्म

र्यते ॥ तदतिरिक्तफलाभिलाषिणस्तु निंदा तत्रैवानुपदं ॥ यस्त्वेत-त्कृच्छ्रतश्चीर्णं तपोनिःश्रेयसं महत् ॥ कामायाल्पीयसे युंज्याद्बालिशः कोऽपरस्ततइति ॥ अत्र ब्रह्मलोकांतवैभवोऽल्पीयःकामत्वेन श्रीधरस्वामिना व्याख्यातः ॥ अथ मनुरपि षष्ठे॥ ( श्लो० १ ) एवं गृहाश्रमे स्थित्वा विधिवत्स्नातकोद्विजः ॥ वने वसेत्तु नियतोयथावद्विजितेंद्रियइति॥पूर्वमेव सत्सांप्रदायिकगुरूपासनात्पक्वकषायस्यैव वन्याश्रमेऽधिकारं निरूप्य तद्धर्मानुपक्रम्य ( श्लो०-२९ ) एताश्चान्याश्च सेवेत दीक्षा विप्रोवने वसन् ॥ विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीरित्यन्यपदेन वैष्णवदीक्षाणामपि सेवनं तत्पूर्वकं ग्रंथतोर्थतश्चोपनिषदभ्यासं च ज्ञानसिद्धये विदधाति ॥ याज्ञवल्क्योपि ( अ० ३ ) वानप्रस्थप्रकरणे ( श्लो० ७ ), योगाभ्यासेन वा तथेत्युपनिषदभ्यासेनैव दिने कालक्षेपमाह ॥ विज्ञानेश्वरेणोक्तमनुवाक्यैकवाक्यतया तथैव व्याख्यानात्॥अपि च मनुः ( अ० ६ श्लो० ८ ) स्वाध्याये नित्ययुक्तः स्याद्दांतोमैत्रः समाहितः ॥ दाता नित्यमनादाता सर्वभूतानुकंपकइति दयादिकमवश्यसंपाद्यत्वेन वदति ॥ याज्ञवल्क्योऽपि तृतीयाध्याये वानप्रस्थप्रकरणे ( श्लो० ४ ) दांतस्त्रिषवणस्नायी निवृत्तश्च परिग्रहात् ॥ स्वाध्यायवान् दानशीलः सर्वसत्वहिते रतइति तदेवानुशास्ति ॥ इदंच मनूक्तं नियतमनोबुद्धित्वरूपं,समाहितत्वं ब्रह्मज्ञानं विना न भवति ॥ मनः सत्येनशुध्यति विद्यातपोभ्यां भूतात्माबुद्धिर्ज्ञानेनशुध्यतीति, तेनैव पूर्वं स्मृतत्वात् ॥ पुनर्मानवशास्त्रएव ( अ० ६ श्लो० २५ ) अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः ॥ शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥ इदं सुखा-

र्थेष्वप्रयत्नत्वं निर्ममत्वं च नज्ञानमंतरा भवति ॥ उक्तस्थले याज्ञवल्क्योऽपि ॥ ( श्लो० ९ ) यः कंटकैर्वितुदति चंदनैर्यश्च लिंपति ॥ अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य चेति॥इदमपि ज्ञानैकसाध्यं ॥ पुनर्मानवे मुनिधर्मोपसंहारे मोक्षलक्षणं तस्य फलमनुशास्ति सएव ॥ ( श्लो० ३२ ) आसां महर्षिचर्याणां त्यक्त्वान्यतमया तनुं ॥ वीतशोकभयोविप्रोब्रह्मलोके महीयतइति॥नचात्रापि ब्रह्मलोकशब्देन सत्यलोकः शंक्यः ॥ कुल्लूकभट्टीये ब्रह्मैव लोकस्तत्र पूजां लभते मोक्षमाप्नोतीत्यर्थः ॥ केवलकर्मणोवानप्रस्थस्य कथं मोक्षइतिचेन्न ॥ विविधाश्चोपनिषदीरात्मसंसिद्धये श्रुतीरित्यनेनास्यात्मज्ञानसंभवादिति व्याख्यानात् ॥ इदंमोक्षलक्षणं फलं ज्ञानमंतरा न संभवेत् ॥ वीतशोकभयत्वं च यथा सामगानां भूमविद्यायां श्रूयते ॥ तरतिशोकमात्मविदिति ॥ कठवल्लीष्वपि द्वितीयवल्ल्यां ॥ अध्यात्मयोगाधिगमेन देवं मत्वा धीरोहर्षशोकौ जहातीति ॥ पुनरत्रैव महान्तं विभुमात्मानं मत्वा धीरो न शोचतीति ॥ मुंडकेषु च तृतीयमुंडकप्रथमखंडे ॥ समाने वृक्षे पुरुषोनिमग्नोऽनीशया शोचति मुह्यमानः ॥ १ ॥ जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकइति ॥ एवंभयविषयेऽपि अथ सोभयंगतोभवति द्वितीयाद्वैभयंभवतीत्याद्या तैत्तिरीयबृहदारण्यकादिश्रुतयस्तत्रतत्र प्रसिद्धाएव ॥ विज्ञानेश्वरस्तु वानप्रस्थस्य सालोक्यमुक्तिमाह ॥ अथ तस्य भगवत्सेवाकर्त्तव्यतां त्वाह याज्ञवल्क्यस्तृतीयाध्याये वानप्रस्थधर्मप्रकरणे॥ (श्लो०२) जटालोमभृदात्मवानिति ॥ इह आत्मवानात्मोपासनानिरतः स्यादिति मिताक्षरा॥आत्मशब्दस्त्वेतादृशप्रकरणेषु भगवत्परएव ॥ गी-

णश्चेन्नात्मशब्दादितिसूत्रे सिद्धवत्कारेण हेतुं वदता बादरायणेन तथाबोधनात् ॥ लघुविष्णुरपि तृतीयाध्याये ॥ ( श्लो० २ ) गृहस्थोब्रह्मचारी वा वनवासं यदा व्रजेत् ॥ चीरवल्कलधारी स्यादिति वानप्रस्थधर्मानुपक्रम्य त्रिसंध्यं स्नानमातिष्ठेत्सहिष्णुर्भूतजान् गुणान् ॥ पूजयेदतिथींश्चैव ब्रह्मचारी वशंगतः ॥ प्रतिग्रहं न गृण्हीयात्परेषां किंचिदात्मवान् ॥ दाता चैव भवेन्नित्यं श्रद्दधानः प्रियंवदः॥केशरोमनखश्मश्रु न च्छिंद्यान्नच कर्तयेत् ॥ त्यजन् शरीरसौहार्दं वनवासरतः शुचिरिति ॥ अत्र सर्वदुःखसहनादि सौहार्दत्यागांतं ज्ञानैकसाध्यं ॥ आत्मवत्त्वंच उक्तमिताक्षरैकवाक्यतया भगवत्सेवावत्वमेव ॥ किंच गृहस्थस्य भगवत्सेवायाआवश्यकत्वमुपपादितमेव वैष्णवत्वं गृहे तिष्ठ कुरु कृष्णपदार्चनमित्यादिवचनैः ॥ तच्च वानप्रस्थस्यापि प्राप्तोत्येव ॥ मिताक्षरायां वानप्रस्थप्रकरणे ( श्लो० ११ ) वायुभक्षइत्यस्य व्याख्याने ॥ स्नानाचमनादिधर्माब्रह्मचारिप्रकरणाद्यभिहिताश्चाविरोधिनोऽस्यापि भवंति ॥ उत्तरेषांचैवतथाविरोधीति गौतमस्मरणादित्युक्तेः ॥ तेन भगवत्सेवादयोऽपि गृहस्थानां ब्रह्मचारिणां चोक्तावैष्णवधर्मावानप्रस्थस्यापि सिध्यंतीत्यलं ॥ अपिच मुनेरपि भगवत्सेवाधिकारजनकं ब्रह्मसंबंधकरणमुच्यते ॥ आचारमाधवे वानप्रस्थधर्मान् प्रक्रम्य कूर्मपुराणे ॥ महाप्रस्थानिकं वासौ कुर्यादनशनं तु वा ॥ अग्निप्रवेशमन्यद्वा ब्रह्मार्पणविधौ स्थितइति ॥ ब्रह्मसंबंधस्य सेवाधिकारजनकत्वं तु एवंधर्मैर्मनुष्याणामुद्धवात्मनिवेदिनां ॥ मयिसंजायते भक्तिः कोन्योऽर्थोस्यावशिष्यतइ-

त्येकादशस्कंधादिवचनैः सिद्धमेव ॥ अथ संवर्तः ॥ उषित्वैवं गृहे विप्रोद्वितीयादाश्रमात्परं ॥ वलीपलितसंयुक्तस्तृतीयं तु समाश्रये दित्यादिना वानप्रस्थधर्मानुपक्रम्य कुर्यादध्ययनं नित्यमग्निहोत्रपरायणः ॥ इष्टिं पार्वायणीयां च कुर्याच्च प्रतिपर्वस्विति मुनेरपि अध्ययनमनुशास्ति ॥ इदं चाध्ययनमुपनिषदामेव ॥ सर्वविद्याध्ययनस्य ब्रह्मचर्याश्रमकार्यत्वात् ॥ मन्वादिभिरपि तथैवोक्तत्वाच्च ॥ अतएव पराशरमाधवीये द्वितीयाध्याये वानप्रस्थधर्मानुपक्रम्य कूर्मपुराणे॥अथर्वशिरसोध्येता वेदांताभ्यासतत्परः॥ यमान्सेवेत सततं नियमांश्चाप्यतंद्रितः॥जितेंद्रियोजितक्रोधस्तत्वज्ञानविचिंतकः ॥ ब्रह्मचारी भवेन्नित्यं न पत्नीं प्रतिसंश्रयेदिति ॥ एवं वानप्रस्थस्य संप्रदायोपयोगोव्याख्यातः॥अथ यतेस्तदुपयोगं व्याख्यास्यामः॥तत्र पराशरमाधवीये (अ० २) संन्यासग्रहणविधौ त्रिदंडाद्येकविंशतिवस्तुग्रहणं ग्रामसीमांताद्यन्यतमगमनं व्याहृतिभिः पयःप्रभृतिप्राशनं सावित्रीप्रवेशमग्निविहरणं ब्राह्ममुहूर्तांतजागरं प्रातरग्निहोत्रानंतरं प्राजापत्येष्टिकरणपूर्वकमात्मन्यग्न्यारोपणांतं निरूप्योच्यते ॥ इष्टिं परिसमाप्याग्नींश्चात्मनि समारोप्य प्रैषमुच्चारयेत् ॥ तदाह कात्यायनः ॥ आत्मन्यग्नीन् समारोप्य वेदिमध्यस्थितोहरिं॥ध्यात्वा हृदिस्त्वनुज्ञातोगुरुणा प्रैषमारभेदिति॥ अत्र हरिध्यानोक्त्या दंडकाषायादीनां च पूर्वं विष्णुलिंगत्वोक्त्या संन्यासिनोऽपि वैष्णवसंप्रदायएवावश्यकः ॥ अयेऽपि लिंगं तु वैष्णवं तेषां त्रिदंडं सपवित्रकमिति स्मृत्युपन्यासेन त्रिदंडादीनां वैष्णवलिंगत्वं दर्शितं ॥ किंच पितामहोपि ॥ परः परमहंसस्तु तुर्याख्यः श्रुतिरब्रवीत् ॥ यमैश्च नियमैर्युक्तोविष्णुरूपी त्रिदंडभृदिति

संन्यासिनोविष्णुरूपत्वं वदन् तस्य विष्णुभक्तिज्ञानावश्यसंपन्नतां द्योतयति॥तद्भक्तिमत्वे एव सति योयच्छ्रद्धःसएवसइतिन्यायेन ताद्रूप्यसंभवात् ॥ अतएवभगवान् ॥ ( अ० ७ श्लो० १६ ) चतुर्विधाभजंते मां जनाः सुकृतिनोऽर्जुन ॥ आर्तोजिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभेत्युपक्रम्य तेषां स्वरूपं दर्शयन् ( श्लो० १८ ) ज्ञानीत्वात्मैवमेमतमिति स्वभक्तस्य ज्ञानयुक्तस्य स्वरूपत्वं निरूपयति ॥ नच निखिलस्याऽपि प्रपंचस्य ब्रह्मात्मकत्वाभिप्रायेण विष्णुरूपत्वकथनमिति शंक्यं ॥ तस्य भूतानि विष्णुर्भुवनानि विष्णुरित्यादिविष्णुपुराणादिवाक्यैः सर्वत्र सत्वेन संन्यासिनि विशेषाभावात् ॥ अथ अत्यंतभक्तिमत्तया विष्णुं रूपयतिनिरूपयतिसविष्णुरूपीत्यर्थादरणेऽपि तस्य तद्भक्त्यावश्यकतासिद्धैव ॥ तस्माद्वैष्णवसंप्रदायस्यास्त्येवावश्यमुपयोगः संन्यासिनोऽपि यथार्थहरिभक्तिज्ञानसंपत्त्यर्थं ॥ अन्यथा तदसिद्धेः पूर्वं व्युत्पादितत्वात् ॥ अथ ननु वेदांताभ्यासानंतरमेव संन्यासोपदेशात् संन्यासिनस्तु न तदभ्यासकारणभूतसंप्रदायस्योपयोगः कश्चिदितिचेन्नैवं ॥ प्रव्राजितस्याऽपि कुटीचरादेः सांप्रदायिकसद्गुरूपसेवनेन वेदांतमभ्यस्यतोमन्वानस्योत्तरोत्तरवैराग्यदार्ढ्येन बहूदकत्वाद्युत्तरोत्तरस्वसंस्थासेवनायावश्यं संप्रदायोपयोगात् ॥ वैराग्यदार्ढ्येनोत्तरोत्तरसंस्थास्वधिकारस्तु दर्शित आचारमाधवे पुराणे ॥ विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च ॥ सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचरः ॥ शक्तोवहूदके तीव्रतरायां हंससंज्ञिते ॥ मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधनइति ॥ किंच मनुरपि षष्ठे ॥ ( श्लो० ३३ ) वनेषु च विहृत्यैवमित्यादिना यति-

धर्मानुपक्रम्य ( श्लो० ४३ ) उपेक्षकोऽसंकुसुकोमुनिर्भावसमाहितइति शरीराद्युपेक्षार्थं बुद्धिस्थैर्याय च मननद्वारा ब्रह्मैकतानवृत्तित्वं यतेरपि संपाद्यत्वेनवक्ति ॥ तथा ( श्लो० ४९ ) अध्यात्मरतिरासीनोनिरपेक्षोनिरामिषइति भगवद्भक्तिमपि तस्य विदंधाति ॥ अध्यात्मरतिपदात् ॥ एवंविजानन्नात्मरतिरात्मक्रीडइति च्छांदोग्यभूमविद्यैकवाक्यत्वात् ॥ आत्मानं ब्रह्माधिकृत्य रतिर्यस्य सोऽध्यात्मरतिरिति कुल्लूकभट्टादिभिर्व्याख्यानाच्च ॥ निर्णीयते चैतद्भक्तिमीमांसायां ॥ ( अ० १ सू० १० ) सामुख्येतरापेक्षितत्वादित्यधिकरणे ॥ एकादशस्कंधेपि अष्टादशाध्याये यतिधर्मेषु भगवान् ॥ ( श्लो० २० ) आत्मक्रीडआत्मरतआत्मवान् समदर्शनः ॥ विविक्तक्षेमशरणोमद्भावविमलाशयः ॥ आत्मानंचिंतयेदेकमभेदेन मया मुनिः ॥ अन्वीक्षेतात्मनोबंधं मोक्षं च ज्ञाननिष्ठया ॥ बंधइंद्रियविक्षेपोमोक्षएषां च संयमः ॥ तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिरिति स्वभक्तिं सदा सर्वत्र तद्भावपूर्वकं ज्ञाननिष्ठया बंधमोक्षादिचिंतनं च पाराशरिणां विदधाति ॥ अतोभक्तिज्ञानसंपत्त्यर्थं तस्यापि सत्संप्रदायोपसत्तिरावश्यकी ॥ अन्यथा रागद्वेषाद्यनपक्षयेण मोक्षासंभवात् ॥ तत्रैव ( श्लो० ६० ) इंद्रियाणां निरोधेन रागद्वेषक्षयेणच ॥ अहिंसया च भूतानाममृतत्वाय कल्पतइत्युक्तेः ॥ एवं ( श्लो० ६१ ) अवेक्षेत गतिर्नृणामित्यादिनोक्तानि परमात्मसूक्ष्मत्वाद्यवेक्षणान्यपि सत्संप्रदायद्वारकाण्येव ॥ गुरुमेवाभिगच्छेत् गीतीशीघ्री आचार्याद्धैवविद्याविदितासाधिष्ठंप्रापयतीत्यादिश्रुतिस्मृतिषु विधौनदास्तुल्योश्च दर्शनात् ॥ इहैव ( श्लो० ७२ ) ध्यानेनानी

श्वरान् गुणानिति ध्यानोपदेशात् सांप्रदायिकगुरूपसत्तिमंतरा श्रवणासंभवेन तदुपजीव्यकमननाभावे निदिध्यासोपदेशनैरर्थक्याच्च॥एवमेव संवर्तोपि॥उषित्वैवं वने सम्यग्विधिज्ञः सर्ववस्तुषु॥ चतुर्थमाश्रमं गच्छेद्धुतहोमोजितेंद्रियः ॥ अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितोभवेत् ॥ वेदाभ्यासरतोनित्यमात्मविद्यापरायणइति ॥ तथा ॥ एकाकी चिंतयेन्नित्यं मनोवाक्कायसंयतइति ॥ तथा ॥ संसेव्य चाश्रमान् सर्वाञ्जितक्रोधोजितेंद्रियः ॥ ब्रह्मलोकमवाप्नोति वेदशास्त्रार्थविद्द्विजइति ॥ यतेर्वेदांतविद्यायाः श्रवणं तच्चिंतनं तद्विदएवमोक्षं चाह ॥ श्रीभागवते एकादशस्कंधे चाष्टादशाध्याये भिक्षुधर्मेषु ॥ ( श्लो० ३४ ) आहारार्थं समीहेत युक्तं तत्प्राणधारणं ॥ तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते इति वेदांतविद्यया तत्त्वविमर्शार्थमेव प्राणधारणमुक्त्वा ( श्लो० ३८ ) दुःखोदर्केषु कामेषु जातनिर्वेदआत्मवान् ॥ अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः ॥ यावद्ब्रह्मविजानीयान्मामेव गुरुमादृतः ॥ यस्त्वसंयतषड्वर्गः प्रचंडेद्रियसारथिः ॥ ज्ञानवैराग्यरहितस्त्रिदंडमुपजीवति॥सुरानात्मानमात्मस्थं निन्हुते मांच धर्महा॥अविपक्वकषायोऽस्मादमुष्माच्च विहीयते इति भगवद्धर्मजिज्ञासापूर्त्यै यतेरपि गुरूपसत्ति ब्रह्मचर्यादिभ्यस्तत्परिचर्यावैलक्षण्यं ज्ञानार्थमेवंकरणस्यावश्यत्वबोधनाय एतच्छून्यस्यात्यंतमनिष्टफलं चाह भगवान् ॥ तस्मादुक्तसर्वसिद्ध्यर्थं यतेरपि वैष्णवसत्संप्रदायोपसेवनमावश्यकं ॥ एवमेव लिंगपुराणेपि ॥ आश्रमत्रयमुत्सृज्य प्राप्तस्तु परमाश्रमं ॥ यतिः संवत्सरस्यांते प्राप्य ज्ञानमनुत्तमं ॥ अनुज्ञाप्य गुरुं चैव चरेद्धिपृथि-

वीमिमां ॥ त्यक्तसंगोजितक्रोधोलघ्वाहारोजितेंद्रियः ॥ पिधाय बुध्याद्वाराणि ध्यानेनैकमनाभवेदिति ॥ मत्स्यपुराणेऽपि ॥ गुरोरपि हिते युक्तः सतुसंवत्सरं वसेत् ॥ नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ॥ प्राप्य चांते ततश्चैव ज्ञानयोगमनुत्तमं ॥ अविरोधेन धर्मस्य चरेत पृथिवीमिमामिति ॥ इह संवत्सरमित्येतदुपलक्षणं ॥ यावज्ज्ञानं तावन्निवसेत् ॥ गुरुसमीपवासस्य ज्ञानार्थत्वादितिमाधवः ॥ नच मनुदक्षादिभिर्यतेरेकाकित्वेनैव चरणविधानाद्गुर्वाश्रयणमपि तस्यानुचितमिति वाच्यं ॥ संगनिषेधस्य अज्ञसंगविषयकत्वात् ॥ अतएव माधवीये ॥ यदातु श्रवणादिः संपत्त्यभावादात्मज्ञानसिद्धौ स्वयमशक्तः स्यात्तदा तत्र शक्तेन द्वितीयेन सह विचरेत् ॥ तथाचश्रुतिः ॥ वर्षासु ध्रुवशीलोष्टौ मासएकाकीयतिश्चरेत् द्वौ वाचरेत् ॥ चरेतामित्यर्थइत्युच्यते ॥ अतः ज्ञानिनस्तु साधारणस्यापि संगस्तेन कर्त्तव्यएव किंपुनर्गुरोः ॥ उक्तवचनेषु तद्विधानात् ॥ अत्रिरप्याह ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ॥ भावशुद्धिः परेभक्तिः संतोषः शौचमार्जवं ॥ आस्तिक्यं ब्रह्मसंस्पर्शः स्वाध्यायः समदर्शनं ॥ अनौद्धत्यमदीनत्वं प्रसादस्थैर्यमार्दवं ॥ सस्नेहं गुरुशुश्रूषा श्रद्धा क्षांतिर्दमः शमः ॥ उपेक्षा धैर्यमाधुर्ये तितिक्षा करुणा तथा ॥ ह्रीः स्तवोज्ञानविज्ञाने योगोलध्वशनं धृतिः ॥ स्नानं सुरार्चनं ध्यानं प्राणायामोवलिस्तुतिः ॥ भिक्षाटनं जपः संध्या त्यागः कर्मफलस्यच ॥ एषस्वधर्मोविख्यातोयतीनां नियतात्मनामिति स्पष्टं परभक्तिब्रह्मसंस्पर्शादिकं तदर्थं गुरुशुश्रूषादिकं च वक्ति॥ अत्रोक्तं सुरार्चनमपि विष्ण्वर्चनमेव ॥ यतोयतेर्ब्रह्मशरीरप्रवेशः

श्रूयते तेब्रह्मलोकेतुपरांतकालइत्यादौ ॥ सच प्रवेशोविष्णवर्चनेनैव भवति ॥ यथोक्तं माधवीये ( अ० १ ) विष्णुधर्मोत्तरे ॥ येऽर्चयंति सदा विष्णुं शंखचक्रगदाधरं ॥ सर्वपापविनिर्मुक्ताब्रह्माणं प्रविशंति तइति ॥ अतएव श्रीभागवते सप्तमस्कंधे त्रयोदशाध्याये एकएवचरेद्भिक्षुरात्मारामोऽनपाश्रयः ॥ सर्वभूतसुहृच्छांतोनारायणपरायणइति श्रीहरिपरायणत्वमेवोक्तं ॥ किंच ॥ संन्यासिनां मुख्यतया प्रणवएवोपास्यः ॥ तस्य च द्वितीयाध्याये बृहत्पराशरः प्रणवप्रकरणे ॥ ( श्लो० ५ ) तस्याश्चैवतु ओंकारोब्रह्मणा समुपासितइत्यादिना कर्तृत्वादिधर्मपूर्वकं पुरुषोत्तमथामत्वाक्षरत्वादिकं तथा ( श्लोक २१ ) सनत्कुमारसिद्धांते प्रणवोविष्णुरुच्यते यस्मिंस्तस्यचविश्रांतिस्तत्परंब्रह्मसंज्ञकं ॥ ( श्लो० २५ ) ध्येयं न जप्यं नच पूजनीयं यस्मान्न देवाद्वरणीयमन्यत् ॥ दुस्तारसंसारपयोधिमग्ने ताराय विष्णुः परमः सपूज्यइति विष्णुरूपत्वं च सम्यगुपपाद्य मध्ये ( श्लो० १६ ) त्रिस्वभावस्थितोदेवोमंतव्यो ब्रह्मवादिभिः ॥ पर्यवस्यति यत्रैव विश्वमुत्पद्यते यतः ॥ निर्मात्रकः समात्रोऽपि सादिरेव निरादिकः ॥ सजप्यः सर्वदा सद्भिर्ध्यातव्यश्च विधानतइति तस्य मंतव्यत्वं जप्यत्वं च विदधाति ॥ अतस्तदुपासकाः सर्वेऽपि ब्रह्मवादिनः सयतयोवैष्णवाएव ॥ अतएवाथर्वणोपनिषद्यपि वैष्णवचिन्हस्योर्ध्वपुंड्रस्य धारणं परिव्राजकस्यापि विधीयते ॥ गृहस्थोललाटादिद्वादशस्थलेष्वनामिकांगुल्या विष्णुगायत्र्या केशवादिद्वादशनामभिर्वाधारयेत्॥ब्रह्मचारी वानप्रस्थोललाटकंठहृदयबाहुमूलेषु वैष्णव्या गायत्र्या कृष्णादिपंचनामभिर्वा धारयेत् ॥ यतिस्तर्जन्या शिरोललाटहृदयेषु प्रण-

वेन धारयेदिति॥ एवं सामान्यतः संन्यासाश्रमे वैष्णवसत्संप्रदाया-नामावश्यकतयोपयोगोव्याख्यातः॥अथ तद्भेदेषु चतुर्ष्वप्येकैकश-स्तदुपयोगं व्याख्यास्यामः॥ अथ चतुर्विधैरपि यतिभिः संप्रदायः सेवनीयः ॥ तत्साध्यानां वेदांतज्ञानादीनां सर्वेषामावश्यकत्वात् ॥ तेषां चातुर्विध्यंतु हारीतः ॥ चतुर्विधाभिक्षवस्तु प्रोक्ताः सामा-न्यलिंगिनः ॥ तेषां पृथक्पृथक् ज्ञानं वृत्तिभेदात्कृतं श्रुतं ॥ कुटी-चकोबहूदकश्चहंसश्चैव तृतीयकः ॥चतुर्थः परमोहंसोयोयः पश्चा-त्सउत्तमइति ॥ पितामहोपि॥ चतुर्विधाभिक्षवस्तु प्रख्याताब्रह्मणो-मुखात् ॥ कुटीचरोबहूदकोहंसश्चैव तृतीयकः ॥ चतुर्थः परहंसश्च संज्ञाभेदैः प्रकीर्तिताइति ॥ तत्र कुटीचरस्य तदुपयोगः प्रथमं द-र्श्यते ॥ तत्र प्रजापतिः ॥ कुटीचरोनाम स्वगृहे वर्त्तमानः शुचिर-कलुष आहिताग्निषु भिक्षां भुंजानोऽपगतकामक्रोधलोभमोहोऽहं कारवर्जी तपआत्मानुग्रहं कुरुते ॥ वृद्धपराशरोपि ॥ कुटीचराना-म पुत्रादिभिः कुटीं कारयित्वा कामक्रोधलोभमोहमदमात्सर्य-भयादीन् हित्वा विधिवत्संन्यासं कृत्वा त्रिदंडजलपवित्रकाषाय-वस्त्रधारिणः स्नानशौचाचमनजपस्वाध्यायब्रह्मचर्यध्यानतत्पराः पुत्रादेरेव भिक्षाकालेऽन्नंयात्रामात्रमुपयुंजानास्तस्यां कुट्यां नि-त्यं संतआत्मानं मोक्षयंतइति ॥ अत्र कामाद्यपगमस्तत्तदध्यासा-परपर्यायदेहादिविषयकाहंकारादिवर्जनं आंतरशौचं प्रणवादेर-र्थावबोधपुरःसरोजपः सुष्ठासमंतात् शब्दार्थादिविषयकसर्वसंदेह-निवृत्तिपूर्वकोऽध्यायो हरिध्यानादिकं चेति संप्रदायैकसाध्यं व-स्तुजातं विधाय तादृशानुष्ठातुरेव आत्ममोक्षणमुपदिष्टमिति तस्य संप्रदायोपयोगोऽवगम्यते ॥ अन्यथा कामाद्यपगमप्रभृतिसाध-

नासंपत्त्याफलतयेप्सितस्य मोक्षपुरुषार्थस्य भंगःस्यात् ॥ तानि विनापि तत्सिद्धौ तु तेषां शास्त्रोक्तसाधनत्वव्याघातः प्रकृते कथनवैयर्थ्यं चापद्येत ॥ अथ बहूदकस्यतदुपयोगोदर्शने ॥ तत्र स्कंदः ॥ बहूदकश्च संन्यस्य बंधुपुत्रादिवर्जितइत्युपक्रम्य तद्धर्मान्वदन्नाह ॥ शिखां यज्ञोपवीतं च देवताराधनं चरेदिति ॥ वृद्धपराशरोऽपि ॥ तत्र बहूदकानाम त्रिदंडकमंडलुपव्यपवित्रपात्रकाषायवस्त्रधारिणोवेदांतार्थावबोधकाः साधुवृत्तेषु ब्राह्मणगृहेषु भैक्षचर्यां चरंतआत्मानं मोक्षयंतइति ॥ पितामहोऽपि ॥ बहूदकः सविज्ञेयः सर्वसंगविवर्जितः ॥ बंधुवर्गे न निक्षेत स्वभूमौ नैव संवसेत् ॥ निश्चलस्याणुभूतश्च सदा मोक्षपरायणः ॥ नकुर्यान्नोदके संगं कुर्याद्वस्त्रे च चेतसा ॥ नागारे नासने नान्ने नाम्बरे च त्रिदंडके ॥ समात्रायां न कुर्याद्धि रागं देहादिके यतिरिति ॥ अत्र संन्यासिनः प्रणवार्थदैविकसर्वेश्वरनारायणाख्यपरब्रह्माभिरक्तोपासनाभावात् देवताराधनशब्देन विष्ण्वर्चनमेवाभिधीयते ॥ वेदांतार्थावबोधनं चात्यावश्यकं ॥ कामादिवर्जनवदस्यापिसाधनत्वप्रतीत्या तदंतरा आत्ममोक्षायोगात् ॥ ऋते ज्ञानान्नमुक्तिरित्याम्नानाच्च ॥ पितामहवचनेऽपि सदा मोक्षपरायणइत्यनेन साक्षान्मोक्षोपयोगिब्रह्ममीमांसाशास्त्राभ्यासस्य सदा कर्त्तव्यत्वविधिर्बोध्यते ॥ तत्साधकस्य वृत्तिनैश्चल्यस्य वाक्पाणिपादचापल्यवर्जनेन शरीरस्थैर्यस्य च कर्तव्यता बाधकानां च भैक्ष्यनिवासादिद्वाराऽपि संभावितानां स्वबंधुभूम्यादिसर्ववस्तुसंगानां शारीरमानसानां वर्जनं कुट्यादिस्वमाग्रासु च ममताऽनुद्भवाय

स्नानसंगत्यागश्च चोद्यते ॥ एतच्च सर्वं तत्कालेऽपि संप्रदायसेवनाधीनमिति सर्वमनवद्यं ॥ अथ हंसस्यापि तदुपयोगं प्रकाशयामः ॥ तत्र स्कंदपुराणे ॥ हंसः कमंडलुं शिक्यमित्यादिना हंसधर्मानुपक्रम्योच्यते ॥ देवतानामभेदेन कुर्यात्ध्यानं समर्चयेदिति ॥ पितामहोऽप्याह ॥ हंसस्तृतीयोविज्ञेयोभिक्षुर्मोक्षपरायणः ॥ नित्यं त्रिषवणस्नायी स्वार्द्रवासाभवेत्सदा ॥ चांद्रयणेन वर्त्तेत यतिधर्मानुशासनात् ॥ वृक्षमूले वसेन्नित्यं गुहायां वास रित्तटइति ॥ बौधायनोऽपि ॥ हंसः कमंडलुं शिक्यमित्यादिना तद्धर्मानुपक्रम्याह ॥ कृच्छ्रसांतपनाद्यैश्च मंत्रैः कृशवपुर्द्धराइति ॥ अत्र सर्वासामपि देवतानां श्रुतिपुराणेषु भगवदवयवत्वश्रावणेन तस्यास्तस्यास्तत्तदवयवाभेदेन ध्यानं॥तथैवच यज्ञोपवीतधारणेन तदवयवतंतुधारणवत् सम्यक्चेतोनैश्चल्याद्भगवदर्चनेनेन तासां समर्चनं च विधीयते ॥ अथवा आसन्योपासनाविधानात् अग्निर्वाक् भूत्वा मुखं प्राविशदित्यादिना ऐतरेयादिषु श्रूयमाणप्रकारेण तत्तद्देवतानां तत्तत्स्वेंद्रियाभेदेन ध्यानं सर्वेषां देवभावेन विलापनार्थं तादूप्येण तत्रैव मनसा तत्समर्चनं च विधीयते ॥ पितामहवचने च मोक्षपरायणोनित्यमिति पूर्ववद्ब्रह्ममीमांसायाः सार्वदिकोदेवभावादिसर्वेटजातफलकोऽभ्यासश्चित्तशुध्याधायकत्वेन तदुपोद्बलकं त्रैकालिकस्नानादि मध्ये इंद्रियकृतोपरोधनिरोधाय प्रत्यहमष्टकवलभक्षणात्मकं यतिचांद्रायणं बाधकसंगाद्यभावाय तरुतलगह्वरसरित्तीरपरिसरान्यतमनिवासश्चोद्यते ॥ एतत्सर्वं तदानीमपि संप्रदायसेवनैकतंत्रं ॥ बौधायनोक्तं मंत्रवत्त्वं च संप्रदायादेव संभवति ॥ अन्यथा मंत्रनैष्फल्यात् ॥ संप्रदायविहीना-

ये मंत्रास्ते निष्फलामताइति गौतमतंत्रोक्तेः ॥ अतोहंसस्याऽपि तदुपयोगोऽशक्यप्रतिविधिः ॥ एवं त्रयाणामप्युपयोगोव्याख्यातः ॥ यदि च संन्यासात्पूर्वमेव वेदांतपरिचिंतनं तदुत्तरं तु न कोऽप्यभ्यसनीयशेषोब्रह्मसंपन्नत्वादित्येव सिद्धांतः स्यात् न तर्हि युज्येत कुटीचरादिसंस्थानामुत्तरोत्तरत्वं ॥ अविशेषात् ॥ नच बाह्यलिंगैर्विशेषः कल्प्यः॥स्त्यनुत्थानेन तद्धारणस्यैवायोगात् ॥ न लिंगं धर्मकारणमित्यादि च पूर्वमेवोपपादयं ॥ तादृशस्य कृत्यऽसंभवेन तत्तचोदनावैयर्थ्यंच ॥ तस्मादस्त्येव नित्यं तत्रापि वेदांताभ्यासः॥नन्वथापि परमहंसस्य तु न संप्रदायोपयोगः स्यात् ॥ चरमकोटित्वेनाभ्यासायोगात् ॥ अत्र प्रयोजनाभावाच्चेतिचेदत्र ब्रूमः ॥ नहि तस्यापि सर्वथाऽनुपयोगः शक्योवक्तुं ॥ तथाहि ॥ अस्तिहि परमहंसस्यापि द्वैविध्यं विद्वद्विविदिषुभेदेन वाजसनेयिब्राह्मणादिषु स्पष्टतरं ॥ तथाच वाजसनेयिब्राह्मणे ॥ एतं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरंतीति विद्वत्संन्यासे प्रमाणं ॥ अत्र क्तात्व्यवंताभ्यां विदित्वाव्युत्थायेत्यव्ययाभ्यामात्मवेदनत्रिविधैषणाव्युत्थानयोः संन्यासपूर्वकालिकत्वद्योतनात् ॥ पंचमाध्यायप्रथमपादे ॥ आध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यत्र तथैव पूर्वकालिकत्वस्य जैमिनिनांगीकृतत्वाच्च ॥ अथ तत्रैव ब्राह्मणे एवमेव प्रव्राजिनोलोकमिच्छंतः प्रव्रजंतीति विविदिषोः संन्यासे प्रमाणं ॥ जाबालश्रुतावपि एतत्सर्वं भूःस्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेदिति पूर्वोपक्रांतप्राचीनत्रिदंडादेः सर्वस्याप्सु त्यागेन पारमहंस्यं प्रतिपाद्य तस्याप्यात्मान्वेषणं वि-

धीयते ॥ तैत्तिरीयोपनिषदि न्यासइति ब्रह्मा ब्रह्माहि परः परोहि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यासएवात्यरेचयदित्यग्निहोत्रयज्ञदानादीनां पूर्वोक्तानां तपसां निंदापुरस्सरं पारमहंस्यं विधाय तस्य परमहंसस्य विविदिषोरात्मविद्याधिकारोदर्शितः ॥ ॐमित्येतमात्मानं युंजीतेति ॥ तस्मादुभयविधावपि पारमहंस्यसंन्यासावनेकश्रुतिसिद्धौ ॥ माधवेनाप्येवमेव पराशरद्वितीयाध्यायव्याख्याने परमहंसद्वैविध्यमंगीकृतमेवेति न कोऽपि चोद्यावकाशः ॥ अथ तत्र विविदिषोस्तु भक्तिज्ञानादिसंपत्त्यर्थं वैष्णवसंप्रदायनिष्ठायाआवश्यकत्वं ॥ अतएव तत्साधकजपशेषभूतायाअक्षमालायाग्रहणमपि परमहंसस्य विधीयते स्कंदपुराणे ॥ कौपीनाच्छादनं वस्त्रं कंथां शीतनिवारिणीं ॥ अक्षमालां च गृह्णीयाद्वैणवं दंडमव्रणं ॥ माधूकरमथैकान्नं परहंसः समाचरेदिति ॥ जपकरणं- चास्य स्पष्टमेव यमोविदधाति ॥ स्नात्वा शुचिः शुचौ देशे कृतजप्यः समाहितः ॥ भिक्षार्थी प्रविशेद्ग्रामं रागद्वेषविवर्जितइति ॥ एतस्य च वैष्णवसंप्रदायावश्योपयोगस्तदेकसाध्याऽवश्यकबहुकार्यप्रतिपादनेन जाबालश्रुतावपि दर्शितः ॥ एतत्सर्वं भूःस्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छन् यथाजातरूपधरोनिर्द्वंद्वोनिःपरिग्रहः ॥ तत्त्वब्रह्ममार्गे सम्यक् संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तोभैक्षमाचरन् करपात्रेण लाभालाभौ समौ भूत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकंदरकोटर निर्झरस्थंडिलेष्वनिकेतवास्यप्रयत्नोनिर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठोऽशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति सपरमहंसो

नामेति ॥ अत्रात्मान्वेषणं कर्त्तव्यत्वेनोक्त्वा तदुपरोधकत्यागपुरः-
सरं तत्त्वब्रह्ममार्गे तत्त्वसूत्रानुसारिणि परब्रह्मणः पुरुषोत्तमस्य मा-
र्गे संप्रदाये सम्यक् संपत्तिः श्रद्धापूर्वकचिराभ्यासेन जीवादिव-
स्तुतत्त्वव्युत्पत्तिस्ततोमनःशुद्धिः पुनर्मननिदिध्यासनार्थं देहस्यो-
पयोगात् तद्धारणमात्राय भिक्षाटनं लाभालाभयोर्हर्षशोकत्या-
गोभरतादिवत्संगवारणार्थैकांतवासोवेदांतचिंतनातिरिक्तकायिका
दिप्रयत्नपरिहाणं क्रमेण देहादिविषयकममतोज्झितिस्तदर्थं च स-
दा शुक्लस्य भगवतोध्यानं एतत्सर्वसिध्यर्थं च गुरूपदिश्यमाना-
यामध्यात्मविद्यायामेव नितरां स्थिति स्तयैवचाशुभकर्मनिर्मूलनं
च निरूपितमिति स्पष्टतरएवाऽस्य वैष्णवसंप्रदायोपयोगः ॥ य-
दिचेदं वचनं विद्वद्विषयमभविष्यत् शुभाशुभानामुभयविधानाम-
पि कर्मणां तर्हि निर्मूलनमवक्ष्यत् ॥ इहत्वशुभानामेव निर्मूलनं
वदंती श्रुतिर्विविदिषुदशायां ज्ञानोत्पत्तिबीजभूतानां संप्रदायसे-
वनविष्णवर्चनादिशुभकर्मणां विधातव्यतां ध्वनयति ॥ एवमारु-
णिश्रुतावपि ॥ आरुणिः प्रजापतेर्लोकं जगाम तं गत्वोवाच केन
भगवन्कर्माण्यशेषतोविसृजानीति तं होवाच प्रजापतिरित्युपक्र-
म्य ब्रह्मांडं च विसर्जयेद्दंडमाच्छादनं कौपीनं परिग्रहेत् शेषं वि-
सृजेच्छेषं विसृजेदित्यतेन पुत्राद्यैहिकानां चतुर्दशलोकानां दं-
डादित्रयातिरिक्तसर्ववस्तूनां त्यागं विधाय ततोलौकिकाग्नीनामु-
दराग्नौ गायत्र्या वागग्नौ चारोपणमाज्ञाप्य पुनर्हेयानि चेतराणि
निरूप्योच्यते॥ ऊर्ध्वगमनं विसृजेत् त्रिसंध्यादौ स्नानमाचरेत्संधि
समाधावात्मन्याचरेत् सर्वेषु वेदेष्वारण्यमावर्त्तयेदुपनिषदमावर्तये-
दिति ॥ अत्र ह्यारण्यकानामुपनिषदां चावृत्ति र्नहि पुनःपुनरक्ष-

रोच्चारणमात्ररूपा विधीयते किंतु सानुभवार्थपरिचिंतनपुरःसरै-
व ॥ अन्यथा साक्षात् ब्रह्मज्ञानरूपविवक्षितफलाजननात् ॥ अ-
तस्तदर्थावगमाय परिचिंतनपूर्वकावृत्तिकालेषु च तत्रोत्पद्यमा-
नाऽसंभावनाविपरीतभावनाऽमंदसंदेहसंदोहसंदानाद्यर्थं च संप्र-
दायोपसेवनं परमहंसस्याप्यावश्यकमेव ॥ परमहंसधर्मेषु च वि-
श्वामित्रोऽपि ह्यात्मान्वेषणादिकं विदधाति ॥ अथो परं परिव्राज-
कलिंगं सर्वतः परिमोक्षमेके सत्यानृते सुखदुःखे वेदानिमं लोक-
ममुं च परित्यज्यात्मानमन्विच्छेदिति ॥ अथ केचिदिमानि पि-
प्पलायनशाखावाक्यानि ह्योदाहरंति ॥ यथा ॥ यदक्षरं परं ब्रह्म
तत्सूत्रमिति धारयेत् ॥ सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदं ॥
तत्सूत्रं विदितं येन सविप्रोवेदपारगः ॥ येन सर्वमिदं प्रोतं सूत्रे म-
णिगणाइव ॥ तत्सूत्रं धारयेद्योगीयोगवित्तत्वदर्शिवानिति ॥ अ-
त्रापि सूत्रमणिगणन्यायेन सर्वाधारस्य श्रीपुरुषोत्तमधामत्वेन प-
रमपदस्याक्षरब्रह्मणः पुरुषोत्तमसूचकत्वादिना सूत्रत्वं निरूप्य त-
त्ववेदिनस्तद्धारणं विधीयते ॥ एतच्चाक्षरब्रह्मणः सर्वाधारत्वभग-
वद्धामत्वादिकं पुरुषोत्तमाक्षरविवेकं चावगंतुं सर्ववेदोपनिषद्गीता-
सूत्रभागवतादिप्रमाणभेरीपरिकरप्रघुष्टोऽस्माकं वैष्णवसंप्रदायएव
सर्वैरपि परमहंसैः सर्वथाऽऽदरणीय. ॥ इतरार्वाचीनसिद्धांतेषु ता-
दृशतद्विवेकाऽनुपलंभस्य प्रत्यक्षसिद्धत्वात् ॥ द्वादशस्कंधे श्रीमद्भा-
गवतं पुराणममलं यद्वैष्णवानां प्रियं यस्मिन्पारमहंस्यमेकमित्या-
दिश्रीभागवतादिपुराणवचनैरपि वैष्णवप्रियप्रमाणेष्वेव पारमहं-
स्यनिरूपणस्यावगम्यमानत्वात् ॥ तेनैवच पारमहंस्यस्य वैष्णव-
त्वानतिरेकाध्यवसायात् ॥ तत्रैव प्रथमस्कंधे पंचमाध्याये ॥ (श्लो-

१०) न यद्वचश्चित्रपदं हरेर्यशोजगत्पवित्रं प्रगृणीत कर्हिचित् ॥ तद्वायसं तीर्थमुशंति मानसान यत्र हंसानिरमंत्युशिक्षयाइत्यवैष्णवयंथेषु तेषां रमणाभावस्मरणाच्च ॥ किंच पुनः प्रथमस्कंधे ऽष्टमाध्याये ॥ (श्लो० २० ) तथा परमहंसानां मुनीनाममलात्मनां ॥ भक्तियोगवितानार्थं कथं पश्येमहि स्त्रियइति ॥ परमहंसेपु स्वभक्तिविस्तारस्यैव भगवदवतारप्रयोजनत्वेनाभिधानात् तेषामेवावैष्णवत्वे भगवदवतारवैयर्थ्यप्रसंगः स्यात् ॥ एवमितराण्यपि परमहंसानां सर्वथा वैष्णवत्वबोधकानि श्रीभागवतादिवचनानि शतशः संतीति तत्रतत्र द्रष्टव्यानि॥तस्मात् सर्वशास्त्रसंमतमेव तेषामनन्यवैष्णवत्वं॥अतोऽस्येव विविदिषोः परमहंसस्य तु ज्ञानभक्तिसंपत्त्यर्थमव्यवच्छिन्नएव वैष्णवसंप्रदायोपयोगः सर्वशिष्टसंमतः॥ अतएव माधवोऽपि पराशरव्याख्यायां वेदांतश्रवणादिकां परमहंसवृत्तिं चेदाश्रयति तदा वृत्तितः परमहंसइति निरूपयन् तथा अग्रेऽपि विद्वद्विविदिषुभेदेन परमहंसद्वैविध्यं सप्रमाणं निर्णीय विविदिषोस्तु श्रवणमननादिकर्त्तव्यसद्भावात्तदुपकारित्वेन दंडधारणादिनियमउत्पद्यते इति कथयन् स्पष्टमेव श्रवणादेः कर्त्तव्यत्वं परमहंसस्याऽपि प्रतिपादयति॥तदर्थं संप्रदायावश्यकता तस्याप्यस्येवेति नात्र कोऽपि शंकावकाशः॥ अथात्र परमहंससामान्यस्य वैष्णवत्वावश्यकताप्रतिपादनेन विद्वत्परमहंसस्य तत्कालावच्छेदेन श्रवणाद्यर्थं संप्रदायानुपयोगेपि तदेकजनितयोर्भगवद्भक्तिपूर्णज्ञानयोर्जीवन्मुक्तिदशायामपि तस्मिन् सत्वादस्येव तस्यापि वैष्णवसंप्रदायवर्त्तित्वं ॥ बहुभिर्वचनैस्तस्यानन्यवैष्णवत्वाभिधानात् ॥ तस्य भक्तिमत्वं त्वाह भगवान् ॥ यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च-

मानवः ॥ आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यतइति ॥ छांदोग्येऽपि भूमविद्यायां ॥ सवा एषएवं पश्यन्नेवं मन्वानएवं विजानन्नात्मरतिरात्मक्रीडआत्ममिथुनआत्मानंदः सस्वराड् भवति तस्य सर्वेषु लोकेषु कामचारोभवतीति ॥ अत्र रतिशब्दस्य भक्तिपरत्वमेवेतितु मीमांसितं भक्तिमीमांसाप्रथमाध्याये ( सू० १०) सामुख्येतरापेक्षितत्वादिति सूत्रे भगवता शांडिल्येन ॥ स्पष्टं चेदं स्वमेश्वरभाष्ये ॥ उक्तश्रुत्यर्थं स्मरति दक्षः ॥ यश्चात्ममिथुनोनित्यमात्मक्रीडस्तथैवच॥आत्मानंदश्च सततमात्मन्येव समाहितइत्यादि ॥ अग्रेच ॥ ईदृक्चेष्टः स्मृतः श्रेष्ठोवरिष्ठोब्रह्मवादिनामिति ॥ तस्य कर्त्तव्यशेषाभावस्तु माधवीये स्मृत्यंतरे ॥ ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ॥ नैवास्ति किंचित्कर्त्तव्यमस्तिचेन्न ससर्वविदिति ॥ बह्वृचब्राह्मणे ॥ एतद्धस्मवै तद्विद्वांस आहुः कावषेयाः किमर्थावयं यक्ष्यामहे किमर्थावयमध्येष्यामहे इति ॥ दक्षोप्याह ॥ नाध्येतव्यं न कर्त्तव्यं न भेतव्यं कदाचन ॥ योवै सर्वसुनिष्णातोयतिर्भवति नान्यथेति ॥ एतादृशस्य तस्य हरिभक्तिज्ञानसंपन्नत्वेनैव ताद्रूप्यमाह पितामहः ॥ परः परमहंसस्तु तुर्याख्यश्रुतिरब्रवीत् ॥ यमैश्चनियमैर्युक्तोविष्णुरूपी त्रिदंडभृदिति ॥ यतस्तस्य सर्वदा हरिचिंतनमेव विदधाति बौधायनः ॥ विधूमे सन्नमुसले व्यंगारे भुक्तवज्जने ॥ काले ऽपराण्हभूयिष्ठे भिक्षाटनमथाचरेत् ॥ ऊर्ध्वं जान्वोरधोनाभेः परिधायैकमंबरं ॥ द्वितीयमांतरं वासः पात्री दंडी च वाग्यतः ॥ सव्ये चादाय पात्रं तु त्रिदंडं दक्षिणेकरे॥उपतिष्ठेत सूर्यं तु ध्यात्वा चैकत्वमात्मना॥उक्त्वा विरजसं[illegible]ेन प्रदक्षिणं॥कृत्वा पुनर्जपित्वा च ये ते पंथा-

नइत्यपि॥योऽसौ विष्णवाख्यआदित्ये पुरुषोंऽतर्हृदिस्थितः ॥ सोऽहं नारायणोदेवइति ध्यात्वा प्रणम्य तं॥भिक्षापात्रादिशुध्यर्थमुपमुच्याप्युपानहौ॥ततोग्रामं व्रजेन्मंदं युगमात्रावलोककः॥ध्यायन्हरिं च तच्चित्तइदं च समुदीरयेत् ॥ विष्णुस्तिर्यगधोर्ध्वं मे वैकुंठोविदिशं दिशं ॥ पातु मां सर्वतोरामोधन्वी चक्री च केशवः ॥ अभिगम्य गृहाद्भिक्षां भवत्पूर्वं प्रचोदयेदित्यादि ॥ एवं मनुरपि षष्ठे ॥ ( श्लो० ७२ ) ध्यानेनानीश्वरान्गुणान् ॥ उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः ॥ ध्यानयोगेन संपश्येद्गतिमस्यांतरात्मनइति भगवद्ध्यानमुक्त्वा तेनैव सर्वसंसारत्यागपूर्वकं पुरुषोत्तमप्राप्तिलक्षणं फलं तस्याह ॥ ( श्लो० ७९ ) विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनमिति॥उपसंहारेऽपि ॥ ( श्लो०८५ ) सविधूयेह पाप्मानं परं ब्रह्माधिगच्छतीति॥इत्थमन्यत्रापि शतशः सहस्रशः श्रुतिस्मृतिपुराणादिभिर्मस्करिणां विष्णुभक्तिमत्त्वादिकं समुद्घुष्यतइत्यलं विस्तरेण ॥ एवं चतुर्विधानामपि यतीनां वैष्णवसंप्रदायस्यावश्यकोपयोगः सप्रमाणं निर्णीतः ॥ संप्रदायसेचनाभावे ज्ञानभक्त्यादिसिद्धिर्नैव स्यादिति तु सविस्तरं पूर्वं प्रपंचितं द्वितीयप्रश्नोत्तरे च प्रपंचयिष्यते ॥ तथाच संप्रदायाभावे ज्ञानरहितस्य केवलचिन्हधारिणः फलं त्वाम्नायते माधवीये॥काष्ठदंडोधृतोयेन सर्वाशी ज्ञानवर्जितः ॥ सयाति नरकान् घोरान्महारौरवसंज्ञितानिति ॥ कालिकापुराणे ॥ वैणवाये स्मृतादंडालिंगमात्रप्रबोधकाः ॥ लिंगव्यक्त्यै हि धार्यास्ते न पुनर्धर्महेतवः ॥ कायजाये बुधैर्नित्यं नृणां पापप्रमोक्षणात् ॥ जितेंद्रियैर्जितक्रोधैर्धी-

र्यास्ते तत्त्वदर्शिभिरिति ॥ ये कायजास्रयोदंडास्ते पापविमोक्षणाय धार्याइत्यन्वयइति व्याख्या ॥ किंच संप्रदायाभावे वागादिदंडरहितस्याजितकामक्रोधस्य संन्यासित्वमेवनास्ति ॥ यतस्तद्युक्तस्य जितकामक्रोधस्यैव त्रिदंडित्वं वदति मनुः ॥ वाग्दंडोऽथमनोदंडः कर्मदंडस्तथैवच ॥ यस्यैते नियताबुद्धौ सत्रिदंडीति चोच्यते ॥ त्रिदंडमेतं निक्षिप्य सर्वभूतेषु मानवः ॥ कामक्रोधौ तु संयम्य ततः सिद्धिं निगच्छतीति ॥ दक्षोप्याह ॥ वाग्दंडोऽथमनोदंडः कर्मदंडस्तथैवच ॥ यस्यैते नियतादंडास्त्रिदंडीति सउच्यते इति ॥ अतः केवलबाह्यचिन्हस्य निरर्थकत्वेनांतरज्ञानभक्त्यादिसंपत्त्यर्थं वैष्णवसंप्रदायोऽवश्यमेव सर्वदा सर्वैरपि सेव्यः सन्मतिभिः सुकृतिभिर्यतिभिरिति सम्यक् प्रमाणैः सिद्धं ॥ बाह्यस्यापि तेषां त्रिदंडादिरूपचिन्हस्य वैष्णवचिन्हत्वं तु पूर्वमेवोपपादितं लिंगं तु वैष्णवं तेषां त्रिदंडं सपवित्रकमित्यादिवचनैरिति सर्वंनिरवद्यं ॥ एवं सत्संप्रदायानां वैष्णवानामिहोदितः ॥ सर्वाश्रमेषूपयोगोऽस्त्यावश्यकतया मया ॥ १ ॥

अथ स्वतंत्रप्रश्नकल्पस्यापि अनुयोजकेन सप्तमप्रश्नकुक्षावेव प्रसह्य निक्षिप्तस्य किमाश्रमनिष्ठइति वाक्यस्यावांतरार्थविषयकमपि वाक्यं स्वातंत्र्येणावांतराष्टमप्रश्नतयोल्लिखितं तद्यथा ॥

॥ आश्रमनिष्ठश्चेत्तदा संप्रदायपूर्वकआश्रमआश्रमपूर्वकः संप्रदायोवा ॥

॥उत्तरं॥

अत्रापि पूर्वत्वं नाम कारणत्वं विवक्षयतआहोस्वित् पूर्वकालिक-
त्वमात्रं ॥ नाद्यः॥उक्तवक्ष्यमाणैर्वेदांतकृद्वेदविदेवचाहं ॥ वेदशब्दे-
भ्यएवादौपृथक्संस्थाश्चनिर्ममइत्यादिगीतामनुस्मृत्यादिप्रमाण-
मूर्धन्यग्रंथवचनशतैः संप्रदायानामीश्वरप्रादुष्कृतत्वसिध्या ए-
वमाश्रमाणामपि द्वितीयस्कंधे ( अ० ६ श्लो० १८ ) पादास्त्र-
योर्बहिश्चासन्नप्रजानां यआश्रमाः ॥ अंतस्त्रिलोक्यास्त्वपरोगृहमे-
धोबृहद्व्रतइति एकादशस्कंधे ( अ० १७ श्लो० १३ ) गृहाश्र-
मोजघनतोब्रह्मचर्यं हृदोमम ॥ वक्षःस्थलाद्वने वासोन्यासः शीर्ष-
णि संस्थितइत्यादिश्रीभागवतादिवचनैर्भगवन्निर्मितत्वनिश्चयेन-
चान्यतरस्मिन्नन्यतरकारणकत्वस्य वक्तुमयुक्तत्वात् ॥ नांत्यः ॥
उभयोरपि सृष्ट्यारंभकाले परमेश्वरप्रकटितत्वेन समकालिकत्व-
सिद्धावेकतरस्य पूर्वकालिकत्वकथनानौचित्यात् ॥ अथाश्रम-
ग्रहणानंतरं संप्रदायग्रहणं तद्ग्रहणानंतरं वा ऽऽश्रमग्रहणमित्येव
विचिकित्सितं स्यात् तदा तूभयमपि स्वीकुर्मः॥ अनुभवसिद्धत्वा-
त् ॥ तथाहि ॥ गृहस्थाश्रमे ब्रह्मचर्यावस्थानुष्ठितसांप्रदायिकध-
र्मोत्तरकालिकत्व तदुत्तरानुष्ठेयतद्धर्मापेक्षया पूर्वकालिकत्वं चा-
स्त्येव ॥ एवमुत्तरत्राऽपि वेदितव्यं ॥ अथैवं तर्हि ब्रह्मचर्यस्य तु-
न संप्रदायपूर्वकत्वमिति व्यभिचारः ॥ नैषदोषः ॥ आबाल्यं हरि-
भक्तिरिति सर्वशिष्टप्रसिद्धेर्ध्रुवप्रल्हादनारदादिषु सत्संप्रदायग्रह-
णपूर्वकमत्यंतबाल्येऽपि भगवद्भक्तिभरस्य बहुपुराणप्रसिद्धत्वाच्च ॥
तस्माद्भ्रष्टुः पांडित्यव्यापकएवायमीदृशश्चोद्योदयइति शिवं ॥

ग्रस्तएवा

एवं ॥ अज्ञानां कष्टदैरष्टप्रश्नैः शिष्टोपहासदैः ॥ युक्तोऽनिष्टोवि-
निर्दिष्टोत्तरः प्रश्नइहादिमः ॥ १ ॥ ॥ इतिप्रथमाष्टकम् ॥ ८ ॥

---

## ॥ अथ द्वितीयः प्रधानः प्रश्नः ॥

॥ कियत्कालात्प्रवृत्तः ॥ २ ॥

( अत्र कालादिति गम्यमानप्रभृतियोगे पंचमी ॥ अपादानेपंच-
मीतिसूत्रे कार्तिक्याःप्रभृतीति महाभाष्यप्रयोगेण प्रभृत्यारभ्या-
दिपदयोगे तत्स्वीकारात् ॥ तथाचावधित्वं पंचम्यर्थः ॥ अथ जि-
ज्ञासाबोधकात् किशब्दात्किमिदंभ्यांवोघइतिशास्त्रानुशिष्टेन य-
त्तदेतेभ्यः परिमाणेवतुवित्यतोनुवृत्तेन परिमाणार्थकेन वतुपा नि-
ष्पन्नः कियच्छब्दश्च सामानाधिकरण्येन कालेन्वेति ॥ तथाच
संप्रदायप्रवृत्त्यवधिभूतकालमारभ्य वर्त्तमानकालपर्यंतकालनिष्ठं
परिमाणं संख्याविशेषविशिष्टसंवत्सरयुगादिरूपं प्रष्टुर्बुभुत्सितमि-
ति प्रतीयते ॥ )

### ॥ उत्तरं ॥

अनादिसिद्धवेदोक्ताः संप्रदायाअनादयः ॥ प्रश्नः प्रवृत्तिकाल-
स्यानादित्वात्तत्र नोचितः ॥ १ ॥ प्रतिकल्पं जगत्सृष्टौ प्रवर्त्तंते
हरीच्छया ॥ वेदवद्वेदसिद्धास्ते तिरोदधति च क्षये ॥ २ ॥ संप्रदा-
यप्रणेता तु सृष्ट्यादौ भगवान्स्वयम् ॥ अन्ये तदाज्ञयाचार्याव्या-
साद्यास्तत्प्रवर्त्तकाः ॥ ३ ॥ ब्रह्मरुद्रादयोदेवा नारदाद्यामहर्षयः ॥
स्मर्यंते संप्रदायेषु वैष्णवेषु प्रतिष्ठिताः ॥ ४ ॥ तत्र प्रथमतः संप्र-
दायप्रवर्त्तकत्वं तु स्वस्यैवाह भगवान् ॥ ( अ० १५ श्लो० १५)

---

वेदैश्च सर्वैरहमेव वेद्योवेदांतकृद्वेदविदेवचाहमिति ॥ तत्रवेदांतकृत्त्वं नाम वेदांतमूलकसत्संप्रदायप्रवर्त्तकत्वमेव ॥ अतएव श्रीधरस्वामिनाऽपि वेदांतकृत्तत्संप्रदायप्रर्त्तकश्च ज्ञानदोगुरुरहमित्यर्थइति व्याख्यातं ॥ ननु स्वयमेव कुतः प्रावर्तयतेतिचेत् संप्रदायानां वेदमूलकत्वात्तदर्थानां यथार्थज्ञानस्य चान्येष्वशक्त्या स्वयमेव प्रवर्त्तितवानित्याशयेन अग्रएवोच्यते ॥ वेदविदेवचाहमिति ॥ मनुस्मृतावपि प्रथमाध्याये ( श्लो० ६ ) ततः स्वयंभूर्भगवानव्यक्तोव्यंजयन्निदम् ॥ महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदइत्यादिना सृष्टिनिरूपणमुपक्रम्य ( श्लो० २० ) वेदशब्देभ्यएवादौ पृथक् संस्थाश्च निर्ममइति संप्रदायोत्पत्तिरपि परमेश्वरादेवोदिता ॥ संस्थाश्च संप्रदायाः ॥ अग्रे अष्टमाध्याये ( श्लो० १६२ ) निरादिष्टइति स्थितिरित्यत्र कुल्लूकभट्टेन इतिशास्त्रसंप्रदायइति स्थितिशब्दस्य व्याख्यानात् स्थितिसंस्थयोश्चैकार्थ्यात् ॥ अथ भगवदाज्ञया ब्रह्मादीनामपि अस्ति भगवदुपदिष्टब्रह्मविद्यासंप्रदायप्रवर्त्तकत्वं ॥ अतएवोपनिषत्सु तत्रतत्र ब्रह्मविद्यायाः परंपराप्राप्तत्वं श्रूयते ॥ यथा मुंडकोपनिषदि ॥ ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता सब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह अथर्वणेयां प्रवदेत ब्रह्मा ऽथार्थ तां पुरोवाचाङ्गिरसेब्रह्मविद्यां सभारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावरामिति ॥ अस्यैव भाष्ये शंकराचार्योअपि विद्यासम्प्रदायकर्तृत्वपारम्पर्यलक्षणसम्बधमादावेवाहेति व्याकुर्वतः कंठरवेणैव ब्रह्मादीनां ब्रह्मविद्यासंप्रदायकर्तृत्वमाहुः ॥ एवमेव बृहदारण्यकभाष्यारंभेपि नमोब्रह्मादिभ्यो

ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशऋषिभ्योनमोगुरुभ्यइति तदेवाहुः॥ तथा तदनुयायिभिरितैररपि शंकराचार्यकृतोपदेशसहस्रीव्याख्या: दिषु समस्तब्रह्मविद्यासंप्रदायप्रवर्तकाचार्येभ्योनमइत्याद्युक्तमेव ॥ एवमन्यत्राप्युपनिषत्सु तद्व्याख्यानेषु चानेकत्र स्पष्टतया संप्रदायनिरूपणं तत्प्रवर्तकनिरूपणं चास्ति तत्तत्र तत्र द्रष्टव्यं॥एवं संप्रदायप्रवर्तकानां महर्षीणां वेदोक्तत्वं पराशरस्मृत्यारंभे माधवोऽप्याह ॥ वाजसनेयिशाखायां वंशब्राह्मणे वेदसंप्रदायप्रवर्तकगुरुशिष्यपरंपरायां पराशरस्य पुत्रपौत्रौ श्रूयेते घृतकौशिकः पराशर्यायणात् पराशर्यायणः पाराशर्यात्पाराशर्योजातूकर्ण्यादिति ॥ किंच अस्माकं परमाचार्यस्य व्यासस्यापि संप्रदायप्रवर्तकत्वं ततएव इतरमुन्यपेक्षयोत्कर्षं च सएव कंठरवेणाह तत्रैव शृणु पुत्र प्रवक्ष्यामि शृण्वंतु मुनयस्तथेत्यस्य व्याख्याने ॥ अत्र मुनिसंबोधनेनैव पुत्रस्य संवोधने सिद्धेऽपि संप्रदायप्रवर्तकत्वेन विशेषतस्तत्संबोधनमिति ॥ एवं प्रामाणिकग्रंथांतरेष्वपि सहस्रशोद्रष्टव्यं॥एवं संप्रदायप्रवर्त्तकत्वादेव वेदानां तदनुकूलतंत्राणां च विचारेण ब्रह्मादीनां देवानां व्यासादीनां महर्षीणां चाचार्यत्वं श्रीभागवतादिपूच्यते द्वादशस्कंधे एकादशाध्याये (श्लो० ४)नमस्कृत्वा गुरून्वक्ष्ये विभूतीर्वैष्णवीरपि ॥ याःप्रोक्तावेदतंत्राभ्यामाचार्यैः पद्मजादिभिरिति॥सप्तमस्कंधे ऽपि (अ० ७श्लो० २२) अष्टौ प्रकृतयः प्रोक्तास्त्रयएव हि तद्गुणाः॥विकाराः षोडशाचार्यैः पुमानेकः समन्वयादिति ॥ आचार्यैः कपिलव्यासादिभिरिति व्याख्यातारः॥ ननु संप्रदायानां सत्यमेवमनादित्वं अकल्पितवेदादिसिद्धत्वात् ॥ तथापि न मया तेषामुत्पत्तिकालश्चोद्यते किंतु प्रवृत्तिकालएव ॥

अतः सवक्तव्यइति चेत् पुनर्ब्रूमः ॥ वेदवत्तेषामीश्वरकर्तृकप्रवृत्तिकालस्तु सृष्ट्यारंभावसरएव सृष्टिप्रकरणे वेदशब्देभ्यएवादावित्यादिवाक्येभ्यः ॥ अथावांतरप्रलयेषु वेदवत्तदुक्तयागादिधर्मवच्च तेषामपि तिरोधाने तु पुनःपुनः कल्पारंभकालाएव तत्प्रवृत्तिकालाः॥ इत्थमेव धर्मस्य नित्यत्वबोधनाय श्रुतिस्मृतिवद्धर्ममूलभूतानां सदाचारापरपर्यायाणां संप्रदायानामपि निर्णायकाःप्रतिकल्पं भवंतीत्याह प्रथमाध्याये लघुपराशरः॥कल्पेकल्पे क्षयोत्पत्त्या ब्रह्मविष्णुमहेश्वराः॥श्रुतिस्मृतिसदाचारनिर्णेतारश्च सर्वदेति॥क्षयसहितोत्पत्तिः क्षयोत्पत्तिः तयोपलक्षिताभवंतीत्यर्थः॥एतद्व्याख्यायामेवं तत्तदवांतरकल्पानामवसाने प्रारंभे च श्रुत्यादीनां निर्णेतारः क्षयोत्पत्तिभ्यामुपलक्ष्यंते ॥ तत्र श्रुतिनिर्णेतारोवेदविभागकारी व्यासस्तत्तद्वेदशाखासंप्रदायप्रवर्तकाः कठकौथुमादयः कल्पसूत्रकाराबौधायनाश्वलायनापस्तंबादयोमीमांसासूत्रकृतोजैमिन्यादयश्च स्मृतिनिर्णेतारोमन्वादयःप्रसिद्धाएवेत्याह माधवः॥अतोवेदविभागादिपूर्वकं तदुक्तसत्संप्रदायप्रवर्तनार्थं व्यासस्यापि प्रतिकल्पमाविर्भावस्तत्रतत्रोच्यतएवेति सतां प्रियं ॥ किंच पुनस्तत्रैवोच्यते ॥ धर्मस्याऽपि पूर्वकल्पांते क्षीणस्योत्तरकल्पादौ सृष्टिर्भवति ॥ तथा च वाजसनेयिब्राह्मणे सृष्टिप्रकरणे प्रजापतिमन्वोर्मनुष्यादिपिपीलिकांतप्राणिनां चतुर्वर्णाभिमानिदेवतानां च सृष्टिमाम्नायास्युयमपि क्षत्रियादिकं नियंतुं समस्तस्य धर्मस्य सृष्टिराम्नायते ॥ (पृ० २४१)सनैवव्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत् क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्तीति॥ इत्थमनेकत्र शास्त्रेषु धर्मस्य नित्यत्वप्रतिपादनात् पुरुषनिष्ठादृष्टरूपत्वाच्च तस्योत्पत्तिनाशौ न

संभवतइति तत्प्रवृत्तेरनन्यसामान्यबीजभूतः संप्रदायएवाऽत्र लक्षणया धर्मशब्देनोच्यते॥नचैवमस्य क्षत्रियमात्रनिष्ठत्वं शंक्यं॥बलवन्नियामकस्य तस्य कैमुतिकेन सर्वनियामकतायास्तत्रैव तदेतद्ब्रह्मक्षत्रं विट्शूद्रइत्यादिप्रकरणे स्पष्टत्वादित्यन्यदेतत्॥सच सृष्ट्यारंभे भगवदाज्ञप्तेन ब्रह्मणा कल्पारंभे ईश्वरानुज्ञया तदवतारभूतैर्वेदव्यासादिभिश्चाचार्यैः प्रतिकल्पं प्रवर्त्यते इतिसिद्धांतः ॥ अतएव माधवीयाचारकांडे आश्वमेधिके पर्वणि पठ्यते ॥ युगेष्वावर्तमानेषु धर्मोप्यावर्त्तते पुनः॥धर्मेष्वावर्तमानेषु लोकोप्यावर्तते पुनरिति तस्मात्सिद्धं संप्रदायस्यानादित्वं प्रतिकल्पं पुनःपुनः प्रवृत्तिश्च॥अतएव नारायणभट्टकृतायां धर्मप्रवृत्तावष्टद्वादशीनिर्णयानंतरं वचनानि॥ सदीक्षावधि संन्यासं समंत्रं द्वादशाक्षरं॥अष्टाक्षरमथान्यं वा ये मंत्रं समुपासते॥ ज्ञेयास्ते वैष्णवालोके विष्ण्वर्चनरताः सदेत्यादि ॥ अत्र एषधर्मः सनातनइत्युपसंहारः ॥ अतोऽपि भगवन्मंत्रोपदेशहेतूनामेकादशीव्रतादितद्धर्मनियामकानां वैष्णवसंप्रदायानामनादित्वं स्पष्टमेव॥ तान्विना वैष्णवमंत्रोपदेशैकादशीव्रतकरणादिलक्षणस्य वैष्णवधर्मस्यैव प्रवृत्त्यसंभवेन तस्य सनातनत्वकथनविरोधापत्तेः॥ एवमेव कालमाधवीयप्रभृतिष्वपि एकादशीनिर्णयादौ द्रष्टव्यं ॥ अतएव गौतमतंत्रे सप्तदशाध्याये विष्णुमंत्रस्य युगभेदेन जपसंख्याभेदउच्यते ॥ ( श्लो० ४० ) कृते लक्षं जपेन्मंत्रं त्रेतायां द्विगुणं तथा ॥ त्रिलक्षं द्वापरे जाप्यं चतुर्लक्षं कलौ युगइति ॥ तन्मंत्राणां च वैष्णवसंप्रदायैकलभ्यत्वे सत्येव फलसाधकत्वं तत्रैव ( अ० २४ श्लो० १३ ) एवं ते कथितोविप्र दुर्लभोमंत्रनायकः ॥ सत्संप्रदायसंप्राप्तः किं न सिध्यति मंत्रिण-

इत्यादिभिः शतशएवोपपादितमिति युगभेदेन जपसंख्याभेदकथनेनाऽपि संप्रदायानां चतुर्ष्वपि युगेषु प्रवृत्तिमत्वं स्फुटमेव जागर्ति ॥ मुख्येषु कृष्णमंत्रेषु तु सर्वेष्वपि युगेषु समानसंख्याकोजपस्तावन्मात्रेणैव सिद्धिश्च तत्रैवोक्ता त्रिंशाध्याये ( श्लो० ५८ ) कृष्णमंत्रेषु विप्रर्षे युगसंख्या न विद्यते ॥ जपतर्पणसेकाद्यैः सिध्यंति कृतसंख्यया ॥ सिद्धमंत्रतया नात्र युगसेवापरिश्रमइति ॥ एतेनापि पूर्वोक्तमेव दृढीभूतं ॥ अपिच ॥ बहवोदेवामहर्षयश्चवैष्णवसंप्रदायवर्तिनः संतीति ज्ञायते ॥ तेषांवैष्णवसांप्रदायिकमंत्रग्राहित्वस्य पाद्मब्रह्मवैवर्तनारदपंचरात्रगौतमीयतंत्रादिष्वनेकत्र निरूपितत्वात् ॥ संप्रदायशून्यमंत्राणां नैष्फल्यस्य पूर्वमेवोपपादितत्वात् ॥ तन्मंत्रग्रहणेनैव सांप्रदायिकवैष्णवत्वसिद्धेरपि पूर्वं व्युत्पादितत्वाच्च ॥ तत्र प्रथमं गौतमतंत्रे प्रथमाध्याये कृष्णमंत्रं प्रशस्यं ॥ ( श्लो० १४ ) अनेनाराधितः कृष्णः प्रसीदत्येव तत्क्षणात् ॥ तस्य संक्षेपतोवक्ष्ये फलं सम्यक् शृणुष्वमे ॥ पद्मयोनिरवापाऽग्र्यं देवराज्यं शचीपतिः ॥ अवापुस्त्रिदशाः स्वर्गं वागीशत्वं बृहस्पतिः ॥ पक्षिणामधिपः सोऽभूद्गरुडोऽपि द्विजोत्तमः ॥ कश्चित्कृष्णं समाराध्य धनेशत्वमवाप्नुयात् ॥ मंत्रेण कृष्णमाराध्य चंद्रः सर्वजनप्रियः ॥ करोति स्ववशे कामः सर्वांल्लोकाननेनचेति ॥ पुनस्तत्रैव द्वितीयाध्याये ॥ ( श्लो० ६७ ) भक्त्या ते प्रणिपत्याच कथितोमंत्रनायकः ॥ गुह्याद्गुह्यतरोह्येष वांछाचिंतामणिः स्मृतः ॥ शौनकाद्याश्चमुनयस्तथाऽन्ये देवमुख्यकाः ॥ मंत्रराजपरिज्ञानात् सद्यः सत्साम्यतां गताइत्यनेकेषां ब्रह्मादीनां देवानां बहूनां महर्षी-

णां च वैष्णवमंत्रोपदेशयाहित्वमुक्तं ॥ पुनस्तत्रैव चतुर्थाध्याये भगवन्मंत्रजपकाले ध्यानं प्रक्रम्य ॥ नारदेन च सिद्धेन विश्वामित्रेण धीमता ॥ पराशरेण व्यासेन भृगुणां ऽऽगिरसेन च ॥ दक्षिणे सनकाद्यैश्च सिद्धेन कपिलेनच ॥ वास्तुवागीशहारीतयाज्ञवल्क्यो शना क्रतुः ॥ मार्कंडेयभरद्वाजपुलस्त्यपुलहादिभिः ॥ वशिष्ठाद्यैर्मुनींद्रैश्च स्तूयमानं सुरासुरैः ॥ ब्रह्मलोकगतैः सिद्धैर्नागलोकगतैरपि ॥ अन्यैरपि सुरश्रेष्ठैः स्तूयमानं स्मरेद्धरिं ॥ एवं संचितयेन्मंत्री चेतसा कृष्णमव्ययं ॥ संसारसागरं घोरमपि वत्सपदायते इत्यनेकेषां महर्षीणां वैष्णवत्वं तेनैव तल्लोके भगवत्स्तुतिसामर्थ्यं च दर्शितं ॥ तत्रैव सप्तविंशाध्याये ॥ ( श्लो० ६० ) चूडामणिमथो वक्ष्ये मंत्रराजं सुदुर्लभं ॥ यज्ज्ञानान्मुनयः सर्वे भूस्थास्त्रैलोक्यदर्शिनइति॥तथा एकोनत्रिंशाध्याये(श्लो० १)अथापरं मंत्रवरंवक्ष्येसर्वसमृद्धिदं॥ यमुपास्य सुराणां तु पालकोऽभूच्छतक्रतुरिति॥ एवं शिवादीनां सांप्रदायिकभगवन्मंत्रग्रहणेन वैष्णवत्वं नारदपंचरात्रेऽप्युच्यते ॥ यथा तत्र प्रथमरात्रे त्रयोदशाध्याये उपबर्हणाख्यगंधर्वं प्रत्याह भगवान् ॥ ( श्लो० २६ ) मया प्रदत्तमंत्रश्च पुरा मृत्युञ्जयस्तथा ॥ मृत्युञ्जयाय गोलोके शुद्धसत्वगुणायच पुनः सनत्कुमाराय धर्माय ब्रह्मणे तथा ॥ [illegible]ाय च शेषाय गणेशाय महामते ॥ नारायणर्षये चैव धर्मपुत्राय धीमते ॥ पुनर्महाविष्णवे च विश्वानि यस्य लोमसु ॥ कालाधिष्ठातृदेवाय तस्मै गर्दान ॥ तच्च ॥ [illegible] [illegible]द्राय च कामाय भृगवेऽङ्गिरसे तथा॥ सरस्वत्यै [illegible] च पद्मायै राधायै विरजातटे॥सावित्र्यै विष्णुमायायै पार्षदे पृश्निकेति॥पुनस्तत्रैव द्वितीयाऽध्याये भगवन्मुख्यमंत्रग्रहणा

र्थमुपसन्नं स्वशिष्यं नारदं प्रति महादेवः॥मया श्रीकृष्णमंत्रश्च कृष्णालये मुनेपुरा॥गोलोके विरजातीरे नीरे क्षीरनिभे ऽमले ॥ १९॥ शतलक्षजपं कृत्वा पुण्ये वृंदावने वने ॥ श्रीकृष्णानुग्रहेणैव मंत्रः सिद्धोवभूव मे ॥ २० ॥ ब्रह्मभालोद्भवोऽहं च सर्वादिसर्गतोमुने ॥ प्राप्तं मृत्युंजयं ज्ञानं कृष्णाच्च परमात्मनः ॥ २१ ॥ सिद्धोम्मृत्युंजयोऽहं च नित्यनूतनविग्रहः ॥ ब्रह्मणः पतनेनैव निमिषोमे यथा हरेः ॥ २२ ॥ एवं तेषां पार्षदानां नास्ति मृत्युर्यथा हरेः ॥यस्मिन्देहे लभेन्मंत्रं वैष्णवोवैष्णवादपि ॥ २३ ॥ पूर्वकर्माश्रितं देहं त्यक्त्वा सपार्षदोभवेत् ॥ पंचवक्त्रेण सततं तन्नामगुणकीर्तनं ॥ ॥ २४ ॥ करोमि भार्यया सार्द्धं पुत्राभ्यां चाऽपि नारद ॥ तद्दिनं दुर्दिनं मन्ये मेघाच्छन्नं न दुर्दिनं ॥ २५ ॥ यद्दिनं कृष्णसँल्लापकथापीयूषवर्जितं ॥ तत्क्षणं निष्फलं मन्ये श्रीकृष्णकीर्तनं विना॥ ॥ २६ ॥ आयुर्हरति कालश्च पुंसां तत्कीर्तनेन च॥तं क्षणं मंगलं मन्ये सर्वहर्षकरं परं ॥ २७ ॥ तस्मात्पापाः पलायंते वैनतेयादिवोरगाः ॥ ब्रह्मणाऽपि पुरालब्धस्तस्मात्तन्मंत्रएव च ॥ २८ ॥पद्मनाभनाभिपद्मे शतलक्षं जजाप सः ॥ तदा ललाप ज्ञानं च निर्मलं सृष्टिकारणं ॥ २९ ॥ अणिमादिकसिद्धिं च चकार तत्प्रभावतः॥सृष्टिं च विविधां कृत्वा विधाता च बभूव सः॥३०॥ वरं तस्मै ददौ कृष्णोमत्तसमस्त्वं भवेति च ॥ शेषस्तत्कलया पूर्वं बभूव कश्यपात्मजः ॥ ३१ ॥ तस्मात्संप्राप तन्मंत्रं सिद्धः कोटिजपेन चेति रुद्रब्रह्मशेषाणां वैष्णवमंत्रग्रहणमुक्तं॥सारसंग्रहे पाद्मे॥ब्रह्माणं रुद्रमिंद्रं च यमं वरुणमेव च ॥ नारायणस्य दासास्ते ये चान्येंऽहस्य मध्यगाः ॥ यः परः पुरुषोविष्णुर्नारायणउदाहृतः ॥ दासभूतमिदं

तस्य ब्रह्माद्यं सकलं जगदिति ॥ द्वितीयांतानां पूर्वप्रकरणक्रियान्वयः ॥ पुनस्तत्रैव रामायणे हनुमान् ॥ दासोऽहं कोसलेंद्रस्य रामस्याक्लिष्टकर्मणः ॥ हनूमान् शत्रुसैन्यानां निहंता मारुतात्मजइति॥पुनर्नारदपंचरात्रे प्रथमरात्रद्वितीयाध्याये सनत्कुमारं प्रति पद्मासनः ॥ ( श्लो० ५५ ) धन्योऽहं भवतः पुत्राज्ज्ञानिनां च गुरोर्गुरोः ॥ विष्णुभक्ताच्च धर्मिष्ठात् सत्पुत्राच्च पिता सुखी ॥ धन्योऽसि पंडितोऽसि त्वं हरिभक्तोऽसि पुत्रक ॥ ममाऽपि सफलं जन्म जीवनं च त्वया बुधेति सनत्कुमारादीनामपि वैष्णवत्वं ॥ एवमन्यत्राऽपि गोपालतापनीयाद्युपनिषत्सु श्रीभागवतविष्णुपुराणपाद्मब्रह्मवैवर्त्तगारुडादिषु महाभारते च मोक्षधर्मादिषु तत्र-तत्र शिवादीनामतिप्राचां वैष्णवत्वं भगवन्मंत्रग्रहणं तद्भक्तिस्तत्सेवादिसांप्रदायिकधर्माचरणं चानेकत्र निरूपितमेव विस्तरादस्तीति तत्स्वतएव सर्वत्रोपलप्स्यतएवानेकसच्छास्त्रगिरिविपिनविहारकेसरिभिः सुधीभिरित्यलं लेखनश्रमेण ॥ अनादिकालिकास्तस्मात्संप्रदायास्तु वैष्णवाः ॥ अनादिसिद्धवेदोक्ताः प्रतिकल्पप्रवर्तिनः ॥ ॥ १ ॥ वैष्णवैर्ब्रह्मरुद्राद्यैर्दैवतैर्नारदादिभिः ॥ महद्भिर्मुनिभिश्चान्यैः प्राक्तनैरुपसेविताः ॥ २ ॥

## ॥ अथास्य द्वितीयस्य मुख्यप्रश्नस्यावांतराअष्टौ प्रश्नाः कृतास्तत्राद्यःप्रश्नः ॥

॥ तत्र चहुकालाप्रवृत्तश्चेन्मन्वादिग्रंथेष्वदृष्टत्वात्तद्विलक्षणत्वाच्च कथं प्रमाणं ॥ १ ॥

## ॥उत्तरं॥

नूनं मनुस्मृतिर्दृष्टा नान्याकिंचित्त्वयायतः॥ वेदोक्तसंप्रदायेषु ब्रूषे मन्वाद्यदृष्टतां॥१॥स्वरूपासिद्धमत्रोक्तं हेत्वाभासद्वयं त्वया॥तद्दूषणादयं प्रश्नोभवेद्दत्तोत्तरोऽचिरात्॥२॥अस्तिहि मनुस्मृतौ संप्रदायवर्णनं॥तथाहि॥षष्ठाध्याये (श्लो०७४) सम्यग्दर्शनसंपन्नः कर्मभिर्न निबध्यते॥दर्शनेन विहीनस्तु संसारं प्रतिपद्यते इति सत्संप्रदायसंपत्त्यैव मोक्षंतदभावे संसारं च वदति॥दर्शनशब्दोहि संप्रदायापरपर्यायेषु लोके मतशब्देन प्रसिद्धेषु सिद्धांतेषु योगरूढः॥ज्ञानसाधकतमत्वात्॥इदं विष्णुस्वामिदर्शनमिदं रामानुजदर्शनं षडास्तिकदर्शनानि षण्नास्तिकदर्शनानीत्यादिविद्वद्व्यवहाराच्च ॥विद्यारण्यादिकृतेषु सर्वदर्शनसंग्रहादिषु प्रामाणिकग्रंथेष्वपि तथैव लेखाच्च॥ नचात्र दर्शनशब्देन ज्ञानं शंक्यं ॥ फलरूपत्वात् ॥ तदुत्पत्तेः प्राक् संसारस्य स्वतः सिद्धत्वेन तद्रहितस्य पुनः संसारप्राप्तिकथनवैयर्थ्याच्च ॥ एतदग्रएव साधयंतीहतत्पदमित्यत्र व्याख्यायां पूर्वश्लोकोक्तदर्शनस्य मोक्षे बहिरंगसाधनत्वं वैराग्यादेश्चांतरंगसाधनत्वमिति बोधनाच्च ॥ अतउक्तार्थकएवेह दर्शनशब्दः॥किंच संप्रदायशब्दस्यावयवार्थविचारेणाऽपि पारंपरिकविद्यादानरूपत्वं प्रपंचितं प्राक् ॥ तच्च कंठरवेणैव प्रशंसति मनुश्चतुर्थे ॥ ( श्लो०२२७ ) दानधर्मं निषेवेतेत्यादिना दानावश्यकमुक्त्वा ( श्लो०२२९ ) वारिदस्तृप्तिमाप्नोतीत्यादिना दानविशेषफलानि वदन् सर्वांते ( श्लो२३२) ब्रह्मदोब्रह्मसार्ष्टितां सर्वेषामेवदानानां ब्रह्मदानं विशिष्यतइति ॥ ब्रह्मदोऽध्यापकोव्याख्याता चेति कुल्लूकभट्टः॥

व्याख्यातृत्वं च कुतर्कनिरासपूर्वकं तात्त्विकवेदार्थबोधकभाष्यादिकर्तृत्वमेव ॥ किंच सांप्रदायिकानाचार्यान् प्रत्याह चतुर्थएव ॥ ( श्लो० १७५ ) सत्यधर्मार्यवृत्तेषु शौचेचैवारमेत्सदा ॥ शिष्यांश्च शिष्याद्धर्मेण वाग्बाहूदरसंयतइति ॥ अत्रैव सत्यधर्मसदाचार शौचेषु सर्वदा रतिं कुर्यादिति व्याख्यानं ॥ नच सांप्रदायिकाचार्याणामेव शास्त्रेष्वप्रसिद्धत्वात् स्मृतिषु तत्रतत्राचार्यशब्देनोपनायकस्यैव ग्रहणाच्च तान् प्रति नोपदेशोयुज्यतइति वाच्यं ॥ अनेकस्मृतिवचनेषु संप्रदायप्रवर्तकाचार्यविषयत्वेनाप्याचार्यशब्दप्रयोगस्यावगम्यमानत्वात् ॥ तथाहि ॥ याज्ञवल्क्यस्मृतौ व्यवहाराध्याये दायविभागप्रकरणे ( श्लो० १ ) विभागं चेत्पिता कुर्यादित्यस्य मिताक्षरायां ॥ तथोत्पत्त्यैवार्थस्वामित्वं लभेतेत्याचार्याइति गौतमवचनं ॥ अत्र निर्विशेषणाचार्यशब्दप्रयोगेण सत्संप्रदायप्रवर्तकाचार्याः प्रागप्यासन्नेवेत्यवगम्यते ॥ नचात्राचार्यशब्दोवक्तुरुपनायकपरः शंक्यः ॥ तस्य बहुत्वासंभवेन बहुवचनविरोधात् ॥ किंच इत्याचार्याइत्युपन्यासोहि वचनीये प्रामाणिकत्वावगमाय स्वसमानकालिकविदुषां ॥ सचयदि वक्तुरुपनायकपरोत्राचार्यशब्दःस्यात् तत्संमतोऽर्थोन सर्वेषां तात्कालिकविदुषां माननीयः संभवतीति निरर्थकः स्यात्॥मान्यत्वेन बहुवचनप्रयोगस्तु न क्वापि स्मृतिपुराणेषु दृश्यते ॥ अतः संभवद्बहुभावाः शिष्यबाहुल्येन सर्वसंमताः संप्रदायाचार्याएव अत्राभिप्रेताइति निश्चीयते ॥ एवमेव दत्ताप्रदानिकप्रकरणे (श्लो० १) स्वकुटुंबाविरोधेनेत्यस्य मिताक्षरायां नारदवचनं ॥ आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ॥ अदेयान्याहुराचार्यायच्चान्यस्मै प्रतिश्रुतमिति ॥

अत्रापि आचार्यपदं पूर्ववत्॥ तथा तत्रैव तृतीयाध्याये(श्लो० २) एवं मातामहाचार्येत्यत्र मिताक्षरायां॥आचार्याणां च प्रेतानां नित्यमुदकक्रिया कार्येति बहुवचननिर्देशः॥पराशरमाधवीये प्रथमाध्याये गौतमः॥ऐकाश्रम्यं वाऽऽचार्याः संप्रत्यक्षविधानाद्गार्हस्थ्यस्येति॥इत्थं ग्रंथांतरेष्वपि निरीक्षणीयं॥एवमेव द्वितीयाध्याये उपनयनपूर्वकसंपूर्णवेदतदेकदेशाध्यापकादीन् ( श्लो० १४० ) उपनीय तु यः शिष्यमित्यादिना निरूप्य ततः पृथक् (श्लो० १४४ ) यः पूरयत्यवितथं ब्रह्मणा श्रवणावुभौ ॥ समाता सपिता ज्ञेयस्तं नद्रुह्येत्कदाचनेति पूर्वोक्तसर्वापेक्षया ब्रह्मणा कर्णपूरकाचार्यप्रशंसाऽपि मनुना कृताऽत्रोपनायकादिभ्यः पृथक् सांप्रदायिकाचार्यत्वस्य प्रामाणिकत्वावगमायाऽनुसंधेया ॥ तथा व्यवहारमिताक्षरायामपि दंडपारुष्यप्रकरणे ( श्लो० १ ) असाक्षिकहते चिन्हैरित्यस्य व्याख्याने गुर्वाचार्यनृपेषु चेति नारदस्मृतौ गुर्वाचार्ययोर्भेदेन निर्देशः॥तस्मादस्ति सांप्रदायिकाचार्याणामपि सृष्ट्यारंभात्परंपराप्राप्तत्वेन सर्वशास्त्रसंमतत्वं॥अतएव हारीतः॥आचार्यं संश्रयेत्पूर्वमनवद्यं वैष्णवं द्विजं ॥ शुद्धसत्वगुणोपेतं नवेज्याकर्मकारकं॥ सत्संप्रदायसंयुक्तमित्यादिना मोक्षसाधनेषु सत्सांप्रदायिकवैष्णवाचार्यप्रतिपत्तेः प्राथमिकत्वमुक्त्वा तल्लक्षणजिज्ञासायामाह॥आलोक्य सर्वशास्त्राणि पुराणानि च वैष्णवः॥तदर्थमाचरेद्यस्तु सआचार्यइतीर्यतइति ॥ अतःस्पष्टेऽस्मिन् विषये बहुशास्त्रप्रसिद्धे किंबहुना ॥ किंच ॥ ब्रह्मविद्याप्राप्तिरेव संप्रदायस्य प्रधानप्रयोजनत्वेन प्रमाणपुरःसरं प्रपंचिता प्राक् ॥ तां च सर्वाश्रमसाधारणत्वेन वक्ति मनुः ॥ ( अ० ६ श्लो० ९१ ) चतुर्भिरपि चैवै-

तैर्नित्यमाश्रमिभिर्द्विजैः ॥ दशलक्षणकोधर्मः सेवितव्यःप्रयत्नतः ॥ धृतिः क्षमा दमोऽस्तेयं शौचमिंद्रियनिग्रहः ॥ धीर्विद्या सत्यमक्रोधोदशकं धर्मलक्षणं ॥ दशलक्षणानि धर्मस्य ये विप्राः समधीयते ॥ अधीत्य चानुवर्तंते ते यांति परमां गतिं ॥ दशलक्षणकं धर्ममनुतिष्ठन् समाहितः ॥ वेदांतं विधिवच्छ्रुत्वा संन्यसेदनृणोद्विजइत्यादि ॥ अत्र विषयेभ्यश्चक्षुरादिधारणमिंद्रियनिग्रहः शास्त्रादितत्त्वज्ञानं धीः आत्मज्ञानं विद्येति मन्वर्थमुक्तावली ॥ याज्ञवल्क्योऽपि तृतीयाध्याये आशौचप्रकरणे ॥ ( श्लो० ३४ ) भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनं ॥ क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मतेति ॥ एवमादिषु स्मृत्यंतरेष्वपि अनन्यसाध्यानां संप्रदायकार्याणां ब्रह्मविद्याप्राप्त्यादीनां निरूपणं वर्ततएवेति विस्फारितनेत्राभ्यां वीक्षणीयम् ॥ अतउक्तादिष्वनेकेषु मनुवचनेषु संप्रदायतदाचार्यतद्धर्मादीनां निरूपणदर्शनान्न तत्रादृष्टत्वं ॥ ननु तथापि सांप्रदायिकानां भगवत्सेवाप्रकारतुलसीकाष्ठमालाधारणप्रभृतीनां यावद्धर्माणां मनुस्मृतौ स्पष्टतयाऽनुपलभ्यमानत्वात्तेषां त्वप्रामाणिकत्वं सुस्थमेवेतिचेत् तर्हि मनूक्तेष्वेव धर्मादिषु प्रामाणिकत्वं तदनुक्तेषु चाप्रामाणिकत्वं मन्यमानेन भवता जाबालादिश्रुत्युक्तोऽपि यदहरेवविरजेत्तदहरेव प्रव्रजेदित्याश्रमोल्लंघनपक्षोन स्वीकर्त्तव्यः ॥ मनुना आश्रमादाश्रमं गच्छेदिति पक्षस्यैवोक्तत्वात्॥ एवमेव च मन्वनुक्तानां मृतपत्यन्वारोहणादीनामपि सर्वशिष्टसंमतानामनेकेषां धर्माणामप्यप्रामाणिकत्वमेवोरीकार्यं ॥ तथा भस्मरुद्राक्षधारणशिवार्चनैकदंडसंन्यासादीनां भवत्सांप्रदायिकधर्माणामपि स्वमुखेनैवाप्रा-

माण्यं दर्शितमेव ॥ मनुस्मृतौ तद्बंधस्याप्यभावात्॥ यदितु श्रुत्यादिसिद्धत्वान्नाप्रामाणिकत्वं तेषां मनुषे तदातु सांप्रदायिकधर्माणामपि तादृशत्वान्नाप्रामाणिकत्वमिति सर्वं सुस्थं ॥ एतावता मन्वादिग्रंथेष्वदृष्टत्वादिति हेतुर्निरस्तः ॥ यच्चोक्तं तद्विलक्षणत्वादिति॥नैतत्सारं॥ मनुसंमतेऽर्थे तदुक्ताद्वैलक्षण्योपपादनस्य आकाशालिंगनकल्पत्वात् ॥ किंच वैष्णवमंत्रग्रहणतुलसीकाष्ठमालाधारणोर्ध्वपुंड्रकरणभगवत्सेवादीनां सांप्रदायिकधर्माणां श्रुतिसिद्धानां तत्रतत्र स्मृतिषु निरूपणात्तद्वचनानां च माधवविज्ञानेश्वरहेमाद्रिनारायणकमलाकरभट्टादिभिः प्रामाणिकस्मार्तैरपि स्वस्वनिबंधेषूदाहरणाच्च ॥ प्रश्ने मन्वादीत्यादिशब्दः साजात्यात्स्मृतिसंग्राहकतया प्रतीयमानोनिरर्थकएव ॥ यदित्वादिशब्देन सांप्रदायिकधर्मद्वेषिणः शाक्यस्मृतिभगवतीसूत्रादयोनास्तिकग्रंथाएवाऽभिप्रेतास्तदा तु न किमपि ब्रूमः ॥ अस्मद्धर्माणां तेष्वदृष्टत्वस्य तद्वैलक्षण्यस्य च यथार्थत्वात् ॥ अतः प्रमाणमूर्धन्यवेदाद्यैर्वर्णितेष्विह ॥ प्रवर्तितेषु हरिणा संप्रदायेष्वनादिषु ॥१॥ कथं प्रमाणमित्येषहेत्वाभासद्वयाश्रयात् ॥ प्रश्नः शास्त्रादर्शनाद्वा विद्वेषाद्वेति भातिनः ॥ २ ॥

## ॥ अथ द्वितीयस्य द्वितीयोऽवांतरः प्रश्नः॥ २ ॥

॥ स्वल्पकालाच्चेद्धर्मादिनिर्णयस्तद्विधिस्तत्फलानि च सर्वत्रोपलभ्यमानत्वात्कथं प्रवृत्तः ॥ १० ॥

---

## ॥ उत्तरं ॥

अत्र यद्यर्थकाच्चेदित्यव्ययात् स्वल्पकालाप्रवृत्तिपक्ष एवायं प्रश्नो भवतोभिप्रेतइति ज्ञायते ॥ अस्माभिश्च बहुकालादेव तत्प्रवृत्तिः श्रुत्यादिसिद्धत्वादंगीक्रियते ॥ अतः प्रकृतविकल्पे प्रथमकल्पसमर्थनेनैवायं दत्तोत्तरः ॥ अस्मिन्प्रश्ने उपलभ्यमानत्वादित्यनेनान्वयार्थं धर्मादिनिर्णयस्य तद्विधेस्तत्फलानांचेति षष्ठीप्रयोगे कर्त्तव्येऽपि प्रथमांतप्रयोगस्तु आर्षग्रंथाभ्यासबाहुल्यात् षष्ठ्यर्थे प्रथमांगीकारेणेतिभाति ॥ आस्तामेतत् ॥ ईदृशानि संस्कृतोच्चारणकौशलान्येतेषु प्रश्नेष्वनेकत्र संत्येव ॥ तानि चावलोकनक्षणएव विदुषां स्वतः प्रतिभास्यंतीति किंपरच्छिद्रोद्घाटनेन ॥ ननु मास्तु स्वल्पकालाप्रवृत्तिः तथाऽपि संप्रदायस्य सा लोके धर्मादिप्रवर्त्तनायैवेति वक्तव्यं ॥ अथ धर्मादिषु प्रवृत्तिस्तु तन्निर्णयं तद्विधिं तत्फलानि च पश्यतां स्वयमेव भविष्यतीति प्रयोजनाभावान्निरर्था संप्रदायप्रवृत्तिरितिचेदेतदपि निरस्तपूर्वं, कस्मैप्रयोजनायेत्यस्योत्तरे प्रयोजनप्रकारान् प्रदर्शयता मया ॥तथाप्युच्यते॥ नहि प्रवृत्तिहेतवोऽपि निर्णयादयोदुर्ज्ञेयेषु वेदशास्त्रादिषु विद्यमानाः प्रवर्त्तकमाचार्यरूपद्वारमंतरा स्वतोमनुष्यान् प्रवर्त्तयितुं शक्ताः ॥ अन्यथा सर्वएव स्वतएव विदितवेदशास्त्रादितत्वास्तात्विकं धर्ममेवाऽचरेयुः ॥ स्वतएव ब्रह्मज्ञानं संपाद्य संसारतोमुच्येरंश्च॥ तथाच सति लोके अधर्मपदार्थोच्छेदः ॥ पापिनामेवाभावादमुत्र नरकनैरर्थक्यं सर्वेषामेव अत्युत्तमे मोक्षाख्यफले तदधिके साक्षाद्भगवत्सेवनएव वा प्रवृत्तिसंभवेनावांतरस्वर्गादिफलवैयर्थ्यं

च प्रसज्येत ॥ गुरुमेवाभिगच्छेत् गच्छेदाचार्यसंसदमित्यादयआ-चार्यकरणविधयः आचार्यवान्पुरुषोवेदेत्यादयः श्रौतनियमाश्च वृथैव स्युः ॥ अतएतद्वारणाय रिरंसया बहुबुभूषताभगवता पुरैवाविद्याशक्तितः सर्वेषां स्वतोज्ञानाशक्तिः कृता॥सर्वथाज्ञानाभाववारणाय धर्माभाववारणाय च ज्ञानसंपादकाधर्मानुशासकाः संप्रदायाश्च प्रकटीकृताः ॥ अन्यथा अराजकदेशे चोरोपद्रवादिना सर्वमर्यादाभंगवत् संप्रदायप्रवर्त्तकधर्मधुरंधराचार्यशून्यत्वेऽपि तत्त्वतोधर्मब्रह्मणोर्निर्णयज्ञानाद्यनुदयात्सर्वविप्लवः स्यात् ॥ प्रशासकाभावात् ॥ तस्मात्प्रश्नोक्तस्यनिर्णयादित्रयस्य वेदशास्त्रेषु सत्त्वेपि लोके तत्प्रवृत्त्यर्थं संप्रदायाआवश्यकाः ॥ अतएव प्रथमाध्याये मनुः ॥ ( श्लो० १०९ ) आचाराद्विच्युतोविप्रोन वेदफलमश्नुते ॥ आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत् ॥ एवमाचारतोदृष्ट्वा धर्मस्य मुनयोगतिं ॥ सर्वस्य तपसोमूलमाचारं जगृहुः परमिति ॥ एवंपुनर्द्वितीयाध्याये ( श्लो० ६ ) वेदोऽखिलोधर्ममूलं स्मृतिशीले च तद्विदां ॥ आचारश्चैव साधूनामात्मनस्तुष्टिरेवच ॥ तथा ॥ ( श्लो १२ ) वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ॥ एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणमिति श्रुत्यादिवत्संप्रदायस्यापि साक्षाद्धर्मप्रमापकत्वं प्राह ॥ आचारसदाचारसंप्रदायानां त्वेकार्थत्वमेवेत्युक्तं प्राक् ॥ अतः श्रुत्याद्यनुसारिण्यपि धर्मे लोकानां प्रवर्तनं प्रशासकसंप्रदायैकसाध्यं ॥ उचिततरं चैतत् ॥ सत्सांप्रदायिकशुद्धांतःकरणमहानुभावहृदयेष्ववभातवस्तुनएव धर्मत्वात् ॥ यथाह माधवीये आचारकांडे ( अ० १ ) विश्वामित्रः ॥ यमार्याः क्रि-

यमाणं तु शंसंत्यागमवेदिनः ॥ सधर्मोयं विगर्हंते तमधर्मं प्रचक्ष-
तइति ॥ मनुरपि ॥ विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ॥
हृदयेनाऽभ्यनुज्ञातोयोधर्मस्तं निवोधतेति ॥ नहि सर्वैरपि साधा-
रणैर्धर्मोनिर्णेतुं शक्यः ॥ यथाह महाभारते धृष्टद्युम्नः॥अधर्मोधर्म-
इति च व्यवसायोन शक्यते ॥ कर्तुमस्मद्विधैर्ब्रह्मन्नतोन व्यवसा-
म्यहमिति ॥ नापि साधारणैः सउपदेष्टुं शक्यः ॥ यथोक्तं तत्रैव
राजधर्मे ॥ न कल्माषोन कपिलोन कृष्णोनच लोहितः ॥ अणी-
यान् क्षुरधारायाः कोधर्मं वक्तुमर्हतीति ॥ एतच्च वचनं साधार-
णजनविषयं ॥ अन्यथा धर्मोपदेशस्यैवोच्छेदप्रसंगात् ॥ तस्मात्
परंपरातोऽधिगतवेदादिसर्वतत्त्वानां सत्संप्रदायधुरंधराणामाचार्या-
णामेव धर्मानुशासने शक्तिरिति निश्चीयते ॥ अतएव वैष्णवसं-
प्रदायाचार्यं भगवंतं नारदमुद्दिश्याह श्रीभागवते सप्तमस्कंधैका-
दशाध्याये युधिष्ठिरः ॥ ( श्लो० ४ ) नारायणपराविप्राधर्मं गुह्यं
परं विदुः ॥ करुणाः साधवः शांतास्त्वद्विधानतथाऽपरइति ॥ अ-
तोनारायणपराणां वैष्णवाचार्याणामेव वास्तविकधर्मतत्त्वज्ञानं
नत्वितरेषामिति भाति ॥ तेन साक्षान्मोक्षसाधकभगवत्सेवादिधर्म-
वद्वर्णाश्रमादिधर्मेष्वपि तेषामेव प्रशासकत्वं युक्तमितिश्रीः ॥ किं
च संप्रदायमंतरा जनानां ज्ञानं नैवोत्पद्येतेति समर्थितमधस्तात् ॥
तथाच सति अनुष्ठिताअपि सर्वे धर्माज्ञानशून्यतया वीर्यवत्तर-
त्वाभावान्न यथार्थं फलं साधयेयुः ॥ यदेव विद्यया करोति
श्रद्धयोपनिषदा वा तदेवास्य वीर्यवत्तरं भवति ( स्कं१०अ०२४
श्लो०५ ) ज्ञात्वाऽज्ञात्वा च कर्माणि जनोयमनुतिष्ठति ॥ विदुषः
कर्मसिद्धिः स्यात्तथा नाऽविदुषोभवेदित्यादिश्रुतिस्मृतिभ्यस्तथा

निश्चयात् ॥ विद्वत्त्वं च संप्रदायमंतरा नैव सिध्यति ॥ अतएव व्यवहारमिताक्षरायां साधारणमातृकाप्रकरणे ( श्लो० २६ ) विद्वानशेषमादद्यात्ससर्वस्य प्रभुर्यतइत्यस्य व्याख्याने ॥ विद्वाञ्छ्रुताध्ययनसंपन्नः सदाचारइति विद्वत्पदं व्याकुर्वता विज्ञानेश्वरेणापि तथैव बोध्यते ॥ अपिच श्राद्धादिधर्मेषु अर्हतमतयोच्यमानाब्राह्मणाअपि क्वचिदपि नोपलभ्येरन् ॥ वेदांतानुसाराज्ज्ञाननिष्ठस्यैव तेषु मुख्यत्वस्मरणात् ॥ यथा श्रीभागवते सप्तमस्कंधस्य पंचदशउच्यते ॥ ( श्लो० २ ) ज्ञाननिष्ठाय देयानि कव्यान्यानंत्यमिच्छता ॥ दैवेच तदभावे स्यादितरेभ्योयथाऽर्हतइति ॥ मनुरपि तृतीयाध्याये ( श्लो० १३२ ) ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींपिच॥नहि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतइत्यादि॥ आचारमाधवे तृतीयाध्याये आपस्तंबः ॥ ( धर्मसूत्र ) ब्राह्मणान् भोजयेद्ब्रह्मविदोयोनिगोत्रमंत्रांतेवास्यसंबंधानिति॥तत्रैव यमः॥ये सोमपाविरजसोधर्मज्ञाः शांतबुध्यइत्युपक्रम्य निष्णातः सर्वविद्यासु शांतोविगतकल्मषः॥गुरुवेदाऽग्निपूजासु प्रसक्तोज्ञानतत्परः ॥ विमुक्तः सर्वदा धीरोब्रह्मभूतोद्विजोत्तमइत्याह॥वेदविद्याव्रतस्नाताब्राह्मणाः पंक्तिपावनाइत्युपसंहारः ॥ याज्ञवल्क्योऽपि (अ० १) श्राद्धप्रकरणे ( श्लो० ३ ) अग्र्याः सर्वेषु वेदेषु श्रोत्रियोब्रह्मविद्युवेति श्राद्धार्हब्राह्मणेषु ब्रह्मविदं मुख्यतया गणयति ॥ नचात्र ब्रह्मशब्देन वेदमात्रं शंक्यं ॥ सर्ववेदाग्र्यश्रोत्रियज्येष्ठसामप्रभृतीनां वेदविदां पृथगुपदेशात् ॥ अत्रैव वेदार्थविच्छब्देन साधनावस्थानिष्ठोऽपि सांप्रदायिकद्विजोमुख्येपूक्तः ॥ आचार्यकरणादिसंप्रदायसेवामंतरा मीमांसाद्यनवगमेन तात्त्विकवेदार्थ-

ज्ञानानुदयात् ॥ एषां मुख्यत्वं त्वनुपदोक्तस्वलीयादीनां विज्ञानेश्वरेण मन्वेकवाक्यतया गौणत्वलेखनात् स्पष्टमुद्भाति ॥ प्रजापतिरपि ॥ ब्रह्मकर्मरताः शांताअपापाअग्निसंश्रिताः ॥ कर्मनिष्ठाज्ञाननिष्ठावेदार्थज्ञाः कुलोद्भवाः॥मातृपितृपराश्चैव ब्राह्मवृत्त्युपजीविनः ॥ अध्यापकाब्रह्मविदोब्राह्मणाः श्राद्धसंपदीति ॥ एवमितरत्रापि दृश्यंते वचांसि ॥ अथ पुनर्मनुः॥(अ० ३श्लो० २३१) यद्यद्रोचेतविप्रेभ्यस्तत्तद्दद्यादमत्सरः ॥ ब्रह्मोद्याश्च कथाः कुर्यात्पितॄणामेतदीप्सितमिति ॥ ब्रह्मोद्याः परमात्मनिरूपणपराइति मन्वर्थमुक्तावली ॥ माधवोऽपि तृतीयाध्याये श्राद्धप्रयोगे मौनित्वं च ब्रह्मोद्यकथाव्यतिरिक्तविषयं॥अतएव यमः ॥ ब्रह्मोद्याश्च कथाः कुर्युः पितॄणामेतदीप्सितमिति ॥ तथाच संप्रदायप्रवृत्त्यभावे ज्ञानानुद्भवात्तदेकसाध्यानि तत्रतत्रोक्तानि मोक्षांतानि सर्वाणि कार्याणि न स्युरितिदिक् ॥ नच ज्ञानं प्रति वैष्णवसम्प्रदायस्यान्यथासिद्धत्वं शंक्यं ॥ सत्वं रजस्तमइति प्रकृतेर्गुणास्तैर्युक्ततयाऽस्य विश्वस्य स्थित्यादये हरिविरंचिहरेति संज्ञादधानस्यैकस्य श्री पुरुषोत्तमस्यैव तयोरैक्यं परं ब्रह्म कृष्णइत्यभिधीयते पुरुषःसपरःपार्थभक्त्यालभ्यस्त्वनन्यया उत्तमःपुरुषस्त्वन्यः अतोऽस्मिलोकेवेदेचप्रथितःपुरुषोत्तमइत्यादिश्रुतिस्मृतिभिः
भक्तिप्रवर्तकवैष्णवसंप्रदायैकसाध्यत्वात् ॥
पपादितत्वाच्च ॥ अतएव गौतमतंत्रेऽपि त्रयो

(श्लो०२०) मंत्रकुंडलिदेवानामेकात्मत्वं प्रकाशयेत् ॥ सिद्धांतं वैष्णवं यत्नाद्बोधयेत्तस्य सद्गुरुः ॥ एवंचोपदिशेच्छिष्यं यथा तन्मयतां व्रजेत् ॥ यथाग्रामगतं तोयं विष्ठामूत्रादिदूषितं ॥ गंगायां मिलितं तत्तु गंगैव भवति ध्रुवं ॥ तथा मातृमानमेयत्रयातीतोभवेच्छिशुः ॥ शिष्योऽपि पूर्णतां मत्वा गुरुं यत्नेन तोषयेदिति ॥ तस्मात् ॥ धर्मादिनिर्णयं तस्य विधिं फलयुतं जनान् ॥ वेदाद्युक्तं ग्राहयित्वा प्रवर्तयितुमत्रतान् ॥ १ ॥ ततोज्ञाने ततोभक्तौ धरोद्धारधुरंधराः ॥ प्रादुष्कृताः संप्रदायाः पुरैव परमात्मना ॥ २ ॥

## ॥ अथास्यैवद्वितीयावांतरप्रश्नस्य पुनः प्रपंचनरूपो द्वितीयप्रधानप्रश्नावांतरस्तृतीयः प्रश्नः ॥ ३ ॥

(किंच वेदपुराणेतिहासादिषु प्रचुरतया धर्मनिर्णयस्तत्फलनिर्णयश्च वर्ततएव ॥ पुनर्नवीनरीत्याऽशास्त्रीयया किं प्रयोजनमिति वक्तव्यं ॥ ११ ॥)

## ॥ उत्तरं ॥

अनुपदमुपन्यस्तेन प्रश्नेन गतार्थोऽपि स्वाभिलषितप्रश्नसंख्याप्रपूर्तये सएवप्रश्नः पुनः प्रकारांतरेणोपन्यस्तः ॥ अस्ति चात्र किंचिद्वैलक्षण्यं यत्सांप्रदायिकरीतौ नवीनत्वं अशास्त्रीयत्वं चोपक्षिप्तमिति ॥ तत्र पूर्वं वेदादिषु प्राचुर्येण धर्मनिर्णयसत्त्वात्ततएव लोकप्रवृत्तिसंभवे पुनः संप्रदायप्रवृत्तिः किमर्थेत्यस्योपरि पुनर्वदामः सर्वजीवबोधविधानसमर्थया मधुरया वाचा॥वेदांतफलोपभोगार्थं त्रिविधानामप्यधिकारिणां ज्ञानोत्पादनं प्रयोजनं॥वेदादीनामुत्तमप्रमात्रवेद्यत्वात् गुरुरूपद्वारमंतरा स्वयंप्रवर्त्तकत्वासंभवाच्च स्वयं

ज्ञातुमशक्यत्वाच्च ॥ अतएतद्गुरोरेव कार्यं ॥ यथाह मनुः॥(अ०२ श्लो०१५९)अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनं॥वाक् चैवम धुराश्लक्ष्णा प्रयोज्या धर्ममिच्छता॥यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा॥सवै सर्वमवाप्नोति वेदांतोपगतं फलमिति॥अत्र प्रथमश्लोके आचार्यान्प्रत्युपदेशः॥द्वितीयश्लोकस्तु सर्वान् प्रत्युपदिश्यते ॥ वाङ्मनसयोः शुद्धिश्चानृतादिरागद्वेषादित्यागलक्षणा वेदांतोपगतं फलं सर्वेशानत्वादिकं मोक्षमिति यावदित्येतत् सर्वं कुल्लूकभटीये स्पष्टं ॥ संप्रदायधुरंधराणां सर्वप्रशासकानामाचार्याणामभावे तु अराजकदेशे चोराद्युपद्रववत् सर्वत्रैव परस्परमात्सर्यादिवशाद्वितंडादिभि र्वेदार्थभूतयोरपि धर्मब्रह्मणोरनिर्णये धर्मासेवनाज्ज्ञानानुदयेनेंद्रियानिग्रहाच्च न केऽपिमुच्येरन् ॥ यथाह द्वादशाध्याये मनुः ॥ ( श्लो०५२ ) इंद्रियाणां प्रसंगेन धर्मस्यासेवनेन च॥ पापान्संयांति संसारानविद्वांसोनराधमाइति ॥ अतोबंधहेतुभूतेंद्रियप्रसंगादिवारणाय विद्वत्त्वं संपाद्यं तच्च सदाचार्योक्तरीतिकनिष्कामधर्माचरणेन सात्त्विकत्वसिद्धौ संप्रदायलब्धाऽऽत्मचिंतयैव भवति ॥ यथाह सएव ॥ ( अ०१२ श्लो०३१ ) वेदाभ्यासस्तपोज्ञानं शौचमिंद्रियनिग्रहः ॥ धर्मक्रियात्मचिंता च सात्त्विकं गुणलक्षणमिति ॥ एवमेव संप्रदायोपसत्तिपूर्वकश्रवणमननादिनानिरस्तरागद्वेषादेरेव विद्वत्त्वसिद्धिरित्यभिप्रेत्याहाध्यात्मप्रकरणे याज्ञवल्क्यः ॥

स्यैव भगवत्साक्षात्कारउच्यते ॥ ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः॥तत्रादर्शतलप्रख्ये पश्यत्यात्मानमात्मनीति॥मनुरपि चतुर्थाध्याये (श्लो० १६) इंद्रियार्थेषु सर्वेषु न प्रसज्येत कामतइतींद्रियप्रसंगस्य निवार्यत्वमुक्तोक्तरीत्या तन्निवृत्तिहेतोर्ब्रह्मज्ञानस्य सिद्धिस्तु संप्रदायप्रवर्त्तकसदाचार्यैर्जनबुद्धिसौकर्यानुरोधेन कृतानां सन्निबंधानां तदनुसारेण वेदादीनां च तादृशगुरुसमीपे निरंतराभ्यासेनैवेत्याह॥(श्लो० १९) बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च॥नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान्॥यथायथा हि पुरुषः शास्त्रं समधिगच्छति ॥ तथातथा विजानाति विज्ञानं चास्य रोचतइति ॥ एवं साधनदशायामपि संप्रदायानुसाराद्वेदार्थज्ञाने सिद्धे पंक्तिपावनत्वं स्यात्॥यथाह सएव तृतीयाध्याये तानेवोपक्रम्य ( श्लो० १८६ ) वेदार्थवित्प्रवक्ताचेति ॥ ईदृशस्यैव च मुक्तिं वक्ति तृतीयाध्याये ऽध्यात्मप्रकरणे याज्ञवल्क्यः ॥ (श्लो० ६) सन्निरुध्येंद्रियग्रामं रागद्वेषौ प्रहायच॥भयं हत्वा च भूतानाममृती भवति द्विजइति॥एतादृशस्यैव सर्वकर्मोपयोगित्वं त्वाह मनुः॥ एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ॥ पुष्कलं फलमाप्नोति नामंत्रज्ञान् बहूनपीति ॥ याज्ञवल्क्योऽपि ॥ अग्र्याः सर्वेषु वेदेषु श्रोत्रियोब्रह्मविद्युवेत्यादि ॥ अत्र श्रोत्रियः श्रुताध्ययनसंपन्नः ब्रह्मविद्ब्रह्मज्ञानवान् वेदार्थविद्धर्मज्ञानवान् इति माधवः ॥ एवं गुरूपसत्त्या निश्चितवेदांततत्त्वस्यैव संन्यासादिसाधनमंतरापि मोक्षं सर्वोत्कृष्टत्वं चाह द्वादशाध्याये मनुः ॥ ( श्लो० १०२ )वेदशास्त्रार्थतत्त्वज्ञोयत्रतत्राश्रमे वसन् ॥ इहैव लोके तिष्ठन् सब्रह्मः

भूयाय कल्पते ॥ अज्ञेभ्योग्रंथिनः श्रेष्ठाग्रंथिभ्योधारिणोवराः ॥ धारिभ्योज्ञानिनः श्रेष्ठाज्ञानिभ्योव्यवसायिनः ॥ तपोविद्या च विप्रस्य निःश्रेयसकरं परं ॥ तपसा किल्बिषं हंति विद्ययाऽमृतमश्नुतइति ॥ आपस्तंबोऽपि दशमाध्याये ॥ मातृवत्परदारांश्च परद्रव्याणिलोष्ठवत् ॥ आत्मवत्सर्वभूतानि यः पश्यति सपश्यतीति ॥ अतोविद्वत्त्वमावश्यकं ॥ वेदशास्त्रेषु प्रचुरतया निर्णीतस्यापि धर्मस्यानुष्ठाने वैफल्यवारणार्थत्वात् ॥ अविद्वत्कृतकर्मणां वैफल्यस्मरणात् ॥ यथाह द्वितीयाध्याये बृहत्पराशरः ॥ (श्लो० ४६।४७) एकांशेनापि यन्न्यूनं कुर्यात्कर्म द्विजोत्तमः ॥ तेनासौ हन्यते कर्ता मृतोगर्त्तत्वमृच्छति ॥ कुर्वन्नज्ञोद्विजः कर्म जपहोमादि किंचन ॥ नासौ तस्य फलं विंदेत्क्लेशमात्रं हि तस्य तदिति ॥ पुनस्तत्रैव गायत्रीनिरूपणप्रकरणे (श्लो० ६२) अस्मिन्कलौ च विदुषा विधिवत्कर्म यत्कृतं ॥ अवेद्दशगुणं तत्स्त्कृतादेर्युगतोऽधिकं ॥ नचतच्छक्यते कर्तुं मंत्राम्नायस्य दूषणात् ॥ अयथार्थकृतात्पापात्संप्रसिद्धिर्गरीयसीति॥इह मंत्राम्नायस्य मंत्रप्रवर्तकसंप्रदायस्येत्यर्थः आम्नायसंप्रदयाशब्दयोरेकार्थत्वात्॥तृतीयकांडे (व० २श्लो० ७) अथाम्नायः संप्रदायइत्यमरोक्तेः ॥ अतः संप्रदायस्यैव विद्वत्त्वसिद्धिं प्रति सर्वधर्मप्रवृत्तिं प्रति च हेतुत्वं निश्चीयते॥धर्मनिर्णयसत्वेऽपि सांप्रदायिकोपदेशमंतरा स्वाभिप्रायकृतं कर्म निष्फलमेव ॥ यथोक्तं शातातपस्मृतौ ॥ (श्लो० २१) स्वाभिप्रायकृतं कर्म यत्किंचिज्ज्ञानवर्जितं ॥ क्रीडाधर्मेण बालानां तत्सर्वं निष्प्रयोजनमिति ॥ किंच ब्रह्मज्ञानजन्यचित्तशुद्धिलक्षणमांतरशौचं विनाऽपि सर्वधर्माणां नैष्फल्यमेव ॥ यथाह व्याघ्रपादः ॥ शौचं तु

द्विविधं प्रोक्तं बाह्यमाभ्यंतरं तथा॥ मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथांऽतरं॥ गंगातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः॥ आमृत्योराचरेच्छौचं भावदुष्टोन शुध्यतीति॥ भावशुद्धेर्ज्ञानैकसाध्यत्वं तु विद्यातपोभ्यांभूतात्मा बुद्धिर्ज्ञानेन शुध्यतीत्यादिमन्वादिवचनोपन्यासेन प्रागेवादर्शि॥ शौचस्य द्विविधस्यापि सर्वकर्माधिकारहेतुत्वमन्वयव्यतिरेकाभ्यां दक्षोदर्शयति॥ शौचे यत्नः सदा कार्यः शौचमूलोद्विजः स्मृतः॥शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाइति॥ इत्थमांतरशौचादिसर्वैंटसंपादकविद्वत्त्वविशिष्टस्यैव सर्वधर्मेष्वधिकारस्तत्रतत्र स्मर्यते॥ अतः प्रचुरतया धर्मनिर्णये सत्यपि तत्फलसिध्युपजीव्यब्रह्मज्ञानसिद्धिः प्रशासकसत्तया यथाशास्त्रं सर्ववर्णाश्रमादिषु तत्प्रवृत्तिः सर्वधर्मविप्लवाभावश्च संप्रदायप्रयोजनं॥ अतएवाऽत्रिस्मृतौ सांप्रदायिकाचार्यलक्षणमर्थतोनूद्य तादृशस्यैव धर्मोपदेष्टृत्वं तदुक्तस्यैव च धर्मत्वं स्मर्यते॥ जन्मना ब्राह्मणोज्ञेयः संस्कारैर्द्विजउच्यते॥ विद्यया चापि विप्रत्वं श्रोत्रियस्त्रिभिरेवच॥ वेदशास्त्राण्यधीते यः शास्त्रार्थं च निवेदयेत्॥ तदासौ वेदविप्रोक्तोवचनं तस्य पावनं॥ एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः॥सज्ञेयः परमोधर्मोनाज्ञानामयुतायुतैरिति॥ शातातपोऽपि स्मृतिसमाप्तिदशायां॥ धर्मशास्त्रं समारूढोवेदखङ्गधरोद्विजः॥ विद्वान् स्वयं तु यद्ब्रूयात् सधर्मः परमः स्मृतः॥ अच्छिद्रमिति यद्वाक्यं वदंति क्षितिदेवताः॥ प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः सह॥ मनुरपि द्वादशाध्याये (श्लो० ११३) एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः॥ सविज्ञेयः परोधर्मोनाज्ञानामुदितोऽयुतैरिति॥ इह वेदविच्छब्दोऽयं

वेदार्थधर्मज्ञपरः॥ एतच्च श्रेष्ठोपलक्षणं ॥ स्मृतिपुराणमीमांसान्यायशास्त्रज्ञोऽपि गुरुपरंपरोपदेशविदपीति व्याकुर्वता मन्वर्थमुक्तवलीकृता सांप्रदायिकाचार्योमुख्यतयोक्तएव वाक्यसुधाकारादिभिः॥पारंपरिकगुरुसदुपदेशस्यैव संप्रदायशब्दार्थत्वेन लिखनात्॥ यमोऽपि पंचमाध्याये ॥ वेदाचाररताविप्रावेदवेदांगपारगाः ॥ तैरप्यनुष्ठितोधर्मउक्तश्चैवविशेषतः ॥ कार्यश्चैव विशेषेण त्रिभिर्वर्णैरतंद्रितैरिति ॥ सर्वत्र धर्मशास्त्रेषु निर्णयसत्त्वेऽपि यथायोग्यं तत्तद्वृत्त्यर्थमस्ति संप्रदायोपयोगः॥ तस्य साधुसमयरूपत्वेन सर्वत्र प्रमाणत्वाभिधानात्॥ यथाह याज्ञवल्क्यः॥ (अ० १श्लो० ७) श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनइति ॥ मनुरपि द्वितीयाध्याये ॥ (श्लो० १२) वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनइतीदमेवाह ॥ माधवीये ॥ (अ० १ श्लो० ३३) युगेयुगेइत्यस्य व्याख्यायां स्मृतिः॥ समयश्चाऽपि साधूनां प्रमाणं वेदवद्भवेदिति ॥ आपस्तंबोऽपि ॥ (सूत्र) धर्मज्ञसमयः प्रमाणं वेदाश्चेति ॥ तत्रैव (श्लो० ३६) चतुर्णामपि वर्णानामित्यत्र॥ आचारलक्षणं चानुशासनिके पर्वणि अभिहितं॥ आचाराल्लभते चायुराचाराल्लभते श्रियं आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेहच ॥ दुराचारोहि पुरुषोनेहायुर्विंदते महत्॥ नाश्नंति चास्य भूतानि तथा परिभवंतिच॥ तस्मात्कुर्यादिहाचारं यदीच्छेद्भूतिमात्मनः॥ अपि पापशरीरस्य आचारोहंत्यलक्षणं ॥ आचारलक्षणोधर्मः संतश्चाचारलक्षणाः॥ साधूनां च यथा वृत्तमेतदाचारलक्षणं ॥ हारीतोऽपि स्मरति॥साधवः क्षीणदोषास्तु सच्छ-

व्याख्या.

ब्दः साधुवाचकः ॥ तेषामाचरणं यत्तु ससदाचारउच्यतइति ॥ संतः शिष्टास्तेषां स्वरूपमाह भगवान् बौधायनः ॥ शिष्टाः खलु विगतमत्सरानिरहंकाराः कुंभीधान्याअलोलुपा दंभदर्पलोभमोहक्रोधविवर्जिताइति ॥ आरण्यपर्वणि ॥ अक्रुध्यंतोऽनसूयंतोनिरहंकारमत्सराः ॥ ऋजवः शमसंपन्नाः शिष्टाचाराभवंति ते ॥ त्रैविद्यवृद्धाः शुचयोवृत्तवंतोयशस्विनः ॥ गुरुशुश्रूषवोदांताः शिष्टाचाराभवंति ते इति ॥ तेनाचारसंप्रदाययोरैकार्थ्यं पुनः समर्थितं ॥ वेदादौप्रचुरतयानिर्णीतेऽपि धर्मे संप्रदायस्यावश्योपयोगोऽपि दर्शितः ॥ अन्यथा प्रवृत्त्यसंभवात् ॥ याज्ञवल्क्यस्मृतौ आचाराध्याये श्राद्धप्रकरणे ( श्लो० ८ ) श्राद्धवर्ज्यब्राह्मणगणनायां कर्मदुष्टाश्च निंदिताइत्युच्यते ॥ अत्र कर्मदुष्टाः शास्त्रविरुद्धकारिणइति व्याख्या ॥ यदि शास्त्राण्येव स्वनिष्ठसर्वनिर्णयमात्रेण शक्नुयुः प्रवर्त्तयितुं न तर्हि कोऽपि तद्विरुद्धकारी स्यात् ॥ तथाच सति परिगणनं व्यर्थं स्यात् ॥ अतोऽवगम्यते सत्स्वपि शास्त्रेषु शिष्यबुध्यनुसारिणासम्यगुपदेशेन तदुक्तधर्माधर्मप्रवृत्तिनिवृत्तिप्रयोजकआचार्यसंप्रदायआवश्यकइति ॥ किंचोक्तरीत्या ऽवश्यसंपाद्यस्य ब्रह्मज्ञानस्य सिध्यर्थं मंदोत्तमप्रज्ञानां बुध्यनुसारेण संक्षेपविस्तराभ्यां तदुपदेशः संप्रदायप्रयोजनं ॥ अन्यथा बोधासंभवात्॥पराशरमाधवीये॥अतएवाङ्कुराचार्याः॥संक्षेपविस्तराभ्यां हि मंदोत्तमधियां नृणां॥वस्तूच्यमानमेवांतःकरणं तेन वर्ण्यतइति ॥ बोधकस्य प्रशासितुरभावे तु चार्वाकाद्यनेकासच्छास्त्रसंसर्गादिना बहवएव नास्तिक्यमासाद्योपपातकिनः स्युः ॥ तयोरुपपातकत्वं तु वदतोमनुयाज्ञवल्क्यावेकादशाध्याये॥

(श्लो० ६६) नास्तिक्यं चोपपातकमिति ॥ तथा तृतीयाध्याये उपपातकानि प्रक्रम्यासच्छास्त्राधिगमनमितिच ॥ अतस्तदभावोऽपि दृढवेदांतज्ञानद्वारकः संप्रदायप्रयोजनं ॥ यथाह भट्टः ॥ इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्रयुक्त्या ॥ दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदांतनिषेवणेनेति ॥ अतः सत्सांप्रदायिकग्रंथेष्वेव निरंतरमभ्यासोब्रह्मज्ञानादिसिद्धये कार्योनत्वन्यत्रेत्यभिप्रेत्याह मार्कंडेयः ॥ असत्प्रलापमनृतं वाक्पारुष्यं विवर्जयेत् ॥ असच्छास्त्रमसद्वादमसत्सेवां च पुत्रकेति ॥ अथ यच्चोक्तं नवीनरीत्या ऽशास्त्रीयया किं प्रयोजनमिति तत्र किमिदं नवीनत्वं नाम ॥ किं वेदोक्तप्रकारतोवैलक्षण्यरूपं उत भवदाचार्यशंकरनीलकंठाप्ययदीक्षितायुक्तापेक्षयावैलक्षण्यरूपं भवद्यत्त्यनभिमतत्वरूपं वा ॥ नाद्यः ॥ स्वरूपतएवासिद्धेः ॥ अस्मदाचार्यैरपि निबंधब्रह्मसूत्रभाष्यादिषु ब्रह्मस्वरूपस्य सर्वार्थनिर्णयपूर्वमीमांसाभाष्यादिषु धर्मस्वरूपस्य च सर्वांशतोवेदाद्यनुसारेणैव निर्णीततया वैलक्षण्यगंधकथनस्यापि दुग्धे सूक्ष्मजंत्वन्वेषणकल्पत् ॥ न द्वितीयः ॥ एकतरवादिविरोधमात्रेणैव नवीनत्वसंभवे नीलकंठस्य रामानुजमतस्तेनतया शंकरनीलकंठादीनामपीतरेतरं ब्रह्मसविशेषत्वनिर्विशेषत्वजीवाणुत्वव्यापकत्वविशिष्टाद्वैतकेवलाद्वैतादिसिद्धांतभेदप्रयुक्तस्य विरोधस्य जागरूकत्वेन तन्नयेष्वपि परस्परापेक्षया नवीनत्वस्य शक्योक्तिकत्वात् ॥ अथेतरेतरविरोधसद्भावेऽपि तेषामनादिसिद्धश्रुत्याद्यवलंबेन प्रवृत्तत्वान्न नूतनत्वमितिचेत्तर्ह्यस्मदाचार्याणामपि तथात्वान्न काऽपि क्षतिः ॥ नतृतीयः ॥ तथा सत्यर्वाचीनानां बार्हस्पत्यादिदर्शनांतरकलुषि-

तारोषविशेषमतीनां केषांचिद्विद्वेषाद्वेदादिष्वप्यभिरुच्यभावात्तत्रापि नूतनत्वमापद्येत ॥ नचैवमास्तिकेन प्रामाणिकेन वक्तुं शक्यमित्यलं ॥ यच्चोक्तमशास्त्रीययेति ॥ किमत्र शास्त्रशब्देन वेदादिकं विवक्षितं उत तदेकदेशः अथ प्रकृतकालानुकूल्याल्लब्धशास्त्रभावाः सौगतादिग्रंथावा ॥ नाद्यः ॥ अस्माकं रीतिषु वेदादिशास्त्रमूलकत्वस्यास्मत्परमाचार्येण बादरायणेनैव शास्त्रयोनित्वात् श्रुतत्वाच्च श्रुतेश्चशब्दमूलत्वादित्यादिषु निर्णीतत्वात् ॥ अस्मन्मयोक्तधर्मब्रह्मस्वरूपयोर्वेदादिसत्प्रमाणैकमूलकत्वस्यास्मदाचार्यैर्मीमांसाद्वयभाष्यादिषु महता प्रबंधेन प्रपंचितत्वाच्च नद्वितीयः ॥ तथासति दर्शपूर्णमासप्रतिपादकस्य श्रुतिभागस्य सोमाप्रतिपादकत्वेन तत्प्रतिपादकस्य तस्य च दर्शपूर्णमासाप्रतिपादकत्वेनोभयोरप्यशास्त्रीयत्वापातात् ॥ एवं सर्वस्याप्यशास्त्रीयत्वापत्त्या सर्वविप्लवप्रसंगाच्च ॥ अथ तृतीयश्चेत्स्वीकुर्मः ॥ अस्मत्सांप्रदायिकरीतीनां जैनादिशास्त्रसिद्धत्वाभावात् ॥ आस्तां चैषआस्माकीनरीतिषु तच्छास्त्रासिद्धत्वरूपोदोषः पतिव्रतासु कुलटावदनेकपुरुषविहाररसविरहितत्वदोषवदितिश्रीः ॥ नन्वास्तामेवं तथापि भवदाचार्यैः स्वग्रंथेषु वेदोक्तमेवानूद्यते उत तद्विलक्षणमुच्यते ॥ तत्राद्यश्चेत् अदृष्टजनकैरपौरुषेयैर्वेदादिभिरेव तद्बोधसंभवे पुनर्वृथा नवीनपौरुषेयग्रंथकरणं व्यर्थं ॥ विशेषाभावेन पौनरुक्त्यापातात् ॥ द्वितीयश्चेत्तर्हि वेदवैलक्षण्यान्नूतनत्वं पुनरापन्नमेवेति चेत्तर्हि तुल्यमेवेदं चोद्यं शंकरयादवनीलकंठवैद्यनाथाप्ययदीक्षितादीनां भावत्कप्रस्थानप्रवर्त्तकानां प्रबंधेष्वपि ॥ अथवाऽल्पमेवेदमुत्तारितं ॥ वेदार्थमेव पुनर्निरूपयत्सु

स्मृतिपुराणाद्यार्षग्रंथेषु तदनुरोधिषु धर्मादिनिर्णायकेषु हेमाद्रि-माधवविज्ञानेश्वरादीनां ग्रंथेष्वपि उक्तदोषस्य शक्यप्रसरत्वात् ॥ अथ स्मृतिपुराणादीनां वेदार्थानुवादकत्वेऽपि त्रेतायुगीयानां कि-चिदल्पबुद्धीनां वेदमात्रान्निर्णेतुमशक्तानामुपकाराय स्मृतयः ॥ द्वापरयुगीयानां तादृशानां धर्मद्वैपर्याच्छ्रुतिस्मृतिभ्यामपि धर्मा-दिनिर्णयेष्वशक्तानामुपकाराय पुराणानि च प्रवव्र्तिरइति बुद्धि-सौकर्यार्थत्वात्तेषु नैषदोषः प्रसरतीति चेत्तर्हि कलियुगीयानाम-त्यल्पबुद्धीनां विविधवार्हस्पत्यसौगतादिदुर्मतभ्रामितानां श्रुतिस्मृ-तिपुराणेभ्योऽपि निर्णयकरणाऽनिपुणानां ब्रह्मज्ञानादिसंपत्तये श्रीमदाचार्यादिभ्योहरिभक्तिसागरेभ्योऽपि सज्जनहृदयकंठशिरोलं कारकारीणि तमोहारीणि सूक्तिरत्नानि प्रादुरभूवन्निति महत्तरो-भाग्यवैभवोमोक्षप्रयोजकदैवसर्गोत्पन्नानां ॥ अतः ॥ अनादिवेद-सिद्धेषु संप्रदायेष्वनादिषु ॥ प्रवर्तितेषु श्रुतितोहरिणोद्धारकारिणा ॥ १ ॥ सहसैव नवीनत्वमशास्त्रीयत्वमीरयन् ॥ भासि भोः प्राक्त-नंमन्यः परब्रह्माद्यपेक्षया ॥ २ ॥ वेदादौ नैव शास्त्रत्वं भवतोऽभि-मतं किमु ॥ शक्तोवक्तुमशास्त्रीयत्वं श्रौते कथमन्यथा ॥ ३ ॥

## अथ द्वितीयस्य चतुर्थोऽवांतरः प्रश्नः ॥ ४ ॥

॥ आचार्यश्चकः ॥ १२ ॥

## ॥ उत्तरं ॥

किमत्र संप्रदायप्रवर्त्तकाचार्यलक्षणमेव विवित्सितं उततद्व्यक्ति-विशेषः ॥ तत्राद्यश्चेत् सारसंग्रहे ॥ पाद्मे ॥ सहस्रशाखाध्यायी

च सर्वयज्ञेषु दीक्षितः ॥ कुले महति जातोऽपि न गुरुः स्यादवैष्णवः ॥ यस्तु मंत्रद्वयं सम्यगध्यापयति वैष्णवः ॥ सआचार्यस्तु विज्ञेयोभवबंधविनाशकइति ॥ हारीतस्मृतावपि ॥ आचार्यं संश्रयेत्पूर्वमनवद्यं वैष्णवं द्विजं ॥ शुद्धसत्वगुणोपेतं नवेज्याकर्मकारकम् ॥ सत्संप्रदायसंपन्नं मंत्ररत्नार्थकोविदं ज्ञानवैराग्यसंपन्नं वेदवेदांगपारगं ॥ शासितारं सदाचारैः सर्वधर्मविदां वरं ॥ महाभागवतं विप्रं सदाचारनिषेविणं ॥ आलोक्यसर्वशास्त्राणि पुराणानि च वैष्णवः ॥ तदर्थमाचरेद्यस्तु सआचार्यइतीरितइति ॥ एवमन्यत्रापि ॥ आचिनोति हि शास्त्रार्थानाचारेस्थापयत्यपि ॥ स्वयमाचरते यस्मात्तस्मादाचार्यईरितइति ॥ पंचदशीप्रथमश्लोकव्याख्यायामागमवचनं ॥ परिपक्वमलाये तानुत्सादनहेतुशक्तिपातेन योजयति परे तत्त्वे सदीक्षयाचार्यमूर्तिस्थइति ॥ अथ द्वितीयश्चेत्तर्हि प्रपंचप्रादुर्भावावसरमारभ्य प्रवृत्तस्यानादिसंप्रदायस्य एकयैव व्यक्त्या प्रशासितुमशक्यत्वेन भगवदाज्ञानुरोधेन क्रमाद्बहवएव तआविर्भूताः संतीति प्रश्नघटकैकवचनविरोधः ॥ अथ बहूनामपि तेषां क्रमेण नामान्येव जिज्ञासाविषयाणीतिचेत् ब्रूमः ॥ तत्र परमतेषु नारायणं पद्मभवं वसिष्ठमित्यादिवदस्माकमयमाचार्यपरंपरासंग्रहश्लोकः ॥ आदौ श्रीपुरुषोत्तमं पुरहरं श्रीनारदाख्यं मुनिं कृष्णं व्यासगुरुं शुकं तदनु विष्णुस्वामिनं द्राविडं ॥ तच्छिष्यं किल बिल्वमंगलमहं वंदे महायोगिनं श्रीमद्वल्लभनाम धाम च भजेऽस्मत्संप्रदायाधिपमिति ॥ ॥ १ ॥ इयमेवच आचार्यपरंपरा विज्ञानेश्वरादिधृतवचनायां शां-

हिल्यसंहितायां भक्तिखंडे पंचमाध्यायेस्पष्टतयोच्यते ॥ अथातः श्रूयतां विप्राः संप्रदायः पुरद्विपः ॥ एकदा शंकरोदेवोगतोगोकुलमंडलं ॥ १ ॥ तत्र वृंदावने रम्ये सच्चिदानंदमंदिरे ॥ त्रिभङ्गललितं देवं कोटिमन्मथसुंदरं ॥ २ ॥ अनौपम्यं वेणुधरं व्रजस्त्रीगणसेवितं ॥ श्रुतिभिर्मुनिभिश्चैव सेव्यमानं मुदान्वितं ॥ ३ ॥ प्रणिपत्य मुदा देवं सामगानादतोषयत् ॥ जगतोहि समुद्धर्तुं संप्रदायस्य लब्धये ॥ ४ ॥ तस्मै ददौ प्रसन्नात्मा तत्रत्यानामनुग्रहात् ॥ संलब्ध्वा परमं लाभं स्वधाम संन्यवर्त्तत ॥५ ॥ परमानंदसंमग्नोनृत्यं चक्रे दिगम्बरः ॥ समुपासत तं देवं तद्द्रष्टुं भृतकौतुकः ॥ ६ ॥ ननाचेद्य तदादेवोहत्वा त्रिपुरमाहवे ॥ तदा हर्षसमाविष्टोनारदेन प्रसादितः ॥ ७ ॥ जगौतमेव सन्मार्गं श्रुतं यच्छ्रीपतेर्मुखात् ॥ नारदोऽपि महायोगी परमानंदपूरितः ॥ ८ ॥ अलंप्रसादतः प्रादाद्व्यासायामिततेजसे ॥ कौंडिन्याय मया प्रोक्तोगर्गाचार्यमहात्मने ॥ ९ ॥ व्यासस्तु वक्ति पुत्राय श्वात्मरताय विष्णवे ॥ अथो कलौ संप्रवृत्ते पूर्वाचार्यैरथागतैः ॥ १० ॥ भविष्यति परा भक्तिः किंचित्कालं मुनीश्वराः ॥ वेदवेदांततत्त्वज्ञैर्वैष्णवैर्ब्राह्मणोत्तमैः ॥ ११ ॥ निर्वाहिता ततोभक्तिर्लुप्तप्राया भविष्यति ॥ ततोऽपि श्रीपतेरस्य स्वीयानुग्रहतोहरेः ॥ १२ ॥ माथुरे मंडले तत्र गोकुलेऽस्मिन् गिरावपि ॥ प्रादुर्भविष्यति महापुरुषैरुपभाविता ॥ ॥ १३ ॥ तस्याः संप्रीतये तत्र संप्रदायं रिरक्षिषुः ॥ महात्मा सुमहातेजाभगवद्वदनोदितः ॥ १४ ॥ प्रादुर्भविष्यति ततः सर्वश्रुतिविशारदः ॥ योगी योगीश्वरस्तं वै संप्रदायं वदिष्यति ॥ १५ ॥ भगवानपि तं साक्षादुपदेष्टा निजागमम् ॥ आसाद्य गोकुलं धाम

भक्तिं संवर्धयिष्यति ॥ १६ ॥ गिरिराजं ततः प्राप्य महालैकांत-संश्रयैः ॥ निर्गुणं भक्तिमार्गं हि वर्धयन्विचरिष्यति ॥ १७ ॥ नि-जात्मप्रेमसंपूर्णैर्भगवद्ध्यानतत्परैः ॥ तद्रसाप्लुतचित्तानां स्वाचार-परिवर्तिनां ॥ १८ ॥ सर्वभूतैकसुहृदां वेदप्रामाण्यमीयुषाम् ॥ विर-लेष्वेव भविता संप्रदायोत्यनुत्तमः ॥ १९ ॥ आश्चर्याणि चरित्रा-णि कृत्वा नानाविधान्यसौ ॥ स्थापयिष्यति वै तस्याः पारंपर्या क्रमं कुलं ॥ २० ॥ समुद्धृत्य ततोजीवान् हरेः प्रीतिं करिष्यति ॥ ततः कतिपये काले कालदोषप्रभावतः ॥ २१ ॥ विलयं यास्य-ति पंथाः कापठ्येनाकुलः परः ॥ परदोषान्वितैः पुंभिर्निजाचार्य-पराङ्मुखैः ॥ २२ ॥ इत्थेवं हि समाख्यातः संप्रदायः पुरद्विषः ॥ अयमेव परः पुण्योभक्तिशास्त्रैकसंमतः ॥ एतन्माहात्म्यमतुलं ना-लं वक्तुं चतुर्मुखः ॥ २३ ॥ अयं हरेः श्रीव्रजदेवतायाअनुगृहीतः किल संप्रदायः ॥ आविर्बभौ वेणुगृहीतवेदैर्विभावयध्वं त्रिपुरा-रिसंमतं ॥ २४ ॥ अत्र विष्णवे विष्णुस्वामिनाम्नेइत्यर्थः ॥ भगव-द्वदनोदितः श्रीवल्लभाचार्यः ॥ श्रीमद्गोवर्द्धनधरवदनवैश्वानररूप-त्वात् ॥ तत्र परब्रह्मणः प्रथमाचार्यत्वं वेदांतकृद्वेदविदेवचाहं (स्कं० ११) योगास्त्रयोमया प्रोक्तानृणां श्रेयोविधित्सया ॥ इमं विवस्वते योगं प्रोक्तवानहमव्ययं ॥ (अ० ४ श्लो० २६) गोप-कन्यासहस्रैस्तु पद्मपत्रायतेक्षणैः ॥ अर्चितं भावकुसुमैस्त्रैलोक्यै-कगुरुं परमिति ॥ एवमादि गीताश्रीभागवतगौतमतंत्रादिवचने-ष्वपि स्फुटं ॥ द्वितीयश्च पुष्टिमार्गस्याचार्यः शिवएवेति श्रुतिष्व-प्युच्यते ॥ त्र्यंबकंयजामाहेसुगंधिपुष्टिवर्द्धनं ॥ उर्वारुकमिवबंध-नान्मृत्योर्मुक्षीयमामृतादिति ॥ अस्यार्थं तु अग्रिमप्रश्नोत्तरेषु कि-

चिद् व्याख्यास्यामः ॥ एवमेव श्रुत्यंतरेष्वपि ॥ यथा बृहन्नारायणोपनिषदि अणोरणीयानित्यनुवाके योदेवानां प्रथमं पुरस्ताद्विश्वाधियोरुद्रोमहर्षिः ॥ हिरण्यगर्भं पश्यत जायमानं॒सनोदेवः शुभया स्मृत्या संयुनक्तु ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवोमे अस्तु सदाशिवोम् इत्यादिषु स्पष्टतयोच्यते ॥ तथा श्रीभागवतेऽपि चतुर्थस्कंधे ॥ द्वितीयाध्याये ॥ ( श्लो० २ ) कस्तं चराचरगुरुं निर्वैरं शांतविग्रहम् ॥ आत्मारामं कथं द्वेष्टि जगतोदैवतं महदिति सर्वगुरुत्वं भगवद्भक्तत्वं चोच्यते ॥ पुनस्तत्रैव षष्ठाध्याये ॥ ( श्लो० ३२ ) तस्मिन्महायोगमये मुमुक्षुशरणं सुराः ॥ ददृशुः शिवमासीनं त्यक्तामर्षमिवांतकमिति प्रशांतस्य मुमुक्षुभिर्ज्ञानार्थमुपसत्तव्यस्य श्रीमहादेवाचार्यस्य वर्णनमुपक्रम्य ( श्लो० ३४ ) विद्यातपोयोगपथमास्थितं तमधीश्वरं ॥ चरंतं विश्वसुहृदं वात्सल्याल्लोकमंगलमिति विश्वसौहृदाल्लोकमंगलस्य ब्रह्मविद्यामूलकसंप्रदायस्य प्रवर्त्तकत्वमुक्त्वा तदुपदेशे मुख्यः कोवाशिष्यइत्याकांक्षायामुच्यते ॥ ( श्लो० ३६ ) उपविष्टं दर्भमय्यां बृस्यां ब्रह्म सनातनम्॥नारदाय प्रवोचंतं पृच्छते शृण्वतां सताम् ॥ कृत्वोरौ दक्षिणे सव्यं पादपद्मं च जानुनि ॥ बाहुंप्रकोष्ठे ऽक्षमालामासीनं तर्कमुद्रया ॥ तं ब्रह्मनिर्वाणसमाधिमाश्रितं व्युपाश्रितं गिरिशं योगकक्षाम्॥सलोकपालामुनयोमनूनामाद्यं मनुं प्रांजलयः प्रणेमुरिति नारदस्यैव मुख्यशिष्यत्वं तत्संप्रदानकसनातनब्रह्मोपदेशादिकं च निरूपितं ॥तस्माच्छ्रीमहादेवस्याऽप्यास्माकीनवैष्णवसंप्रदायमुख्याचार्यत्वं ॥ ब्रह्मादीनां च बहुशएतत्कृतसंप्रदायवर्तित्वमेव ॥ तृतीयस्कंधे चतुर्दशाध्याये

शिववर्णनमुपक्रम्य ( श्लो० २८ ) ब्रह्मादयोयत्कृतसेतुपालाइत्यु-
क्तेः ॥ किंच वैष्णवसंप्रदायाचार्यत्वादेव शिवैक्यभावनं परगुरौ
प्रातः कर्त्तव्यमिति विधीयते ॥ गौतमतंत्रे सप्तमाध्याये ॥ (श्लो०
७ ) ब्राह्मे मुहूर्ते चोत्थाय चिंतयेद्गुरुदैवतमित्युपक्रम्य(श्लो० १०)
शिवेनैक्यं समुन्नीय ध्यायेत्परगुरुं धिया ॥ मानसैरुपचारैश्च सं-
तर्प्य मनसा सुधीः ॥ स्तोत्रैः स्तुत्वा नमस्कुर्यान्मंत्रंदेवे समन्वयेत्
अज्ञानतिमिरांधस्य ज्ञानांजनशलाकया ॥ चक्षुरुन्मीलितं येन
तस्मै श्रीगुरवे नमः ॥ अखंडमंडलाकारं व्याप्तं येन चराचरं ॥
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमइति ॥ एवं नारदस्याप्याचा-
र्यत्वं ॥ अतएव श्रीभागवते प्रथमस्कंधे तृतीयाध्याये ( श्लो० ८)
तृतीयमृषिसर्गं च देवर्षित्वमुपेत्यसः ॥ तंत्रं सात्वतमाचष्ट नैष्क-
र्म्यं कर्मणां यतइति भगवदवतारत्वं नैष्कर्म्यसंपादकायुक्तम-
पंचरात्राख्यवैष्णवसांप्रदायिकग्रंथकारत्वं चोच्यते ॥ तस्य शि-
वशिष्यत्वं त्वाह सएव पंचरात्रे प्रथमरात्रप्रथमाध्याये ॥
( श्लो० ९ ) ज्ञानामृतं ज्ञानसिंधोः संप्राप्य शंकराद्गुरोः ॥ परा-
वराच्च परमायोगींद्राणां गुरोर्गुरोः ॥ वेदेभ्योदधिसिंधुभ्यश्चतुर्भ्यः
सुमनोहरं ॥ तज्ज्ञानमंथदंडेन सन्निर्मथ्य नवं नवं ॥ नवनीतं समु-
द्धृत्य नत्वा शंभोः पदांबुजं ॥ विधिपुत्रोनारदोऽहं पंचरात्रं समा-
रभइति ॥ अतएव च ब्रह्मवैवर्ते ब्रह्मखंडीयचतुर्विंशाध्याये ॥ दे-
हि मे कृष्णमंत्रं च यन्मनोवांछितं मम ॥ तत्संबंधि च यज्ज्ञानं य-
त्र तद्गुणवर्णनमिति नारदेन विज्ञापितोऽब्जयोनिः ॥ पत्युर्मंत्रं पि-
तुर्मंत्रं न गृह्णीयाद्विचक्षणः ॥ विरक्ताश्रमिणां चैव न पुत्रसुखदा-
यकमित्यादिकं हेतुपूर्वकमुक्त्वा ॥ महेश्वरस्तव गुरुःशाक्तर्नानः पु-

रातनः ॥ गच्छ वत्स शिवं शांतं शिवदं ज्ञानिनां गुरुम् ॥ तत्रैव भगवन्मंत्रं ज्ञानं लब्ध्वा पुरातनात्॥नारायणकथां श्रुत्वा शीघ्रमागच्छमद्गृहमित्युक्त्वा शिवं प्रति नारदं प्रेषयामासेत्युक्तिरपि संगच्छते॥ एवं व्यासशुकयोरप्याचार्यत्वं तु पुराणादिषु प्रसिद्धतरं ॥ इयं शुकपर्यंताचार्यपरंपरा गोपालतापनीयाद्युपनिषत्सु सविस्तरं महाभारतब्रह्मवैवर्तपाद्मगारुडविष्णुपुराणश्रीभागवतादिष्वपि तत्रतत्र प्रख्यातैव ॥ तथा नारदपंचरात्रेऽपि सैव स्फुटतया निरूपिता ॥ एवं विष्णुस्वामिप्रभृतीनां श्रीमद्वल्लभाचार्यश्रीविठ्ठलाचार्यपर्यंतानां निरूपकाणि श्रुतिस्मृतिपुराणादिवचनानि तत्रतत्र चरित्रचिंतामण्यादिग्रंथेषूपन्यस्तान्येव ॥ इहाप्युदाहृतायां शांडिल्यसंहितायामेतत्सर्वं कंठरवेणैव स्पष्टमक्लिष्टं निर्दिष्टमिति सम्यगिष्टसिद्धिरष्टस्वपिकाष्टासु दुष्टकामादिकष्टाविशिष्टानां शिष्टानां॥अथ श्रीमदाचार्योत्तरं त्वियदवधि॥ दुर्वादान् दलयंस्तमः कवलयन् पंकानि संकालयन् सेवाद्यं कलयन् हरेः कुजनताचेतश्चयं ज्वालयन्॥भक्तिं वैदिकयुक्तिभिः क्षितितले सर्वत्र संचालयन् श्रीमद्वल्लभवंश एषजयति स्वीयान् जनान् पालयन् ॥ १ ॥ अतः सर्वं क्षेमं ॥ इत्थं च अस्मन्मार्गाचार्याणां ॥ परंपरा परा प्रोक्ता परमात्मपुरःसरा ॥ चिराच्चराचराभीष्टा धरायां भक्तितत्परा ॥ १ ॥ गोपीपतिसमारंभां श्रीविष्णुस्वामिमध्यमां ॥ श्रीमदाचार्यपर्यंतां स्तुमोगुरुपरंपरां ॥ २ ॥

## ॥ अथ द्वितीयस्य पंचमोऽवांतरः प्रश्नः ॥ ५ ॥

तत्र वर्णनिर्देशोदेशनिर्देशोवंशपरंपरानिर्देशश्च वक्तव्यः ॥ १३ ॥




## ॥ उत्तरं ॥

अथ पूर्ववदिहापि कस्मिन्वर्णे देशे वंशे चोत्पन्नआचार्योभवितु मर्हतीत्येवपृच्छ्यते आहोस्विद्भवत्संप्रदायप्रवर्तकाआचार्याः केषु वर्णदेशवंशेषूत्पन्नाइति ॥ तत्राद्यश्चेत् नहि देशविशेषवंशविशेषयोर्नियमआचार्यत्वप्रयोजकः शास्त्रसिद्धोऽस्ति ॥ तथापि ब्राह्मण वर्णोत्पन्नोमन्वादिप्रशंसितत्रैवर्णिकनिवासार्हार्यावर्तादिनीवृदुद्भूतो मातृपितृकुलशुद्धएवाचार्योभवितुमर्हतीति बहुशिष्टसंमतं ॥ तत्र वर्णांतरव्यावर्त्तनायाद्यं विशेषणं ॥ मन्वादिभिर्ब्राह्मणस्यैव धर्मप्रशासनाधिकारस्मरणात् ॥ यथाह प्रथमाध्याये मनुः ॥ ( श्लो० ९८ ) उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ॥ सहि धर्मार्थमुत्पन्नोब्रह्मभूयाय कल्पते ॥ ब्राह्मणोजायमानोहि पृथिव्यामधिजायते ॥ ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये इत्यादि ॥ याज्ञवल्क्योऽपि प्रथमाध्याये दानप्रकरणे ॥ ( श्लो० १ ) तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये ॥ तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय चेति वेदतदुपदिष्टधर्मयोरक्षणार्थं ब्राह्मणानामेव सृष्टत्वमभिधाय तत्राऽपि साधारणविप्रापेक्षया अध्यात्मविद्याप्रशासकानां सत्सांप्रदायिकानामेव मुख्यतया वेदधर्मयोरक्षकत्वमित्याशयेनानुपदमेवाह ॥ ( श्लो० २ ) सर्वस्य प्रभवोविप्राः श्रुताध्ययनशालिनः ॥ तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाइति ॥ अत्र तमब्ग्रहणं साधारणवेदांतिव्यावृत्त्या तद्विद्याप्रवर्तकाचार्यग्रहणार्थमिति भाति ॥ इत्थमेव मनुरपि ॥ ( अ० १ श्लो० ९६।९७ ) भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ॥ बु-

द्धिमत्सु नराः श्रेष्ठानरेषु ब्राह्मणाः स्मृताः॥ ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः॥ कृतबुद्धिषु कर्त्तारः कर्तृषु ब्रह्मवेदिनइति॥ एवमितरत्राऽपि दृश्यं ॥ अथ म्लेच्छदेशादिनिषिद्धदेशोत्पन्नत्वव्यावर्त्तनार्थं द्वितीयं विशेषणं ॥ मन्वादिभिर्ब्रह्मावर्तादेरेव पुण्यदेशत्वस्य तत्रैव त्रैवर्णिकनिवासयोग्यत्वस्य तदुत्पन्नब्राह्मणस्यैव धर्मप्रशासकत्वस्य च निरूपणात् ॥ तथाहि ॥ द्वितीयाध्याये मनुः ॥ ( श्लो० १७ ) सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम्॥ तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते इति ॥ तथा ॥ ( श्लो० १९ ) कुरुक्षेत्रं च मत्स्याश्च पांचालाः शूरसेनकाः ॥ एषब्रह्मर्षिदेशोवै ब्रह्मावर्त्तादनंतरः॥ एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ॥ स्वंस्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः॥ हिमवद्विंध्ययोर्मध्यं यत्प्राग्विनशनादपि ॥ प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः॥ आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् ॥ तयोरेवांतरं गिर्य्योरार्यावर्त्तं विदुर्बुधाः ॥ कृष्णसारस्तु चरति मृगोयत्र स्वभावतः ॥ सज्ञेयोयज्ञियोदेशोम्लेच्छदेशस्त्वतः परः ॥ एतान् द्विजातयोदेशान् संश्रयेरन्प्रयत्नतः॥ शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्षितदति॥ बृहत्पराशरस्मृतावपि प्रथमाध्याये॥ ( श्लो० ४२ ) हिमपर्वतविंध्यान्योर्विनशनप्रयागयोः ॥ मध्ये तु पावनोदेशोम्लेच्छदेशास्ततः परः॥ देशेष्वन्येषु यानद्योधन्याः सागरगाः शुभाः॥ तीर्थानि यानि पुण्यानि मुनिभिः सेवितानिच॥ वसेयुस्तद्रुपांतेषु शमिच्छंतोद्विजातयः ॥ मुनिभिः सेवितत्वेन पुण्यदेशः प्रकीर्तितः॥ यत्र पानमपेयस्य देशे ऽभक्ष्यस्य भक्षणं॥ अगम्यागमनं यत्र तं देशं परिवर्जयेत्॥ एवं देशः समाख्यातोयाज्ञिको-

हि द्विजन्मनां ॥ एवमेवानुवर्त्तेरन् देशं धर्मानुकांक्षिणः ॥ उषित्वा यत्रतत्रापि स्वाचारं न विवर्जयेत् ॥ षट्कर्माणि प्रकुर्वीरन्नितिधर्मस्य निश्चयइति ॥ एवं पराशरमाधवीयेऽपि द्वितीयाध्याये कूर्मपुराणे ॥ नाधार्मिकैर्वृते ग्रामे न व्याधिबहुले भृशं ॥ न शूद्रराजे निवसेन्न पाखंडिजनैर्वृते ॥ हिमवद्विंध्ययोर्मध्यं पूर्वपश्चिमयोः शुभं ॥ मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसे द्विजइति ॥ इत्थमपरत्राऽपि प्रेक्ष्यं ॥ अथ सांकर्यादिदोषवारणाय तृतीयंविशेषणं ॥ इयांस्त्विह विशेषः ॥ यन्मुंडकश्रुत्याद्युक्तेषु श्रोत्रियत्वब्रह्मनिष्ठत्वतात्त्विकब्रह्मविद्याप्रवचनत्वादिषु सांप्रदायिकाचार्यगुणेषु मध्ये किंचिन्न्यूनगुणविशिष्टोऽपि पारंपरिकाचार्यवंश्योवसुधायां यावदुपलभ्येत न तावत्तादृशस्याऽप्यन्यस्याऽऽचार्यत्वमस्मन्नये इति ॥ तृतीयाध्याये मनुना ( श्लो० १३६ ) अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः ॥ अश्रोत्रियोवा पुत्रः स्यात् पिता स्याद्वेदपारगः ॥ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता ॥ मंत्रसंपूजनार्थं तु सत्कारमितरोर्हतीति ॥ अश्रोत्रियपुत्रस्य साक्षाच्छ्रोत्रियस्याप्यपेक्षया स्वयमश्रोत्रियस्याऽपि श्रोत्रियपुत्रस्योत्कर्षं वदता स्वनिष्ठस्योत्कर्षाधायकगुणस्यापेक्षया पितृपरंपरानिष्ठस्य तस्याधिक्यबोधनात् ॥ परेत्विह वैष्णवाः भारद्वाजसंहितावचनमप्याहुः ॥ न जातु मंत्रदा नारी न शूद्रोनातरोद्भव. ॥ नाभिशस्तोन पतितः कामकामोप्यकामिनां ॥ सप्तपुरुषातिविज्ञेयसंततैकांतनिर्मले ॥ कुले जातोगुणैर्युक्तोविप्रः श्रेष्ठतमोगुरुरिति ॥ अथ द्वितीयश्चेत्तर्ह्युच्यते ॥ तत्र प्रथमाचार्यस्य सर्वकारण-

स्य सर्वेश्वरस्य श्रीपुरुषोत्तमस्य तु वर्णनिर्देशेनालं ॥ अथ शिवनारदयोर्व्यासादीनां स्ववंशसहितः श्रीमदाचार्यपर्यंतानां च ब्राह्मणेष्वेव प्रादुर्भावोऽस्तीति निर्दिष्टोवर्णः ॥ अथ देशानिर्दिश्यंते॥ तत्राद्याचार्यस्य तु स्वरोमरंध्रनिक्षिप्तानेकब्रह्मांडमंडलस्य न वयं देशनिर्णये शक्ताः ॥ शिवस्य तु भगवद्धाम वा कैलासादिर्वा सः॥ नारदस्य तु शवलाश्वादीनां शिष्यत्वकरणानंतरं दक्षशापस्वीकारिणोन देशविशेषनियमः किंतु तस्य सर्वत्र पर्यटनमेव ॥ त्वं पर्यटन्नर्कइव त्रिलोकीमंतश्चरोवायुरिवात्मसाक्षी ॥ कदाचिन्नारदोयोगी लोकानुग्रहकांक्षया ॥ पर्यटन् सकलान् लोकानित्यादिषु श्रीभागवतब्रह्मांडपुराणमहाभारतादिषु तत्रतत्र वर्ण्यते ॥ एवं व्यासस्य यमुनाद्वीपप्रादुर्भूतस्य बदरिकाश्रमः स्थितिदेशइति ॥ तथा शुकाचार्यस्य व्यासवेश्मन्याविर्भूतस्य जन्मतः प्रव्राजां नस्थितौ विषयविशेषनियमइति च तत्रतत्र पुराणेतिहासादिषु प्रसिद्धमेव ॥ अथ श्रीविष्णुस्वामिप्रभृतीनां श्रीमद्वल्लभाचार्यपर्यंतानां प्रायोद्रविडकर्नाटकांध्रप्रांताएव देशाऐतिह्यप्रसिद्धाः ॥ एकादशस्कंधेऽपि पंचमाध्याये ( श्लो० ३८ ) कृतादिषु प्रजाराजन्कलाविच्छंति संभवम् ॥ कलौ खलु भविष्यंति नारायणपरायणाः ॥ क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ कावेरी च महापुण्या प्रतीची च महानदी ॥ ये पिबंति जलं तासां मनुजामनुजेश्वर ॥ प्रायोभक्ताभविष्यंति वासुदेवे ऽमलाशयाइत्यादौ नारायणपरायणानामाचार्याणां प्रादुर्भावदेशाः प्राधान्येन द्रविडादयएव करभाजनाख्ययोगीश्वरेणाभिहिताः ॥ अथ श्रीमदाचार्याणामग्निकुंडात्मा-

दुर्भावदेशोऽपि चंपारण्याख्यः शांडिल्यसंहितायां श्रीहरेर्नामसहस्रे कलियुगीयावतारनामसु चंपारण्यकृतोदयइत्यनेन तथात्वेनोक्तः॥ एवं तेषां स्थितिदेशाअपि श्रीव्रजप्रयागालर्कपुरवाराणसीचरणाद्रिमुख्यास्तत्रतत्र पुराणेतिहासादिषु शांडिल्यसंहितासनत्कुमारसंहितागर्गसंहितादिषु च प्रशंसिताएव ॥ श्रुतिष्वपि ॥ ( ऋक्संहिता अष्टक ८ अध्या० ३) सितासिते सरिते यत्र संगथे तत्राप्लुतासोदिवमुत्पतंति ॥ येवै तन्वां३विसृजंति धीरास्ते जनासो अमृतत्वं भजंते॥ (ऋक्संहिता अष्टक ७ अध्या ५) यत्र गंगा च यमुना च यत्र प्राची सरस्वती ॥ यत्र सोमेश्वरोदेवस्तत्र मामभृतं कृधींद्रायेंदोपरिस्रव॥(तैत्तिरीयोपनिषत्) इमं मे गंगे यमुने सरस्वति शुतुद्रि स्तोम २ सचतापरुष्णियेत्यादिषु मोक्षादिकारणतया श्राव्यंते॥अतस्तेष्वेव श्रीमदाचार्याणां बहुशः स्थितिः॥मंत्रवर्णोपि गंगायमुनांतरालदेशवास्तव्यानां भगवन्मननवतां महात्मनां प्रत्यहं संध्यावंदनादिषु नमस्करणीयत्वं श्रावयति॥नमोगंगायमुनयोर्मध्ये ये वसंति ते मे प्रसन्नात्मानश्चिरं जीवितं वर्द्धयंति नमोगंगायमुनयोर्मुनिभ्यश्च नमोनमोगंगायमुनयोर्मुनिभ्यश्च नमइति ॥ अथ श्रीमदाचार्यवंश्यास्तु उक्तमन्वादिवचनैः प्रशंसिते ब्रह्मावर्तादौ यत्रतत्र पुण्यनद्यादियुक्तेषुश्रीमत्पुरुषोत्तमप्रतिमातत्सेवाप्रवाहतत्कीर्तनमहोत्सवतद्भक्तसद्वैष्णवसमुदायादिभिरतिपावनतमेषु देशेषु समासते ॥ तादृशदेशानां पुण्यतमत्वं तु श्रीभागवतादिषूच्यते ॥ तथाहि ॥ सप्तमस्कंधेचतुर्दशाध्याये युधिष्ठिरं प्रति नारदः ॥ अथ देशान्प्रवक्ष्यामि धर्मादिश्रेयआवहान् ॥ सवै पुण्यतमोदेशः सत्पात्रं यत्र लभ्यते ॥ बिंबं भगवतोयत्र सर्वमेतच्चराचरं ॥ यत्रह

ब्राह्मणकुलं तपोविद्यादयान्वितं ॥ यत्रयत्र हरेरर्चा सदेशः श्रेयसां पदम् ॥ यत्र गंगादयोनद्यः पुराणेषु च विश्रुताः ॥ सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत ॥ कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः ॥ नैमिषं फाल्गुनं सेतुः प्रभासोऽथ कुशस्थली ॥ वाराणसी मधुपुरी पंपा बिंदुसरस्तथा ॥ नारायणाश्रमोनंदा सीतारामाश्रमादयः ॥ सर्वे कुलाचला राजन् महेंद्रमलयादयः ॥ एते पुण्यतमादेशाहरेरर्चाश्रिताश्च ये ॥ एतान् देशान्निषेवेत श्रेयस्कामोह्यभीक्ष्णशः ॥ धर्मोह्यत्रेहितः पुंसां सहस्राऽधिफलोदयइति ॥ नारदपंचरात्रे च प्रथमरात्रे दशमाध्याये उपबर्हणाख्यगंधर्वं प्रति पद्मयोनिः ॥ (श्लो० ६८) कृष्णसंकीर्तनं तूर्णं पुनाति श्रुतिमात्रतः ॥ श्रोतारं च प्रवक्तारं पुरुषैः सप्तभिः सह ॥ यत्रैव प्रभवेद्वत्स तन्नामगुणकीर्तनं ॥ तत्र सर्वाणि तीर्थानि पुण्यानि मंगलानिच ॥ तत्कीर्तनध्वनिं श्रुत्वा सर्वाणि पातकानि च ॥ दूरादेव पलायंते वैनतेयमिवोरगाः ॥ तद्दिनं सफलं धन्यं यशस्यं सर्वमंगलं ॥ श्रीकृष्णकीर्तनं यत्र तत्रैव नायुषोव्ययः ॥ संकीर्तनध्वनिं श्रुत्वा येच नृत्यंति वैष्णवाः ॥ तेषां पादरजःस्पर्शात्सद्यः पूता वसुंधरा ॥ तत्कीर्तनं भवेद्यत्र कृष्णस्य परमात्मनः ॥ स्थानं तच्च भवेत्तीर्थं मृतानां तत्र मुक्तिदं ॥ नात्र पापानि तिष्ठंति पुण्यानि सुस्थिराणि च ॥ तपस्विनाश्च व्रतिनां व्रतानां तपसां फलमिति ॥ सारसंग्रहे च वाराहपुराणे वसुमतीं प्रति भगवान् ॥ जान्हव्यादीनि तीर्थानि पापनिष्कृतिहेतवे ॥ कांक्षंति हरिदासानां स्पर्शनं हरिदासवत् ॥ निवसंति महात्मानोयत्र चैकांतिनोद्विजाः ॥ देवादेवर्षयोनित्यं तं देशं पर्युपासते॥यत्र भागवतानित्यं पंचकाल-

परायणाः ॥ निवसंति सदा युक्तास्तत्क्षेत्रं नैमिषं विदुः ॥ मद्भ-
क्तजनसंमर्दपादपांसुविसर्जनात् ॥ चतुःसागरपर्यंत पावनं स्याद्व-
सुंधरेइति ॥ एवं निर्दिष्टोद्देशः ॥ अथ वंशपरंपरां निर्दिशामः ॥
तत्र प्रथमाचार्यस्य सर्वकारणस्य परमात्मनोवंशनिर्देशेन कृतं ॥
अथ द्वितीयाचार्यस्य परशिवस्य कस्मिंश्चित्कल्पे कमलासनभा-
लोद्भवत्वमेव पुराणादिषु सिद्धतरं ॥ नारदपंचरात्रेऽपि द्वितीय-
रात्रद्वितीयाध्याये नारदं प्रति सएवाह ॥ ( श्लो० ११ ) मया
श्रीकृष्णमंत्रश्च कृष्णालये मुने पुरा ॥ गोलोके विरजातीरे नीरे
क्षीरनिभे ऽमले ॥ शतलक्षजपं कृत्वा पुण्ये वृंदावने वने ॥ श्रीकृ-
ष्णानुग्रहेणैव मंत्रः सिद्धोबभूव मे ॥ ब्रह्मभालोद्भवोऽहं च सर्वा-
दिसर्गतोमुने ॥ प्राप्तं मृत्युंजयं ज्ञानं कृष्णाच्च परमात्मनः ॥ सि-
द्धोमृत्युंजयोऽहंच नित्यनूतनविग्रहः ॥ ब्रह्मणः पतनेनैव निमे-
षोमे यथा हरेः॥एवं तेषां पार्षदानां नास्ति मृत्युर्यथा हरेरिति ॥
तत्रैव प्रथमरात्रे चतुर्दशाध्याये ब्रह्माणं प्रति सएव ( श्लो० १२ ),
अहं न पाता न स्रष्टा न संहर्ता च जीविनां ॥ निर्लिप्तोऽहं तप-
स्वी च हरेराराधनोन्मुखः ॥ १२ ॥ संहारविषये मंत्रं श्रीकृष्ण-
श्च पुरा ददौ ॥ दत्वा रुद्राय तदहं तपस्यासु रतोहरेः ॥ १३ ॥
तदर्चनेन ध्यानेन तपसा पूजनेन च ॥ स्तवेन कवचेनैव नाममं-
त्रजपेन च ॥ १४ ॥ मृत्युंजयोऽहमधुना नच कालाद्भयं मम ॥
कालः संहरते सर्वं मां विना च तथेश्वरं ॥ १५॥ पुरा सर्वादिस-
र्गे च कस्य चित्स्रष्टुरेव च ॥ भालोद्भवाश्च तेरुद्रास्तेष्वेकोऽहश्च
शंकरः ॥ १६॥ कल्पश्च ब्रह्मणः पाते लये प्राकृतिके तथा ॥ सर्वे
नष्टाविषयिणोन भक्ताश्च यथेश्वरः ॥ १७ ॥ असंख्यब्रह्मणांपा-

तः कल्पश्चासंख्यएव च ॥ समतीतः कतिविधोभविता वा पुनः-पुनः ॥ १८ ॥ श्रीकृष्णस्य निमेषेण ब्रह्मणः पतनं भवेत्॥तत्र प्राकृतिकाः सर्वे तिरोभूताः पुनःपुनः ॥ १९ ॥ न प्राकृतोन विषयी नित्यदेही च वैष्णवः ॥ हरेर्वरेणामरोऽहं शिवाधारस्ततःशिवः॥ ॥ २० ॥ जलप्लुतं च विश्वौघं लये प्राकृतिके ध्रुवं ॥ आब्रह्मलोकपर्यंतं परं कृष्णालयं विना ॥ २१ ॥ सर्वादेव्योविलीनाश्च कृष्णः सत्यं सुनिश्चितं ॥ सर्वे पुंमांसोलीनाश्च सत्ये नित्ये सनातने ॥ २२ ॥ अहं कृष्णश्च प्रकृतिः पार्षदप्रवरोहरेः॥नित्यं नित्याविद्यमानागोलोके च निरामये ॥ २३ ॥ एकईशोनद्वितीयइति सर्वादिसर्गतः ॥ नहि पश्यंति सद्भक्ताः प्रकृतिं प्राकृते लये ॥२४॥ तस्य भक्तोत्तमानाश्च सततं स्मरणेन च ॥ आयुर्व्ययोन हि भवेत् कथं मृत्युर्भविष्यति ॥ २५ ॥ नवासुदेवभक्तानामशुभं विद्यते क चित् ॥ तेषां भक्तोत्तमानाश्च सततं स्मरणेन च ॥ जन्ममृत्युजराव्याधिभयं नाप्युजायते इति ॥ २६ ॥ एवं नारदस्याप्यरविंदजनिनंदनत्वममंदमार्पग्रंथेपूद्घुष्यते॥अथ व्यासस्यापि पूर्वपुरुषपरंपरा पुरुषु पुराणेतिहासादिषु प्रसिद्धतरा ॥ पंचरात्रेऽपि प्रथमरात्रप्रथमाध्याये शुकं प्रति स्वयमेवाह ॥ ( श्लो०२८ ) स्वयं विधाता भगवान् परं कृष्णपरायणः ॥ कृष्णभक्तोवसिष्ठस्तु तत्सुतोवैष्णवः स्वयं ॥ २८ ॥ वैष्णवस्तत्सुतः शक्तिः कृष्णध्यानैकमानसः ॥ पराशरश्च तत्पुत्रः कृष्णपादाब्जसेवया ॥ २९ ॥ जीवन्मुक्तोमहाज्ञानी योगींद्राणां गुरोर्गुरुः ॥ अहं वेदविभक्ता च श्रीकृष्णपादसेवया ॥ २९ ॥ गुरुर्मे भगवान् साक्षाद्योगींद्रोनारदोमुनिः ॥ गु-

तरततः

रोर्गुरुर्मेशंभुश्च योगींद्राणांगुरोर्गुरुः॥ तेषां पुण्येन पुत्रस्त्वं पुण्यराशिश्च मूर्तिमान्॥ पद्मानां मम पुंसांच प्रकाशोभास्करः स्वयं॥ श्रीकृष्णचरणांभोजं पादाब्जं नारदेशयोः॥ सरस्वतीं नमस्कृत्य ज्ञानं वक्ष्ये सनातनमिति॥ एतेन शुकस्याऽपि सा निर्दिष्टैव॥ अथ साक्षाच्छुकाचार्यांतेवासिनं द्रविडप्रांतवासिनं प्राञ्चमस्मदाचार्यं श्रीविष्णुस्वामिनमारभ्य श्रीमद्वल्लभाचार्यपर्यंतानामपि यज्ञनारायणभट्टादयः कतिचित् पूर्वपुरुषाअस्मदुपाख्यानग्रंथेषु संति निर्दिष्टास्तेद्रष्टव्याः॥ ननु कतिचिदित्यनेन वंशपरंपराप्रश्नोत्तरं साकल्येन न लभ्यतइतिचेत्तर्हि विधातारमारभ्य एतावदवधिसमग्रावंशपरंपरा तु न केनापि निर्देष्टुं शक्यैवेतिचेत्तर्हि भवंतमेव पृच्छामोविधिमवधीकृत्य भवत्पूर्वपुरुषाः कति किंनामानः किंकर्माणश्चासन्निति॥तस्मादलमीदृशैः काकदंतपरीक्षाकल्पैर्विचारैः॥अस्मिन्प्रकृतप्रश्ने वर्णदेशवंशपरंपराणां जिज्ञासितत्वेऽपि दिशेरुच्चारणक्रियस्य घञंतरूपं कर्मतया निर्दिश्य वक्तव्यइति तव्यदंतवचिप्रयोगस्तु पांडित्यात्॥ कथनं कथनीयमितिवत्॥ युक्तं तु निर्देशः कर्तव्यइति त्रिष्वपि निर्देशपदं त्याज्यमिति वा॥ इत्थंच॥ कृतदेशादिनिर्देशाउमेशादिमदेशिकाः॥ जयंतु स्वपथाचारान्नयंतु श्रीहरिं निजान्॥ १॥ ॥ ५॥

॥ अथ द्वितीयस्यावांतराःषष्ठसप्तमाष्टमप्रश्नाः ६।७।८ पेषणयंत्रनिपतितकणवदेकहेलया निराक्रियंते॥

ते यथा॥

किंच ब्राह्मणादृते ऽन्यवर्णोपिस्वस्याचार्यत्वं कर्तुं शक्नोति नवा॥

॥ १४ ॥ शक्नोति चेत्तदा शास्त्रविरुद्धं ॥ नोचेत्तदा कुतआचार्यत्वं ॥ १५ ॥ तदुपदेश्याश्च हीनवर्णोपदेश्याः कथं कल्याणभागिनः स्युः ॥ १६ ॥

## ॥ उत्तरं ॥

अस्माकं संप्रदाये श्रीमहादेवाचार्यादारभ्य स्वरूपेण इदानीं स्ववंशरूपेण च स्वसंप्रदायानुशासनकारिश्रीमद्वल्लभाचार्यचरणपर्यंतं न कोऽपि ब्राह्मणातिरिक्तवर्णआर्यतरमाचार्यकार्यमालम्ब्याचार्यत्वमवधार्य कृतवान् ॥ युक्तंचैतत् ॥ वर्णानां ब्राह्मणोगुरुः ब्राह्मणोनितरां गुरुरित्याद्यनेकवचनेभ्यः ॥ अतइयन्मात्रेणैव द्वितीयप्रश्नावयवभूताः षष्ठसप्तमाष्टमाः प्रश्नाः प्रदत्तोत्तराइति श्रीः ॥ येषां च संप्रदाये स्वेच्छया वा शापादिवशाद्वा क्षत्रादिवर्णेष्ववतीर्णाअपि महानुभावाभगवदाज्ञया भक्तिधर्मोपदेशादिकं कृतवंतः संति संतस्ते भवंतमुत्तरवितरणेन मूकीकर्तुं समर्थाइति न वयमेतत्पर्यनुयोगार्हाः ॥ इत्थं ॥ संप्रदायोत्पत्तिकालाचार्यपंक्त्यादिकर्मकः ॥ दत्तोत्तरोद्वितीयोऽयं प्रश्नः प्रश्नैः सहाष्टभिः ॥

## ॥ अथ तृतीयः प्रधानप्रश्नः ॥

भवतामुपदेश्याश्चत्वारोवर्णास्त्रयोद्वावेकोवा ॥ ३ ॥

## ॥ उत्तरं ॥

जगदुद्धारचतुरोवर्णास्तु चतुरोहरिः ॥ उद्धर्तुं संप्रदायं स्वं पुराप्राह पुरारये ॥१॥ मंत्रपदे भगवतस्तत्तस्तन्नित्यसेवने॥यथाधिकारं भगवज्ज्ञाने च गुरुदर्शिते॥२॥ततोमुक्तौचभुक्तौ च चतुर्णामधिकारिता॥

अविशेषान्मुमुक्षायाउपदेश्यास्ततोऽखिलाः ॥ ३ ॥ एतत्सर्वं किं-वर्णनिष्ठइत्यस्योत्तरे पूर्वमेव विस्तरात् प्रपंचितं ॥ अयं प्रश्नश्च त-स्यैव प्रपंचनरूपश्चतुःषष्टिसंख्यापूरणाय पुनःकृतइति तदुत्तरेणैव दत्तोत्तरोवेदितव्यइति शिवम् ॥

## ॥ अथास्य तृतीयप्रश्नस्यांगप्रश्नप्रतिपादकान्यष्टौ वाक्यानि तत्र प्रथमद्वितीये यथा ॥ १ । २ ॥

॥ तत्र त्रयोवर्णाद्विजातयस्तेषु गर्भाधानादिसंस्कारपूर्वकं यज्ञोपवीतादिग्रहणं सावित्रीग्रहणं च मुख्यं ॥ १७ ॥ तद्वते जातित्वाभावाद्व्रात्यत्वं यथा तथा भवदुपदेशाभावेऽपि किं ॥ तथात्वे सर्वेषां भवदुपदेशाभावाद्व्रात्यत्वं स्नानदानादिकं वृथा स्यात् ॥ तन्न शास्त्रसंमतं विद्वत्संमतं च ॥ नोचेत्कुतोविशेषाग्रहः ॥ १८ ॥

## ॥ उत्तरं ॥

अत्राद्यवाक्ये जिज्ञासाबोधककिमादिपदाभावात् प्रष्टव्यांशएव न स्फुटीभवति ॥ यदितु त्रैवर्णिकानामेतन्मुख्यं नवेत्येवं विचिकित्सितं तदातु एकतरनिर्धारफलकविरुद्धकोटिद्वयोद्भावनार्थं नवेति विकल्पबोधकपदलेखोऽपेक्षितः॥अत्रोत्तरंतु शास्त्रसिद्धत्वात्त्रैवर्णिकानां गायत्रीग्रहणमपि मुख्यमेवेति कोवा प्रामाणिकोऽनुन्मत्तो-न ब्रूयात् ॥ इदमेव मुख्यं नत्वन्यत् किमपीति तु न प्रामाणिकेन शक्यं वक्तुं ॥ वक्ष्यमाणरीत्या वैष्णवमंत्रग्रहणस्याप्यावश्यकत्वात् यदितु भवदुपदेशाभावेऽपि किमित्यंतः प्रथमः प्रश्नः तदातु प्रश्न-

॥ १४ ॥ शक्नोति चेत्तदा शास्त्रविरुद्धं ॥ नोचेत्तदा कुतआचार्य-त्वं ॥ १५ ॥ तदुपदेश्याश्च हीनवर्णोपदेश्याः कथं कल्याणभागि-नः स्युः ॥ १६ ॥

## ॥ उत्तरं ॥

अस्माकं संप्रदाये श्रीमहादेवाचार्यादारभ्य स्वरूपेण इदानीं स्ववं-शरूपेण च स्वसंप्रदायानुशासनकारिश्रीमद्वल्लभाचार्यचरणपर्यं-तं न कोऽपि ब्राह्मणातिरिक्तवर्णआर्यतरमाचार्यकार्यमालम्ब्याचा-र्यत्वमवधार्य कृतवान् ॥ युक्तंचैतत् ॥ वर्णानां ब्राह्मणोगुरुः ब्रा-ह्मणोनितरां गुरुरित्याद्यनेकवचनेभ्यः ॥ अतइयन्मात्रेणैव द्विती-यप्रश्नावयवभूताः षष्ठसप्तमाष्टमाः प्रश्नाः प्रदत्तोत्तराइति श्रीः ॥ येषां च संप्रदाये स्वेच्छया वा शापादिवशाद्वा क्षत्रादिवर्णेष्वव-तीर्णाअपि महानुभावाभगवदाज्ञया भक्तिधर्मोपदेशादिकं कृतवं-तः संति संतस्ते भवंतमुत्तरवितरणेन मूकीकर्तुं समर्थाइति न व-यमेतत्पर्यनुयोगार्हाः ॥ इत्थं ॥ संप्रदायोत्पत्तिकालाचार्यपंक्त्या-दिकर्मकः ॥ दत्तोत्तरोद्वितीयोऽयं प्रश्नः प्रश्नैः सहाष्टभिः ॥

## ॥ अथ तृतीयः प्रधानप्रश्नः ॥

भवतामुपदेश्याश्चत्वारोवर्णास्त्रयोद्वावेकोवा ॥ ३ ॥

## ॥ उत्तरं ॥

जगदुद्धारचतुरोवर्णास्तु चतुरोहरिः ॥ उद्धर्तुं संप्रदायं स्वं पुराप्राह पुरारये ॥१॥ मंत्रपठे भगवतस्तत्तत्स्त्रिन्नित्यसेवने॥यथाधिकारं भग-वज्ज्ञाने च गुरुदर्शिता॥२॥ततोमुक्तौचभुक्तौ च चतुर्णामधिकारिता॥

अविशेषान्मुमुक्षायाउपदेश्यास्ततोऽखिलाः ॥ २ ॥ एतत्सर्वं किं-वर्णनिष्ठइत्यस्योत्तरे पूर्वमेव विस्तरात् प्रपंचितं ॥ अयं प्रश्नश्च त-स्यैव प्रपंचनरूपश्चतुःषष्टिसंख्यापूरणाय पुनःकृतइति तदुत्तरेणैव दत्तोत्तरोवेदितव्यइति शिवम् ॥

## ॥ अथास्य तृतीयप्रश्नस्यांगप्रश्नप्रतिपादकान्यष्टौ वाक्यानि तत्र प्रथमद्वितीये यथा ॥ १ । २ ॥

॥ तत्र त्रयोवर्णाद्विजातयस्तेषु गर्भाधानादिसंस्कारपूर्वकं यज्ञोपवीतादिग्रहणं सावित्रीग्रहणं च मुख्यं ॥ १७ ॥ तदृते जातित्वाभावाद्व्रात्यत्वं यथा तथा भवदुपदेशाभावेऽपि किं ॥ तथात्वे सर्वेषां भवदुपदेशाभावाद्व्रात्यत्वं स्नानदानादिकं वृथा स्यात् ॥ तन्न शास्त्रसंमतं विद्वत्संमतं च ॥ नोचेत्कुतोविशेषाग्रहः ॥ १८ ॥

## ॥उत्तरं॥

अत्राद्यवाक्ये जिज्ञासाबोधककिमादिपदाभावात् प्रष्टव्यांशएव न स्फुटीभवति ॥ यदितु त्रैवर्णिकानामेतन्मुख्यं नवेत्येवं विचिकित्सितं तदातु एकतरनिर्धारफलकविरुद्धकोटिद्वयोद्भावनार्थं नचेति विकल्पबोधकपदलेखोऽपेक्षितः॥अत्रोत्तरंतु शास्त्रसिद्धत्वात्त्रैवर्णिकानां गायत्रीग्रहणमपि मुख्यमेवेति कोवा प्रामाणिकोऽनुन्मत्तो न ब्रूयात् ॥ इदमेव मुख्यं नत्वन्यत् किमपीति तु न प्रामाणिकेन शक्यं वक्तुं ॥ वक्ष्यमाणरीत्या वैष्णवमंत्रग्रहणस्याप्यावश्यकत्वात् यदितु भवदुपदेशाभावेऽपि किमित्यंतः प्रथमः प्रश्नः तदातु प्रश्न-

पत्रेंऽकनिक्षेपः प्रमादात् ॥ उत्तरंत्वनुपदमुच्यते ॥ अथावांतरद्वितीयप्रश्ने गायत्रीग्रहणमंतरा त्रैवर्णिकानां द्विजत्वासिध्या यथा व्रात्यत्वमत्यनिष्टं स्ववारणायोपदेशस्यावश्यकत्वफलकं भवति तथा भवतां वैष्णवसांप्रदायिकानांमंत्राणामुपदेशाग्रहणेऽपि किं तादृशमनिष्टं येनोपदेशग्रहणावश्यकता सिध्येदित्यभिप्रेत्य यदुक्तं तत्रोत्तरं ब्रूमः ॥ श्रीकृष्णदेवमंत्राणां वैष्णवोत्संप्रदायतः ॥ अभावेतूपदेशस्य वैष्णवत्वं न सिध्यति ॥ १ ॥ असिद्धौ वैष्णवत्वस्य भक्तिज्ञाने सुदुर्लभे ॥ अलाभे ज्ञानभक्त्योस्तु हरितोषः कुतस्तराम् ॥ ॥ २ ॥ हरिप्रसादशून्यस्य कुतोमुक्तिः कुतः सुखं ॥ अतोमोक्षादिसिध्यर्थं तदावश्यकता मता ॥ ३ ॥ किंचोक्तं त्रिषु गायत्र्यावश्यकत्वं त्वयाऽपितु ॥ उपदिष्टाऽपि गायत्री स्वार्थज्ञानमपेक्षते ॥ ॥ ४ ॥ जपेन फलसिध्यर्थं तदर्थस्तु हरिः स्वयं ॥ गायत्रीद्वारतश्चेतोऽर्पणं कृष्णे निगद्यते ॥ ५ ॥ इत्थं समन्वयाध्याये निर्णीतमपरत्र च ॥ अवश्यमुपदेशोऽतः सस्यात्तस्याः फलाप्तये ॥ ६ ॥ तमंतरा नाऽधिकारः श्रीहरेः सेवनादिके ॥ हेतौ चतुःपुमर्थानामतश्चावश्यकोमतः ॥ ७ ॥ अन्यानि चास्य धन्यानि फलानि विमलानितु ॥ सकलानि प्रमापूरैः प्रापंच्यंत चिरंतनैः ॥ ८ ॥ तथाहि॥ मुमुक्षूणां हि शरणागतिरेव मुख्यसाधनतया गोपालपूर्वतापनीये श्रूयते ॥ योब्रह्माणं विदधाति पूर्वं योविद्यास्तस्मै गोपायति कृष्णः ॥ यस्तं देवमात्मवृत्तिप्रकाशं मुमुक्षुर्वै शरणमनुव्रजेदिति ॥ श्वेताश्वतरेऽपि ॥ योब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोति तस्मै ॥ तंह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये इति ॥ गीतायामपि ॥ (अ० ९) मांहि पार्थ व्यपाश्रित्येति ॥ (अ०

७श्लो० १४ ) दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ मामेव ये प्रपद्यंते मायामेतां तरंति ते इति ॥ ( अ० १८) सर्वधर्मान्परित्यज्य मामेकं शरणंव्रजेति॥विष्णुपुराणे (अं० १अ० ९श्लो५९) तावदार्तिस्तु सावाञ्छा तावन्मोहस्तथा ऽसुखं ॥ यावन्नायाति शरणं त्वामशेषाऽघमोचनमिति ॥ श्रीभागवते चैकादशस्कंधपंचमाध्याये (श्लो० ४१ ) देवर्षिभूताप्तनृणां पितॄणां न किंकरोनायमृणी च राजन् ॥ सर्वात्मना यः शरणं शरण्यं गतोमुकुंदं परिहृत्य कर्तमिति ॥ अतः सद्गुरुद्वारा भगवच्छरणागतिरेव प्रथमं मोक्षसाधनं ॥ इदं च शरणमंत्रादिवैष्णवमंत्रग्रहणं वैष्णवसांप्रदायिकाचार्यादेवेति विस्तरेण प्रागुपपादितं ॥ अवैष्णवोपदिष्टं तु पूर्वमंत्रं परित्यज्येत् ॥ पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेन्मनुम् ॥ सहस्रशाखाध्यायी च सर्वयज्ञेषु दीक्षितः ॥ कुले महति जातोऽपि न गुरुः स्यादवैष्णवइत्यादिपद्मपुराणादिवचनैः ॥ नारदपंचरात्रेपि द्वितीयरात्रे द्वितीयाध्याये शिवः ॥ ( श्लो० ११ ) स्मरणं कीर्तनं चैव वंदनं पादसेवनं ॥ पूजनं सततं भक्त्या परं स्वात्मनिवेदनं ॥ ११ ॥ गृह्णाति भक्तोभक्त्या च कृष्णमंत्रं च वैष्णवात् ॥ अवैष्णवाद्गृहीत्वा च हरिभक्तिर्न वर्धते ॥ १२ ॥ चांडालादपि पापी सश्रीकृष्णविमुखोनरः ॥ निष्फलं तद्धर्मकर्म नाधिकारी सकर्मणां ॥ शश्वदशुचिः पापिष्ठोनिन्दां कृत्वा हसत्यपि ॥ भगवंतं भागवतमात्मानं नैव मन्यते ॥ गुरुवक्त्रात् कृष्णमंत्रोयस्य कर्णे विशेदहो ॥ तं वैष्णवं महापूतं प्रवदंति पुराविदः ॥ मंत्रग्रहणमात्रेण नरोनारायणात्मकः ॥ पुरुषाणां शतैः सार्धं स्वात्मानं च समुद्धरेत् ॥ मातामहानां शतकं सोदरं मातरं सुतं ॥ भृत्यं कलत्रं बं-

धुं च शिष्यवर्गांस्तथैवच ॥ यदा नारायणक्षेत्रे मंत्रं गृह्णाति वैष्णवात् ॥ विष्णुः पुंसां सहस्रं च लीलया च समुद्धरेदित्य-वैष्णवान्मंत्रग्रहणनिषेधं वैष्णवगुरुसकाशाद्गृहीतभगवन्मंत्रत्वमेव सामान्यतोवैष्णवलक्षणं च वक्ति ॥ ब्रह्मवैवर्ते चाथर्वणैकादशाध्याये तदेव सामान्यतोवैष्णवत्वं प्रथमसोपानभूतं तथैव लक्ष्यते ॥ गुरुवक्त्राद्विष्णुमंत्रोयस्य कर्णे प्रविशति ॥ तं वैष्णवं महापूतं जीवन्मुक्तं वदेद्विधिरिति ॥ एवं मंत्रग्रहणस्य मुक्तिकारणत्वं तु पंचरात्रेऽपि द्वितीयरात्रसप्तमाध्याये शिवआह ॥ (श्लो० २७) परं राधेशयोर्मंत्रग्रहणं वैष्णवाद्विजात् ॥ शुद्धे नारायणक्षेत्रे परं निर्वाणकारणमिति ॥ वैष्णवत्वाभाववतः फलं तूच्यते संग्रहे भविष्यपुराणे ॥ तीर्थस्नानफलं नास्ति भूगोदानफलं तथा ॥ अवैष्णवस्य विप्रस्य सर्वं शश्वद्विनश्यति ॥ रूपलावण्य संयुक्तामहावंशोद्भवाद्विजाः ॥ अवैष्णवान शोभंते निर्गंधाइवं किंशुकाः ॥ विद्याविनयसंपन्नाविशालकुलसंभवाः ॥ विष्णुभक्ति विहीनाये चांडालसदृशाः स्मृताः ॥ सर्वभूतदयायुक्तं वैष्णवं द्वेष्टि योनरः ॥ सचांडालोमहापापी रौरवं नरकं व्रजेदिति ॥ परंतु वैष्णवावचनांतराण्यप्याहुः ॥ हारीते ॥ अवैष्णवेन विप्रेण स्थापिते मधुसूदने ॥ तद्राष्ट्रं भूपतिर्वापि विनाशमुपजायते ॥ पंचरात्रे ॥ अमंत्रमर्चनं कुर्यादकाले पूजयेद्धरिम् ॥ ग्रामनाशं च दुर्भिक्षं राजराष्ट्रं विनश्यति ॥ अवैष्णवस्थापितानां प्रतिमानां च वंदनं ॥ यः करोति समूढात्मा रौरवं नरकं व्रजेत्॥ तस्मादवैष्णवान्विप्रान्नकर्मणि नियोजयेत् ॥ महाभागवतं तत्र अर्चायां वरयेत्सुधीः ॥ न दासावासुदेवस्य सर्वलोकेश्वरस्यये ॥ तेषां हि नरके

वासः कल्पायुतशतैरपि ॥ स्वजीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ॥ आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर ॥ नारदपंचरात्रे ॥ अज्ञानाद्यदि वा ज्ञानादशुभं यत्कृतं मया ॥ क्षंतुमर्हसि देवेश दास्येन च गृहाण मां ॥ न जाने कर्म यत्किंचिन्माऽपि लौकिकवैदिकं ॥ न निषेधविधिं विष्णो तव दासोऽस्मि केवलं ॥ नवमस्कंधेदुर्वासाः ॥ यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ॥ तस्य तीर्थपदः किंवा दासानामवशिष्यतइति ॥ पुराणांतरे ॥ दास्यमेव परोधर्मोदास्यमेव परं हितं ॥ दास्येनैव भवेन्मुक्तिरन्यथा नरकं व्रजेत् ॥ विष्णोर्दास्यपरा भक्तिर्येषां तु न भवेत् क्वचित् ॥ तेषामेवहि संसृष्टोनिरयोब्रह्मणा नृप ॥ नारायणस्य दासाये न भवंति नराधमाः ॥ जीवंतएव चांडालाभविष्यंति न संशयइति ॥ अथ श्रीभागवते च सप्तमस्कंधे नवमाध्याये ( श्लो॰ १० ) विप्राद्द्विषड्गुणयुतादरविंदनाभपादारविंदविमुखाच्छ्वपचं वरिष्ठं ॥ मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति सकुलं नतु भूरिमानइति॥एवं वैष्णवत्वस्य स्वसांप्रदायिकवैष्णवाचार्यसकाशाद्भगवन्मंत्रोपदेशग्रहणैकसाध्यत्वं वैष्णवत्वाभावे बहुतरमनिष्टं चोपपादितं ॥ आचार्यसकाशाद्वैष्णवमंत्रग्राहिणः फलंतु ॥ मंत्रोपदेशमात्रेण नरामुक्ताश्च भारते ॥ पूर्वैश्च कोटिपुरुषैः परैः सार्द्धं हरेरहो ॥ १ ॥ कोटिजन्मार्जितात्पापान्मंत्रग्रहणमात्रतः ॥ मुक्ताः शुध्यंति यत्पूर्वं कर्म निर्मूलयंति च ॥ पुत्रान् दाराश्च शिष्यांश्च सेवकान् बाधवांस्तथा ॥ योदर्शयति सन्मार्गं सद्गतिस्तद्भवेद्ध्रुवमिति ब्रह्मवैवर्त्तब्रह्मखंडे ब्रह्माणं प्रति नारदवाक्यैरेवंजातीयकैर्वचनांतरसहस्रैश्च तत्रतत्र पु-

राणादिषु दर्शितमेव ॥ किंच ॥ सत्सांप्रदायिकाचार्योपदेशमंतरा तात्विकं ब्रह्मज्ञानमेव न सिध्येत् ॥ श्रीहरेरेव परब्रह्मत्वात् ॥ तात्विकतज्ज्ञानस्य निरतिशयभक्तिप्रवर्तक वैष्णवसिद्धांतानुसारेणैव संभवादित्यादि पुरैव समर्थितं भक्त्या मामभिजानाति यावान् यश्चाऽस्मि तत्त्वतः ॥ आचार्यवान् पुरुषोवेदेत्यादिभिः ॥ अथ कथंचिदक्षरब्रह्मविषयकस्य शुष्कज्ञानस्य संभवेऽपि क्लेशाधिक्यम ॥ क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामिति गीतावाक्यात् ॥ भक्तिशून्यत्वेन पुरुषोत्तमप्राप्त्यादिलक्षणोत्तमफलासाधकत्वे वैफल्यं च श्रेयः स्रुतिं भक्तिमुदस्य ते विभो क्लिश्यंति ये केवलबोधलब्धये ॥ तेषामसौ क्लेशलएव शिष्यते नान्ययथा स्थूलतुषावघातिनां ॥ ज्ञाने प्रयासमुदपास्येत्यादि श्रीभागवतादिवाक्यैः ॥ भक्तिश्च सत्सांप्रदायिकभगवन्मंत्रद्वाराऽऽत्मनिवेदनेनैव सिध्यति ॥ एकादशीयैकोनविंशाध्याये पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमिति प्रेमलक्षणभक्तेः परमकारणकथनं प्रतिज्ञाय श्रद्धामृतकथायां मइत्यादिना श्रवणकीर्तनादीन्युपदिशता भगवता समाप्तौ॥ एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनां॥मयि संजायते भक्तिः कोन्योऽर्थोऽस्याऽवशिष्यते इत्यात्मनिवेदनस्याऽधिकाररूपताबोधनात्तदभावेनाधिकाराभावेन कृतस्याऽपि श्रवणादेर्मुख्यत्वस्याऽशक्यवचनत्वात्॥तेन आत्मावाअरे द्रष्टव्यः श्रोतव्यइत्यादिमैत्रेयीब्राह्मणादि श्रुत्युक्तं ज्ञानसाधनं श्रवणादिकमपि मंत्रोपदेशवतएव साधीयइति तात्विकं ज्ञानमपि तादृशस्यैव सिध्येदितिभाति ॥ किंच भक्तेः भजइत्येषवै धातुः सेवायां परिकीर्तितः ॥ तस्मात्सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसीति गारुडसमाप्तिदशास्थविष्णुभ-

त्यध्यायवाक्ये भगवत्सेवारूपत्वमप्युच्यते ॥ भगवत्सेवादौ च भगवन्मंत्रशून्यस्य नाधिकारइति तु ब्रह्मवैवर्त्तादिषु शतशउक्तं ॥ गौतमतंत्रे च पंचमाध्याये ( श्लो० १ ) यद्यदुक्तं त्वया ब्रह्मंस्तत्सर्वं श्रुतं मया ॥ इदानीं परिपृच्छामि केनात्र चाधिकारितेति गौतमप्रश्नानंतरं नारदः ॥ ( श्लो० २ ) दीक्षायां चाधिकारित्वं प्राप्नोति गुरुसेवकः॥द्विजानामनुपेतानां स्वकर्माध्ययनादिषु ॥२॥ यथाधिकारोनास्तीह संध्योपासनकर्मसु ॥ तथाऽदीक्षितानां तु मंत्रदेवार्चनादिषु ॥ ३ ॥ नाधिकारोऽस्त्यतः कुर्यादात्मानं शिवसंस्कृतं ॥ अतएव हि दीक्षार्थी सर्वज्ञं गुरुमाश्रयेत् ॥ ४ ॥ सुंदरः सुमुखः स्वस्थः सुवासाबहुतंत्रवित्॥ असंशयः संशयच्छिन्निरपेक्षो गुरुर्मतः॥५॥ वेदवेदांतवेदांगसिद्धांतज्ञानपारगः॥वाङ्मनःकायचित्तैश्च विष्णोः शुश्रूषणे रतः ॥ विष्णुमंत्रानुसंधायीविष्णुविज्ञानवेदकः॥विष्णौ समर्पकः सम्यक् त्रिविधोपात्तकर्मणः॥७॥ संमतः सत्सु दांतश्च मंत्रार्थज्ञानपारगइत्यादिना मंत्रोपदेष्टृगुरुस्वरूपं निरूपयन् ( श्लो० १० ) नमोऽस्तु गुरवे तस्मै प्रत्यक्षाय यदाज्ञया॥ मृद्भस्मदारुदृषदः फलंत्यविकलं फलं ॥ वैष्णवाम्नायसिद्धांतचिंतामणिरिवापरः ॥ आश्रमी ज्ञानकुशलोगुरुर्भवति नापर ( १२ ) इति ॥ तथा ॥ ( श्लो० १४ ) सुदूरमपि गंतव्यं यत्राम्नायविदो जनाः ॥ तेऽपि स्तुत्या नमस्याश्च सेव्याश्चाभीष्टमिच्छता॥ एवंविधोगुरुर्ज्ञेयस्त्वन्यथा शिष्यदुःखदइति हरिभक्तस्य वैष्णवसांप्रदायिकाचार्यस्यैव भगवन्मंत्रोपदेष्टृत्वं उपदेशशून्यस्य भगवत्सेवादावनधिकारं वैष्णवसांप्रदायिकानां शिष्यादीनामपि नमस्यत्वं च वक्ति ॥ आम्नायशब्दस्य संप्रदायपर्य्यायत्वात्॥अथाम्नायः संप्र-

दायइत्यमरोक्तेः ॥ अतोभगवत्सेवादावधिकारासिद्धिरप्यास्माकी-
नोपदेशाभावे भवतीति दिक् ॥ एवं भक्तेस्तदंगज्ञानस्य चास्म-
दीयभगवन्मंत्रोपदेशसाध्यत्वं निरूपितं ॥ उपदेशमंतरा भक्तेरसि-
द्धौ तु भगवत्तोषोदुर्लभः ॥ भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन
केनचित् ॥ प्रीयतेऽमलया भक्त्या हरिरन्यद्विडंबनं ॥ भक्त्या तु-
तोष भगवान् गजयूथपाय इत्यादिश्रीभागवतादिवचनेभ्यः ॥
गीतायामपि॥येतु धर्मामृतमिदं यथोक्तं पर्युपासते ॥ श्रद्दधानाम-
त्परमाभक्तास्तेऽतीव मे प्रियाइति ॥ भगवत्तोषाभावे च ॥ क्षिपा-
म्यजस्रमशुभानासुरीष्वेव योनिषु ॥ आसुरीं योनिमापन्ना मूढा-
जन्मनिजन्मनि ॥ मामप्राप्यैव कौंतेय ततोयांत्यधमां गतिमिति
भगवदुक्तमेव फलं स्यात् ॥ कुतस्तरां तेषां भक्तिज्ञानहीनानां भ-
गवत्तोषहीनानां मोक्षादिकं ॥ यतः पुरुषोत्तमप्राप्तिलक्षणाया-
निर्गुणपरममुक्तेस्तु भक्त्येकसाध्यत्वमाह भगवान् ॥ ( अ० ) मां
च योऽव्यभिचारेण भक्तियोगेन सेवते ॥ सगुणान् समतीत्यैतान्
ब्रह्मभूयाय कल्पते ॥ तथा ॥ ( अध्या० १२ ॥) तेषामहं समुद्ध-
र्त्ता मृत्युसंसारसागरात्॥भवामि न चिरात्पार्थ मय्यावेशितचेतसा-
मिति ॥ अतएव भगवान्मनुरपि महाभारते शांतिपर्वणि ॥ ( अ०
१९४ श्लो० १११ ) यस्त्यक्त्वा प्राकृतं कर्म नित्यमात्मरतिर्मु-
निः ॥ सर्वभूतात्मभूतात्मा स्याच्चेत्परतमागतिरिति ॥ अत्राप्यात्म-
रतिर्भगवद्भक्तइति तु भक्तिमीमांसाभाष्यप्रथमाध्याये( सू० १०)
सा मुख्येतिसूत्रे स्फुटं ॥ नृसिंहपुराणे॥ भक्त्येकलभ्ये पुरुषे पुरा-
णे मुक्तौ किमर्थं क्रियते न यत्नइति ॥ विष्णुपुराणेऽपि ॥ ( अंश१
अ० २ श्लो० २० ) धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे

स्थिता ॥ समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयीति ॥ छांदो-
ग्यश्रुतिरप्याह ॥ ब्रह्मसंस्थोऽमृतत्वमेतीति ॥ दशमस्कंधेच कुरुक्षे-
त्रप्रसंगे गोपीः प्रति भगवान् ॥ मयि भक्तिर्हि भूतानाममृतत्वा-
य कल्पतइति ॥ एतदेवाभिप्रेत्य सूत्रितं भगवता शांडिल्येन ॥
( सू० ३ ) तत्संस्थस्यामृतत्वोपदेशादिति॥नचेदं तमेवविदित्वातिमृ-
त्युमेति तमेवंविद्वानमृतइहभवति नान्यःपंथाविद्यतेऽयनायेत्यादि
बृहदारण्यकतैत्तिरीयादिवाक्येषु मुक्तेर्ज्ञानैकसाध्यत्वाम्नानादयु-
क्तमिति शंक्यं ॥ पूर्वश्रुतौ तं पदसन्निहितैवकारेण भगवदतिरि-
क्तज्ञानस्यासाधकत्वमेवोच्यते नतु ज्ञानातिरिक्तस्यासाधकत्वमि-
ति न दोषः ॥ श्रुत्यंतरे च अन्यपदं सकामकर्ममार्गपरम् ॥ एवं
पदेन परामृश्यमानपूर्वोक्तप्रकारस्यैव वेदने प्रकारतया ऽन्वयात् ॥
पूर्वार्द्धे च वेदाहमेतं पुरुषं महांतमितिवेद्यावच्छेदककोटौ मह-
त्त्वनिवेशेन ज्ञाने आराध्यताबुद्धिसहकारस्य निश्चयात्॥पुरुषो-
त्तमस्य भक्त्येकलभ्यत्वं तु सएव स्मरति नाहंवेदैर्नतपसेत्यादिना
स्वाध्यायकायक्लेशादीनामसाधकत्वमुक्त्वा भक्त्यात्वनन्यया श-
क्यअहमेवंविधोऽर्जुन ॥ ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतपेति ॥
तथा ॥ पुरुषः सपरः पार्थ भक्त्या लभ्यस्त्वनन्ययेति ॥ भक्त्याऽह-
मेकया ग्राह्यइत्यादिच ॥ किंच ज्ञानस्यापि भक्तिशेषत्वं गीतायां॥
(अ० १५श्लो० १९) योमामेवमसंमूढोजानाति पुरुषोत्तमं॥ससर्व-
विद्भजति मां सर्वभावेन भारतेति॥तथा ॥ (गी०अ० ९श्लो० १३)
भजंत्यनन्यमनसोज्ञात्वा भूतादिमव्ययं ॥ इति मत्वा भजंते मां
बुधाभावसमन्विताइति ॥ तथा ॥ (गी०अ० १८श्लो० ५४) ब्रह्म-

भूतः प्रसन्नात्मा न शोचति न कांक्षति॥समः सर्वेषु भूतेषु मद्भक्तिं लभते परामिति ॥ भक्त्या मामभिजानातीति तु अभिज्ञानविषयं नतु ज्ञानविषयं ॥ एतच्च भक्तिमीमांसायां ( अ० १सूत्र१५ ) भक्त्याजानातीतिचेन्नाभिज्ञप्त्यासाहाय्यादिति द्विसूत्रेऽधिकरणे स्फुटं ॥ अपिच मोक्षसाधकं तात्त्विकं पुरुषोत्तमज्ञानमपि गौणभक्तिसाध्यं ॥ यथास्मर्यते ॥ ( अ० १० श्लो० ९ ) मच्चित्तामद्गतप्राणाबोधयंतः परस्परं ॥ कथयंतश्च मां नित्यं तुष्यंति च रमंतिच ॥ १ ॥ तेषां सततयुक्तानां भजतां प्रीतिपूर्वकं ॥ ददामि बुद्धियोगं तं येन मामुपयांति ते इति ॥ २ ॥ अस्य ज्ञानस्य संशयच्छेदार्थमुपयोगो गीतायां ( अ० १४ श्लो० ४१ ) ज्ञानसंछिन्नसंशयमित्यादावयमर्थः स्फुटएव ॥ एवं ज्ञाने च सिद्धसर्वात्मभावस्य भगवद्भक्तस्य मुक्तिः सुलभैव ॥ गीतायां ( अ० ५श्लो० १७ ) तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥ गच्छंत्यपुनरावृत्तिं ज्ञाननिर्द्धूतकल्मषाइत्यादिभिस्तथानिश्चयात् ॥ परभक्तिसाहित्यमंतरा तु न मुक्तिः ॥ अतएव भक्तिमीमांसायां द्वितीयाध्यायद्वितीयाह्निके सूत्रयति भगवान्शांडिल्यः ॥ ( सू० ८४ ) परांकृत्वैवसर्वेषांतथाह्याहेति ॥ अत्रैव स्वमेश्वरभाष्ये परां भक्तिं कृत्वैव सर्वेषां मुक्तावुपयोगः तथाहि सहेतुकं भगवानाहेत्यादिना तदेव स्पष्टीकृतं ॥ तथाच एतावता वैष्णवसांप्रदायिकाचार्यवक्राद्भगवन्मंत्रोपदेशग्रहणमंतरा न कथंचिदपि वैष्णवत्वसिद्धिः ॥ नापि परभक्तिज्ञानसंपादके गौणभक्तिभूते भगवत्सेवादावधिकारः ॥ तदभावेच भक्तिज्ञानयोरसंपत्त्या भगवत्प्रसादापात्रस्य न पुरुषोत्तमप्राप्तिलक्षणाऽत्युत्तमा मुक्तिरिति परंपरायाः स-

म्यगुपपादितत्वाद्वैष्णवत्वाभावे बहुतरानिष्टानां च दिङ्मात्रेण द॰र्शितत्वात् ॥ वैष्णवमंत्रोपदेशाभावे तत्तदनिष्टनिवृत्तिपूर्वकमुक्त्यादिसर्वेष्टसिद्धिरलभ्यैवेति दत्तोत्तरोभवदुपदेशाभावेऽपि किमिति प्रश्नः ॥ किंच त्रैवर्णिकानां गायत्रीमंतरा व्रात्यत्वं तु शास्त्रसिद्धं त्वयाऽपि स्वीकृतं ॥ साच गायत्री उपदिष्टाऽपि जपादिद्वारा मोक्षादिलक्षणस्वपरमफलसिद्धये स्वार्थज्ञानमपेक्षते ॥ आज्ञातार्थमंत्रस्य यथार्थफलाजनकत्वात् ॥ यथाह माधवीये प्रथमाध्याये हारीतः ॥ मंत्रार्थज्ञोजपञ्जुह्वंस्तथैवाप्यायपन् द्विजः ॥ स्वर्गं लोकमवाप्नोति नरकं तु विपर्ययइति ॥ बृहत्पराशरोऽपि द्वितीयाध्याये गायत्रीनिरूपणप्रकरणे (श्लो॰१२) गायत्रीं योन जानाति ज्ञात्वोपास्ते न योद्विजः ॥ नामधारकमात्रोऽसौ न विप्रः शूद्रएव सः ॥ किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः ॥ सांगैः सावित्रिहीनेन न विप्रत्वमवाप्यते ॥ गायत्रीमेव योज्ञात्वा सम्यगभ्यर्चते पुनः ॥ इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयादिति ॥ इहापि ज्ञानपूर्वकमेवोपासनाजपादिकं विधीयते ॥ नचेदंगायत्रीत्वप्रकारकमेव ज्ञानं शक्यं ग्रहीतुं ॥ तस्योपदेशकालएव स्वतोजायमानत्वेन जपाद्यंगतया पुनर्विधानायोगात् ॥ अप्राप्तप्रापकस्यैव विधित्वात् ॥ अनधिगतार्थगंतृत्वाच्च प्रमाणस्य ॥ अतोऽर्थतोज्ञानमेव गायत्र्याजपाद्यंगतया विधीयते ॥ गायत्र्यर्थश्च बादरायणेन जन्माद्यस्ययतोन्वयादित्यादौ जगज्जन्मादिकारणतया सर्वस्य सविता अर्थेष्वभिज्ञतया स्वराट् तया च वर्यभर्गस्वीयनाभिपद्मस्थादिकविप्रभृतिभ्योत्त्वदा ब्रह्मप्रकाशकतया सर्वधीप्रचोदकत्रिसर्गकरणप्रभृतिविविधक्रीडादिविशिष्टतया

ब्राह्मणं विदुः ॥ यस्य बालसमोलोकोधर्मज्ञस्य मनस्विनः ॥ सर्वं धर्मेण चरितं तं देवाब्राह्मणं विदुः ॥ क्षमा दया च विज्ञानं सत्यं चैव दमः शमः ॥ अध्यात्मनिरतं ज्ञानमेतद्ब्राह्मणलक्षणमिति ॥ कामक्रोधाद्यभावस्य च भक्तिसाध्यत्वं दर्शितं महाभारतएव श्रीविष्णुनामसहस्रादौ ॥ न क्रोधो न च मात्सर्यं न लोभोनाशुभामतिः ॥ भवंति कृतपुण्यानां भक्तानां पुरुषोत्तमइति ॥ एवं मोक्षधर्मादिष्वपि द्रष्टव्यं ॥ किमनेन बहुविस्तरेण ॥ तथाच वैष्णवसांप्रदायिकं भगवन्मंत्रोपदेशं विना अवैष्णवत्वलक्षणं व्रात्यत्वं भवत्येव ॥ यत्तूक्तं तथात्वेसर्वेषांभवदुपदेशाभावाद्व्रात्यत्वंस्नानदानादिकंवृथा स्यादिति ॥ तत्स्वीकुर्मः ॥ नहि स्नानदानादीनां सर्वथा वैफल्यं ब्रूमः किंतु तादृशनिरतिशयभगवत्प्रसादक्षणफलासाधकत्वमित्येव ॥ यथा सकामैर्निष्कामैर्वा ऽनुष्ठितानामग्निहोत्रदर्शपूर्णमास पशुचातुर्मास्याग्निष्टोमादीनामितिकर्तव्यतादिविचारेण तौल्येऽपि निष्कामानुष्ठितानां तेषां तदंतरप्रतिपत्त्याद्यधिकरणोक्तरीत्या ज्ञानोत्पत्तियोग्यदेहोत्पादनपूर्वकं मोक्षजनकत्वं ॥ सकामानुष्ठितानां च तेषामेव स्वर्गादिजनकत्वं तथाऽत्रापि वैष्णवानुष्ठितानां तादृशभगवत्प्रसादजनकत्वं ॥ अतएव सारसंग्रहे मंत्रसारे ॥ दीक्षिताय विशेषेण प्रसीदेन्नान्यथा हरिः ॥ ब्राह्मणः क्षत्रियोवाऽपि वैश्यः शूद्रोऽथवा पुनः ॥ एवं स्त्रियोवा यत्नेन गुरुमेव समाश्रयेदिति ॥ अत्रैव तत्वसारे ॥ दुर्लभं सद्गुरूणां तु सत्संगाद्यदुपस्थितं ॥ तदनुज्ञा यदा लब्धा सदीक्षावसरोमहान् ॥ ग्रामे वा यदि वारण्ये क्षेत्रे वा दिवसे निशि ॥ आगच्छति गुरुर्दैवात्तदा दीक्षां प्रकारयेत् ॥ अवश्यं वैष्णवीं दीक्षां प्रविशेत्सर्वयत्नतः ॥ दीक्षिताय विशेषेण

संसिद्धिर्नात्र संशयइति ॥ तथा भगवानप्याह ॥ पत्रं पुष्पं फलं तोयं योमे भक्त्या प्रयच्छति॥तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥ अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ॥ भूर्य्यप्यभक्तोपहृतं न मे तोषाय कल्पतइति ॥ तथा ॥ अपिचेत्सुदुराचारोभजते मामनन्यभाक् ॥ साधुरेव समंतव्यः सम्यग्व्यवसितोहि संइति॥दशमस्कंधे चाङ्गुर्याज्ञिकब्राह्मणाः ॥ ( अ० २३ श्लो० ३९ ) धिग्जन्मनस्त्रिवृद्विद्यां धिग्व्रतं धिग्बहुज्ञतां॥धिक्कुलं धिक् क्रियादाक्ष्यं विमुखाये त्वधोक्षजइति ॥ वैष्णवभिन्नानुष्ठितानां तु देवांतरप्रसादजनकत्वं स्वर्गादिसाधकत्वं वा ॥ ननु स्मार्त्तादिभिरपि कर्मणामच्छिद्रत्वाय सर्वदेवदेवाय सर्वेश्वराय श्रीविष्णवे कर्मार्पणं क्रियतएव ॥ संकल्पेऽपि बहुभिः श्रीपरमात्मप्रीत्यर्थमित्याद्युच्यतएव ॥ अतस्तत्कृतकर्मणामपि विष्णुप्रीतिजनकत्वं वाच्यमेवेतिचेत् ॥ सत्यं ॥ तथापि सत्त्वोपहिताय गुणावताराय विष्णवेऽर्पितानामपि कर्मणां न पुरुषोत्तमप्रीत्याधायकत्वं ॥ उक्तन्यायात् ॥ ननु तर्हि काम्यापेक्षया स्मार्त्ताद्यनुष्ठितेष्वपि विष्ण्वर्पितेषु कर्मसु कोवा विशेषइतिचेत् जन्मांतरेषु उक्तरीत्योपदेशादिद्वारा भक्तिसंपादकत्वमेवेति वदामः ॥ अतएव दशमस्कंधे उद्धवः ( अ०४७ श्लो०२४ ) दानव्रततपोहोमजपस्वाध्यायसंयमैः ॥ श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यतइति ॥ भगवांश्चाह ॥ जन्मांतरसहस्रेषु तपोध्यानसमाधिभिः ॥ नराणां क्षीणपापानां मयि भक्तिः प्रजायतइति ॥ गीतायां च ॥ ( अ०७ श्लो०१९ ) बहूनां जन्मनामंते ज्ञानवान् मांप्रपद्यतइति ॥ इहानुष्ठितकर्मणामिहैव फलाऽसंभवे जन्मांतरे

( श्लो० १०२ ) ब्रह्मणः पदमाप्नोति यद्गत्वा न निवर्त्तते ॥ विना श्रद्धां प्रमादाद्वा जपं कुर्युरिमं यदि ॥ स्मरणादेव तद्विष्णोः पदमाप्नोति वै श्रुतिरिति भगवत्परमपदप्राप्तिलक्षणं गायत्रीफलं स्मर्यते ॥ इदंच भक्तिज्ञानादिसाधनसहकारेणैवेति निश्चीयते ॥ अन्यथा चतुर्लक्षणीस्थसाधनाध्यायस्य तदुदाहृतानेकश्रुतीनां च व्याकोपापत्तेः ॥ अतएव कार्यपादेऽपि बादरायणेन ज्योतिश्चरणाधिकरणे गायत्रीवाइदꣳसर्वमिति च्छांदोग्यपंचमप्रपाठके आम्नातां द्विखंडां गायत्रीविद्यां विषयीकृत्य अथे छंदोभिधानान्नेतिचेन्न तथाचेतोऽर्पणनिगदात्तथाहिदर्शनमिति सूत्रयता सूचीसूत्रन्यायेन गायत्र्याः परमात्मनि चेतोऽर्पणसाधनत्वं निर्णीयते इति दिक् ॥ तथाच मोक्षस्य साक्षात् साधनयोर्भक्तिज्ञानयोर्मध्ये यथा ज्ञानस्य संपादके उपनिषदनुसारिश्रवणमननादौ चित्तशोधककर्मकरणादौ च गायत्र्युपदेशएव फलमुखमधिकारं जनयति ॥ तथैव एकादशस्कंधेकोनविंशाध्याये भगवता ॥ पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमित्युपक्रम्य उपसंहारे एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनां ॥ मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यतइति कथनाच्छ्रद्धामृतकथायां मद्गत्यादिनोक्ते श्रवणकीर्तनादौ सेवाकरणादौ च परभक्तेः साधने वैष्णवोपदेशएवात्मनिवेदनरूपः फलमुखमधिकारं संपादयतीति सोऽप्यवश्यग्राह्यएव ॥ किंच संप्रदायोपदेशाभावे शासनाभावेन धर्मपरत्वविज्ञानवत्त्वाध्यात्मिकज्ञातृत्वाद्यभावाद्ब्राह्मण्यमेव यथार्थं न स्यात् ॥ ब्राह्मण्यस्य तन्मूलकत्वं तु महाभारते ॥ जितेंद्रियो धर्मपरः स्वाध्यायनिरतः शुचिः ॥ कामक्रोधौ वशे यस्य तं देवा-

यथा ॥ तथैवोपासनं दृष्टं न तिष्ठेत्तदयोगतइति ॥ एतत्सर्वं माधवे नाऽपि पराशरव्याख्याप्रथमाध्याये संगृहीतं ॥ शातातपस्मृतौ च॥ येषामध्ययनं नास्ति येच केचिदनग्नयः॥न कुलं श्रोत्रियं येषां सर्वे ते शूद्रधर्मिणइति ॥ नहीदानीमग्न्याधानं सर्वेऽपिविद्वांसः कुर्वंति ॥ यमस्मृतौ चतुर्थाध्याये ॥ (श्लो० ५९) राज्ञां प्रतिग्रहस्याज्योलोकत्रयजिगीपुभिः ॥ राज्ञः प्रतिग्रहाच्चैव ब्राह्मण्यं हि विलुप्यते इति ॥ अत्रिस्मृतौ ॥ अधीत्य चतुरोवेदान् सर्वशास्त्रार्थतत्त्ववित् ॥ नरेंद्रभवने भुक्त्वा विष्ठायां जायते कृमिरिति ॥ नैतद्वर्जनमिदानीं सर्वविद्वद्भिराद्रियते ॥ अनेकेषां संन्यासिनामपि सांप्रतं दृढराजाश्रयपूर्वकं महोपद्रवकारित्वदर्शनात् ॥ बहुष्ववैष्णवादपि राज्ञः सकाशात् प्रतिग्रहग्रहणस्य दर्शनाच्च॥ वैष्णवराजप्रतिग्रहे तु न दोषः ॥ अतएव पराशरमाधवीये (अ० १श्लो० ३७) व्याख्यायां ॥ अनापदि राजप्रतिग्रहं निंदति याज्ञवल्क्यः ॥ न राज्ञः प्रतिगृण्हीयादित्यादिना राजप्रतिग्रहं विविधदुष्फलोपपादनपुरःसरं प्रतिषिध्याते अवैष्णवराजपरत्वेन सनिषेधः ॥ येषां न विषये विप्रायज्ञैर्यज्ञपतिं हरिम् ॥ यजंते भूभुजां तेषामेतत्सूनोदितं फलं॥ येषां पाखंडिसंकीर्णं राष्ट्रं न ब्राह्मणोत्कटं॥ एते सूनासहस्राणां दशानां भागिनोनृपाः ॥ येषां न यज्ञपुरुषः कारणं पुरुषोत्तमः ॥ ते तु पापसमाचाराः सूनापापौघभागिनइति विष्णुधर्मोत्तरवचनैर्व्यवस्थापितः ॥ प्रासंगिकमेतत् ॥ अथेह याथार्थ्यबुद्धिरूपं संमतत्वमाश्रियेत तदापि ॥ न सर्वः सर्वविन्नैव सर्वं सर्वस्य संमतमिति न्यायेन सर्वेषु प्रतितंत्रार्थेषु सर्वेषां संमत्यभावे-

ऽपि न कस्याऽपि क्षतिः॥ बहवश्चाद्यापि अर्वाचीनविदुषां परस्परविसंमतावह्वविवादग्रस्ताधर्मादयोदृश्यंते॥ तथैव किंचित्प्राचां माधवविज्ञानेश्वरादीनामपि ग्रंथेषु॥ नहि तावता तेषां शास्त्रीयत्वहानिः॥ यदिच केषांचिदेवासंमत्यापि प्रतितंत्रार्थेष्वप्रामाणिकत्वं कथ्येत तर्हि बहुवैष्णवविद्वदसंमतायां शैवादिदीक्षायामपि तत्प्रसज्येतेत्यलमनेन॥ यदप्युक्तं नोचेत्कुतोविशेषाग्रहइति॥ तदपि चेत्कोटेर्दूषणादेव दत्तोत्तरं॥अतोविशेषाग्रहोप्युचिततरएव अतएव बृहन्नारदीयपुराणे पुरुषोत्तममाहात्म्ये त्रयोविंशाध्याये चित्रवाहुनामकराजोपाख्याने॥ (श्लो० ९) एकस्मिन्दिवसे राजा चित्रवाहुर्महीपतिः॥ दृष्ट्वा समागतं दूरादगस्त्यं मुनिपुंगवं॥ ९॥ प्रणम्य दंडवद्भूमौ विधिना तमपूजयत्॥ कल्पयित्वा ऽऽसनं भक्त्या तस्थौ मुनिवराग्रतः॥१०॥ विनयावनतो भूत्वा जगाद मुनिसत्तमं॥ राजोवाच॥ अद्य मे सफलं जन्म ह्यद्य मे सफलं दिनं॥ ११॥ अद्य मे सफलं राज्यमद्य मे सफलं गृहं॥ यस्त्वं समागतोमे ऽद्य गृहे श्रीकृष्णसेवकः॥ १२॥ मुक्तोऽहं पापसंघाताद्यत्त्वया ऽहं निरीक्षितः॥ तुभ्यं समर्पितं राज्यं गजाश्वरथसंयुतं॥वैष्णवोऽसि मुनिश्रेष्ठ नास्त्यदेयं मया तव॥ मेरुतुल्यं भवेत्स्वल्पं वैष्णवाय समर्पितं॥ १४॥ कपर्दिकाप्रमाणं तु व्यंजनं वान्नमुत्तमं॥ न यच्छति दिने यस्तु वैष्णवाय द्विजन्मने॥ १५॥ तद्दिनं विफलं तस्य कथितं वेदपारगैः॥ विष्णुभक्ताश्च ये केचित् सर्वे पूज्याद्विजातयः॥ १६॥ तेषां संभावना कार्या वाङ्मनःकायकर्मभिः॥ कथितं मम गर्गेण गौतमेन सुमंतुना॥ १७॥ तावत्प्रभा च ताराणां यावन्नोदयतेरविः॥ तावदन्ये द्विजन्मानोयावन्नायाति वै-

ण्णवः ॥ १८ ॥ अगस्त्यउवाच ॥ चित्रवाहो महाभाग धन्यस्त्वं सांप्रतं नृप ॥ इमाधन्याः प्रजाः सर्वायास्त्वं रक्षसि वैष्णवः ॥ ॥ १९ ॥ तस्मिन् राष्ट्रे न वस्तव्यं यस्य राजा न वैष्णवः ॥ वरोवासोवने शून्ये न तु राष्ट्रे स्ववैष्णवे ॥ २० ॥ चक्षुर्हीनोयथा देहः पतिहीना यथा प्रिया॥निरक्षरोयथा विप्रस्तथा राष्ट्रमवैष्णवं॥२१॥ दंतहीनोयथा हस्ती पक्षहीनोयथा खगः ॥ द्वादशी दशमीविद्धा तथा राष्ट्रमवैष्णवं ॥ २२ ॥ दर्भहीना यथा संध्या तिलहीनं च तर्पणं ॥ वृत्त्यर्थं देवसेवा च तथा राष्ट्रमवैष्णवं ॥ २३ ॥ सकेशा विधवा यद्वद्व्रतं स्नानविवर्जितं ॥ शूद्रश्च ब्राह्मणीगामी तथा राष्ट्रमवैष्णवं ॥ २४॥ सराजा प्रोच्यते सद्भिर्यः श्रीकृष्णपदाश्रयः ॥ तद्राष्ट्रं वर्धते नित्यं सुखी भवति तत्प्रजेत्यादि ॥ अत्र वैष्णवस्य द्विजस्य सर्वतः प्राधान्यं वैष्णवशून्यदेशस्य चात्यंतं निंदाऽभिधीयते॥ श्रीभागवतेऽपि षष्ठस्कंधे यमः॥ ( अ० ३श्लो० २७ ) ते देवसिद्धपरिगीतपवित्रगाथाये साधवः समदृशोभगवत्प्रपन्नाः ॥ तान्नोपसीदत हरेर्गदयाऽभिगुप्तान्नैषां वयं न च वयः प्रभवाम दंडे ॥ तानानयध्वमसतोविमुखान्मुकुंदपादारविंदमकरंदरसादजस्रं ॥ निष्किंचनैः परमहंसकुलैरसङ्गैर्जुष्टाद्गृहे निरयवर्त्मनि बद्धतृष्णान् ॥ जिव्हा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविंदं ॥ कृष्णाय नो नमति यच्छिरएकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यानिति ॥ विष्णुपुराणेऽपि ( अं० १ अ० ९ श्लो० ९८) जन्मानि घोरयमकिंकरताडनानि दैन्यानि तानि तपनात्मजदर्शनानि ॥ जंतोरहंममतरंगकुरंगतृष्णा कृष्णांघ्रिपंकजपराङ्मुखतानुभावः ॥ पाद्मे श्रीभागवतमाहात्म्यषष्ठाध्याये ॥ ( श्लो० २० )

विरक्तोवैष्णवोविप्रोवेदशास्त्रविशुद्धिकृत् ॥ दृष्टांतकुशलोधीरोवक्ता कार्योऽतिनिःस्पृहः ॥ तथा ॥ (श्लो०३५) ब्राह्मणान् वैष्णवांश्चान्यांस्तथा कीर्तनकारिणः ॥ नत्वा संपूज्य दत्ताज्ञः स्वयमासनमाविशेत् ॥ तथा ॥ (श्लो०४४) सप्ताहव्रतिनां पुंसां नियमान् शृणुनारद ॥ विष्णुदीक्षाविहीनानां नाधिकारः कथाश्रवे ॥ तथा ॥ (श्लो०५५) श्रवणेनैव पूतास्ते निष्कामावैष्णवायतः ॥ तथा ॥ (श्लो०९१) भक्तिः सुताभ्यां सह रक्षिता सा शास्त्रे स्वकीयेऽपि तदा शुकेन ॥ अतोहरिर्भागवतस्य सेवनाच्चित्तं समायाति हि वैष्णवानां ॥ सुताभ्यां ज्ञानवैराग्याभ्यां ॥ अत्र वैष्णवदीक्षावतामेव मोक्षादिसर्वसत्फलोपजीव्ये प्रवचने श्रवणे चाधिकारः॥ तेषामेव श्रवणादिद्वारा भक्तिज्ञानादिसंपत्त्या मोक्षलक्षणं फलं चाभिधीयते ॥ तत्र विष्णुपुराणादिषु च ॥ प्रभुरहमन्यनृणां न वैष्णवानामितिवैवस्वतादिवर्चनैर्नरकभयाभावश्च तेषामुच्यतइति विशेषाग्रहः शास्त्रसिद्धः ॥ इत्थमन्यत्राप्यनेकत्रार्षग्रंथेषु उद्घाटितहृदयेक्षणेन वीक्षणीयं ॥ अतआवश्यकतरउपदेशस्तु वैणवः ॥ भक्तिज्ञानादिसंपत्त्यासंतोऽसंतोषहा हरेः ॥ १ ॥ प्रसन्ने तु जगन्नाथे ब्रह्मरुद्रेश्वरे हरौ॥ किंनस्तद्भृत्यभृत्यानां चैत्त्यं कृत्यं च शिष्यते ॥ २ ॥

## ॥ अथतृतीयप्रश्नस्यावांतरस्तृतीयः प्रश्नः ॥ ३ ॥

॥ किंच ॥ यथा वर्णाश्रमधर्मवर्णनं सर्वत्र ग्रंथेषु तत्फलवर्णनं च तथा भवत्संप्रदायवर्णनं तत्फलवर्णनं च कुतोन ॥ १९ ॥

## ॥उत्तरं॥

अत्र सर्वग्रंथेषु वर्णाश्रमधर्मवर्णनकथनं प्रमादात्॥ शिक्षाव्याक-
रणनिरुक्तच्छंदोलक्षणरूपेष्वंगग्रंथेषु प्रातिशाख्यनिघंटुब्रह्ममीमां
सादिपूपांगग्रंथेषु आयुर्वेदधनुर्वेदगांधर्वस्थापत्याख्योपवेदग्रंथेषू-
क्तसर्वशास्त्रानुरोधाज्जनबोधानवरोधाय तैस्तैः सूरिभिः प्रणीतेषु
परार्द्धाधिकेषु तेषु तेषु ग्रंथेषु बहुषु काव्यनाटकादिषु च सर्वत्र
नियमेन तद्वर्णनानुपलब्धेर्ग्रंथत्वेन वर्णाश्रमधर्मनिरूपकत्वेन च
व्याप्त्यसिद्धेः॥ उक्तेषु सर्वेषु ग्रंथत्वस्य च सर्वविद्वद्व्यवहारसिद्ध-
त्वात्॥ यदितु स्मृतिपुराणादयएवात्र सर्वग्रंथशब्देनाभिप्रेतास्त-
र्हि तेष्वस्माकं वैष्णवसंप्रदायस्य तदभिमतसिद्धांतज्ञानभक्तिभ-
गवत्सेवोर्ध्वपुंड्रतुलसीकाष्ठमालाशंखचक्रादिधारणप्रभृतिधर्माणां
भगवत्प्रसादतत्परपदावाप्तितत्सायुज्यादिलक्षणानां संप्रदायफला-
नां च यथायथं तत्र तत्र वर्णनमहाकल्लोलादरीदृश्यंतएव बहुग्रं-
थार्णवकर्णधारैर्निर्मत्सरैः सद्भिरिति नकोऽपि दोषः॥ तथाहि षष्ठा-
ध्याये मनुः॥ ( श्लो० ७४ ) सम्यग्दर्शनसंपन्नः कर्मभिर्न नि-
बध्यते ॥ दर्शनेन विहीनस्तु संसारं प्रतिपद्यतइति ॥ अत्र स-
म्यक्दर्शनं सत्संप्रदायशास्त्रं ॥ तद्ग्रहणेनैवमोक्षः ॥ त्यागेन संसा-
रः ॥ दर्शनशब्दः सर्वदर्शनसंग्रहादौ शास्त्रपरः नतु दर्शनमिहज्ञा-
नमिति शंक्यं ॥ तस्य फलरूपत्वात्॥ एतदग्रे साधयंतीहतत्पदमि
त्यत्र व्याख्यायां पूर्वोक्तदर्शनस्य साधनत्वोक्तेः ॥ पुनस्तत्रैव ॥
( श्लो० ८३ ) अधियज्ञं ब्रह्म जपेदाधिदैविकमेवच॥आध्या-
त्मिकं च सततं वेदांताभिहितं च यत्॥ इदं शरणमज्ञानामिदमेव-

विजानताम् ॥ इदमन्विच्छतां स्वर्गमिदमानंत्यमिच्छतामिति ॥ अधियज्ञादिशब्दवाच्यानां गीतोक्तरीत्या पुरुषोत्तमस्वरूपादीनां जप्यत्वमुक्त्वा पुरुषोत्तमस्यैव सर्वशरणत्वादिकमुपदिष्टं ॥ इदं च जप्यत्वं मंत्रद्वारैव॥ केवलस्वरूपेण जप्यत्वायोगात् ॥ वर्णात्मकवस्तुनएव जपसंभवात् ॥ अतोवैष्णवप्रसिद्धं भगवच्छरणमंत्रादिग्रहणमपि मनोरभिमतमेव॥किंच॥ अत्रैव॥( श्लो० ८६)एषधर्मोऽनुशिष्टोवोयतीनां नियतात्मनामिति चतुर्विधयतिधर्मानुपसंहृत्य ॥ वेदसंन्यासिकानां तु कर्मयोगान्निबोधतेत्यादि पृथक् कथ्यमानावेदसंन्यासिकाः सांप्रदायिकाएवेति मेधातिथिव्याख्यानानुरोधात्फलति ॥ अस्मत्सांप्रदायिकाहिप्रायशः यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः॥ ससंन्यासी च योगी च न निरग्निर्नचाक्रियइत्याद्यनुसारेण पुत्रादौ भारं न्यस्य पद्मपत्रवद्गृहे वर्त्तमानाज्ञानवैराग्यसंपन्नागृहे भगवत्सेवां कुर्वंति ॥ एतदेव बहुतया मनुना षष्ठाध्यायसमाप्तिपर्यंतं निर्णीतं ॥ अतएव गोविंदराजोऽपि ज्ञानसहकृतसर्वसत्कर्माणं गृहस्थमेव वेदसंन्यासिकशब्देन व्याचख्यौ ॥ मनुरपि एतदग्रे ऽनुपदमेव एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाइत्यादिना विस्तरेण गृहस्थं प्रशंसति ॥ तेन तस्यापि गोविंदराजोक्तरीतिकमेवाभिमतमिति प्रतीयते ॥ अन्यथा गृहस्थप्रशंसायाआकस्मिकत्वप्रसंगात् ॥ अथ याज्ञवल्क्योऽप्याचाराध्याये दानप्रकरणे ( श्लो० १५ ) सर्वधर्ममयं ब्रह्म प्रदानेभ्योधिकं यतः ॥ तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतमिति धर्मब्रह्मणोरपि प्रदानं तत्फलं च वर्णितवान् ॥ संप्रदायश्चेतादृशदानमेवेति तु पूर्वमेवावोचाम॥पुनः सएव तृतीयाध्यायाय-

प्रकरणे ( श्लो० ३४ ) भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनं॥ क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमामतेति संप्रदायैकसाध्यानि त- पोविद्यादीनि तत्फलानि च वर्णयति॥ इदमत्र मिताक्षरायां स्फु- टं॥ अपिच॥ नहि धर्मपदार्थोवर्णाश्रमसंबंधभेदेन द्विविधएवा- ऽस्ति येन यथा वर्णाश्रमधर्मवर्णनमित्येव दृष्टांतत्वेन वक्तुं युक्तं स्यात्॥ किंत्वनेकविधास्ते महाभारतादिषु मिताक्षराप्रथमश्लो- कव्याख्यानादिषु च निरूपिताः॥ तत्र सांप्रदायिकधर्माणां सा- धारणधर्मत्वं प्रागेवोपपादितं॥ अतएव याज्ञवल्क्योऽपि (अ० १) गृहस्थप्रकरणे ( श्लो० २६ ) अहिंसा सत्यमस्तेयं शौचमिंद्रिय- निग्रहः॥ दानं दमोदया क्षांतिः सर्वेषां धर्मसाधनमित्यांतरशौचें- द्रियनिग्रहदमानां पूर्वोक्तरीत्या संप्रदायैकसाध्यानां सर्वसाधा- रणत्वमाह॥ मनुरपि षष्ठाध्याये ( श्लो० ९१।९२ ) चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः॥ दशलक्षणकोधर्मः सेवितव्यः प्रय- त्नतः॥ ९१॥ धृतिः क्षमा दमोऽस्तेयं शौचमिंद्रियनिग्रहः॥ धी- र्विद्या सत्यमक्रोधोदशकं धर्मलक्षणमिति संप्रदायलभ्यानां वि- द्यादीनां साधरणधर्मत्वमाह॥ किंच॥ सत्सांप्रदायिकगुरुसका- शात् श्रवणमननादिद्वारा भगवत्साक्षात्कारस्य सर्वधर्मेभ्योत्युत्कृ- ष्टत्वमाह याज्ञवल्क्यः॥ ( अ० १श्लो० ८ ) इज्याचारदमाहिंसा- दानस्वाध्यायकर्मणां॥ अयं तु परमोधर्मोयद्योगेनात्मदर्शनमिति॥ एवमितरास्वपि प्रायः सर्वासु स्मृतिषु समाभिदशायामस्माकं वै- ष्णवसिद्धांतानुरोधि वेदांतनिरूपणं दृश्यतएव॥ नन्वेवंसत्यपि संप्रदायशब्दोच्चारणपूर्वकं तु न क्वापि निरूपणं नापि वैष्णवसंप्र- दायप्रसिद्धानां परस्परविभाजकानां शुद्धाद्वैतद्वैतद्वैताऽद्वैतप्रभृति-

राद्धांतानां क्वापि स्मृतिपूच्चारणमिति चेत् मैवं ॥ शातातपस्मृतौ कुंडगोलकयोर्लक्षणमुक्त्वा ॥ तौ जातौ तु परक्षेत्रे प्रजेतिचेष्टते ऽकृती ॥ दत्तानि हव्यकव्यानि नाश्नंति संप्रदायिनइति ॥ मनुस्मृतावपि ( अ० ३श्लो० १८३ ) अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु चेत्यत्र दशपुरुषपर्यंतमविच्छिन्नवेदसंप्रदायवंशजाः पंक्तिपावनाइति मुक्तावली ॥ गौतमतंत्रेऽपि ॥ ( अ० ९ श्लो० ८८ ) उदयादिलयांतं च मंत्रमेनं समभ्यसेत् ॥ उदयः शब्दरूपश्च लयश्चार्थः प्रकीर्तितः ॥ ज्ञातृज्ञेयविभागेन तन्मयोभव गौतम ॥ मनः संहरणं शौचं मौनं मंत्रार्थचिंतनं ॥ अव्यग्रत्वमनिर्वेदोजयसंपत्तिहेतवः ॥ एवं ते कथिताः सम्यक् त्रिविधायजनक्रमाः ॥ यान् कृत्वा संप्रदायेन मंत्री वांछितमश्नुतइति ॥ एवमस्त्यनेकत्र संप्रदायशब्दोच्चारणपूर्वकं तद्वर्णनं ॥ यच्चोक्तं शुद्धाद्वैतद्वैतादीनां वैष्णवसंप्रदायसिद्धांतानां स्मृत्यादिष्वप्रसिद्धत्वमिति ॥ तत्राप्युच्यते ॥ दक्षस्मृतौ ॥ अतः परं प्रवक्ष्यामि योगस्य विधिमुत्तममित्यादिना योगनिरूपणमुपक्रम्य तत्स्वरूपादिकमुक्त्वा नारण्यसेवनायोगइत्यादिना वनवासादिसाधनासाध्यत्वं निश्चित्य अभियोगात्तथाऽभ्यासात्तस्मिन्नेव सुनिश्चयात् ॥ पुनःपुनश्च निर्वेदायोगः सिध्यति नान्यथेति ज्ञानस्य श्रवणमननादिसाध्यत्वं व्याख्याय यश्चात्ममिथुनोनित्यमात्मक्रीडस्तथैव च ॥ आत्मानंदश्च सततमात्मन्येव समाहितइति भूमविद्याश्रावितप्रकारां भक्तिंच निरूप्य यस्त्वात्मव्यतिरेकेण द्वितीयं नैव पश्यति ॥ ब्रह्मभूतः सविज्ञेयोदक्षपक्षउदाहृतइत्यादिना पुनर्ज्ञानं प्रपंच्य॥ अथ ज्ञानस्य संपादकाः केके ग्राह्यः सिद्धांताइत्याकांक्षायामाह ॥ अद्वैतंच तथा

द्वैतं द्वैताद्वैतं तथैवच ॥ न द्वैतं नापि चाद्वैतमित्येतत्पारमार्थिकं ॥ नाहं द्वैतं च संबंधोब्रह्मभावेन भावितः ॥ ईदृशायामवस्थायामवाप्तं परमं पदं ॥ द्वैतपक्षः समाख्यातोऽद्वैतं येऽपि समाश्रिताः ॥ अद्वैतानां प्रवक्ष्यामि यथा शास्त्रस्य निश्चयः ॥ अत्रात्मव्यतिरेकेण द्वितीयं नैवपश्यति ॥ अतः शास्त्राण्यधीयंते श्रूयंतेग्रंथविस्तराः ॥ योगमभ्यस्यमानस्य ध्रुवं कश्चिदुपद्रवः ॥ विद्या वा यदि वा ऽविद्या शरणं तु जनार्दनइति स्पष्टतया सिद्धांतभेदादिकं वर्णितं॥नन्वेवमपि वैष्णवसंप्रदायानां वर्णाश्रमधर्मवदनार्पेषु धर्मशास्त्रग्रंथेषु तु निरूपणं न दृष्टचरमितिचेद्ग्रंथानवलोकनमूलिकैवेयं भ्रांतिः ॥ वैष्णवस्मार्तभेदेनानेकनिर्णयानामैदंपर्येण व्यवस्थापनस्य प्रायः सर्वत्रैव महानिबंधेषु सहस्रशउपलभ्यमानत्वात् ॥ पुराणादिष्वार्षग्रंथेष्वपि तथैव कंठरवेण वैष्णवादिशब्दोच्चारणपूर्वकमैदंपर्येण व्रतादिव्यवस्थादर्शनाच्च ॥ ननु केदमेवमिति चेत्साकल्येन लिखितुमशक्यत्वाद्दिङ्मात्रं दर्शयामः ॥ तत्र प्राचा नारायणभट्टेन कृतायां धर्मप्रवृत्तौ एकादशीश्राद्धविषये श्राद्धंकृत्वातुयोविप्रइत्यादीनि एकादश्यामपि श्राद्धोत्तरं भोजनावश्यकताबोधकानि वचनानि स्मार्तपरत्वेन एकादश्यांयदाश्राद्धमितिकण्वस्य तथैवोपवसेयुश्चेद्वैष्णवाहरिवासरइत्यादीनि स्कांदस्य च वचनानि पितृशेषाघ्राणमात्रविधायकानि वैष्णवपरत्वेन व्यवस्थापितानि ॥ तथा तत्रैव श्रवणद्वादशीनिर्णये पुराणसमुच्चये श्रवणद्वादशी सा स्याद्धुपोष्या विष्णुतत्परैरिति ॥ इहापि वैष्णवसंप्रदायस्थैरित्यर्थः ॥ तत्रैवैकादशीनिर्णये ॥ आदित्योदयवेधस्तु स्मार्त्तानां कथितोबु-

धैः ॥ अरुणोदयवेधस्तु वैष्णवानां स्मृतोऽपैरित्यादिभविष्योत्त-
रव्याघ्रपादगोभिलगालवनारदीयपाद्मादिवचनैरेकादशीद्वैविध्यं
स्मार्त्तवैष्णवपरत्वभेदेन निर्णीतं ॥ तथा तत्रैवाऽष्टमहाद्वादशीनि-
र्णयानंतरमुच्यते एताश्चाष्टौ द्वादश्योवैष्णवानां नित्याः ॥ अवैष्ण-
वानांकेचिदित्याहुः ॥ सदीक्षावधिसंन्यासं समंत्रं द्वादशाक्षरं॥अ-
ष्टाक्षरमथान्यं वा ये मंत्रंसमुपासते ॥ ७८ ॥ ज्ञेयास्ते वैष्णवालो-
के विष्णवर्चनरताः सदा ॥ तेषामेवोपवासःस्यान्महाद्वादशिनाम-
पि ॥ ७९ ॥ वैष्णवाये न कुर्वंति महाष्टद्वादशीव्रतं ॥ पतंति नर-
के घोरे-यावदाभूतसंप्लवं ॥ ८० ॥ वैष्णवव्यतिरिक्तानामुपवासाः
कृताकृताः ॥ अष्टौ महाद्वादशीनामेपधर्मः सनातनइति स्पष्टमेव
वैष्णवस्वरूपं भगवन्मन्त्रोपासकत्वलक्षणं तद्व्रतनिर्णयश्चोक्तः ॥ ते-
न वैष्णवसंप्रदायाअपि निरूपिताएव ॥ तन्मंत्रग्रहणस्य तदेकसा-
ध्यत्वात् ॥ संप्रदायविहीनाये मंत्रास्ते निष्फलामताइत्यादिभिः
पूर्वमेव व्यवस्थापितत्वात् ॥ माधवोऽपि एकादशीनिर्णयादौ ॥
एकादशी द्वादशी वा ऽधिका चेत्त्यज्यतां दिनं ॥ पूर्वं ग्राह्यं तूत्त-
रास्यादिति वैष्णवनिर्णयः ॥ द्वादशीमात्रवृद्धौ तु शुद्धाविद्धे व्यव-
स्थिते ॥ शुद्धा पूर्वोत्तरा विद्धा स्मार्तनिर्णयईदृशइत्यादौ तांस्ता-
न्निर्णयान् वैष्णवस्मार्तपरत्वभेदेन स्पष्टमेव व्यवस्थापयति ॥ तथा
दशमीवेधयुक्तस्तु यदि स्यादरुणोदयः॥ नैवोपोष्यं वैष्णवेन तद्दि-
नेकादशीव्रतमित्यादीनि वैष्णवविष्णुपरायणादिशब्दघटितानि गा
रुडादिवचनान्यपि तादृशव्यवस्थायां प्रमाणत्वेन माधवमयूख-
कारादिभिरुदाहृतान्येव ॥ किंच कालमाधवीये अरुणोदयवेध-
स्वरूपाणि निर्णीयोच्यते ॥ वैखानसपंचरात्रादिवैष्णवागमोक्तदी-

क्षां प्राप्तोवैष्णवः ॥ अतएव स्कंदपुराणे वैष्णवस्वरूपमभिहितं ॥ परामापदमापन्नोहर्षे वा समुपस्थिते ॥ नैकादशीं त्यजेयस्तु यस्य दीक्षाऽस्ति वैष्णवी ॥ समात्मा सर्वजीवेषु निजाचारादविच्युतः ॥ विष्ण्वर्पिताखिलाचारः सहि वैष्णवउच्यतइतीत्यादि ॥ तथा ॥ समयमयूखे तत्रारुणोदयवेधोवैष्णवपरः ॥ तद्वाक्ये वैष्णवग्रहणात् ॥ परिशेषात्सूर्योदयवेधोवैष्णवभिन्नपरः ॥ तएव स्मार्तपदेन व्यवह्रियंते ग्रंथेषु ॥ वैष्णवलक्षणं तु गारुडे वैखानसाद्यागमोक्तदीक्षां प्राप्तोहि वैष्णवः ॥ भविष्ये ॥ यथा शुक्ला तथा कृष्णा यथा कृष्णा तथोत्तरा ॥ तुल्ये ते मन्यते यस्तु सहि वैष्णवउच्यते इत्यादिमाधवधृतस्कांदवचनमपि तत्रोदाहृतं ॥ इत्थं च वैदिकतांत्रिकाद्यन्यतमवैष्णवसांप्रदायिकदीक्षाप्राप्तिरूपस्य वैष्णवलक्षणस्याभिधानपूर्वकं फलसहिततद्धर्मवर्णनं महानिबंधेषु दर्शितं ॥ तथा निर्णयसिंधौ प्रथमपरिच्छेदे ब्रह्मवैवर्त्ते ॥ प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि ॥ दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतमिति ॥ इदंच शिवभक्तादिभिरपि कार्यं ॥ वैष्णवोवाऽथ शैवोवा कुर्यादेकादशीव्रतमिति शिवधर्मोक्तेः ॥ वैष्णवोवाऽथशैवोवा सौरोप्येतत्समाचरेदिति सौरपुराणाच्चेति ॥ तत्रैव ॥ प्राच्यास्तु वैष्णवगृहस्थानां कृष्णापि नित्या ॥ नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ॥ पक्षेपक्षे च कर्तव्यमेकादश्यामुपोषणमिति नारदोक्तेः ॥ पुनस्तत्रैव गारुडे ॥ दशमीशेषसंयुक्तोयदि स्यादरुणोदयः ॥ नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतमिति ॥ धर्मसिंधौ च प्रथमपरिच्छेदे वैष्णवगृहिणां कृष्णैकादश्यपि नित्योपोष्या॥इदमेकादशीव्रतं शैववैष्णवसौरादीनां सर्वेषां नित्यं ॥ अकरणेप्रत्यवायश्रवणादित्यादिषु

वह्वोनिर्णयावैष्णवादिसंप्रदायभेदेनेदंपरतया व्यवस्थाप्यंते॥पुनर्निर्णयसिंधौ प्रथमपरिच्छेदे वृद्धवसिष्ठः ॥ उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैरिति ॥ तत्रैव विष्णुधर्मे ॥ न च्छिद्यात्तुलसीं विप्रोद्वादश्यां वैष्णवः क्वचित् ॥ देवार्थे तुलसीच्छेदोहोमार्थे समिधां तथा ॥ इंदुक्षये न दुष्येत गवार्थे तुतृणस्यचेति ॥ एवमनेकत्र प्रामाणिकनिबंधेषु पृथक्तया वैष्णवसांप्रदायिकानां व्रतादि तत्तन्निर्णयरूपाणि संप्रदायवर्णनानि संत्येवेति किंवहुना॥ नन्वत्र सर्वत्र वैष्णवशब्देन सत्सांप्रदायिकदीक्षावतामेव ग्रहणे तद्भिन्नानामपि द्वादशीविद्धव्रताद्याचरणशिष्टाचारोविरुध्येतेतिचेन्नैवं ॥ उक्तधर्मप्रवृत्त्यादिधृतवचनानुरोधात् संप्रदायतो वैष्णवमंत्रग्राहिणएव मुख्यं वैष्णवत्वं ॥ इतरेषां तु तद्धर्माचरणाद्गौणं वैष्णवत्वमिति सिद्धांतात् ॥ अतएव धर्माब्धिसारे प्रथमपरिच्छेदे ॥ तत्र व्रताधिकारिणोद्विविधाः ॥ वैष्णवाः स्मार्ताश्च ॥ तत्र यद्यपि यस्यदीक्षास्तिवैष्णवीत्यादिलक्षणयुक्तावैष्णवास्तद्भिन्नाः स्मार्त्तादति महानिबंधेषूक्तं ॥ तथापि स्वपारंपर्यप्रसिद्धमेव वैष्णवत्वं स्मार्तत्वं च वृद्धामन्यंते इति सिंधूक्तमेव सर्वदेशसर्वशिष्टपरिगृहीतं प्रचरतीति ॥ अन्यदेतत् ॥ तस्माच्छैववैष्णवसंप्रदायौद्वावप्यनादिसिद्धावेव ॥ अतएवाचारार्केऽपि ऊर्ध्वपुंड्रत्रिपुंड्रे शास्त्रतोनिर्णीयोच्यते ॥ एवं यथासंप्रदायं तिलकं कुर्यादिति ॥ शैववैष्णवान्यतरलक्षणस्वसंप्रदायाऽनुल्लंघनेन त्रिपुंड्रमूर्ध्वपुंड्रं वा कुर्यादित्यर्थः ॥ गौतमतंत्रेऽपि त्रिशत्तमाध्याये ॥ (श्लो० ३०) काश्मीरचंदनेनाथ भस्मना वा थ सुव्रत ॥ काश्मीरं शक्तिसंस्कारे चंदनं वैष्णवे मतं॥शैवे भस्म समाख्यातं मातृकामंत्रले-

खनइत्यारभ्य ( श्लो० ४२ ) दीयमानस्य मंत्रस्य दर्शितामंत्रसक्रियाः ॥ याः कृत्वा संप्रदायेन मंत्री वांछितमश्नुतइत्यंतेन स्पष्टतया शैववैष्णवसंप्रदायभेदो निर्णीतोऽस्ति ॥ किंच श्राद्धार्हब्राह्मणेष्वपि बहुग्रंथेषु भेदेन निर्दिश्यमानयोः शैववैष्णवयोरुत्तमत्वमुच्यते ॥ यथा धर्मसिंधौ तृतीयपरिच्छेदे॥शिवभक्तो विष्णुभक्तोभार्यायामृतुकालगः॥गुरुभक्तोज्ञाननिष्ठः सोमयाजी च सत्यवाक् ॥ सुशीलस्नातकयतिब्रह्मचारिणउत्तमाइति ॥ निर्णयसिंधौ ॥ शंभुध्यायी श्रीशपादाब्जसेवी पांथश्चैते तूत्तमाः संप्रदिष्टाइति ॥ अथ सारसंग्रहे पाद्मे ॥ ये कंठलग्नतुलसीनलिनाक्षमालाये बाहुमूलपरिचिन्हितशंखचक्राः ॥ ये वा ललाटफलके लसदूर्ध्वपुंड्रास्ते वैष्णवाभुवनमाशु पवित्रयंति ॥ वैष्णवाद्विविधाः प्रोक्ता बाह्याभ्यंतरतस्तथा ॥ बाह्यास्तु शंखचक्राभ्यामांतरावीतरागतइति ॥ एवमन्यत्राऽपि नारदपंचरात्रविष्णुपुराणश्रीभागवतादिषु तत्रतत्र द्रष्टव्यं ॥ अथैववैष्णवसंप्रदायानां वर्णितत्वेऽपि न भवत्संप्रदायोवर्णितइतिचेत् अस्मत्संप्रदायोऽपि वैष्णवसंप्रदायांतःपातित्वात्तद्वर्णनेन वर्णितएव ब्राह्मणप्रशंसनेन आंध्रादितद्भेदप्रशंसावत् ॥ उदाहृतानि चास्मत्सांप्रदायिकेष्वपि व्यापकानि अष्टाक्षरमथान्यं वा ये मंत्रं समुपासते॥ज्ञेयास्ते वैष्णवालोके विष्ण्वर्चनरताः सदेत्यादिलक्षणानि ॥ तथापि ब्राह्मणवशिष्ठन्यायावलंबात् कंठरवेणाप्यास्माकीनस्य रुद्रादिपारंपरिकाचार्यप्रवर्तितस्य पुष्टिमार्गादिशब्दवाच्यस्य संप्रदायस्य वर्णनं पुनर्दर्शयामः ॥ अस्ति पद्मपुराणादिषु वैष्णवसंप्रदायगणानायां रुद्रसंप्रदायस्यापि पृथग्वर्णनं श्रीब्रह्मरुद्रसनकवैष्णवाः क्षितिपा-

वनाः ॥ चत्वारस्ते कलौ भाव्याः संप्रदायप्रवर्त्तकाइत्यादौ ॥ किंच श्रुतिष्वपि त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्द्धनं ॥ उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतादिति ॥ अर्थस्तु ॥ सुगंधिं जीवोद्धारार्थकानेकपुण्यकर्माणं ॥ यथा वृक्षस्य संपुष्पितस्य दूराद्गंधोवात्येवं पुण्यस्य कर्मणोदूराद्गंधोवातीतिश्रुत्यंतरात् ॥ ननु किमस्य तादृशं कर्मेत्याकांक्षायामाह ॥ पुष्टीति ॥ पुष्टिमार्गाख्यसंप्रदायस्य सर्वत्र प्रवर्त्तनेन वृद्धिकर्तारं ॥ अत्रापि हेतुः ॥ त्र्यंबकंअर्थात्त्रिकालज्ञमिति ॥ नचात्र पुष्टिशब्देन शरीरादिपोषणं ग्राह्यं॥तस्य संहाराधिष्ठातृदेवकार्यत्वासंभवात् ॥ प्रत्युत वत्सापाकरणादिकर्मसु हिंसाऽभावाय प्रयुज्यमानैः रुद्रस्य हेतिः परिवोवृणक्तुइत्यादिमंत्रैस्तथैव निश्चयात् ॥ तादृशपोषणस्य वर्द्धनरूपत्वेन वर्द्धनवर्द्धकत्वकथने असामंजस्याच्च ॥ अतः ( स्कंध २ ) श्रीभागवतादिषु पोषणं तदनुग्रहइत्याद्युक्ताऽनुग्रहप्रधानपुष्टिमार्गएवाऽत्र पुष्टिशब्देनोच्यते॥अतएवोत्तरार्धे जीवानाममृतसंपादनेन मृत्युभयान्मुक्तिः फलत्वेनाम्नायते बंधनात् वृंतात् उर्वारुकमिव मृत्योः सकाशान्मुक्षीय मुक्तोभूयासं नत्वमृतान्मोक्षादिफलादिति तदर्थात्॥तथा अणोरणीयानित्यनुवाकेऽपि सर्वाणीयस्त्वसर्वमहीयस्त्वादिना ब्रह्मस्वरूपं निरूप्य एतादृशस्वरूपस्य कोवा प्रवक्ताऽनादिसिद्धः सर्ववेदोपदेशकआचार्यइत्याकांक्षायांआंच्यते ॥ योदेवानां प्रथमं पुरस्ताद्विश्वाधियोरुद्रोमहर्षिः ॥ हिरण्यगर्भं पश्यति जायमानं सनोदेवः शुभया स्मृत्याः संयुनक्त्विति ॥ तथा अग्निमानुवाकेष्वपि तस्य ब्रह्मविद्यानियामकत्वं भक्त्या भगवतः स्ववशत्वकरणात् अहंभक्तपराधीनइतिन्यायेन ब्रह्माधिपतित्वा-

दिकं च श्रूयते ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्मा-धिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवोमे अस्तु सदाशिवोमित्यादि ॥ए-वमन्यत्रापि श्रुत्यादिषु सहस्रशोऽस्तीति तत्रतत्र द्रष्टव्यं ॥ त-था नारदादीनामस्मदाचार्याणामाचार्यत्वप्रकारोऽपि प्रमाणदिग्द-र्शनपुरःसरं आचार्यश्चकइति प्रश्नस्योत्तरे प्रपंचितः ॥ एवं श्रीम-द्वल्लभाचार्यपर्यंताचार्यपरंपराद्वारा लोके-ऽस्मत्संप्रदायप्राप्तिप्रका-रोऽपि शांडिल्यसंहितादिवचनोपन्यासेन पुरैव प्रदर्शितः ॥ अथ शुकाचार्यादर्वाचीनानामस्मदाचार्याणां श्रीविष्णुस्वामिचरणादी-नां नामनिर्देशपूर्वकमप्यस्मत्संप्रदायस्यास्त्यनेकत्र वर्णनं ॥ यथा श्रीधरस्वामिना श्रीभागवतव्याख्यायामनेकत्र विष्णुस्वामिकृतका रिकाः प्रमाणत्वेनोदाह्रियंते ॥ अथ विद्यारण्येनापि सर्वदर्शन-संग्रहे रसेश्वरदर्शननिरूपणे शरीरनित्यत्वनिर्णये कथ्यते ॥ (पृ० १०१पं०१४) नचेदमदृष्टचरमिति मन्तव्यं ॥ विष्णुस्वामिमता-नुसारिभिर्नृपश्चास्यशरीरस्य नित्यत्वोपपादनात् ॥ तदुक्तं सा-कारसिद्धौ ॥ सच्चिन्नित्यनिजाचिन्त्यपूर्णानंदैकविग्रहं ॥ नृपञ्चा-स्यमहं वंदे श्रीविष्णुस्वामिसम्मतमिति ॥ नन्वेतत्सावयवं रूपवद-वभासमानं नृकंठीरवाङ्गं सदिति न संगच्छतइत्यादिनाऽऽक्षेपपुरः सरं सनकादिप्रत्यक्ष सहस्रशीर्षापुरुषइत्यादिश्रुति तमद्भुतं बाल-कमंबुजेक्षणं चतुर्भुजं शंखगदाद्युदायुधमित्यादिपुराणलक्षणेन प्र-माणत्रयेण सिद्धं नृपञ्चाननाङ्गं कथमसत् स्यादिति सदादीनि वि-शेषणानि गर्भश्रीकांतमिश्रैर्विष्णुस्वामिचरणपरिणतांतःकरणैः प्र-तिपादितानीत्यादि ॥ एवं ग्रंथांतरेष्वपि तत्रतत्र प्रामाणिकप्रणीते-षु सहस्रशोऽस्त्येवेति तदनेकग्रंथारण्यसंचरणलीलाशीलानां वि-

द्वत्केसरिणां ज्ञातचरमेव निखिलमित्यलं विस्तरेण ॥ किंच ॥ शंकराचार्यप्रभृतयोप्यानंदमयाद्यधिकरणेषु आनंदमयः परमात्मैवेत्यादिरूपानतिप्राक्तनान् प्राचीनवृत्तिकारादिभिर्व्याख्यातानस्मत्सिद्धांतानेवानूद्य इदंत्विह वक्तव्यमित्यादिना दूषयंतीति निःसंदिग्धमस्मत्सिद्धांतस्यातिप्राचीनत्वं वक्तृग्रंथवर्णितत्वंच ॥ तद्वत्तदूषणोद्धारस्तु श्रीमदाचार्यादिभिर्भाष्यादिषु कृतएवेति शुभं ॥ अपिचास्मदभिमतोवेदांतराद्धांतः श्रुतिगीतासूत्रादिषु सर्वत्र निरूपितोविजयते ॥ अतोयदि क्वचिदेवास्य संप्रदायस्य मूलं स्यात्तर्हि तन्मात्रं तु दर्शयित्वा विरमाम ॥ इहतु ॥ प्रमाणानंत्यतः सर्वं लिखितुं नैव शक्यते ॥ तथापि तव संतुष्ट्यै दिङ्मात्रं दर्शितं मया ॥ १ ॥ सर्वग्रंथेष्विति वदन्सर्वज्ञः स्वमुखाद्भवान्॥ बौद्धवैभवशून्यैस्तद्दीयतां कथमुत्तरं ॥ २ ॥

## ॥ अथ तृतीयस्यावांतरत्रिकोटिकसंशयघटितश्चतुर्थः प्रश्नः ॥ ४ ॥

भवदाचार्येभ्यःपूर्वाचार्याव्यासादयोन्यूनाःसमाअधिकावा ॥ २० ॥

### ॥ उत्तरं ॥

व्यासादिभ्योस्मदाचार्यान्यूनाअंशेन केन चित् ॥ अंशेन केनचित्तुल्याः कुतश्चिच्चांशतोऽधिकाः ॥ १ ॥ तथाहि ॥ अस्मत्पूर्वाचार्यैर्व्यासाद्यनुसारेणैव धर्मब्रह्मणी निर्णीय जीवोद्धारार्थं प्रतितंत्रार्थानां

प्रवर्त्तितत्वेन तेस्तेषां बहुस्थलेषु स्वगुरुत्वकथनेन चास्मदाचार्याणां स्वदृष्ट्या व्यासादितोन्यूनत्वमस्त्येव ॥ अथ तैर्यथा सांख्यपातंजलतर्कदिगंबराद्यर्वाचीनकुराद्धांतनिराकरणपूर्वकं जीवोद्धारार्थं ब्रह्मचतुर्लक्षण्यादिकं प्राणायि ॥ तथा अस्मदाचार्यैरपि तदर्थं तद्भाष्यसुबोधिनीतत्त्वदीपनिबंधप्रभृतयोमहत्तराग्रंथाअनेकार्वाचीनमायावादादिकुतर्कनिरासपूर्वकं प्रणीताः ॥ तादृशवाङ्मनसागोचरात्यलौकिकार्थनिरूपणदर्शनेन व्यासादिवत्तेषां सर्वज्ञत्वमपि निर्मत्सराणां सतां चेतसि स्वयमेव निश्चीयते ॥ तथा इदानीं प्रत्यक्षतस्तद्दर्शनाभावेऽपि व्यासादिवद्बहुजनमान्यत्वमप्यनुभूयतएव ॥ अतोऽस्मदाचार्याणां व्यासादिभिस्तुल्यत्वमपि सुस्थं ॥ तथा व्यासादिकृतानेकग्रंथसद्भावेऽपि केषांचिच्चतुर्लक्षण्यादीनां सर्वथा स्वतोऽवबोधाक्षमार्थत्वात्तत्राऽप्रविशतां सुगमेष्वपि पुराणादिषु विविधविचित्रदेवादिवर्णनदर्शनेनातिभ्राम्यदल्पमतीनां बहुलकलिकालकलुषकलहकवलितसकलसत्कर्मज्ञानादीनां अस्मादृशां वारंवारमपारसंसारवारिधितरंगैरितस्ततउत्क्षिप्यमाणानामतिजडमतितया व्यासादिभिरपि बोधयितुमशक्यानां जनानां परमकरुणया भाष्यादिग्रंथद्वारा निखिलश्रुतिगीताब्रह्मसूत्रश्रीभागवतायर्थावबोधहस्तावलंबदानेन सहसैव श्रीमन्नंदसूनुपदारविंदसेवाख्यायां सुदृढनावि स्थापनेनास्त्यस्मदाचार्याणां व्यासादितोप्याधिक्यं ॥

---

## ॥ अथ पंचमोऽवांतरः प्रश्नः ॥५॥

॥ न्यूनाश्चेत्सकलधर्ममार्गविप्लवः स्यात् ॥ समाश्चेत्तदा तत्कर्तृक-पंथानां प्रचारः सर्वत्र स्यात् तत्कुतोन ॥ २१ ॥

( अत्राद्यकोटेरयमर्थः स्यात् ॥ यदि भवदाचार्येभ्योव्यासादयोन्यूनास्तर्हि तन्माहात्म्यादिप्रतिपादकस्य शास्त्रस्य विरोधः ॥ सकलधर्ममार्गाणां व्यासादिकर्तृकत्वात्तेषां न्यूनपुरुषकर्तृकत्वापत्त्या विप्लवश्च भवेदिति ॥ )

## ॥ उत्तरं ॥

आध्यात्मिकस्य ज्ञानस्य सन्मंत्रस्य च दानतः ॥ भगवत्स्थापकाः साक्षादाचार्याः सर्वतोऽधिकाः ॥ १ ॥ परब्रह्मतया सर्वोत्तमास्ते सर्वथा जनैः ॥ मतव्याइति धर्मस्य मार्गोव्यासादिनिर्मितः ॥ २ ॥ अतोव्यासाद्यनुज्ञातः स्वाचार्योत्कर्षचिंतने ॥ नैव विप्लवगंधोऽपि धर्ममार्गस्य कस्य चित् ॥ ३ ॥ तथाहि ॥ आध्यात्मिकज्ञानदातुराचार्यस्य सर्वतः प्रथमाभिवाद्यत्वमाह द्वितीयाध्याये मनुः ॥ ( श्लो० ११७ ) लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेवच॥आददीत यतोज्ञानं तं पूर्वमभिवादयेदिति ॥ अत्र कुल्लूकभट्टः ॥ लौकिकमर्थशास्त्रादिज्ञानं वैदिकंवेदार्थज्ञानं आध्यात्मिकंब्रह्मज्ञानं यस्मात्तु गृह्णाति बहुमान्यमध्ये स्थितं तं प्रथममभिवादयेत् ॥ लौकिकादिज्ञानदातॄणामेव त्रयाणां समवाये यथोत्तरं मान्यत्वमिति व्याचख्यौ ॥ पुनस्तत्रैव ॥ ( अ० २ श्लो० १४४ ) यआवृणोत्यवितथं ब्रह्मणा श्रव-

णावुभौ ॥ स माता सपिता ज्ञेयस्तं न द्रुह्येत्कदाचनेति ॥ तथा ॥ ( श्लो० १४६ ) उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता॥ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतमिति॥ तथा॥ ( श्लो० १५० ) ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता ॥ बालोऽपि विप्रो वृद्धस्य पिता भवति धर्मतइति ॥ तथा ( श्लो० १५४ ) अज्ञो भवति वै बालः पिता भवति मंत्रदः ॥ अज्ञं हि बालमित्याहुः पितेत्येव तु मंत्रदमिति ॥ नचेदं मनूक्तं सर्वं विद्यागुर्वभिप्रायेणैवेतिशंक्यं ॥ एतत्सर्वं निरूप्याग्रे विद्यागुरुष्वेतदेवेति तत्र तथावृत्त्यतिदेशात् ॥ अन्यथा ऽतिदेशे प्रयोजनाभावात ॥ अतिदेशवाक्यं तु ( श्लो० २०६।२०७ ) विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु ॥ प्रतिषेधत्सु चाधर्मान् हितं चोपदिशत्स्वपि ॥ श्रेयस्सुगुरुवद्वृत्तिं नित्यमेव समाचरेत् ॥ गुरुपुत्रेषु चार्येषु गुरोश्चैव स्वबंधुष्विति ॥तस्मात्पूर्ववाक्येष्वाध्यात्मिकज्ञानदोमंत्रोपदेष्टा आचार्योऽभिप्रेतइति ज्ञायते ॥ याज्ञवल्क्यस्मृतौ (अ० २ ) साधारणमातृकाप्रकरणे (श्लो० १३) अर्थशास्त्रादित्यस्य मिताक्षरायां ॥ आचार्यं च प्रवक्तारं पितरं मातरं गुरुं ॥ न हिंस्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनइति मनुवचने गुरुभ्यामपि मातापितृभ्यां गुरुप्रवक्तारौ पृथगुक्त्वा ततोऽप्याचार्यस्य भेदेन निर्देशाच्च ॥ गणनाया प्रथमोपदेशेन तस्य सर्वेभ्योऽपि मुख्यत्वज्ञापनाच्च ॥ नचैवं गुरुसत्कारविधिवाक्यानि आचार्ये न प्रवर्त्स्यंते तस्य गुरुत्वाभावादिति वक्तव्यं ॥ तत्रापि गुरुशब्दप्रवृत्तेर्व्यासेन दर्शितत्वात् ॥ यथा याज्ञवल्क्यस्मृतौ (अ० ३) गुरुतल्पगप्रायश्चित्तप्रकरणे ( श्लो० १ ) तप्ते यः शयने सार्धमित्यस्य मिताक्षरायां ॥ व्यासेनाप्यत्रान्यत्र

प्रयोगोदर्शितः ॥ गुरवोमातृपितृपत्न्याचार्यविद्यादातृज्येष्ठभ्रातर-
ऋत्विजोभयत्राताऽन्नदात्ताचेति ॥ नचानेकार्थकल्पनादोषः॥ गुरु-
शब्दस्य प्रवृत्तिनिमित्तभूतायाः पूजार्हतायाः सर्वत्रानुस्यूतत्वात् ॥
दर्शितं तस्याः प्रवृत्तिनिमित्तत्वं योगीश्वरेण एते मान्यायथापूर्वमे-
भ्योमाता गरीयसीति मान्याइत्युक्रम्य गरीयसीत्युपसंहारं कुर्वता॥
नच उपाध्यायाद्दशाचार्यआचार्याणां शतं पितेत्युपाध्यायादधि-
काचार्यात्पितुरतिशयितत्ववचनात् सएव मुख्यइतिवाच्यं ॥ आ-
चार्येऽप्यतिशयितत्वस्याविशिष्टत्वात् ॥ उत्पादकब्रह्मदात्रोर्गरीयान्
ब्रह्मदः पितेति ॥ गौतमेनाप्युक्तं ॥ आचार्यः श्रेष्ठोगुरूणामिति ॥
किंच॥ यदि अतिशयितत्वमात्रेण मुख्यत्वमुच्यते तर्हि सहस्रमिति
वचनान्मातुरेव गुरुत्वं स्यात्॥ तस्मात्सर्वे गुरवइत्याद्याह विज्ञाने-
श्वरः ॥एवं तत्र परब्रह्मप्रापकाणामाचार्याणां सर्वाधिकत्वेनाऽदर-
णीयत्वं निरूप्यतएव ॥ छांदोग्येचमधुविद्यांते श्रूयते ॥ यद्य-
प्यस्माइमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततोभूयइ-
ति ॥ नचेदं मधुविद्योपदेशमात्रविषयं मंतव्यं ॥ एतस्य आध्या-
त्मिकोपदेष्टाचार्यपरतायाः शंकराचार्यैरपि उपदेशसहस्रीप्रथमग-
द्यादिपुस्वीकारात् ॥ तथातापनीयेऽपि॥ समद्वीपवती भूमिर्दक्षिणा-
र्थं न कल्पतइति ॥ श्वेताश्वतरे ॥ ( पृष्ठ ३७४ ) यस्य देवे परा
भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिताह्यर्थाः प्रकाशंते म-
हात्मनइति ॥

प्रावाचा मनसा कर्मणा वा ॥ यथैवते नगुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तदिति ॥ यथातमनाद्रियमाणाः शिष्या गुरुणा न पालनीयास्तथा तच्छ्रुतमपि ताञ्छिष्यान्स्वफलदानेन न पालयतीत्यर्थः ॥ देववद्गुरोः पूजनीयत्वात्तस्मिन्प्रदक्षिणादयोयुज्यंते इति ॥ अत्रैव गुरुसंतोषस्य श्रेयोहेतुत्वमन्वयव्यतिरेकाभ्यां पुराणसारेऽभिहितं ॥ गुरावतुष्टे ऽतुष्टाः स्युः सर्वे देवाद्विजोत्तमाः ॥ तुष्टे तुष्टायतस्तस्मात्सर्वदेवमयोगुरुः ॥ श्रेयोऽर्थीयदिगुर्वाज्ञां मनसाऽपि नलंघयेत् ॥ गुर्वाज्ञापालकोयस्माज्ज्ञानसंपत्तिमश्नुतइति ॥ तत्रैव द्वितीयाध्याये हारीतः ॥ एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ॥ पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा त्वनृणी भवेदिति ॥ एकादशस्कंधे ॥ आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ॥ नमर्त्यबुध्या सेवेत सर्वदेवमयोगुरुः ॥ आदित्यपुराणे ॥ पाद्मे रुष्टे हरस्त्राता हरे रुष्टे हरिस्तथा ॥ हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ सप्तमस्कंधे ( अ० १५ श्लो० २६ ) यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ॥मर्त्यासद्धीः श्रुतं तस्य मन्ये कुंजरशौचवदिति ॥ केचित्त्विह भक्तिर्न स्यात्कृतं तस्येति पठंति ॥ सारसंग्रहे नारायणसंहितायां ॥ आचार्याधीनवृत्तिस्तु यावज्जीवं भवेत्तदा ॥ यावच्छरीरपातं तु ह्ययमावर्तयेन्मनुमिति ॥ अतआचार्येषु सर्वेभ्योऽप्याधिक्यबुध्या पुरुषोत्तमवद्भक्तिः कर्त्तव्यैव ॥ तेष्वितरसाधारण्यबुद्धिलक्षणबाधदर्शने सर्वथा ज्ञानानुदयप्रसगात् ॥ यथोदाहृतमाचारमाधवे ( अ० १ श्लो० ३२ ) व्याख्याने ॥ गुरोरनिष्टाचरणं गुरोरिष्टविवर्जनं ॥ गुरोश्च सेवाऽकरणं

---

सूयेत

ज्ञानानुत्पत्तिकारणं ॥ आचार्यनिंदाश्रवणं तद्बाधस्य च दर्शनं ॥ विवादश्च तथा तेन ज्ञानानुत्पत्तिकारणमिति ॥ धर्मसिंधौ तृतीयपरिच्छेदपूर्वार्द्धे ॥ कलौ गुरूणां भजनमीशभक्त्यधिकं स्मृतमिति ॥ अतः स्वाचार्येषु साक्षात्पुरुषोत्तमाभेदेन सर्वाधिकोत्कर्षबुद्धिकरणस्यैव मुख्यधर्ममार्गत्वात्तस्यैव सर्वधर्ममार्गमूलत्वात्तदभावे ऽनुष्ठितानामपि सर्वधर्माणां फलानुदयाच्चास्माभिरस्मदाचार्येषु सर्वनिरूपितोत्कर्षबुद्धिकरणे न कोऽपि धर्ममार्गविप्लवगंधः ॥

अथ समाश्चेत्तदा तत्कर्तृकग्रंथानां प्रचारः सर्वत्र स्यात्त-
त्कुतोनेति द्वितीयकोटेरयमर्थो भवेत् ॥

( यदिव्यासादयोभवदाचार्यैस्तुल्यास्तर्हि व्यासादिकृतभारतादिग्रंथवद्भवदाचार्यकृतग्रंथानां सर्वत्र प्रचाराभावे कोहेतुरिति ॥ अत्र तत्कर्तृकेतितच्छब्देनास्मदाचार्यपरामर्शः प्र[illegible]विरुद्धः ॥ समाश्चेदिति व्यासादिविशेषणसान्निध्येन व्यासपर[illegible]ामर्शस्यैव संभवात् ॥ तेषामेव शीघ्रोपस्थितिकत्वात् ॥ [illegible]था ॥ [illegible] स्यात्तत्पदयोर्वैयर्थ्यं सर्वत्रप्रचारःकुतोनेत्येतावतैव [illegible]विहात् ॥ तदि[illegible]ते क्लीबप्रयोगोऽपि प्रमादात् ॥ परामृष्टव्यस्य[illegible]रस्य पुंस्त्वात् ॥ अव्ययत्वादिप्रकल्पनं तु क्लिष्टं ॥ आर[illegible]तं

॥उत्तरंतु॥

नहि सादृश्ये तद्गतसर्वधर्मवत्त्वमुपमेये संभवति ॥ त[illegible]भत्वे सति तद्गतभूयोधर्मवत्त्वस्य सादृश्यत्वात् ॥ अतोग्रंथप्रचाररूपधर्माभावेऽक्षतिः ॥ किंच ग्रंथप्रचाराभावेऽपि न महात्मनां तौल्य·

हानिः ॥ अन्यथा वेदांताचार्यतया व्यासतुल्यानां व्यासेन स्वशास्त्रे समुदाहृतसिद्धांतानामप्याश्मरथ्यौडुलोमिकाशकृत्स्नादीनामिदानीं तत्कर्तृकग्रंथप्रचाराभावादाधर्म्यं प्रसज्येत ॥ तेषां वेदांताचार्यत्वंतु श्रीमदाचार्यरामानुजाचार्यपूर्णप्रज्ञाचार्यनिंबार्कभास्करशंकराचार्यनीलकंठविज्ञानेंद्रभिक्षुप्रभृतिभिः प्रायः सर्वैरपि ब्रह्ममीमांसाभाष्यकारैस्तत्तत्सूत्रव्याख्याने इत्यमुकआचार्योमन्यते इत्यमुकआचार्योमन्यतइत्येवं लिखद्भिः स्वीकृतमेव ॥ अपिच ॥ किमत्र प्रचारशब्देन प्रामाण्याभ्युपगमपूर्वकाध्ययनादिकं विवक्षितमाहोस्वित्तदभावेऽपि ग्रंथानां पर्यालोचनादिमात्रं ॥ तत्राद्यश्चेत् व्यासकर्तृकग्रंथानामपि नहि तादृशः प्रचारः सर्वत्र मनुष्यसामान्येऽस्ति ॥ नचैवमपि वेदप्रामाण्यवादिषु तु सर्वत्र तत्प्रचारोऽस्त्येवेति वाच्यं ॥ वेदप्रामाण्यवादिभिरपि पूर्वमीमांसकतार्किकादिभिर्दर्शनांतराभिमानिभिस्तत्त्वतोव्यासदर्शनप्रामाण्यानंगीकारात् ॥ यथा जैमिनिना नवमाध्याये कर्मणएव फलसमर्पकत्वं निर्णीतं नत्वीश्वरस्य ॥ यथाच तार्किकैरीश्वरस्य निमित्तत्वमात्रमुरीकुर्वद्भिः ( अं० १ पाद ४ सूत्र २३ ) प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधादित्यादौ व्यासोक्तमपीश्वरस्य जगदुपादानत्वं नांगीक्रियतइति दिक् ॥ यदितु व्यासदर्शनानुयायिषु तु सर्वेषु तत्कृतग्रंथानां तथा प्रचारोऽस्त्येवेत्युच्यते ॥ तदातु तदंतःपातिष्वस्मत्संप्रदायानुरोधिष्वस्मदाचार्यकृतग्रंथानामपि तथा प्रचारोऽस्त्येवेति तुल्यं ॥ अथ द्वितीयपक्षश्चेत्तर्हि औदासीन्येन प्रियतया द्वेष्यतया वाऽस्मदाचार्यकृतग्रंथपर्यालोचनमन्यत्रापि भवेदेव ॥ अतएव भवताऽपि स-

प्रमप्रधानप्रश्नस्यावांतरचतुर्थप्रश्ने लिख्यते ॥ प्रमाणं चेत्तदा भव· दीयरचितग्रंथेषु कुतोविरुद्धतया वर्णनमिति ॥ तथाभवद्गुरुतया श्रूयमाणेन सदानंदगिरिणा ऽपि इदानीं प्रारब्धे सहस्राक्षनामके स्वग्रंथे अस्मन्मतभास्करोपरि किंचिद्दूषणधूलिनिक्षेपआरब्धइति किंवदंती श्रूयते ॥ अतोऽस्माकं ग्रंथप्रचारे तादृशभवत्प्रश्नएव प्र· माणं ॥ कथमन्यथा भारतभागवतादिटीकाविरोधोभवता ऽपर्या· [illegible]र्येषु [illegible]ग्रंथेष्ववगतः ॥ अनवगमे च कथं धाष्टर्येन पृष्टं स्या· लोचितेष्वस्मद्ग्रं[illegible] महात्मनां निंदाफलकेन कुतर्केण ॥ य· त् ॥ अतः कृतमीदृशेन [illegible]तुः ॥ ( श्लो० २१ ) तथा स्मरंति ते था प्रथमाध्याये बृहत्पराशरे [illegible] ॥ अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे ऽप· धर्मे कल्पे कल्पांतरांतरे ॥ अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे ऽप· रे इत्यादिना प्रतियुगं धर्मवैलक्षण्यात्तदातदा तत्तत्प्रवर्त्त्यर्थं धर्म· प्रवर्तकानामाचार्याणामाविर्भावमुक्ता ऽऽह ॥ ( श्लो० ३१ ) यु· गे युगेषु ये धर्मास्तेषु धर्मेषु ये द्विजाः ॥ तेषां निंदा न कर्तव्या युगरूपाद्विजोत्तमाइति ॥ पराशरमाधवीये च प्रथमाध्याये कूर्म· पुराणे ॥ न निंद्योगिनः सिद्धान् व्रतिनोवायतींस्तथेति ॥

## ॥ अथास्यैव संशयस्य चरमकोटिघटितोऽवांतरः षष्ठः प्रश्नः ॥ ६ ॥

अधिकाश्चेत्तदाप्रमाणं वक्तव्यं ॥ २२ ॥

### ॥उत्तरं॥

अत्र जिज्ञासितं तु व्यासादिनिरूपिते ऽस्मदाचार्यनिष्ठोत्कर्षे प्र· मा। भवेत् तथापि भवदाचार्येभ्यः पूर्वाचार्याव्यासादयोन्यू·

हानिः ॥ अन्यथा वेदांताचार्यतया व्यासतुल्यानां व्यासेन स्व-शास्त्रे समुदाहृतसिद्धांतानामप्याश्मरथ्यौडुलोमिकाशकृत्स्नादीनामिदानीं तत्कर्तृकग्रंथप्रचाराभावादाधर्म्यं प्रसज्येत ॥ तेषां वेदांताचार्यत्वंतु श्रीमदाचार्यरामानुजाचार्यपूर्णप्रज्ञाचार्यनिंबार्कभास्करशंकराचार्यनीलकंठविज्ञानेंद्रभिक्षुप्रभृतिभिः प्रायः सर्वैरपि ब्रह्ममीमांसाभाष्यकारैस्तत्तत्सूत्रव्याख्याने इत्यमुकआचार्योमन्यते इत्यमुकआचार्योमन्यतइत्येवं लि[illegible] ॥ तस्मात्॥ [illegible]न्यं सामान्यमाकृतमेव ॥ अपिच ॥ किमत्र प्र[illegible] [illegible]भ्युपगमपूर्वकाध्ययनादिकं विवक्षि[illegible] [illegible]थानां पर्यालोचनादिमा[illegible]

[illegible]न्तरः प्रश्नः ॥ ७॥

[illegible]श्चेदुपदेश्यास्तदा सच्छूद्राअसच्छूद्रावा ॥ साधारणाश्चेदधमाः कुतोनोपदेश्याः ॥ उपदेश्याश्चेत्तैः सह वैष्णवत्वेन तुल्यता न्यूनता वा ॥ न्यूनत्वं चेत्किं भवदीयदीक्षया ॥ तुल्यत्वं चेत्तत्कृतपाकादिकं कुतोनांगीक्रियते ॥ अंगीक्रियतएवेति चेत्तर्हि वैष्णवदीक्षायां सर्वे वर्णाः समाइत्युच्यमानाभवंतोधन्याः ॥ २३ ॥

## ॥ उत्तरं ॥

सदसच्छूद्रसामान्यमुपदेश्यतया ऽऽदृतं ॥ शास्त्रे सामान्यतः प्रोक्ता शूद्रस्याप्यधिकारिता ॥ १ ॥ किं वर्णनिष्ठइत्यत्र पुरैवैतत्प्रकाशितं ॥ किंचित्प्रपंच्यते प्राप्ताऽवसरत्वात्पुनर्मया ॥ २ ॥ अस्ति सदसच्छूद्रसामान्यस्य भगवच्छरणागत्या स्वस्य वैष्णवत्वसंपादनपूर्वकं तत्सेवादिसद्धर्माचरणेऽधिकारः ॥ यथाऽऽह भगवान् ॥ मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ॥ स्त्रियोवैश्यास्तथा

शूद्रास्तेऽपि यांति परां गतिमिति ॥ श्रीभागवतेऽपि एकादशस्कंधे द्वादशाध्याये उद्धवं प्रति सएव ॥ (श्लो० १) न रोधयति मां यो गइत्यादिना योगादीनां सांप्रदायिकसद्गुरुसंगव्यतिरिक्तानां स्व- प्राप्यसाधकत्वमुक्त्वाऽऽह ॥ (श्लो० २) सत्संगेन हि दैतेयायातु- धानामृगाः खगाः ॥ गंधर्वाप्सरसोनागाः सिद्धाश्चारणगुह्यकाः ॥ ॥२॥ विद्याधरामनुष्येषु वैश्याः शूद्राः स्त्रियोंऽत्यजाः॥रजस्तमःप्र- कृतयस्तस्मिंस्तस्मिन्युगे ऽनघ ॥४॥ बहवोमत्पदं प्राप्तास्त्वाष्ट्रकाया- धवादयइत्यादि ॥ नचैषां धर्मोपदेशानधिकारोन शूद्राय मतिं द- द्यादितिमनुवचनानुसाराच्छंक्यः॥वचनस्योपसत्तिशून्यशूद्रविषय- त्वात् ॥ याज्ञवल्क्यस्मृतौ (अ० ३) महापातकप्रायश्चित्तप्रकरणे (श्लो० १) शूद्रोऽधिकारहीनोपि कालेनाऽनेन शुध्यतीत्यस्य मिताक्षरायां ॥ यत्तु मानवं नचास्योपदिशेद्धर्मं नचास्य व्रतमा- दिशेदिति शूद्रस्य धर्मव्रतयोरुपदेशनिषेधपरं वचनं ॥ तदनुपसन्न- शूद्राभिप्रायं ॥ तथा ॥ यत्तु गौतमवचनं प्रतिलोमाधर्महीनाइति तदुपनयनादिविशिष्टधर्माभिप्रायमिति विज्ञानेश्वरोक्तेः ॥ तस्मा- दस्यापि सर्वधर्ममार्गवर्तित्वं संभवत्येव ॥ अत्रैव मिताक्षराया- मुदाहृतात् तस्माच्छूद्रं समासाद्य सदा धर्मपथेस्थितं ॥ प्राय- श्चित्तं प्रदातव्यं जपहोमविवर्जितमित्यंगिरः स्मरणात् ॥ धर्मप्रवृ- त्तौ ॥ तथा शूद्रं समासाद्य सदा धर्मपुरःसरमिति ॥ उत्तरार्द्धं तदे- व ॥ निर्णयसिंधौ प्रथमपरिच्छेदे व्यासः ॥ शूद्रोवर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ॥ वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विनेति ॥ तत्रैव तृतीयपरिच्छेदे श्राद्धप्रकरणे महाभारते राजधर्मेषु॥क्षत्रक्ष- त्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ॥ कथं धर्माश्चरिष्यंति सर्वे-

विषयवासिनइत्युक्ता वेदधर्मक्रियाश्चैव तेषां धर्मोविधीयते ॥पि-
तृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ॥ दानानि च यथाका-
लं द्विजेभ्योविसृजेत्सदेति ॥ तत्रैव मात्स्ये ॥ मंत्रवर्ज्यं हि शूद्रस्य
सर्वमेव विधीयतइति ॥ अत्र शूद्रस्याऽपि सदा धर्माचरणस्योक्त-
त्वात्तस्याप्युपदेशउक्तरीत्या भगवत्सेवाद्यधिकारसंपादनाय ॥ इ-
हांगिरःस्मरणे जपवर्जनं गायत्र्यादिवैदिकमंत्राणामेव ॥ पौराणा-
दिमंत्राणां जपे तु शूद्रस्याप्यधिकारात् ॥ अतएवाचारमाधवे
( श्लो० १ ) अथातोहिमशैलाग्रइत्यस्य व्याख्याने ॥ त्रैवर्णिक-
मात्राधिकारिकाहि श्रुतिः प्रसिद्धा ॥ ॐकारश्च तथाविधः ॥
सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छंतीतिश्रुतेः ॥ अथश-
ब्दस्य पौरुषेयग्रंथाना च सर्ववर्णविषयत्वात् सएव तेषु योग्य-
इति ॥ निर्णयसिंधौ श्राद्धप्रकरणे पाद्मे ॥ नहि वेदेष्वधीकारः
कश्चिच्छूद्रस्य विद्यते ॥ पुराणेष्वधिकारोमे दर्शितोब्राह्मणैरिहेति ॥
स्वमेश्वरकृते भक्तिमीमांसाभाष्येऽपि प्रथमाध्याये ( सू० ९ )
तद्वतः प्रतिपत्तीतिसूत्रव्याख्याने गीतायाभगवद्वाक्यत्वेन वेदत्वप्र-
तिपादनाय गीतासुगीताकर्त्तव्येति पाद्मवचनमुदाहृत्योच्यते ॥
नच शूद्राणामश्रवणप्रसंगः ॥ भारतश्रवणाभ्यनुज्ञानेनैव तदुपप-
त्तेः ॥ प्रणवादिस्तुत्यादिवत् ॥ तद्विहायेतिचेन्न लक्ष्यताऽपरिपूर्त्तेः॥
तथाचोक्तमाचार्यैः ॥ तानेव वैदिकान्मंत्रान् भारतादिनिवेशिता-
न् ॥ स्वाध्यायनियमं हित्वा लोकबुध्या प्रयुंजते इतीति ॥ तस्मा-
च्छुत्यनुसारिणामपि पुराणतंत्रादिप्रसिद्धानां भगवन्मंत्राणामुपदे-
शग्रहणद्वारा भगवच्छरणागमनं भगवते आत्मनिवेदनं च स-
दसच्छूद्रसामान्यस्याऽवश्यकमेव ॥ अतएव लघुविष्णुः ॥ शूद्र-

श्चतुर्थोवर्णस्तु सर्वसंस्कारवर्जितः ॥ उक्तस्तस्य तु संस्कारोद्विजे-
ष्वात्मनिवेदनमिति॥यमोऽपि तृतीयाध्याये (श्लो० १० ) दासना-
पितगोपालकुलमित्रार्धसीरिणः॥एते शूद्रास्तु भोज्यान्नायश्चात्मा-
नं निवेदयेदिति॥आत्मनिवेदकस्य शूद्रस्याप्यामान्नं भोज्यमित्य-
र्थः ॥आत्मनिवेदनस्वरूपं तूच्यते सारसंग्रहे नारायणसंहितायां ॥
मंत्ररत्नानुसंधानपूर्वकं तस्य सादरं॥ भगवत्पादयोरात्मनिक्षेपस्त्या-
गउच्यते ॥ मंत्रार्थतत्त्वविदुषोयागतंत्रे नियोजयेत्॥ आचार्या-
धीनवृत्तिस्तु यावज्जीवं भवेत्तदा॥ यावच्छरीरपातं तु द्वयमाव-
र्तयेन्मनुमिति ॥ मंत्रद्वयमस्मत्संप्रदाये शरणमंत्रात्मनिवेदनमंत्र-
रूपं ॥ अतः शूद्रसामान्येनापि भगवन्मंत्रोपदेशोग्राह्यः ॥ तथा
गुरुसकाशात् श्रीभागवतगीतामहाभारतादीनां स्वाचार्यादिकृत-
ग्रंथानां च श्रवणेन भक्तिदार्ढ्याय ब्रह्मज्ञानमपि संपादनीयं भ-
गवत्सेवादिकं च कार्यं ॥ शूद्रस्यैतच्छ्रवणाधिकारस्तु विष्णुसह-
स्रनामभाष्ये शूद्रः सुखमवाप्नुयादित्यादौ शंकराचार्यैरपि दर्शि-
तः ॥ तथा ॥ देवोऽसुरोमनुष्योवा यक्षोगंधर्वएव च ॥ भजन्मुकुं-
दचरणं स्वस्तिमान् स्याद्यथा वयमित्यादिभिः सप्तमस्कंधसप्तमा-
ध्यायादिवचनैर्भगवद्भजनस्य सर्वाधिकारकत्वं ॥ अन्यत्र स्पष्ट-
तया चतुर्णामपि वर्णानां गुरुकृष्णार्चनं परमित्यादिषु शूद्रस्यापि
भगवद्भजनाधिकारित्वं सदसच्छूद्रसाधारण्येन वर्णितमेवेत्यलं
विस्तरेण ॥ अतः सदसच्छूद्रसामान्यमुपदेश्यं ॥ अथ यदुक्तं
साधारणाश्चेदधमाः कुतोनोपदेश्याइति ॥ तदसंगततरम् ॥ तथा-
हि ॥ किमत्राधमशब्देनासच्छूद्राविवक्षिताउत चांडालादयोंऽत्य-
जाः ॥ नाद्यः ॥ सदसच्छूद्रसामान्यस्योपदेशस्वीकारे कुतोनो-

पदेश्याइत्यनुपदेश्यत्वे हेतुप्रश्नायोगात् ॥ अनुपदेश्यत्वस्यैवासिद्ध-
त्वात् ॥ नद्वितीयः ॥ अंत्यजादीनां प्रतिलोमजसंकरजातित्वेन
शूद्रांतःपाताभावेन प्रश्ने साधारणाश्चेदितिचेत्कोटिबाधापत्तेः ॥
अथ तथापि संप्रदायोपदेशस्य सर्वसाधारणत्वोरीकारे चांडाला-
दीनामनुपदेशे कोहेतुरितिचेदुच्यते ॥ दशमाध्यायेंऽत्यजादिधर्मा
नुपक्रम्याह मनुः ॥ ( श्लो० ६२ ) ब्राह्मणार्थे गवार्थे वा देहत्या-
गोऽनुपस्कृतः ॥ स्त्रीबालाभ्युपपत्तौ च वाह्यानांसिद्धिकारणमिति ॥
तस्माच्चान्यत्र मंत्रादौ सिद्धिकारणे तेषामधिकारोस्तीति नोप-
देश्याः ॥ याज्ञवल्क्योऽप्याह ( अ० १ ) वर्णजातिविवेकप्रकरणे ॥
( श्लो० ४ ) शूद्राज्जातस्तु चांडालः सर्वधर्मबहिष्कृतइति ॥
सर्वपदाद्दीक्षाधर्मादपि बहिष्कारः ॥ किंच ॥ उपदेशस्तु दूरापास्तः
तैः सह संभाषणस्यापि प्रतिषेधात् ॥ यथा तृतीयाध्याये प्रकी-
र्णकप्रायश्चित्तप्रकरणे ( श्लो० ३ ) विप्रदंडोद्यमइत्यस्य मिता-
क्षरायां ॥ पतितादिसंभाषणे तु गौतमआह ॥ न म्लेच्छाशुच्यधा-
र्मिकैः सह संभाषेत संभाष्य पुण्यकृतोमनसा ध्यायेद्ब्राह्मणेन वा
सह संभाषेतेति ॥ पराशरमाधवीये प्रथमाध्याये ( श्लो० ३८ )
व्याख्यायां कूर्मपुराणे ॥ चंडालम्लेच्छसंभाषे स्त्रीशूद्रोच्छिष्टभा-
षणे ॥ उच्छिष्टं पुरुषं दृष्ट्वा भोज्यं वापि तथाविधं ॥ आचा-
मदश्रुपाते वा लोहितस्य तथैव च ॥ अग्नेर्गवामथालंभे स्पृष्ट्वा प्र-
यतमेवच ॥ स्त्रीणामथात्मनः स्पर्शे नीवीं वा परिधाय चेति ॥
स्त्रीशूद्रोच्छिष्टभाषणादावेतज्जपादिविषयं ॥ तथा पद्मपुराणे ॥ चं-
डालादीन् जपे होमे दृष्ट्वाऽऽचामेद्द्विजोत्तमइति ॥ तत्रैव ( श्लो०
३९ ) व्याख्यायां गौतमः॥क्रोधं मोहं क्षुतं निद्रां निष्ठीवनविजृं-

भणे ॥ दर्शनं च श्वनीचानां वर्ज्जयेज्जपकर्मणि ॥ आचामेत्संभवे चैषां स्मरेद्विष्णुं सुरार्चितमित्यादि ॥ धर्मप्रवृत्तौ जपप्रक्रमे वचनानि ॥ पतितानां चांत्यजानां दर्शने भाषणे श्रुते ॥ क्षुते ऽधोवातगमने जूंभणे जपमुत्सृजेत् ॥ आचम्य दक्षिणं कर्णं स्पृष्ट्वा दृष्ट्वा दिवाकरं ॥ प्राणायामत्रयं कृत्वा जपशेषं जपेत्ततइति ॥ इत्थं यत्र तद्दर्शनादौमंत्रस्यजपोनिषिध्यते तत्र कुतस्तरां तेभ्यस्तदुपदेशः ॥ शांतातपस्मृतौ ॥ चितिवृक्षश्चितिर्यूपश्चांडालोवेदविक्रयी ॥ एतान् वै ब्राह्मणः स्पृष्ट्वा सचैलोजलमाविशेत् ॥ पथि चांडालकं दृष्ट्वा कुर्यात्सूर्यविलोकनं ॥ यदि संभाषणं चैव गायत्रीं तु सकृज्जपेदिति ॥ निर्णयसिंधौ ( परि० १ ) असंभाष्यान् हि संभाष्य तुलस्यतसिकादलं ॥ आमलक्याः फलं वापि पारणे प्राश्य शुध्यति ॥ बृहन्नारदीये ॥ रजस्वलां च चांडालं महापातकिनं तथा ॥ सूतिकां पतितं चैव उच्छिष्टं रजकादिकम् ॥ व्रतादिमध्ये शृणुयाद्यथेषां ध्वनिमुत्तमः ॥ अष्टोत्तरसहस्रं तु जपेद्वै वेदमातरमिति॥मनुनापि दशमाध्याये (श्लो० ५१) चंडालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयइत्यादिना श्लोकषट्केन तद्धर्मान्निरूपयतोच्यते॥न तैः समयमन्विच्छेत्पुरुषोधर्ममाचरन्निति॥ धर्मानुष्ठानसमये चंडालश्वपाकैः सह दर्शनादिव्यवहारं न कुर्यादिति मुक्तावली ॥ तथा तेभ्योऽन्नदानादिकमपि दूरतएव कर्त्तव्यमिति तत्र निरूपितं ॥ अतोयत्र तैः सह साधारणोलौकिकव्यापारोऽपि निषिध्यते कुतस्तरां तत्र स्वसर्वस्वरूपाणां श्रुतिरहस्यभूतानां भगवन्मंत्राणां तेभ्यउपदेशस्य शंकाऽपीत्यलं ॥ किंच ॥ कृत्यकल्पतरौ देवीपुराणे ॥ वर्णाश्रमविभेदेन देवाः

स्थाप्यास्तु नान्यथा ॥ ब्रह्मा तु ब्राह्मणैः स्थाप्योगायत्रीसहितः प्रभुः ॥ चतुर्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः ॥ भैरवोऽपि चतुर्वर्णैरंत्यजानां तथामतइति ॥ अत्राऽपिशब्दोगौणत्वार्थः ॥ तथाच चातुर्वर्ण्यं काम्यं भैरवपूजनं ॥ क्वापि तस्य नित्यत्वानभ्यनुज्ञानात् ॥ अंत्यजानां तु भैरवोपासनैव विधीयते न तु विष्ण्वाद्युपासना ॥ अतोवैष्णवमंत्रोपदेशोन तेभ्यः क्रियते ॥ नन्वेवं सति भगवद्भक्तेः सर्वमनुष्यसाधारणत्वं भज्येत ॥ साधारणत्वसमर्थनाय चांडालादिषु मंत्रोपदेशमंतराऽपि भक्त्युद्भवस्वीकारे तु चातुर्वर्णिकेष्वपि मंत्रोपदेशवैयर्थ्यं ॥ तमंतराऽपि भक्तिसंभवादिति चेन्मैवं ॥ चांडालादिष्वपि भगवद्भक्ताश्रयणेन भक्तिरुद्भवतीति ( अ० ४ श्लो० १८ ) किरातहूणांध्रपुलिंदपुल्कसाआभीरकंकायवनाः खसादयः ॥ येऽन्ये च पापायदुपाश्रयाश्रयाः शुध्यंति तस्मै प्रभविष्णवे नमइत्यादि द्वितीयस्कंधादिवचनैः सिध्यति ॥ तेन ( स्कंध ११ अ० १२ श्लो० ४ ) वैश्याः शूद्राः स्त्रियोंऽत्यजाइत्यादिवचांस्यपि व्याख्यातानि वेदितव्यानि ॥ तत्र ( श्लो० २ ) यथावरुंधे सत्संगः सर्वसंगापहोहि मां ॥ सत्संगेन हि दैतेयाइत्युपक्रमात् ॥ अतोन भक्तेः सर्वसाधारणत्वव्याघातः ॥ अतएव भक्तिसूत्रद्वितीयाध्यायद्वितीयान्हिकेऽसूत्रयद्भगवान् शांडिल्यः ( सू० ७८ ) आनिंद्ययोन्यधिक्रियतेपारंपर्यात्सामान्यवदिति ॥ अत्रैतद्भाष्ये स्वमेश्वरः ॥ निंदितचांडालादियोनिपर्यंतं भक्तावधिक्रियते॥ संसारदुःखजिहासाया अविशेषात् ॥ अथ वेदाध्ययनानधिकारात् कथमत्रैवर्णिकानां सद्गतिचेत्तत्राह ॥ पारंपर्यादिति ॥ ( पूर्वमीमांसासूत्र २ अ० १ पा० १

न् ॥ अथ शूद्राणामुपदेशेऽप्ययं प्रश्नः प्राप्तावसरइतिचेदुच्यते ॥ वैष्णवत्वेन तुल्यत्वेऽपि जातेः पाकादिकर्मानर्हत्वात्तत्कृतं तन्नां-गीक्रियते ॥ दीक्षाहि वैष्णवत्वेनोत्कर्षं समान्यत्वमोक्षाधिका-रित्वादिलक्षणमैहिकामुष्मिकफलपर्यवसायिनं संपादयति नतु जातिमप्यपहरति ॥ संपादयति हि वसंतस्तरूणामवैषम्येणै-व बहलदलसुमनःसंगसघनत्वं नतु निंबकदंबमाकंदमंदारत्वा-दिलक्षणामपहरति जातिमपि ॥ अतः श्रीमद्भागवते नवमस्कं-धे चातुर्थाध्याये ( श्लो० ६३ ) अहं भक्तपराधीनोह्यस्वतं-त्रइव द्विज ॥ साधुभिर्ग्रस्तहृदयोभक्तैर्भक्तजनप्रियः ॥ नाहमात्मा नमाशासे मद्भक्तैः साधुभिर्विना ॥ श्रियं चात्यंतिकीं ब्रह्मन् येषां गतिरहं परा ॥ ६४ ॥ येदारागारपुत्राप्तान् प्राणान्वित्तमिमं परं ॥ हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥ ६५ ॥ मयि निर्ब-द्धहृदयाः साधवः समदर्शनाः ॥ वशे कुर्वंति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥ ६६ ॥ मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयं ॥ नेच्छंति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम् ॥ ६७ ॥ साधवोहृ-दयं मह्यं साधूनां हृदयं त्वहं ॥ मदन्यत्ते न जानंति नाहं तेभ्यो-मनागपीति ॥ तथा गीतायां ॥ समोहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः॥ ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहमित्यादिषु भगवतोक्तं स्वप्रसादातिशयपात्रत्वमेव सर्ववर्णेषु वैष्णवत्वेन तुल्यं॥ नैतावता शास्त्रमुल्लंघ्य शूद्रादिकृतपाकस्य ब्राह्मणादिभिर्भोज्यत्वं कोऽप्यनुन्मत्तमतिर्ब्रूयात् ॥ तन्निषेधस्यानेकत्र जागरूकत्वात् ॥ य-था धर्माब्धिसारे तृतीयपरिच्छेदे पूर्वार्धे ॥ अथ कलौ निषिद्धानी-

त्युक्रम्य ॥द्विजानां गोपशूद्रादौ भोज्यान्नत्वं कलौ नहि ॥ शिष्यस्य गुरुपत्नीषु न चिरं वासशीलतेति ॥ तत्रैव ॥ घृतदुग्धादिभिः पक्वमन्नं शूद्रात्कलौ त्यजेत् ॥ भिक्षामटन्यतीरात्रौ न वसेद्गृहिणां गृहे इति ॥ अनेन कैमुतिकात्तत्कृतपाकादिनिषेधः ॥ तत्रैवोत्तरार्धे ॥ द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा ॥ वानप्रस्थोयतिर्लिंगी न भोज्यान्नाः प्रकीर्तिताः ॥ षण्मासं योद्विजोभुंक्ते शूद्रस्यान्नं विगर्हितं ॥ सतु जीवन् भवेच्छूद्रोमृतः श्वा चाऽभिजायते इति ॥ सारसंग्रहे स्मृतिः ॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतं ॥ वैश्यस्यान्नं तु चान्नं स्याच्छूद्रान्नं रुधिरं स्मृतं ॥ शूद्रोदकं शूद्रपक्कं शूद्रेण सह भोजनं ॥ इह जन्मनि शूद्रत्वं चांडालः कोटिजन्मसु इति ॥ आमान्नं तु तेषामपि ग्राह्यमेव ॥ अत एव निर्णयसिंधौ श्राद्धप्रकरणे ॥ आमं शूद्रस्य यत्किंचिच्छ्राद्धिकं प्रतिगृह्यते ॥ तत्सर्वं भोजनायालं नित्यनैमित्तिकेनचेति ॥ शुद्धितत्वेऽगिराः॥शूद्रवेश्मनि विप्रेण क्षीरं वा यदिवा दधि॥ निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतं ॥ शूद्राद्विप्रगृहेष्वन्नं प्रविष्टं तु सदा शुचि ॥ पराशरः ॥ तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः ॥ द्विजातिकरसंस्पृष्टं सर्वं तन्न विरुध्यते ॥ विष्णुपुराणे ॥ संप्रोक्षयित्वा गृण्हीयाच्छूद्रान्नं गृहमागतं ॥ अंगिराः ॥ पात्रांतरगतं ग्राह्यं दुग्धं स्वगृहमागतमिति ॥ एवमादीनि शूद्रस्य पक्वान्नग्रहणनिषेधकानि स्वशिष्यस्य सद्धर्माचरणवतस्तस्यामान्नग्रहणे दोषाभावबोधकानि अयाचितोपनीताप्रत्याख्यानविधायकानि च वचनानि तत्रतत्र मनुयाज्ञल्क्यस्मृत्याद्यार्षग्रंथेषु हेमाद्रिमाधवविज्ञानेश्वरादिकृतेषु तेषु तेषु प्रामाणिकनिबंधेषु च शा-

तशएवोपलभ्यंतइत्यलं बहुलकालविलंघनहेतुना निखिलवचनविलेखनपल्लवितेन ॥ अतोवैष्णवत्वेन तौल्येऽपि वर्णजात्यादिविभागस्य जागरूकत्वाच्छास्त्रसदाचारानुल्लंघ्य ब्राह्मणादीनां शूद्रादिपाकग्रहणं न कोऽप्यनास्तिकोयुक्तजनः शक्तोवक्तुं ॥ अन्यथा मनुष्यत्वप्रयुक्ततौल्येनाऽपि पाकादिग्रहणप्रसंगात् ॥ किंच शिवसायुज्यादिकामानां चतुर्णामपि वर्णानां शिवदीक्षाग्रहणतदर्चनरुद्राक्षधारणादिष्वधिकारः स्मर्यते ॥ तथा दावाग्निजभस्मना चांडालादीनामपि त्रिपुंड्रकरणं विधीयते तत्राप्ययं भवत्प्रश्नः प्राप्तावसरः स्यात् ॥ यथा त्रिपुंड्ररुद्राक्षादिधारिभिश्चांडालादिभिः सह ब्राह्मणादीनां शैवत्वेन तुल्यता न्यूनतावा ॥ न्यूनता चेत्किं तद्धारणादिना ॥ तुल्यता चेत्तत्कृतपाकादिकं कुतोनांगीक्रियते ॥ अंगीक्रियतएवेति चेत्तर्हिशैवदीक्षायां सर्वेऽपि वर्णाअभिन्नाइति ब्रुवंतोभवंतोधन्याइति ॥ तस्मात्कृतमीदृशैः स्वनिग्रहस्थानैः कुतर्कैः ॥ यश्चोपहासः कृतोंऽगीक्रियतएवेतिचेत्तर्हि वैष्णवदीक्षायां सर्वे वर्णाः समाइत्युच्यमानाभवंतोधन्याइति॥सतु पाकाऽनंगीकारात्परावृत्त्य प्रष्टारमेवगच्छति॥अत्र वदंतइति वक्तव्येऽप्युच्यमानाइतिप्रयोगस्तु प्रमादात् ॥ अन्यैरुच्यमानाइत्यभिप्राये त्वसिद्धं ॥ केनापि प्रामाणिकेनानुन्मत्तेनैवं वक्तुमशक्यत्वात् ॥ अप्रामाणिकोन्मत्तयोरुक्तेरनादरणीयत्वाच्च॥किंच व्यवहाराध्याये वाक्पारुष्यप्रकरणे याज्ञवल्क्यः सत्यासत्यान्यथास्तोत्रैरित्यादिना वाक्पारुष्यं वक्ति ॥ तत्रेदमन्यथास्तोत्रं ॥ एवं नवीनरीत्या ऽशास्त्रीययेत्यसत्यं ॥ तथैव सर्वजगद्विरुद्धवादिनोयूयं कइत्यादयः कठोरवादाः॥तथा दंडोऽपि तेनैवोक्तस्तत्र॥ (श्लो० ८),

त्रैविद्यनृपदेवानां क्षेपउत्तमसाहसइति ॥ अत्रैव त्रैविद्यावेदत्रयसंपन्नास्तेषां राज्ञोदेवानां चाक्षेपउत्तमसाहसोदंडइति विज्ञानेश्वरः ॥ तथापीदानीं ॥ ईदृशानन्यसामान्याऽसौजन्यस्य विधानतः ॥ संन्यासिनोऽपि ते धन्यंमन्याः संतूचितं कलौ ॥ १ ॥ आस्तामेतत् ॥ इत्थं ॥ मंत्रेण विन्यस्यात्मानमनन्यत्वात्पदे हरेः ॥ सदसच्छूद्रसामान्यं मुनिमान्यं भवत्विह ॥ २ ॥

## अथाऽस्य प्रक्रांतप्रधानप्रश्नस्याऽवांतरोऽष्टमः

## प्रश्नः॥८॥

सच्छूद्राइतिचेत्के सच्छूद्राइति तेषां लक्षणं वक्तव्यं ॥ २४ ॥

( अस्याऽयमर्थोभवेत् ॥ यदिसच्छूद्राएवोपदेश्यास्तर्हि उपदेश्यादेश्ययोः प[illegible] व्यावर्त्तकधर्माविगमाय विभाजकतावच्छेदकाऽसाधारणधर्मोनिर्वक्तव्यइति ॥ )

## ॥उत्तरं॥

अस्माभिस्तु साधारण्येन सदसच्छूद्रसामान्यस्यैवोपदेश्यत्वं स्वीक्रियतइति नास्माकमनेन विचारेण प्रयोजनं ॥ प्रश्नेचेदितिपदेन सच्छूद्रमात्रस्योपदेशांगीकारपक्षएव तल्लक्षणजिज्ञासावतारबोधनात् ॥ तथापि भवतोविवित्साशांतये दिङ्मात्रं किंचिदुच्यते॥ तत्र धर्माब्धिसारे तृतीयपरिच्छेदोत्तरार्द्धे ॥ सप्तपुरुषं त्रिपुरुषं वा परंपरया स्नानवैश्वदेवतर्पणादिकं शूद्रकमलाकरादिग्रंथसंगृहीतं धर्ममेनाचरन् सच्छूद्रउच्यतइति ॥ अथ साकल्येनैतद्धर्माचरणाऽनेऽपि दशमाध्याये शूद्रधर्मेषु मनुः ( श्लो० १२६ ) न शू-

र्मसिन्ध्वादिषु शूद्राणां शालग्रामार्चननिषेधमुक्त्वा वैष्णवदीक्षाग्रहणपूर्वकं मद्यपानाद्यऽधर्मत्यागिनां तु तेषां ब्राह्मणद्वारा शालग्रामपूजाधिकारोनिरूप्यते ॥ दीक्षायुक्तैस्तथाशूद्रैर्मद्यपानविवर्जितैः ॥ कर्त्तव्यं ब्राह्मणद्वारा शालग्रामशिलार्चनमित्यादिवचनोपन्यासेन ॥ अतोवैष्णवदीक्षां प्रविष्टस्य यथाशक्तिसद्धर्माचरणतत्परस्य शूद्रस्याऽपि सच्छूद्रत्वं निर्बाधमिति दिक् ॥एवंसति याज्ञवल्क्यस्मृतौ ( अ० १ ) गृह्यप्रकरणे ( श्लो० २० ) विद्याकर्मवयोबंधुवित्तैर्मान्यायथाक्रमं ॥ एतैः प्रभूतैः शूद्रोऽपि वार्द्धके मानमर्हतीति ॥ आचारमाधवे प्रथमाध्यायांते शांतिपर्वणि॥ स्वाहाचैव नमस्कारोमंत्रः शूद्रेऽभिधीयते ॥ ताभ्यां शूद्रः पाकयज्ञैर्यजेत ब्रह्मवान् स्वयमिति ॥ एवमादिषु विद्याब्रह्मपदाभ्यां ब्रह्मज्ञानं शूद्रस्याऽपि सच्छूद्रत्वनिर्वाहकतया ऽऽवश्यकमित्युच्यते ॥ तदपि सत्संप्रदायाश्रयणे गुरुमुखात् पुराणादिश्रवणद्वारा तस्य सेत्स्यतीति निखिलं निरवद्यं ॥ विशेषतोजिज्ञासायां तु मन्वादिग्रंथतोऽवगम्यतां ॥ ततोपि संशयानुच्छेदे सुखेन पुनरप्यस्मान् पृष्ट्वाऽवधार्यतां ॥ इत्यष्टभिः सपदि संगतमंग जल्पैरल्पैः कुरंगतृषितुंगतरंगकल्पैः ॥ चोद्यं प्रमाणगणयुक्तितरंगितेन दत्तोत्तरं किल विचित्रतरं तृतीयं ॥ ३ ॥

## ॥ अथ चतुर्थः प्रधानः प्रश्नः ॥ ४ ॥

उपदेशे च रामकृष्णादिमंत्राः समानाउत तेषुन्यूनाधिकावा ॥ ४ ॥

### ॥ उत्तरं ॥

सामान्यं न्यौन्यमाधिक्यमन्योन्यं तन्यते ऽधुना ॥ सन्मंत्राणां स्व-

तंत्राणां श्रूयतां तर्कबंधुना ॥ १ ॥ तथाहि ॥ भगवतोहि रूपनामविभेदेन द्विविधे लीले नामरूपेव्याकरवाणि सर्वाणिरूपाणिविचित्यधीरः नामानिकृत्वाभिवदन्यदास्ते इत्यादिच्छांदोग्यतैत्तिरीयादिश्रुतिषु प्रसिद्धे ॥ तत्र रूपलीलायां यथा रामकृष्णाद्यवताराउत्तमाः विभूतिरूपाणिमध्यमानि गवाश्वादयश्चाधमाः ॥ एवमेव नामलीलायामपि वेदादयः साक्षाद्भगवत्प्रापकामहामंत्राश्चोत्तमाः ॥ गीताश्रीभागवतभिन्नस्मृतिपुराणादीनि च मध्यमानि प्राकृताघटपटादिशब्दाश्चाधमाइति ब्रह्ममीमांसाभाष्यादिषु श्रीमदाचार्यादिभिः सविस्तरं निर्णीतं ॥ तत्र यथा रामकृष्णाद्यवतारेषु एकेनैव स्वरूपेण सर्वकार्यकरणसमर्थोऽपि भगवान् येन येनावतारेण यच्चिकीर्षितं तदेव तेन करोति ॥ यदर्थतंत्रोन विहंति विक्रममिति श्रीभागवतदशमस्कंधोक्तेः नत्ववतारांतरकार्यं ॥ अन्यथाऽवतारबाहुल्यनैरर्थक्यापत्तेः ॥ नहि वर्तमानेनापि कल्पायुषा जामदग्न्येन रावणवधादिकं दाशरथिकार्यमनुष्ठितं ॥ नाऽपि-प्रथमावतारेणैव सुचिरं स्थित्वा सर्वाऽवतारकार्याणि ॥ तथैवान्यतमेनाऽपि वेदादिमूलकेन स्वनिरूपकमहामंत्रेण सर्वविधफलदानशक्तोऽपि यन्मंत्रजपादिद्वारा यत्फलं स्वयं नियमितं तदेव तद्द्वारा ददाति ॥ अन्यथा एकेनैव सर्वकार्यसिद्धौ जगति नानाविधमंत्रप्रादुर्भावनं व्यर्थं स्यात् ॥ किंच मंत्राहि स्वजपादिवशात् स्वप्रतिपाद्यदेवताप्रसादेन तदनुगुणं फलं समर्पयंतीति मंत्रशास्त्रमर्यादा ॥ जडानां वर्णानां स्वयमेव फलसमर्पकत्वायोगात् ॥ तत्र रामकृष्णादिमंत्राअपि निष्कामतया जपकर्तुः स्वस्वप्रतिपाद्यभगवत्स्वरूपसायुज्यादिलक्षणं मोक्षं संपादयेयुः ॥ नारदपंचरात्ररामा-

र्चनचंद्रिकाक्रमदीपिकामंत्रमहोदधिशारदातिलकप्रभृतिसद्ग्रंथप-र्यालोचने स्पष्टतया तथैव सिद्धेः ॥ अतः सर्वेषामपि भगवन्मंत्राणां भगवत्स्वरूपनिरूपकत्वेन साम्यं ॥ स्वस्वाप्रतिपादितमंत्रांतरप्रतिपाद्यतत्तद्भगवद्धर्मविशेषाद्यप्रतिपादकत्वेन तदनुगुणफलाजनकत्वेन चान्योन्यतोन्यौन्यं ॥ मंत्रांतराप्रतिपादितस्वप्रतिपाद्यतत्तद्विशेषप्रतिपादकत्वेन तदनुगुणफलसंपादकत्वेन च परस्परतआधिक्यमपि निर्बाधमिति सर्वसुस्थं ॥ अपिच ॥ प्रथमस्कंधतृतीयाध्याये नानाविधान् भगवदवतारान्निरूप्य ( श्लो० २८ ) एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयं ॥ इंद्रारिव्याकुलं लोकं मृडयंति युगे युगइति ॥ तेष्ववतारेषु कृष्णस्य साक्षात्पुरुषोत्तमत्वेन पूर्णत्वं अन्येषां केषां चिदंशरूपत्वं केषांचन कलारूपत्वं चोच्यते ॥ एवमन्यत्राप्यनेकत्रैतन्निरूपितमस्ति ॥ अतोभगवदवताराणामैच्छिकतारतम्यस्य प्रमाणसिद्धत्वात्तत्तदवतारप्रतिपादकमंत्रेष्वपि तारतम्यं तथैव द्रष्टव्यं ॥ अत्र प्रश्नवाक्ये उतवापदयोः पौनरुक्त्यादन्यतरवैयर्थ्यं ॥ उपदेशइत्यपि निरर्थकं ॥ मंत्रत्वेनैवोपदेशत्वलाभात् ॥ यदितूपदेशप्रकारतारतम्यमेव जिज्ञासितं स्यात्तर्हि तस्य तस्य मंत्रस्योपदेशप्रकारभेदोयथाशास्त्रमस्माकमभिमतएवेतिश्रीः ॥ इत्थं ॥ रामकृष्णादिमंत्राणां न्यूनता च समानता ॥
आधिक्यं चोचितं तेन भवयुक्तिः समाऽऽनता ॥ १ ॥

## ॥ अथाऽस्य चतुर्थप्रधानप्रश्नस्यावलंवी प्रथमः प्रश्नः ॥ १ ॥

॥ तत्र समानाश्वेन्मंत्रांतरनिषेधः कथं क्रियते ॥ २५॥

॥ उत्तरं ॥

किमत्र निषेधशब्देन केनाप्यधिकारिणा नायं मंत्रोग्राह्यइत्येवंरूपः सविवक्षितउतास्मत्संप्रदाये ऽस्मदिष्टफलस्य पुरुषोत्तमसायुज्यादिलक्षणस्यास्मदाचार्यपरंपरोपदिश्यमानमंत्रमात्रेणैव सिद्धावस्मच्छिष्यस्य न मंत्रांतरग्रहणेन प्रयोजनमित्येवं रूपः सः ॥ तत्र नाद्यः ॥ अस्माभिरस्मदाचार्यैर्वा तादृशनिषेधस्य क्वापि कदाचिदप्यकृतत्वेन कथं क्रियतइत्याक्षेपवैयर्थ्यात् ॥ अथ द्वितीयश्चेत्तर्हि अस्य प्रश्नस्य तद्दानं शिष्याय कुतोन क्रियतइत्यग्रिमप्रश्नादवैलक्षण्येऽपि स्वविवक्षितप्रश्नसंख्यापूरणायैव पार्थक्येनोपन्यस्तत्वात्तदुत्तरेणैवास्यदत्तोत्तरत्वं स्यादिति तच्छ्रवणेनैव परितोष्टव्यं भवद्भिः ॥

## अथ चतुर्थप्रधानप्रश्नावलंबी द्वितीयः प्रश्नः ॥ २॥

॥ तद्दानं शिष्याय कथंन क्रियते ॥ २६ ॥

॥ उत्तरं ॥

अत्र प्रश्नद्वये कुतइति हेतौ प्रष्टुमुचितेऽपि कथमिति प्रकारप्रश्नस्तु स्वस्य वैलक्षण्यद्योतनार्थः ॥ उत्तरं तु ब्रूमः ॥ अस्मदभीष्टस्य पुरुषोत्तमसायुज्यादिलक्षणस्य फलस्यास्मदाचार्यपरंपरोपदिश्यमानकृष्णमंत्रैरेव सिद्धौ प्रयोजनाभावात्स्वसदाचारविरोधाच्चास्मत्संप्रदायपरंपराप्रसिद्धगोपालादिमंत्रत्रयव्यतिरिक्तं कमपि मंत्रं नास्मदाचार्याः शिष्येभ्यउपदिशंति॥अस्मत्संप्रदाये स्वीक्रियमाण-

स्य कृष्णमंत्रोत्कर्षस्य तु न स्वोत्प्रेक्षितत्वं शंक्यं ॥ बहुप्रमाणसिद्ध-त्वात्॥तथाहि॥गौतमतंत्रे प्रथमाध्याये (श्लो० १) सिध्धाश्रमे वसन् धीमान् कदाचिद्गौतमोमुनिः॥तपःस्वाध्यायनिरतोभक्तिमान्पुरुषो-त्तमे॥नमस्यन् शिरसा विष्णुं स्तुवन् वाचा जनार्दनं॥जपन् कराभ्यां यज्ञेशं हृदा ध्यायन् सदा हरिं ॥ २ ॥ समस्तश्रुतितत्त्वज्ञइतिहा-सपुराणवित् ॥ मंत्रौषधिक्रियावश्योयोगसिद्धांततत्त्ववित् ॥ ३ ॥ धर्मार्थकाममोक्षार्थी नारदं प्रणिपत्य च ॥ विनयावनतोभूत्वा पर्यपृच्छद्द्विजोत्तमः ॥ ४ ॥ भगवन् कामदामंत्राः शत्रूदासीनबां-धवाः ॥ विभिन्नफलदास्ते तु नैकत्र फलदामताः ॥ ५ ॥ एते स-मफलाः सर्वे समंत्राइति नः श्रुतं ॥ येन सर्वफलावाप्तिः सर्वेषां बंधुरेव सः ॥ ६ ॥ सर्ववर्णाधिकारश्च नारीणां योग्यएव यः ॥ तं ब्रूहि भगवन्मंत्रमल्पायासफलप्रदं ॥७॥ तव नाविदितं किंचिद्वि-द्यते सचराचरे ॥ इति श्रुत्वा मुनिश्रेष्ठोनत्वा विष्णुमुवाचह ॥ ८ ॥ ॥ श्रीनारदउवाच ॥ साधु पृष्टं मयाऽप्येवं पृष्टः प्रोवाच पद्मजः ॥ तथा ते कथयिष्यामि यथा प्रोक्तं स्वयंभुवा॥९॥सर्वेकामाः प्रसी-दंति कृष्णमंत्रजपाद्ध्रियः॥गाणपत्येषु शैवेषु तथा शाक्तेषु सुव्रत-॥१०॥सर्वेषु मंत्रवर्गेषु श्रेष्ठं वैष्णवमुच्यते ॥ वैष्णवेषु च सर्वेषु कृ-ष्णमंत्राः फलाधिकाः॥११॥नारदपंचरात्रे प्रथमरात्र प्रथमाध्याये (श्लो० ७० ) मंत्राणां कृष्णमंत्रश्च यथा विद्या धनेष्वपि ॥ य-था तेजस्विनां सूर्योमिष्टानामृतं यथेति कृष्णमंत्राणां परमोत्कर्षः॥ अत्रैव नवमाध्याये शिवः॥ ( श्लो० २० ) कृष्णमंत्रोपासका-नां शुद्धं पादोदकं सुत॥ पुनाति सर्वतीर्थानि वसुधामपि पार्व-ति ॥ कृष्णमंत्रोद्विजमुखाद्यस्य कर्णे प्रयातिच ॥ तं वैष्णवं जग-

स्पूतं प्रवदन्ति पुराविदः ॥ २१ ॥ मंत्रग्रहणमात्रेण नरोनाराय-णात्मकः ॥ पुनाति लीलामात्रेण पुरुषाणां शतं शतं ॥ २२ ॥ इ-त्यादि ॥ तथा ॥ ( श्लो० २५ ) सस्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥ फलं सलेभे पूजानां व्रती सर्वव्रतेषु च ॥ २५ ॥ वि-ष्णुमंत्रं योलभेत वैष्णवाच्च द्विजोत्तमात् ॥ कोटिजन्मार्जितात् पापान्मुच्यते नाऽत्र संशयः ॥ २७ ॥ कृष्णमंत्रोपासकानांसद्यो-दर्शनमात्रतः ॥ शतजन्मार्जितात्पापान्मुच्यते नात्र संशयः ॥२८॥ वैष्णवाद्दर्शनेनैव स्पर्शनेन च पार्वति ॥ सद्यःपूतं जलं वन्हिर्जगत्पू-तः समीरणः ॥२९॥ दर्शनं वैष्णवानां च देवावांच्छंति नित्यशः ॥ नवैष्णवात्परः पूतोविश्वेषु निखिलेषु च ॥३०॥ तत्रैव त्रयोदशाऽ-ध्याये उपवर्हणाख्यगंधर्वं प्रति स्वयं श्रीकृष्णः॥(श्लो० १०)मन्मं-त्रोपासकश्चैव स्वतंत्रोनित्यविग्रहः ॥ पुनर्नविद्यते जन्म मंत्रग्रहण-मात्रतइति इदमारभ्य अध्यायसमाप्तिपर्यंतं विस्तरेण कृष्णमंत्र-माहात्म्यं वर्णितमस्ति॥तत्रैव पंचमरात्रे चतुर्थाध्याये॥ (श्लो० ६) अखिलमनुषु मंत्राविष्णवावीर्यवंतोमहिततरफलाढ्यास्तेषु गोपा-लमंत्राः ॥ प्रबलतरदृहैषोऽशिष्टसम्मोहनाख्योमनुरनुपमसम्यक्-कल्पनाकल्पशाखी ॥ ६ ॥ मनुमिममतिहृद्यं योभजेद्भक्तिनम्रो-जपहुतयजनाद्यैर्ध्यानवर्न्मत्रिमुख्यः ॥ त्रुटितसकलकर्मग्रंथिरुद्बुद्ध-चेता व्रजति सतु पदं तन्नित्यशुद्धं मुरारेरिति ॥ अत्रैव दशमा-ध्याये दशमाध्यायसमाप्तिश्लोकेषु कृष्णमंत्रस्य परममोक्षदा-तृत्वमस्ति ॥ एवमेकादशाध्यायांतेपि ॥ गौतमतंत्रे एकविंशाध्या-ये ( श्लो० २ ) नारदः ॥ शृणु ब्रह्मन् कृष्णमंत्रान् सर्ववेदैकसं-मतान् ॥ यदेकज्ञानमात्रेण पुनर्जन्म न विद्यतइति ॥ निर्बीजमं-

त्राणामपि जपेन सिद्धिरुक्ता तत्रैवाष्टाविंशाध्याये॥ (श्लो० ३१) निर्बीजाये च मंत्रावै शक्तिहीनाश्च कुंठिताः ॥ अरिपक्षे स्थिताये च केवलावर्णरूपिणः ॥ एतदाप्येन जाप्येन जीवंति च पुनंति चेति ॥ किंच ॥ कृष्णनाम्नएव सर्वपापक्षयहेतुमहाप्रायश्चित्तरूपत्वान्महामंत्ररूपत्वाच्च किं वाच्यं तद्घटितमंत्राणां महामंत्रत्वे सर्वोत्कृष्टत्वे वा ॥ नाम्नस्तथात्वं तु यथा॥ प्रायश्चित्तमयूखे स्कांदप्रभासखंडीयभगद्वाक्यं ॥ नाम्नां मुख्यतरं नाम कृष्णाख्यं यत्परंतप ॥ प्रायश्चित्तमशेषाणां पापानां मोचकं परमिति ॥ तथा-वादावल्यां गौतमतंत्रे ॥ कृष्णेति द्यक्षरोमंत्रइति ॥ पाद्मे ॥ कृष्णेति वैष्णवं मंत्रं श्रुत्वा मुक्तोभवेन्नरइति ॥ ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखंडे ॥ गृहाण मम मंत्रं च कृष्णइत्यक्षरद्वयं ॥ सर्वेषा मेव मंत्राणां सारात्सारतरं परमिति॥ श्रुतयश्च कृषिर्भूवाचकः शब्दोणश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्णइत्यभिधीयतइत्याद्याः प्रसिद्धाएव ॥ किंच पुनरप्यस्य नाम्नः सर्वप्राश्चित्ताधिकत्वमुच्यते त्रिकांडमंडनाख्ये श्रौतग्रंथे महाभारते ॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ॥ यानि तेषामशेषाणां कृष्णानुस्मरणं परमिति ॥ तथा ॥ षष्ठस्कंधे द्वितीयाध्याये ॥ ( श्लो० १० ) सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ॥ नामव्याहरणं विष्णोर्यतस्तद्विषयामतिः॥१०॥ न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुध्यत्यघवान् व्रतादिभिः ॥ यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलंभकम्॥ ११ ॥ नैकांतिकं तद्धिकृतेऽपि निष्कृतं मनः पुनर्धावति चेदसत्पथे ॥ सत्कर्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्वभावनः ॥ १२ ॥ साकेत्यं परिहास्यं वा स्तोभं हेल-

नमेव वा ॥ वैकुंठनामग्रहणमशेषाघहरं विदुः ॥ १४ ॥ पतितः स्खलितोभग्नः संदष्टस्तप्तआहतः ॥ हरिरित्यवशेनाह पुमान्नार्हति यातनाम् ॥ १५ ॥ गुरूणां च लघूनां च गुरूणि च लघूनिच॥ प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः ॥ १६ ॥ तैस्तान्यघानि पूयंते तपोदानजपादिभिः ॥ नाधर्मजं तद्धृदयं तदपीशांघ्रिसेवया ॥ १७ ॥ अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ॥ संकीर्तनमघं पुंसोदहेदेधोयथाऽनलः ॥ १८ ॥ यथाऽगदं वीर्यतममुपयुक्तं यदृच्छया ॥ अजानतोप्यात्मगुणं कुर्यान्मंत्रोप्युदाहृतः ॥ १९ ॥ इति ॥ अत्रैव श्रीधरस्वामिना व्याख्यायते ॥ नन्विदमपि पर्षदनुपदिष्टं श्रद्धाहीनं च कथं प्रायश्चितं स्यात्तत्राह॥ यथेति ॥ अगदमौषधं वीर्यवत्तममिति वक्तव्ये वीर्यतममित्युक्तम् ॥ यदृच्छया श्रद्धाहीनमुपयुक्तं भक्षितं पर्षन्मुखादजानतोऽपि स्वगुणमारोग्यं कुर्यात् ॥ मंत्रोऽपि नामात्मकस्तथा स्वकार्यं कुर्यादेव ॥ नहि वस्तुशक्तिः श्रद्धादिकमपेक्षतइत्यर्थः ॥ तदुक्तं विष्णुधर्मेषु ॥ हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः॥अनिच्छयाऽपि संस्पृष्टोदहत्येव हि पावकइति॥एवमन्यत्रापि द्रष्टव्यं॥तस्मादस्मत्संप्रदायपूर्वाचार्यपरंपरयोपदिश्यमानं कृष्णमंत्रत्रयमेवेदानीमप्यस्मदाचार्यैः स्वशिष्येभ्यउपदेष्टव्यं नत्वन्यत् ॥ अस्मत्संप्रदायेष्टफलस्य तावतैव सिद्धौ मंत्रांतरस्योपदेशे प्रयोजनाभावात्॥तदुपदेशे स्वाचार्यमर्यादोल्लंघनेन स्वसदाचारविरोधापत्तेश्च॥अस्मत्संप्रदाये हि श्रीपुरुषोत्तममारभ्य इयदवधि न केनाप्याचार्येण कस्मै चिदपि स्वसांप्रदायिकशिष्याय मंत्रांतरमुपदिष्टं॥अतःस्वसांप्रदायिकमंत्रदानमेव स्वशिष्याय क्रियतइति सर्वं सुस्थं॥अथ के ते भवत्सांप्रदा-

यिकामंत्राइतिचेत् ॥ नतेऽस्माभिर्वक्तुं शक्याः ॥ गुर्वाज्ञाऽभावात्॥ स्वमंत्रकथननिषेधाच्च॥नारदपंचरात्रद्वितीयरात्रे॥(अ० ५श्लो०८) गुरुणाच निषिद्धं च न वक्तव्यं कदाचनेति ॥ तत्रैव प्रथमरात्र-पंचमाध्याये नारदं प्रति सरसिरुहासनः ॥ (श्लो० २७ (आत्म-नः कवचं मंत्रं स्वयं दातुं न चार्हति ॥ प्राणानष्टाश्च दानेन चेति वेदविदोविदुरिति ॥

## ॥ अथ चतुर्थप्रधानप्रश्नावलंबी तृतीयः प्रश्नः ॥ ३ ॥

न्यूनाश्चेत्सर्वमंत्राणां शास्त्रसंमतमोक्षदातृत्वाविशेषेण कुतो-न्यूनता ॥ २७ ॥

## ॥उत्तरं॥

अस्माभीरामकृष्णादिमंत्राणां परस्परतोन्यूनतायां समानतायामधि कतायां च हेतवः पूर्वमेव समर्थिताइति नेदानीमयं हेतुप्रश्नउत्तरणी यः॥किंचित्तुवदामः॥भगवन्मंत्रेषु तत्तन्मंत्रप्रतिपादकशास्त्रेण तत्तन्मं त्रस्य मोक्षदातृत्वे वर्ण्यमानेऽपि नैतन्मंत्रसामर्थ्येनैवेति वक्तुं युक्तं किंतु तत्तत्प्रतिपाद्यदेवताप्रसत्त्यैव॥तथाचेह भगवन्मंत्रेषु तत्तन्मंत्र-जपेन तत्तत्प्रतिपाद्यरामकृष्णाद्यन्यतमभगवदवतारप्रसादात्तत्तत्सा-युज्यादिलक्षणएव मोक्षोभवति॥ तैत्तिरीयाणां नाराणोपनिषदि॥ एतासामेव देवतानां२ सायुज्यं२ सार्ष्टिता२ समानलोकतामाप्नो-तीति श्रावितन्यायात्॥ अतस्तत्तन्मोक्षाकांक्षिभिस्तत्तन्मंत्रोपासनं कर्तव्यमिति युक्तं॥ किंच भगवदवतारेष्वपि पूर्णत्वांशत्वकलात्वा-

दिना तारतम्यं शास्त्रसिद्धमिति तदनुसारेण तत्प्रतिपादकमंत्रेष्वपि समालोचनीयं सच्छास्त्रविचारचतुरैः सूक्ष्ममतिभिः कृतिभिरिति श्रीः ॥

## ॥ अथ चतुर्थप्रश्नावलंबीचतुर्थः प्रश्नः ॥ ४ ॥

॥ प्रशंसापरतयोपपत्तिस्तु समानैव परस्परभिन्नमंत्रग्रहणकर्तुः ॥ २८ ॥

## ॥ उत्तरं ॥

अस्यायमर्थोभवेत् यदि भवद्भिः शास्त्रसिद्धायाः स्वमंत्रनिष्ठाया· मोक्षदातृत्वादिलक्षणायाः स्तुतेर्वास्तविकत्वं मंत्रांतरनिष्ठायास्तस्यास्तु तद्ग्रहणविधिशेषार्थवादरूपतया स्वार्थे अप्रामाणिकत्वमित्युच्यते तर्हि मंत्रांतरोपासकेन स्वमंत्रनिष्ठायास्तस्याः प्रामाणिकत्वं भवन्मंत्रनिष्ठायास्तूक्तरीतिकाऽप्रामाणिकत्वमिति शक्येतोद्घुष्य भाषितुं ॥ तस्मान्नैतत्समाधानं साधीयइति ॥ अस्माभिस्तु शास्त्रसिद्धायायावद्भगवन्मंत्रस्तुतेर्भवदुक्तरीतिकमप्रामाणिकत्वं नोररीकृतं किंतु प्रामाणिकयुक्त्यंतरतएवोत्तरमनंतरमेव वितीर्णमतो· विशीर्णमूलोनायमनुयोगइतरदुत्तरवितरणमर्हतीति भव्यं नः ॥

## ॥ अथ चतुर्थप्रधानप्रश्नावलंबी पंचमोऽवांतरः प्रश्नः ॥ ५ ॥

॥ शैवशाक्तिकमंत्राणां मोक्षदातृत्वमस्ति न वा ॥ २९ ॥

## ॥ उत्तरं ॥

मंत्राणां मोक्षदातृत्वं देवतायाः प्रसादतः ॥ वक्तव्यं मोक्षदोदेवो·

---

प्रामाणिकत्वं.

मुकुंदः सर्ववंदितः ॥ १ ॥ तदंशाः सकलादेवाः सकामाआश्रयंति तान् ॥ तत्तद्ददाति तद्द्वारा तेभ्योमाहात्म्यवृद्धये ॥ २ ॥ अतोमोक्षप्रदत्वं तु हरिमंत्रस्य केवलं॥सर्वकामप्रदत्वं चानन्यभक्तेभ्यउच्यते ॥ ३ ॥ देवतांतरमंत्रास्तु साक्षान्मोक्षप्रदानहि ॥ त्रैवर्गिकफलं तेभ्यस्तत्तद्रूपाद्धरेर्भवेत् ॥४॥ तथाहि॥मोक्षप्रदत्वं भगवतएव न तु देवांतरस्य कस्यापि॥अतएव भागवते दशमस्कंधोत्तरार्धे एकपंचाशत्तमाऽध्याये मुचुकुंदं प्रति देवानांवचनं॥(श्लो० २०) वरं वृणीष्व भद्रंते ऋते कैवल्यमद्यनः॥एकएवेश्वरस्तस्य भगवान् विष्णुरव्ययइति॥यदि च देवाएवमोक्षं दातुमशक्ष्यंस्तर्हि कुतस्ते मुचुकुंदाय तन्नादास्यन् किमिति च खट्वांगस्तांस्त्यक्त्वा मोक्षार्थी सत्वरं हरिं शरणमगमिष्यत्॥ उक्तंच द्वितीयस्कंधाद्याध्याये ॥ (श्लो० १३ ) खट्वांगोनामराजर्षिर्ज्ञात्वेयत्तामिहायुषः ॥ मुहूर्त्तात्सर्वमुत्सृज्य गतवानभयं हरिमिति ॥ अत्रैव श्रीधरस्वामिनाऽप्युक्तं ॥ खट्वांगोहि देवपक्षे स्थित्वा दैत्यानजयत् ततः प्रसन्नैर्देवैर्वरंवृणीष्वेत्युक्तोऽतस्तेनोक्तं प्रथमं तावन्ममायुः कथ्यतामिति ॥ ततोदेवैरुक्तं तत्तु मुहूर्तमात्रमस्तीति ॥ ततोऽतिशीघ्रं विमानेन भुवमागत्य हरिं शरणं गतइति ॥ किंच ॥ शिवस्यापि भोगप्रदत्वमेव॥ अतएवदशमस्कंधोत्तरार्द्धे अष्टाशीतितमाध्याये ॥ ( श्लो० १ ) देवासुरमनुष्येषु ये भजंत्यशिवं शिवं॥ प्रायस्ते धनिनोभोजानतु लक्ष्म्याः पतिं हरिं ॥ एतद्वेदितुमिच्छामःसंदेहोऽत्र महान् हिनः॥विरुद्धशीलयोःप्रभ्वोर्विरुद्धाभजतां गतिरिति देवस्वभावविरुद्धफलोपलब्धिकारणे राज्ञा पृष्टे श्रीशुकआह ॥ शिवः शक्तियुतः शश्वत्त्रिलिंगोगुणसंवृतः ॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं

त्रिधा ॥ ३ ॥ततोविकाराअभवन् षोडशामीषु कंचन ॥ उपाधाव-न्विभूतीनां सर्वासामश्नुते गतिं ॥ ४ ॥ हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः ॥ ससर्वदृगुपद्रष्टा तं भजन्निर्गुणोभवेदिति ॥ अतः पुरुषोत्तमभजनादेव नैर्गुण्यलक्षणोमोक्षः ॥ अनन्यभक्तानां च सर्वकामावाप्तिस्ततएव ॥ अनन्याश्चिंतयंतोमां ये जनाः पर्युपासते ॥ तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमित्यादिवचनेभ्यः॥ द्वितीयस्कंधेच तृतीयाध्याये ॥ (श्लो० ३ ) वसुकामोवसून् रुद्रानिति रुद्रेभ्यः पृथक् (श्लो० ७) विद्याकामस्तु गिरिशं दांपत्यार्थमुमां सतीमिति साक्षात्शिवस्य शक्तेश्च कामविशेषदातृत्वमेवोच्यते ॥ (श्लो० १०) अकामः सर्वकामोवा मोक्षकामउदारधीः ॥ तीव्रेण भक्तियोगेन यजेत पुरुषं परम्॥ १०॥एतावानेव यजतामिह निःश्रेयसोदयः॥भगवत्यचलोभावोयद्भागवतसंगतः॥ ११॥ज्ञानं यदा प्रतिनिवृत्तगुणोर्म्मिचक्रमात्मप्रसादउत यत्र गुणेष्वसंगः॥ कैवल्यसंमतपथस्त्वथ भक्तियोगः कोनिर्वृतोहरिकथासु रतिं नकुर्यादिति ॥ १२ ॥ अत्र एतावानेवेत्येवकारेण इतरदेवभजनादिव्यावृत्तिः॥निःश्रेयसस्य मोक्षस्योदयोयस्मादिति तथा॥कैवल्यं मोक्षः॥ किंच श्रीपुरुषोत्तमस्य अंशभूतेषु तत्तद्गुणोपाधिभिन्नेषु ब्रह्मविष्णुमहेश्वराख्येषु स्वरूपेष्वपि मोक्षदातृत्वं विष्णोरेव ॥ यथोक्तं प्रथमस्कंधे द्वितीयाध्याये ॥ (श्लो० १९ ) तदारजस्तमोभावाः कामलोभादयश्च ये ॥ चेतएतैरनाविद्धं स्थितं सत्वे प्रसीदति ॥ एवं प्रसन्नमनसोभगवद्भक्तियोगतः॥भगवत्तत्त्वविज्ञानं मुक्तसंगस्य जायते॥२०॥ भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः॥क्षीयंते चास्य

कर्माणि दृष्टएवात्मनीश्वरे॥२१॥ अतोवैकवयोनित्यं भक्तिं परमया मुदा ॥ वासुदेवे भगवति कुर्वंत्यात्मप्रसादनीं ॥२२ ॥ सत्वं रजस्तमइति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुषएकइहाऽस्य धत्ते॥स्थित्यादये हरिविरंचिहरेतिसंज्ञाः श्रेयांसि तत्र खलु सत्वतनोर्नृणांस्युः॥२३॥ पार्थिवाद्दारुणोधूमस्तस्मादग्निस्त्रयीमयः ॥ तमसस्तु रजस्तस्मात्सत्वं यद्ब्रह्मदर्शनं॥२४॥भेजिरे मुनयोऽथाग्रे भगवंतमधोऽक्षजं॥सत्वं विशुद्धं क्षेमाय कल्पंते ये नु तानिह॥२५॥ मुमुक्षवोघोररूपान्हित्वा भूतपतीनथ॥ नारायणकलाः शांताभजंति ह्यनसूयवः ॥२६॥रजस्तमःप्रकृतयः समशीलाभजंति वै ॥ पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः॥२७॥इत्यादि॥अतः शिवशक्त्यादिरूपदेवांतरोपासने तु कामावाप्तिरेव फलं ॥ अतएव गीतायां ॥ योयोयांयां तनुं भक्तः श्रद्धया ऽर्चितुमिच्छति ॥ तस्यतस्याचलां श्रद्धां तामेव विदधाम्यहं ॥ सतया श्रद्धया युक्तस्तस्याराधनमीहते ॥ लभते च ततः कामान् मयैव विहितान् हितानिति ॥ किंच देवतांतरोपासनस्य अवैधभगवद्यागत्वमिति तत्रैवोक्तं ॥ येऽप्यन्यदेवताभक्तायजंते श्रद्धयाऽन्विताः ॥ तेऽपि मामेव कौंतेय यजंत्यविधिपूर्वकमिति ॥ अतः शैवशाक्तमंत्राणां न मोक्षदातृत्वं किंत्विदं तु भगवन्मंत्राणामेव ॥ एतदेवाऽभिप्रेत्याह गौतमतंत्रप्रथमाध्याये नारदः ॥ सर्वेषु मंत्रवर्गेषु श्रेष्ठं वैष्णवमुच्यते ॥ गाणपत्येषु शैवेषु तथा शाक्तेषु सुव्रत ॥ ११ ॥ वैष्णवेषु च सर्वेषु कृष्णमंत्राः फलाधिकाइति ॥ एवं शैवमंत्राणां न मोक्षदातृत्वं ॥नापि शाक्तमंत्राणां॥ तस्याभगवन्मायांऽशभूतत्वात् ॥ मायाया मोक्षप्रतिबंधकत्वाच्च ॥ तस्याभगवन्मायात्वं त्वाहुर्मार्कंडेयपुराणे पंचाशीतितमाध्याये स्तुवंतो-

देवाः ॥ (श्लो० १२) या देवी सर्वभूतेषु विष्णुमायेति शब्दिते-ति ॥ तत्रैव एकाशीतितमाध्याये ॥ (श्लो० ४२ ॥) ज्ञानि-नामपि चेतांसि देवी भगवती हि सा ॥ बलादाकृष्य मोहाय म-हामाया प्रयच्छतीति मोक्षप्रतिबंधकत्वमेव तस्याः प्रत्यपादि ॥ किंच भगवताहि अचिंत्यानंतनित्यस्वाभाविकशक्तिमता क्रीडा-र्थं बहुबुभूषया देवादिनानाविधरूपकरणवत् स्वशक्त्यंशाअपि ते-षु तेषु भिन्नाःस्थापिताइति वेदांतसिद्धांतः ॥ दुर्गाच महिषासुरव-धार्थं सर्वेषामपि देवानां शक्त्यंशानादाय प्रादुष्कृतेति तत्रैवद्व्यशी-तितमाध्याये स्फुटं ॥ तथा ॥ चतुरशीतितमाध्यायेऽपि॥ (श्लो० २) देव्या यया ततमिदं जगदात्मशक्त्या निःशेषदेवगणशक्ति-समूहमूर्त्या ॥ तामंबिकामखिलदेवमहर्षिपूज्यां भक्त्या नताः स्म विदधातु शुभानि सा नइति ॥ तस्याः समुद्रशायिभगवत्का-र्यत्वं तु सैवाह ऋग्वेदे देवीसूक्ते ॥ अहमेव स्वयमिदं वदामिजुष्टं देवेभिरुतमानुषेभिः ॥ यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृ-षिं तं सुमेधां ॥अहं सुवे पितरमस्यमूर्द्धन्ममयोनिरप्स्वं१तः समुद्रे-इति ॥ समुद्रशायी भगवान् मम कारणमित्यर्थः ॥ इदं यथा म-या शुद्धाद्वैतचंद्रोदयस्य शाक्तकिरणतंत्रकिरणयोरुपपादितमि-ति विशेषतोजिज्ञासायां तावानाय्य द्रष्टव्यं ॥ तस्मान्महामायारू-पत्वान्नमोक्षदात्र्त्वं ॥ क्वचिन्मोक्षदत्ववर्णनं तु तत्राप्रतिबंधकरण-द्वारैवेतिध्येयं ॥ कारीषोग्निरध्यापयतीत्यादिवत् ॥ नह्यग्नेः स्वतो-ऽध्यापनं संभवति किंतु बटूनां शीतनिवृत्त्या ऽध्ययनसामर्थ्यापाद-नादेव ॥ तस्मान्मोक्षवितरणनैपुण्यं तु मुकुंदमंत्राणामेव॥ तेषां प-रममोक्षकारणत्वं त्वाह नारदपंचरात्रद्वितीयरात्रे नारदं प्रति शं-

करः ॥ ( श्लो० २७ ) परं राधेशयोर्मंत्रग्रहणं वैष्णवाद्द्विजात् ॥ शुद्धे नारायणक्षेत्रे परं निर्वाणकारणमिति ॥ श्रीभागवतेऽपि ॥ ( स्कं० ६ अ० २ श्लो० १९ ) यथाऽगदं वीर्यतममुपयुक्तं यदृच्छया ॥ अजानतोऽप्यात्मगुणं कुर्यान्मंत्रोप्युदाहृतइति ॥ अत्रैव श्रीधरस्वामिना मंत्रोऽपि नामात्मकस्तथास्वकार्यं कुर्यादेवेति व्याख्यायते ॥ स्वकार्यं दुरितोपरतिपूर्वकमोक्षाख्यं ॥ एवमितरत्राऽपि सहस्रशोनिरीक्षणीयं ॥ अतः ॥ मोक्षदं केवलं कृष्णसेवनं देवनंदितं ॥ मुक्तिदं शिवशक्त्यादिदैवतं नैव तं विना ॥ १ ॥ तस्मान्मुकुंदमंत्राणाममंदं मुक्तिदायितां ॥ वक्ति शास्त्रं नैव शैवशाक्तादीनां तु तां क्वचित् ॥ २ ॥

## ॥अथ प्रक्रांतप्रधानप्रश्नावलंबी षष्ठः प्रश्नः ॥ ६ ॥

॥ अस्तिचेन्निंदा कथं क्रियते ॥ ३० ॥

### ॥ उत्तरं ॥

अस्तिचेत्पदाभ्यां शैवशाक्तादिमंत्राणां मोक्षदातृत्वपक्षएवावतीर्णोऽयं प्रश्नस्तदभावसमर्थनेनैव दत्तोत्तरः ॥ किंच ॥ किमत्र निंदाशब्देनाऽविद्यमानदोपकीर्त्तनं विवक्षितमुत विद्यमानतत्कीर्त्तनं स्वयं तद्ग्रहणजपाद्यऽकरणमेवेति वा ॥ नाद्यः ॥ अस्माकमद्वैतब्रह्मवादे सर्वस्याऽपि ब्रह्मरूपत्वेन सरित्समुद्रांश्च हरेः शरीरं यत्किंच भूतं प्रणमेदनन्यइत्यादिषु भक्तिवशात्सर्वस्यापि नंतव्यत्वविधानेन चाऽस्मत्संप्रदाये निंदायाएवानवसरपराहतत्वात् ॥ क्वचिद्ग्रंथेषु भगवन्मंत्रादिस्तुतिप्रकरणे कदाचिदितरनिंदाचेत्तस्यानहिनिंदान्यायविचारेणादुष्टत्वात् ॥ न द्वितीयः ॥ तादृशकथने

निंदात्वाभावात्॥अन्यथा सर्ववस्तुनिष्ठतात्विकगुणदोषनिरूपकाणां ज्योतिषायुर्वेदादीनां बहूनां शास्त्राणां सर्ववस्तुनिंदकत्वेन अनुपादेयताप्रसंगात् ॥ न तृतीयः॥ परधर्मानाचरणस्य शास्त्रसिद्धत्वात् ॥ अतएव तृतीयाध्याये आपद्धर्मप्रकरणे ( श्लो० ७ ) आपद्गतइत्यत्र आपदि क्षात्रादिदस्य्यपेक्षया ब्राह्मणस्य हीनहीनतरहीनतमेभ्योऽपि प्रतिग्रहादिकमुत्कृष्टं वदता याज्ञवल्क्येन आपद्यपि परधर्माश्रयणाद्विगुणस्यापि स्वधर्मस्यैवाचरणं वरीयइति बोधितं ॥ अत्र विज्ञानेश्वरोऽप्याह ॥ एवंच वदता ऽऽपद्गतस्य परधर्माश्रयणाद्विगुणमपि स्वधर्मानुष्ठानमेव मुख्यमिति दर्शितं भवतीति ॥ मनुरपि ॥ वरं स्वधर्मोविगुणोन पारक्यः स्वनुष्ठितः ॥ परधर्माश्रयाद्विप्रः सद्यः पतति जातितइति ॥ अतः संप्रदायभेदेन स्वधर्माभावान्नशिवादिदेवतांतरमंत्रग्रहणं युक्तं ॥ तैत्तिरीये ॥ योवै स्वांदेवतामतियजते प्र स्वायैदेवतायै च्यवते न परां प्राप्नोति पापीयान् भवति इति निषेधश्रुतेश्च॥सर्वसाधारणेष्वाचारप्रकाशादिधर्मशास्त्रग्रंथेषु वैष्णवविषयतयोदाहृतैः नान्यंदेवंनमस्कुर्यान्नान्यंमंत्रमुदीरयेदित्यादिकाशीखंडादिवचनैरपि तथासिद्धेश्च ॥ अपिच ॥ शैवशाक्तान्यतरमंत्रदीक्षाग्रहणे शैवत्वं शाक्तत्वं वाभवेदेव ॥ तथाच सति अस्पृश्यत्वाऽनभिवाद्यत्वादिकं स्यात् ॥ यथोच्यते प्रायश्चित्ताध्याये ॥ ( श्लो० ३० ) उदक्याशुचिभिः स्नायादित्यस्य मिताक्षरायां ब्रह्मांडपुराणे॥ शैवान्पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् ॥ विकर्मस्थान्द्विजान् शूद्रान्सवासा जलमाविशेदिति ॥ नचात्र शैवशब्दः कापालिकपरः शंक्यः ॥ तेषां पाशुपतशब्देन पृथङ्निर्देशात् ॥ तत्स्पर्शे स्नानमात्रेण निर्वाहाभा-

वाच्च ॥ यथा चतुर्विंशतिमते ॥ बौद्धान् पाशुपतान् जैनान् लोकायतिककापिलान् ॥ विकर्मस्थं द्विजं स्पृष्ट्वा सचेलोजलमाविशेत् ॥ कापालिकांस्तु संस्पृश्य प्राणायामोऽधिकोमतइति ॥ माधवोऽपीदं पराशरव्याख्याप्रथमाध्याये ( श्लो० ३९ ) संध्यास्नानमित्यस्य विवरणे उदाजहार ॥ इह पूर्वं पाशुपतशब्देन निर्दिष्टानां लिंगादिधारिणां कापालिकानामेव पुनः प्राणायामविधानार्थं कापालिकेतिशब्दांतरेणानुवादः ॥ आपस्तंबः ॥ द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा ॥ मुनेरन्नमभोज्यं स्यात्सर्वेषां लिंगिनां तथेति ॥ अत्र लिंगिनः पाशुपतादयइति आचारकांडतृतीयाध्याये माधवः ॥ अन्यच्च शिवदीक्षाख्यतद्व्रतग्रहणे पाखंडत्वं स्यात् ॥ श्रीभागवतचतुर्थस्कंधेद्वितीयाध्याये ( श्लो० २८ ) भवव्रतधराये च ये च तान् समनुव्रताः ॥ पाखंडिनस्ते भवंतु सच्छास्त्रपरिपंथिनः ॥ नष्टशौचामूढधियोजटाभस्मास्थिधारिणः ॥ विशंतु शिवदीक्षायां यत्र दैवं सुरासवम् ॥ ब्रह्म च ब्राह्मणांश्चैव यद्यूयं परिनिंदथ ॥ सेतुं विधारणं पुंसामतः पाखंडमाश्रिताः ॥ एषएव हि लोकानां शिवः पंथाः सनातनः ॥ यं पूर्वे चानुसंतस्थुर्यत्प्रमाणं जनार्दनः ॥ तद्ब्रह्म परमं शुद्धं सतां वर्त्म सनातनं ॥ विगर्ह्य यात पाखंडं दैवं वोयत्र भूतराडितिभृगुशापात् ॥ तथाच सति अनभिवाद्यत्वादयोबहवोदोषाः प्रसज्येरन् ॥ पाखंडान् पतितान् व्रात्यान् वाङ्मात्रेणापि नार्चयेदिति स्मृतेः ॥ आचारमाधवे ( अ० १श्लो० ३९ ) व्याख्याने आपस्तंबः ॥ पाखंडं पतितं व्रात्यं महापातकिनं शठं ॥ नास्तिकं च कृतघ्नं च नाभिवादेत्कथंचनेति ॥ अतः शास्त्रानुरोधादेव न शैवदीक्षायाः संसर्गः क्रियते नापि

शाक्तदीक्षायाः ॥ धर्माब्धिसारे तृतीयपरिच्छेदपूर्वार्द्धे कलिवर्जितप्रकरणे ॥ मद्यभक्षादिवामायागमस्य तु न मानता ॥ मीमांसाद्वितये सर्वशिष्टैश्च तदनादरादित्यादिषु बहुनिषिद्धत्वात् ॥ विस्तरस्तु कौलगजमर्दनादिषु मत्कृतशुद्धाद्वैतचंद्रोदये च द्रष्टव्यः॥ अतः स्वयं तद्धर्मानाचरणमात्रेण शास्त्रसिद्धतद्दोषानुवादेन वा नैव निंदकत्वगंधस्याप्यापत्तिः ॥ अन्यथा शाखांतरीयकर्माण्यनाचरतां सामगानस्य रुद्रदैवत्यत्वेन तदुच्चारणानंतरमशुचित्वान्नवेदांतरोच्चारणमुचितमित्यादि मन्वादिशास्त्रसिद्धं च वदतां तथा यागेष्वपि रुद्रदैवत्यादिकर्मानंतरमशुचित्ववारणायापउपस्पृशतां सर्वेषामपि द्विजातीनां वेददेवनिंदकत्वप्रसक्त्या महानेवानर्थः स्यात् तस्मान्न किंचिदेतत् ॥ इयत्त्विह तत्त्वं ॥ उक्तश्रीभागवतवचनस्वारस्यात् भगवद्भक्त्यादिप्रतिपादकसच्छास्त्रद्वेषिषु आधुनिकशैवसुधाकराद्युक्तरीत्या शिवनिवेदितान्नभक्षणादिना नष्टशौचेषु ऊर्ध्वपुंड्रतुलसीकाष्ठमालाप्रभृतिद्वेषात् सदा त्रिपुंड्ररुद्राक्षमात्रधारिषु भगवत्तद्भक्तब्राह्मणसनातनभगवन्मार्गशास्त्रवशालिषु शैवदीक्षाद्युराग्रहिष्वेवास्पृश्यत्वप्रभृतयोदोषाः सिध्यंतीति उक्तविधकुचरितरहितानां हरौ हरे च भक्तिमतां यथाशास्त्रं व्यवस्थयोर्ध्वपुंड्रत्रिपुंड्रादि कुर्वतां स्मार्तानां संस्पर्शादिकं नास्माकमनभिमतमिति॥तथाचातः वंदामहे मुकुंदं सानंदं नंदनंदनममंदं॥ शुद्धाद्वैतान्नैतानितरान्वंदारकांस्तुनिंदामः ॥ १ ॥

## ॥ अथ प्रक्रांतप्रश्नस्यावलंबी सप्तमः प्रश्नः॥ ७॥

॥ नास्तिचेत्तत्प्रतिपादकशास्त्रस्य का गतिः ॥ ३१ ॥

॥ उत्तरं ॥

तादृशं शास्त्रमेव दुर्लभं कदाचित्तत्संभवेऽपि तामसजीवपरं ॥ प्रथमस्कंधे द्वितीयाध्याये ॥ ( श्लो० २६ ) मुमुक्षवोघोररूपान् हित्वा भूतपतीनथ ॥ नारायणकलाः शांताभजंति ह्यनसूयवः॥२६॥ रजस्तमःप्रकृतयः समशीलाभजंति वै ॥ पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवइत्यादिश्रीभागवतादिवचनैस्तदुपासनायाराजसतामसैककार्यत्वनिश्चयात् ॥ तत्रापि शिवसायुज्यसालोक्याद्यन्यतमलक्षणमोक्षपरमेव ॥ तद्दीक्षांगभूतानां रुद्राक्षधारणादिधर्माणां फलप्रतिपादकैः ॥ रुद्राक्षदेहसंस्थोऽपि कुक्कुरोम्रियते यदि ॥ सोऽपि रुद्रपदं याति किं पुनर्मानवोगुहेत्यादिभिः स्कांदादिवचनैस्तथैवाध्यवसायात्॥अतएव तद्दीक्षाऽग्रहिभिरप्ययदीक्षितादिभिः स्वाभिलषितमुक्तिलक्षणकथनपुरःसरं सा प्रार्थ्यते ॥ भजेम भवदंतिकं प्रकृतिमेत्य पैशाचिकीं किमित्यमरसंपदं प्रमथनाथ नाथामहे ॥ भवद्भवनदेहलीविकटतुंडदंडाहतित्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयतइति ॥ अत्र पूर्वार्द्धेपिशाचयोनिप्राप्तिपूर्वकं शिवसान्निध्यस्य प्रार्थितत्वेनोत्तरार्द्धे तद्भवनस्यात्युत्कर्षवर्णनेन च कैलासादिरूपे शिवस्थाने पिशाचयोनिप्राप्तिपुरःसरं सार्वदिकं शिवसान्निध्यमेव तदभिलषितामुक्तिरिति फलति॥क्वचिच्छास्त्रेषु शिवदीक्षायाअतिप्रशंसा तु भृगुशापप्राक्कालिकपरेति प्राञ्चः ॥ तस्मान्नतन्मंत्राणां साक्षात्कैवल्यादिलक्षणमोक्षप्रदायित्वं शास्त्रसिद्धं ॥ अथ क्वचित्तेषां कदाचित्कैवल्यादिप्रदत्वकथनेऽपि परंपरासंबंधेनैव तद्बोद्धव्यं ॥ अतएव आस्ते ॥ समाप्तिदशायांमायानुकीर्त्तनाध्याये व्यास आह ॥ अन्यदेवेषु या भक्तिःपुरुषस्येह जायते ॥ क-

र्मणा मनसा वाचा तद्गतेनांतरात्मना ॥ तेन तस्य भवेद्भक्तिर्यज-
ने मुनिसत्तमाः ॥ सकरोति ततोविप्रा भक्तिं चाग्नेः समाहितः ॥
तुष्टे हुताशने तस्य भक्तिर्भवति भास्करे ॥ पूजां करोति सततमा-
दित्यस्य द्विजोत्तमाः॥ प्रसन्ने भास्करे तस्य भक्तिर्भवति तत्त्वतः ॥
सेवां करोति विधिवत् सतु शंभोःप्रयत्नतः ॥ तुष्टे त्रिलोचने तस्य
भक्तिर्भवति केशवे ॥ संपूज्य तं जगन्नाथं वासुदेवाख्यमव्ययं ॥
ततोभुक्तिं च मुक्तिं च सप्राप्नोति द्विजोत्तमाइति ॥ दशमस्कंधे
चोद्धवः ॥ दानव्रततपोहोमजपस्वाध्यायसंयमैः ॥ श्रेयोभिर्विवि-
धैश्चान्यैः कृष्णे भक्तिर्हि साध्यतइति ॥ भगवानप्याह ॥ जन्मांतर-
सहस्रेषु तपोध्यानसमाधिभिः ॥ नराणां क्षीणपापानां मयि भ-
क्तिः प्रजायतइति ॥ नच सर्वत्र देवतांतरभक्तानां प्रतिपादितप्रना-
ड्या कृष्णभक्त्युद्भवस्य नियमेनादर्शनात् प्रत्यक्षबाधितमेतदिति
शंक्यं ॥ एतज्जन्मनि तदभावे जन्मांतरेऽपि तत्संभवात् ॥ एतज्जन्मा
नुष्ठितनिष्कामयागादिकर्मभिरिहैव ज्ञानानुत्पत्तौ जन्मांतरे तदुत्प-
त्तिवत् ॥ प्रपंचितं चैतत् परमाचार्येण बादरायणेन साधनाध्याये
रंहतिपादे इति शुभं ॥इति तादृशशास्त्रार्थे सति तस्य गतिः कृता ॥
मतिमंतोरतिर्गोपीपतिपादेऽस्त्वतिप्रिया ॥ १ ॥ श्रुतिशुक्तिभवैर्यु-
क्तिमौक्तिकैर्वक्ति भूषितः ॥ मुक्तिं भुक्तिं भक्तिमतामाचार्यः शा-
स्त्रशक्तिमान् ॥ २ ॥ संतोजयंत्वसंतश्च लोके सुखलतोद्भवाः ॥ कु-
शास्त्रधारिणः प्राज्योत्तमसाधनतत्पराः ॥ ३ ॥

## ॥ अथ चतुर्थप्रधानप्रश्नावलंब्यष्टमः प्रश्नः ॥ ८ ॥

॥ पत्नीग्रहणरहितस्य दीक्षादाने ऽधिकारोऽस्ति नवा ॥ ३२ ॥

### ॥ उत्तरं ॥

पत्नीयुक्तोऽप्यपत्नीकोयत्नी जीवोत्धृतौ गुरुः॥दद्याद्दीक्षां दयावीक्षां स्वधाऽऽतन्वन्न दोषभाक्॥१॥ तथाहि॥ नियतब्रह्मचारिणां सनका-
दीनामपि दीक्षोपदेशादिदानेऽधिकारोदृश्यते ॥ उद्योगपर्वणि विदु-
रेण तेषां गुरुत्वनिरूपणात् ॥ तत्रैव धृतराष्ट्राय तैर्विज्ञानमुपदिष्ट-
मिति प्रख्यातं ॥ तथा ॥ श्रीभागवतचतुर्थस्कंधादिषु पृथुराजादि-
भ्यस्तैर्ज्ञानादिकमुपदिष्टं ॥ नारदपंचरात्रादिषु नारदायाऽपि भगव-
न्मंत्रतत्कवचादिकं दत्तमितिप्रसिद्धं ॥ नारदेनाऽप्याजन्मब्रह्मचा-
रिणो व्यासाय भगवन्मंत्रदीक्षा दत्तेति नारदपंचरात्रब्रह्मवैवर्त्ता-
दिषु स्फुटं ॥
प्रकृतिमेत्य पैशा... एवं श्रीभागवतगौतमतंत्रादिषु तेनैव ध्रुवगौतमादि-
भ्योद्वादशाक्षरविद्याष्टादशाक्षरगोपालविद्यादयउपदिष्टाइति स्प-
ष्टं ॥ एवं व्यासादिभ्योज्ञानोपदेशस्याऽपि तत्कर्तृकत्वं भारतभाग-
वतादिष्वपाणिपिहितं ॥ एवमपत्नीकेन नारायणमहर्षिणाऽपि-
नृसिंहभीतब्राह्मणवटुकाय भगवन्मंत्रदीक्षा दत्तेत्यनाच्छादितं नार-
दपंचरात्रप्रथमरात्रे॥एवमितरत्राऽपि पुराणादिषु तादृशेतिहासावि-
स्फारितदृग्भ्यां निरीक्षणीयाः॥ किंच॥यदहरेव विरजेत्तदहरेव प्र-
व्रजेत्॥अविप्लुतब्रह्मचर्योयमिच्छेत्तुतमाविशेदित्यादिश्रुतिस्मृतिसि-
द्धमाश्रमासमुच्चयपक्षमाश्रित्य प्रव्रजतामपि दीक्षादानेऽधिकारो-
दृश्यते॥यथा शंकराचार्याणां दक्षिणामूर्त्यादिदीक्षादाने॥अतएवच
याज्ञवल्क्यप्रायश्चित्ताध्याये वानप्रस्थप्रकरणे (श्लो० १) सुतवि-

न्यस्तपत्नीकइत्यस्य मिताक्षरायां सुतविन्यस्तपत्नीकस्यापि हि तापसाश्रमिणोवैतानौपासनसाध्यकार्येषु दाने चाधिकारोऽभ्यनुज्ञातोऽस्ति॥दीक्षाया अपि दानमेव ॥गोपृश्नीसरस्वतीभेदेन दानत्रैविध्यस्य सामशाखीयसांहित्युपनिषदि बृहस्पतिस्मृतौ च दर्शितत्वात् ॥ अतोऽस्मत्संप्रदाये पत्नीरहितानामपि नारदशुकदेवाद्याचार्याणां मंत्रोपदेष्टृत्वस्य पूर्वतएव प्राप्तत्वाच्छास्त्रविरोधाभावाच्च पत्नीरहितस्याऽप्यस्ति मंत्रोपदेशदाने ऽधिकारः ॥ नन्वेवं सत्यपि अकृतविवाहस्यास्तु तदधिकारः तथापि विधुरस्य त्वनाश्रमितया निंदितत्वात् श्राद्धभोजनादिषु निषिद्धत्वाच्च नाऽस्य तदधिकारोयुक्तइतिचेत् ॥ नैषदोषः ॥ निंदायावैदिकक्रियावत्त्वविद्वत्त्वकुलीनत्वपुत्रवत्त्वादिधर्मान्यतमाविशिष्टविषयकत्वात् ॥ उक्तान्यतमविशिष्टस्य तु श्राद्धभोजनादावप्ययोग्यत्वाभावाच्च ॥ निर्णयसिंधौ प्रथमपरिच्छेदे नक्तभोजनप्रस्तावे ॥ अनाश्रमोऽप्याश्रमी स्यादपत्नीकोऽपि पुत्रवानिति संग्रहोक्तेः ॥ तथा ॥ प्रजापतिस्मृतौ ॥ योऽभार्यः सन् बलं चेतः संयता विधुरोभवेत् ॥ क्रियापरः श्रुतेर्वेत्ता श्राद्धे वै भोजयेत्पितुः ॥ श्रुतिज्ञं कुलजं शांतं प्रजावंतं जितेंद्रियं ॥ मृतभार्यमपि श्राद्धे भोजयेदविशंकितः ॥ अप्रजोमृतपत्नीकः सर्वकर्मसु गर्हितः ॥ छंदोविनापि न स्थेयं दिनमेकं विनाऽऽश्रमं ॥ यस्य पुत्राः सदाचाराः श्रुतिज्ञाधर्मसंमुखाः ॥ पितृभक्तिरतादांतान वैधव्यं मृतस्त्रियि ॥ तुरीये धाम्नि यस्तिष्ठेत्संधौ मध्यनिशि क्षणं ॥ अभार्योऽप्यनपत्योऽपि श्राद्धे पुण्यैरवाप्यप्यते ॥ षोडशाब्दात्परं श्राद्धे विप्राणां सप्तसप्तके ॥ भोजयेत् पितृकार्यार्थे ततोन्यान् देवकर्मणि ॥ न पुत्रपुत्रीतदपत्यभार्या न वं-

धुरंगीकृतचित्तधारणः॥ संप्राप्य वैधव्यमनंगसंभवोयस्तिष्ठति व्यक्ततया सवर्ज्यइति ॥ अत्र कामवैल्हल्यादि दोषग्रस्तस्यैव विधुरस्य श्राद्धभोजनादौ निषेधोनतु तच्छून्यस्य ॥ किंचाग्निहोत्रदर्शपूर्णमासादिषु वैतानिककर्मस्वेव विधुरस्य नाधिकारः॥ तत्प्रवृत्तिद्वारस्य पुनराधानस्य सपत्नीकमात्राधिकारकत्वात् ॥ तदंगभूतेषु व्रीह्यवघाताज्यावेक्षणादिकर्मस्वपि पत्नीकार्यत्वस्य कल्पकारैरथैनामाज्यमवेक्षयतीत्यादौ निरूपणात् ॥ ( ब्राह्म० कांड ३ प्र० २ अ० ४ ) पत्न्यवेक्षने मिथुनत्वायप्रजात्यै यद्वैपत्नीयज्ञस्यकरोति मिथुनंतत् अथोपत्नियाएवैषयज्ञस्यान्वारंभोऽनवच्छित्त्यै इत्यादितत्तद्विधायकब्राह्मणवाक्योपलंभाच्च ॥ तथा कर्मांतरेष्वपि तत्तन्मंत्रेषु आशासानासौमनसंप्रजाःसौभाग्यंतनूं धातुश्चयोनौसुकृतस्यलोकेस्योनंमेसहपत्याकरोमि समायुषासंप्रजयासमग्नेवर्चसापुनः संपत्नीपत्याहंगच्छेसमात्मातनुवाममेत्यादिषु सौभाग्यपतिसहभावादिलिंगैस्तथैव निश्चयाच्च॥अथ संध्यास्नानदानजपदेवार्चनापूर्तादिषु तु विधुरस्याऽप्यधिकारोऽक्षतएव ॥ तत्र मंत्रोपदेशस्याऽपि दानत्वादस्ति विधुरस्याऽपि तत्राऽधिकारः॥तस्य दानत्वंतु त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वतीति सामशाखीयसाऽहित्युपनिषच्छ्रुत्या तादृशानुपूर्वीकबृहस्पतिस्मृत्या तदर्थानुवादिभिः सर्वेषामेवदानानां ब्रह्मदानं विशिष्यते ॥ विद्यादानं ततोऽधिकं ॥ सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ॥ तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतमित्यादिमन्वत्रियाज्ञवल्क्यादिस्मरणैश्च निरूपितमेव ॥ कथमन्यथा तवाऽपि प्रश्नवाक्ये दीक्षादानइत्युक्तिः संगच्छेत ॥ तस्मान्मंत्रोपदेशोऽपि दानाधिकारिणोन विधुरस्याऽनधिकारः ॥ त-

त्राऽपि दानत्वाविशेषात् ॥ अतएव मृतपत्नीकावैराग्यादिवशादकृतविवाहांतराअपि बहवः शिष्टाः संस्क्रियमाणेभ्यः स्वपुत्रादिभ्यो गायत्रीमुपदिशंतोदृश्यंते ॥ एवं श्रीभागवतचतुर्थस्कंधादिषु पुराणभागेष्वपि सतीनिधनानंतरं हैमवतीविवाहात् प्राक् विधुरस्याऽपि शिवस्य नारदाय ब्रह्मविद्योपदेशनंवर्ण्यते ॥ इत्थमितरत्राऽपि वर्णनांतराणि दृश्यानि ॥ इदानीमपि वैष्णवानामस्माकं माध्वरामानुजीयप्रभृतिषु संप्रदायांतरेष्वपि अस्माचार्याणां विधुराविधुरसाधारण्येनोपदेशकर्तृत्वव्यवहारः॥ अतः पत्नीरहितकर्तृकदीक्षादाने निषेधस्य शास्त्रसदाचारयोरनुपलब्धेर्नकोऽपि शंकावकाशः॥ अथ यदि प्रश्नवाक्ये दीक्षादानइत्यत्राऽऽकारप्रश्लेषादपत्नीकस्य यथा वैतानिकदीक्षाग्रहणे नाधिकारस्तथा तस्य वैष्णवदीक्षाग्रहणेऽधिकारोऽस्ति नवेत्येव विचिकित्सितं स्यात्तदापि वदामः ॥ परिणयाकरणाद्गृहिणीमरणाद्वाऽपत्नीकेष्वपि मुमुक्षायाअविशेषादस्ति वैष्णवदीक्षाग्रहणाधिकारः ॥ अतएव षष्ठे मनुः ॥ (श्लो० २५) अग्नीनात्मनि वैतानान्समारोप्य यथाविधीति आरोपिताग्निं सर्वथा पत्नीसंबंधगंधशून्यमपि वानप्रस्थं प्रस्तुत्य तस्य दीक्षाग्रहणं तादृशस्य परममोक्षं च वक्ति ॥ (श्लो० २९) एताश्चान्याश्च सेवेत दीक्षाविप्रोवने वसन् ॥ विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ॥ ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः॥ विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये ॥ ३० ॥ तथा ॥ (श्लो० ३२) आसां महर्षिचर्याणां त्यक्त्वाऽन्यतमया तनुं ॥ वीतशोकभयोविप्रोब्रह्मलोके महीयतइति ॥ पुनः पंचमाध्याये सएव॥(श्लोक० १५९) अनेकानि सहस्राणि कुमारब्रह्मचारिणां॥

दिवं गतानि विप्राणामकृत्वा कुलसंततिमिति ॥ अतः पत्नीभावाभावयोर्मोक्षे न साधकत्वं प्रतिबंधकत्वं वेत्यपत्नीकस्यापि तद्ग्रहणे न काऽप्यनुपपत्तिः ॥ विस्तरस्तु किमाश्रमनिष्ठइत्यस्योत्तरादवधेयः ॥ किंच यथा विधुरस्य ( अ० ५ श्लो० १६८ ) भार्यायै पूर्वमारिण्यै दत्वाऽग्नीनंत्यकर्मणि ॥ पुनर्दारक्रियां कुर्यात्पुनराधानमेव च ॥ अनेन विधिना नित्यं पंचयज्ञान्नहापयेदित्यादीनि मन्वादिवचनानि विवाहांतरकरणानंतरमेवाधानाधिकारं विदधति न तथा सपत्नीकस्यैव वैष्णवदीक्षाग्रहणविधायकमपत्नीकस्य तत्प्रतिषेधकं वा किंचिच्छास्त्रमुपलभामहे ॥ प्रत्युत नैष्ठिकब्रह्मचारिप्रभृतीनामपि तदावश्यकताबोधकानि वचनानि प्रागेवोपन्यस्तानीति सर्वमच्छिद्रं ॥ इत्थंच ॥ धुर्यं सन्मंत्रविषये तुर्यं चोद्यं सहाऽष्टभिः ॥ दुर्यंत्रितं स्वांगवाक्यैः पर्यंतं नीतमुत्तरैः ॥

## ॥ अथ पंचमः प्रधानप्रश्नः ॥ ५ ॥

भवतामत्यावश्यकोधर्मः कः ॥ ५ ॥

## ॥ उत्तरं ॥

श्रीकृष्णदेवमंत्राणां ग्रहणं स्वगुरोर्मुखात् ॥ श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥ १ ॥ अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनं ॥ स्वाचार्यदर्शितदिशेत्यादीनां समनुष्ठितिः ॥ २ ॥ धर्मोऽत्यावश्यकोस्माकं वेदवेदांतभाषितः ॥ वैष्णवत्वप्रयुक्तोऽथाध्ययनाऽध्यापनादिकं ॥ ३ ॥ प्रजारक्षादिकं नानाव्यापाराद्विजसेवनं ॥ वर्णप्रयुक्तादत्याद्याधर्मशास्त्रोदिताः क्रमात् ॥ ४ ॥ तत्तदाश्रममूलाश्च धर्माः श्रुत्यादिदर्शिताः ॥ सर्वेऽत्यावश्यकास्तेऽनुष्ठीयंते यथार्हणं ॥ ५ ॥

देशकालवयोवस्थाधीशक्त्याद्यनुसारतः ॥ तत्र वर्णाश्रमप्राप्ताः प्रत्यवायनिवृत्तये ॥ ६ ॥ ज्ञानेऽधिकारसिध्यर्थं चानुष्ठीयंतउज्वलाः ॥ हरिध्यानादिसाहित्यात्तेऽस्माकं वीर्यवत्तराः ॥ ७ ॥ चित्तं संशोध्यकल्पंते ज्ञानभक्त्यादिसिद्धये ॥ हरिसेवादयो धर्माः साक्षान्मोक्षाप्तये मताः ॥ ८ ॥ अतआवश्यकतराआचार्यैरुभये स्मृताः ॥ वैष्णवत्वप्रयुक्ताये ये च वर्णाश्रमोद्भवाः ॥ ९ ॥ येत्वन्यदेवताभक्त्याऽन्यमंत्रोपासनादयः ॥ पुत्रेष्ट्याद्याश्च ये काम्या वर्ज्यानावश्यकाः क्रमात् ॥ १० ॥ तत्राद्यवर्जने हेतुर्योवै स्वादेवतामिति ॥ एवमादीनिवाक्यानि प्रत्यवायाऽश्रुतिः परे ॥ ११ ॥ भूतिकामस्य वायव्यश्वेतालभनमुच्यते ॥ अननुष्ठानतस्तस्य प्रत्यवायोऽश्रुतोयथा ॥ १२ ॥ मया ग्रंथेषु वेदांतचिंतामण्यादिषु स्फुटम् ॥ विस्तरेणैव निर्णीतमेतत्तत्रैव दृश्यताम् ॥ १३ ॥

## ॥ अथ तत्प्रधानप्रश्नावलंबी आद्यः प्रश्नः ॥ १ ॥

॥ तत्र हरिध्यानादिकमावश्यकं यद्युच्यते तदा संध्यागायत्रीमध्ये भवतामनावश्यकत्वमिति वक्तव्यं ॥ तर्हि वर्णाश्रमगणना भवन्मतेऽस्ति न वा ॥ ३२ ॥

## ॥ उत्तरं ॥

अंगांगिभावादुभयोर्विरोधं शक्तान वक्तुं श्रुतियुक्तिविज्ञाः ॥ ध्यानादिकावश्यकताविधाने संध्याद्यनावश्यकता कथं स्यात् ॥ १ ॥ परस्परविरुद्धयोर्हैकतरावश्यकतास्वीकारे ऽन्यतरस्याऽनावश्यकत्वं प्रसज्येत ॥ इहतु संध्यावंदनगायत्रीजपादिकं न हरिध्यानादिविरुद्धं प्रत्युतांगांगिभावात् तत्साधकत्वाच्च तदनुकूलमेव ॥ तः

स्मादस्माकं तूभयोरप्यावश्यकत्वस्वीकारइति अविचाररमणीय-एवायं वर्णाश्रमगणनाभावाभावप्रश्नः॥ गायत्र्यादीनां भगवत्प्राप-कत्वं तु प्रपंच्यते॥तथाहि मनुना द्वितीयाध्याये॥(श्लो० ७६ ) अ-कारं चाप्युकारं चेत्यारभ्य त्रैवर्णिकानां सप्रणवस्य गायत्रीज-पस्य काले संध्यावंदनादिक्रियायाश्चात्यावश्यकतां निरूप्योच्य-ते ॥ ओंकारपूर्विकास्तिस्रोमहाव्याहृतयोऽव्ययाः ॥ त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणोमुखम्॥ ८१ ॥ योऽधीते ऽहन्यहन्येतां त्री-णि वर्षाण्यतंद्रितः ॥ सब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥ सं वर्तोऽपि ॥ ( श्लो० २०४ ) गायत्रीं यः सदा विप्रोजपेत नियतः शुचिः ॥सयाति परमं स्थानं वायुभूतः खमूर्तिमानिति ॥ ब्रह्मणो-मुखमित्यत्र ब्रह्मणः परमात्मनः प्राप्तेर्द्वारमेतदध्ययनजपादिना निष्पापस्य ब्रह्मज्ञानप्रकर्षेण मोक्षावाप्तेरिति कुल्लूकभट्टोव्याच-ख्यौ ॥ अतः पापनाशकत्वेन नित्यत्वेन चोपकारकत्वाद्धरिप्राप्ति-शेषभूतमेवेदं॥परब्रह्मत्वं च हरेरेवेतितु तदेवब्रह्मपरमंकवीनां तयोरै-क्यंपरंब्रह्मकृष्णइत्यभिधीयतइति अहमेवपरंब्रह्मपरमात्माहमव्य-यइति मत्तःपरतरंनान्यत्किंचिदस्तिधनंजयेत्यादिश्रुतिस्मृतिवाक्य-सहस्रभेरीघुष्टं सर्वसदास्तिकसंमतं ॥ पुनरपि वैदिककर्मणां तत्प्रा-प्तिसाधनत्वमाह सएव षष्ठे ॥ (श्लो० ७५) अहिंसयेंद्रियासंगैर्वै-दिकैश्चैव कर्मभिः ॥ तपसश्चरणैश्चोग्रैः साधयंतीह तत्पदमिति ॥ बृ-हदारण्यकेच श्रूयते॥(पृष्ठ८९७) तमेतं वेदानुवचनेन ब्राह्मणावि-विदिषंतियज्ञेन दानेन तपसा ऽनाशकेनेत्यादि॥तैत्तिरीयेपि॥वेदमनू-च्याचार्योंतेवासिनमनुशास्तीति॥अतः सर्वस्यापि तत्त्वतोभगवदव-बोधशेषत्वंसिध्यति ॥ किंच हरिध्यानादि विना संध्यावंदनादि

निष्फलमेव ॥ अतएव मनुः ॥ ( अ० ६ श्लो० ८२ ) नह्यनध्यात्मवित् कश्चित् क्रियाफलमुपाश्नुतइति॥छांदोग्ये च श्रूयते ॥ यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवतीति ॥ अपिच ॥ संध्यावंदनादिवैदिककर्माधिकारसंपादके उपनयनसंस्कारेऽपि अविदुषोनाधिकारः ॥ यमविद्वानुपनयते यश्चाविद्वानितीतिश्रुतेः ॥ अंधे तमसएव तमः प्रविशनीति दुष्फलश्रावणात् ॥ विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषोभवेदिति स्मृतेश्च ॥ तथा ॥ यागाधिकारिविशेषणकोटावपि अर्थीसमर्थोविद्वान्जातपुत्रइति कल्पसूत्रे विदुषोऽधिकारउच्यते ॥ याज्ञवल्क्योऽपि गायत्रीजपादेः प्रकर्षतः सिद्धौ ब्रह्मविद्यायाएव हेतुत्वमाह ( अ० १ ) गृहप्रकरणे ॥ ( श्लो० ५ ) जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेदिति ॥ पराशरमाधवीये प्रथमाध्याये आह्निकप्रकरणे बृहस्पतिः ॥ ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥ जप्त्वाऽथ प्रणवं चापि ततस्तर्पणमाचरेदिति ॥ अथ ध्यानंतु विदधाति याज्ञवल्क्यएव तृतीयाध्याये अध्यात्मप्रकरणे ( श्लो० ९ ) ध्यानयोगेन संपश्येत्सूक्ष्मआत्माऽऽत्मनि स्थितइति ॥ तत्रैव ( श्लो० १४६ ) ततोध्येयस्थितोयोऽसौ हृदये दीपवत्प्रभुः ॥ धारयेत्तत्रचात्मानं धारणां धारयन् बुधइति॥ अथ बृहत्पराशरोऽपि द्वितीयाध्याये ( श्लो० ८२ ) मांत्रं पार्थिवमाग्नेयमित्यादिना सप्तस्नानान्युपक्रम्य ( श्लो० ८५ ) यद्ध्यानं मनसा विष्णोर्मानसं कथ्यते बुधैरिति मानसस्नानलक्षणमुक्त्वा ( श्लो० ८६ ) स्नानानामुत्तमं स्नानं मन्वाद्यैर्मानसं स्मृतं ॥ कु-

तेन येन मुच्यंते गृहस्थाअपि सद्विजाइति सर्वेषां मोक्षसाधनत्वं तस्याह ॥ तथा ॥ (श्लो० ९० ) अस्नात्वा नाचरेत्कर्म जपहोमादि किंचनेति अस्नातस्य यावत्कर्मकरणनिषेधात् स्नानेषु ध्यानरूपस्य च मानसिकस्यातीव फलकथनात् संध्यादौ ध्यानस्योपकारकत्वमुक्तं भवति॥पुनः सएव ॥ ( अ०२श्लो०१३८) चिद्रूपं परमं ज्योतिर्निरालंबमनामयं॥अव्यक्तमव्ययं शांतं स्नायाद्वापि हरिं स्मरन्॥गायत्रीवारिसंस्नातः प्रणवैर्निर्मलीकृतः ॥ विष्णुस्मरणसंशुद्धोयोग्यः सर्वेषु कर्मसु ॥ योऽधीतवेदवेदार्थः स्नातः सर्वेषु चारिषु॥न शुध्येदशुचिस्त्वांतस्तच्छुद्धस्तु शुचिर्मतइति ॥ पुनस्तत्रैव (अ० २)प्रणवप्रकरणे॥ (श्लो० १०)प्रणवोहि परं तत्वमित्युपक्रम्य (श्लो० १६) त्रिस्वभावस्थितोदेवोमंतव्योब्रह्मवादिभिरिति भगवत्तत्त्वावगंतृभिरेव तस्य शक्यमननत्वमुक्त्वा ऽग्रे जगत्कर्तृत्वादिधर्मोक्तिपूर्वकं तस्य स्पष्टं विष्णुत्वं निरूप्य (श्लो० ३१) उत्पन्नमेतत्तु यतः समस्तं व्याहृत्य तिष्ठेत्प्रलयेऽपि यत्र ॥ एकाक्षरेणापि जगंति येन व्याप्तानि कोऽन्यः परमोऽस्ति तस्मात् ॥ ३२ ॥ ध्येयं न जप्यं नच पूजनीयं यस्मान्न देवाद्वरणीयमन्यत् ॥ दुस्तारसंसारपयोधिमग्ने ताराय विष्णुः परमः सपूज्यइत्यंतं तस्यैव ध्यानादि विधीयते ॥ पराशरमाधवीये (अ० १श्लो० ३९) संध्यास्नानमित्यस्य व्याख्यायां व्यासः ॥ न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ॥ साहमस्मीत्युपासीत विधिना येन केन चिदिति ॥ ब्रह्म तु हरिरेव ॥ अस्मच्छाखीयनारायणोपनिषदि ॥ अंभस्यपारइति प्रक्रमे यमंतः समुद्रे कवयोवयंतीत्यादिलिंगकथनपूर्वकं तदेव ब्रह्म परमं कवीनामित्युक्तेः ॥ नारायणपरं ब्रह्म

तत्त्वं नारायणः परइत्युक्तेश्च ॥ पुनस्तत्रैव व्यासः ॥ गृहेत्वेकगुणा संध्या गोष्ठे दशगुणा स्मृता ॥ शतसाहस्त्रिका नद्यामनंतं विष्णुसंनिधाविति॥ यत्र विष्णुप्रतिमादिसन्निधावपि अनंतमित्युच्यते किं तत्र वाच्यं तत्ध्यानसहकृतस्य कर्मणोऽनंतफलत्वे॥तैत्तिरीयब्राह्मणेऽपि भगवत्त्वेनादित्यध्यानपूर्वकमेव प्रातरादिसंध्याकरणं विधाय तादृशस्यैव मोक्षआम्नायते॥ उद्यंतमस्तं यंतमादित्यमभिध्यायन् कुर्वन् ब्राह्मणोविद्वान् सकलं भद्रमश्नुते सावादित्योब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति यएवं वेदेति ॥ आचारमाधवे (अ० १) आन्हिकप्रकरणे विष्णुपुराणे ॥ आचम्य च ततोदद्यात् सूर्याय सलिलांजलिं ॥ नमोविवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ॥ जगत्सवित्रे शुचये सवित्रे कर्मदायिनइति ॥ अथ कदाचिद्गायत्र्यादीनां सूर्यमंत्रत्वं मन्येत तदापि सूर्यस्य विष्णुतेजस्त्वेन तद्विभूतित्वात्तन्मंत्राणां नारायणपरत्वमेव ॥ सारसंग्रहे च वाराहे ॥ संध्योपास्तिं करिष्यंति द्विजाविष्णुपराङ्मुखाः ॥ रौरवं नरकं प्राप्य चांडालीं योनिमाप्नुयुरिति हरिध्यानादिशून्यस्य संध्यावंदनादेर्दुष्फलजनकत्वमप्युक्तं ॥ संध्यात्रयस्य पापक्षयहेतुत्वेन चित्तशुद्धिद्वारा ज्ञानशेषत्वं तु ध्वनयति याज्ञवल्क्यो (अ० ३) रहस्यप्रायश्चित्तप्रकरणे ॥ (श्लो० ३) निशायां वा दिवावापि यदज्ञानकृतं भवेत्॥त्रैकाल्यसंध्याकरणात्तत्सर्वं विप्रणश्यतीति ॥ यमोपि ॥ यदन्हात्कुरुते पापं कर्मणा मनसा गिरा ॥ आसीनः पश्चिमां संध्यां प्राणायामैर्निहंति तदिति ॥ शातातपेनाप्युक्तं ॥ अनृतं मद्यगंधं च दिवामैथुनमेवच ॥ पुनाति वृषलान्नं च संध्यावहिरुपासितादिति ॥ अथाऽतिथिपूजनादिनित्यधर्मस्यापि

विष्णुप्रसादार्थकत्वात्तद्ध्यानमावश्यकमिति बोधयति द्वितीयाध्याये पराशरः ॥ यथा ॥ ( श्लो० १ ) अथातिथ्यं प्रवक्ष्यामीत्यादिना प्रतिज्ञापुरःसरं सपरिकरमातिथ्यविचारं निरूप्याह ॥ (श्लो०१७) योऽतिथिं पूजयेद्भक्त्या पूर्वमभ्यागतं तथा॥बालवृद्धादिकं चैव तस्य विष्णुः प्रसीदतीति ॥ अतिथिपूजनस्याऽपि चित्तशुद्धिद्वारा भगवज्ज्ञानपर्यवसायित्वं तु दर्शितं माधवीये ( अ० १ श्लो० ३९ ) व्याख्यायां कूर्मपुराणे ॥ हंतकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ॥ दद्यादतिथये नित्यं बुध्येत परमेश्वरमिति ॥ अतिथिसत्कारस्य भगवदर्चनरूपत्वं तु शंसितमाश्वमेधिके पर्वणि ॥ पाद्याभ्यंगांबुपानैस्तु योऽतिथिं पूजयेन्नरः ॥ पूजितस्तेन राजेंद्र भवामीह न संशयइति ॥ अन्यच्च ॥ यज्ञाः संति ब्राह्मणस्यावश्यकाएव ॥ तेच विष्णुलोकफलकाः ॥ यथा माधवीये ( अ० १श्लो० ३७ ) व्याख्यायां हारीतः ॥ यज्ञेन लोकाविमलाविभांति यज्ञेन देवाअमृतत्वमापुवन् ॥ यज्ञेन पापैर्बहुभिर्विमुक्तः प्राप्नोति लोकानमरस्य विष्णोरिति॥कूर्मपुराणे नास्तिक्यादथवाऽऽलस्याद्योऽग्नीन्नाधातु मिच्छति॥यजेत वा न यज्ञेन सयाति नरकान् बहून्॥ तस्मात्सर्वप्रयत्नेन ब्राह्मणोहि विशेषतः॥आधायाग्निं विशुद्धात्मा यजेत परमेश्वरमिति ॥ हारीतः ॥ पाकयज्ञान् यजेन्नित्यं हविर्यज्ञांस्तु नित्यशः॥सौम्यांस्तुविधिपूर्वेण यइच्छेद्ब्रह्मचाव्ययमिति ॥ कूर्मपुराणे ॥ अमृतापिधानमसीत्यादिना भोजनानंतरमाचमनाद्युक्त्वोच्यते ॥ अथाक्षरेण स्वात्मानं योजयेद्ब्रह्मणेति हि ॥ सर्वेषामेव यागानामात्मयागः परः स्मृतः ॥ योऽनेन विधिना कुर्यात्सयाति ब्रह्मणः पदमिति ॥ एवं प्राधान्येनाश्रमत्र-

यधर्मेषु हरिध्यानसाहाय्यावश्यकत्वं दर्शितं ॥ किंच संन्यासग्रहणेऽपि हरिध्यानमावश्यकं ॥ आचारमाधवद्वितीयाध्याये संन्यासग्रहणविधौ कात्यायनः ॥ आत्मन्यग्नीन् समारोप्य वेदिमध्यस्थितोहरिं ॥ ध्यात्वा हृदि त्वनुज्ञातोगुरुणा प्रैषमारभेदिति ॥ षष्ठे संन्यासिधर्मानुपक्रम्य मनुः ॥ (श्लो० ७९) प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतं ॥ विसृज्य ध्यानयोगेन ब्रह्माऽभ्येति सनातनमिति ॥ तस्माद्धरिध्यानादिकं सर्वेष्वपि वर्णाश्रमेष्वावश्यकं नतु तेन सह वर्णाश्रमधर्माणां विरोधगंधोऽपि ॥ सर्वेषामपि हि धर्माणां हरिस्मरणेनैव परिपूर्णत्वं निगद्यते ॥ कथं तर्हि हरिध्यानादिकेन सार्द्धं वर्णाश्रमधर्माणां विरोधगंधः किंचिज्ज्ञेन बालेनाऽपि भाषितुं शक्यः ॥ तथाहि प्रमादात्कुर्वतांकर्मेत्यादि परिपूर्णतद्स्तुमहत्यंतं श्लोकत्रयं प्रसिद्धं ॥ चतुर्विंशतिमतव्याख्यायामाचारकांडे बृहन्नारदीये॥न्यूनातिरिक्तताऽसिध्यै कलौ वेदोक्तकर्मणां॥ हरिस्मरणमेवात्र संपूर्णफलदायकमिति ॥ माधवीये प्रथमाध्याये आन्हिकप्रकरणे याज्ञवल्क्यः ॥ यदि वाग्यमलोपः स्याज्जपादिषु कदाचन ॥ व्याहरेद्वैष्णवं मंत्रं स्मरेद्वा विष्णुमव्ययमिति ॥ गौतमोऽपि॥गच्छतस्तिष्ठतोवाऽपि स्वेच्छया कर्म कुर्वतः॥अशुचेर्वा विनासंख्यं तत्सर्वं निष्फलं भवेत् ॥ क्रोधं मोहं क्षुतं निद्रां निष्ठीवनविजृंभणे ॥ दर्शनं च श्वनीचानां वर्जयेज्जपकर्मणि ॥ आचामेत्संभवेचैषां स्मरेद्विष्णुं सुरार्चितमित्यादि ॥ सारसंग्रहे स्कांदे भगवद्वचनं ॥ मन्निमित्तं कृतं कर्म कर्मलोपोभवेद्यदि ॥ तत्कर्म कुर्वते नित्यं तिस्रः कोट्योमहर्षयः ॥ मन्निमित्तं कृतं पापं मद्धर्माय च कल्पते ॥ मामनादृत्य धर्मोऽपि पापं स्यान्मत्प्रभावतः ॥ पाद्मे भृगुव-

चनं ॥ सकर्ता सर्वधर्माणां भक्तोयस्तव केशव ॥ सकर्ता सर्वपापानां येन भक्तस्तवाच्युतेति॥अथ पुनरपि ध्यानोत्कर्षौऽध्वत्रिस्मृतौ अष्टमाध्याये विविधप्रायश्चित्तान्यभिधाय सर्वांते ॥ ध्यानेन सदृशं नास्ति शोधनं पापकर्मणां ॥ श्वपाके चापि भुंजानोध्यानेनेह विशुध्यति ॥ ध्यानमेव परं ब्रह्म ध्यानमेव परंतपः ॥ ध्यानमेव परं शौचं ध्यानमेव परं पदं ॥ सर्वपापप्रसक्तोऽपि ध्यायन्नेव प्रमुच्यते ॥ तपस्वी च भवेद्देवं पंक्तिपावनपावनः ॥ पुनस्तत्रैव नवमाध्याये ॥ योध्याता यच्च तद्ध्यानं यद्ध्येयं यत्प्रयोजनं ॥ सर्वाण्येतानि योवेत्ति सयोगं योक्तुमर्हति ॥ आत्मा ध्याता मनोध्यानं ध्येयः सूक्ष्मोमहेश्वरः ॥ यत्परात्परमैश्वर्यमेतद्ध्यानप्रयोजनम् ॥ विदित्वा सर्वसूक्ष्माणि षडंगं च महेश्वरं ॥ प्रधानगुणतत्त्वज्ञः परं ब्रह्माधिगच्छति ॥ विद्वेषादपि गोविंदं दमघोषात्मजः स्मरन् ॥ शिशुपालोगतः स्वर्गं किं पुनस्तत्परायणः ॥ उपलब्धिः स्मृतिर्ध्यानं संकल्पः प्रणवं प्रति ॥ कल्पना भावना चिंता ध्यानमित्यभिधीयते ॥ प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ॥ तर्कश्चैव समाधिश्च षडंगोयोगउच्यतइति ॥ अत्र महेश्वरशब्दोभगवत्परः ॥ विद्वेषादपि गोविंदमिति गोविंदशब्दश्रुतिसामानाधिकरण्यात्॥नारायणपरोध्याता ध्यानं नारायणः परइतिश्रुतेश्च ॥ ध्यानस्य भगवत्साक्षात्कारहेतुत्वं तु मुंडकोपनिषदि तृतीयमुंडके श्रूयते ॥ ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानइति ॥ तस्यैव ज्ञानहेतुत्वं च श्रूयते कैवल्योपनिषदि ॥ श्रद्धाभक्तिध्यानयोगादवेहीति ॥ तस्मादेवमुत्तमतमस्य हरिध्यानादेः संध्यावंदनादिवर्णाश्रमधर्मविरुद्धत्वाभावात्तदावश्यक-

त्वकथनेन न वर्णाश्रमधर्माणामनावश्यकत्वं सिध्यति॥वर्णाश्रमधर्मात्यागस्याऽपि विष्णुभक्तिचिन्हत्वात् ॥ यथा ऽऽह विष्णुपुराणे यमः॥(अं० ३अ० ७श्लो० १६)न चलति निजवर्णधर्मतोयः सममतिरात्मसुहृद्विपक्षपक्षे ॥ न हरति न च हंति किंचिदुच्चैः स्थितमनसं तमवेहि विष्णुभक्तम् ॥ कालमाधवीये तु जितमनसमितिपाठः ॥ अतः ॥ विचार्यते शास्त्रकथा यथायथा वचांसि युक्तानि लभेत्तथातथा ॥ श्रांतोऽस्मि लेखाद्व्याकुलादलं वृथा वादव्यथां मेव कथा हरेः पथा ॥ १ ॥ यथाऽस्ति वर्णाश्रमधर्मवर्णनं सत्संप्रदायेषु गतिप्रदायिषु ॥ हरौ रतेश्चारुविचारसंचयैर्नचेतरत्राऽस्ति तथेति बुध्यतां ॥ २ ॥

## ॥ अथ प्रक्रांतपंचमप्रश्नावलंबी द्वितीयः प्रश्नः ॥ २ ॥

॥ संध्यादिहीनस्याब्राह्मण्यं भवत्संमतं नवा ॥ ३४ ॥

## ॥ उत्तरं ॥

ब्राह्मण्यस्य तिरोधाने नित्यसंध्यादिलोपने ॥ प्रतिबंधैर्विहीनस्य सूतकाद्यैररोगिणः ॥ १ ॥ सेवाद्यनुपरुद्धस्य देवदेवस्यापतेः ॥ वृथा लोपयतः कर्म यथाशास्त्रं सुसंमतम् ॥ २ ॥ अत्राब्राह्मण्यं नाम ॥ ब्रह्माननं क्षत्रभुजोमहात्मेत्यत्र द्वितीयस्कंधसुबोधिन्यां श्रीमदाचार्यदर्शितदिशा ब्राह्मणबीजतस्तत्परिणीतब्राह्मणजातीयक्षेत्रोत्पन्ने शरीरे प्रायोगर्भाधानादिशास्त्रीयसंस्कारैरेव शक्याविर्भावस्य क्वचिदीश्वरेच्छया शरीरांतरेऽपि तपोविशेषादिभिः प्रादुर्भावशालिनोभगवन्मुखरूपस्य ब्राह्मण्याख्यदेवताविशेषस्य संध्यावंदनलोपम्लेच्छान्नभक्षणादिप्रतिकूलसंपत्प्रयुक्त प्रायश्चित्तप्रति-

विधेयं तिरोधानं॥पुनस्तत्प्रादुर्भावकप्रायश्चित्तानि तु स्वल्पवैगुण्ये स्वल्पानि गुरुणि तु पुनःसंस्कारादिरूपाणि गुरूणि यथा शास्त्रोक्तविधिना प्रतिष्ठाकरणात्प्रतिमादौ प्रादुर्भूतायादेवतायास्तिरोधानप्रयोजके स्वल्पवैगुण्ये प्रोक्षणपंचामृतस्नानादिकमेव पुनःप्रादुर्भावकं म्लेच्छसंसर्गादौ महत्तरानाचारे तु पुनः प्रतिष्ठाकरणादीति दिक् ॥ तत्र संध्याराहित्याभ्यासप्रयुक्तं ब्राह्मण्याख्यदेवताविशेषतिरोधानमस्माकं संगतमेव ॥ शास्त्रसिद्धत्वात् ॥ तथाहि ॥ द्वितीयाध्याये बृहत्पराशरः ॥ (श्लो०१०) दिवसस्य च रात्रेश्च संधिः संध्येति गीयते ॥ सोपास्या सद्भिर्जैर्यत्नात्स्यान्तैर्विश्वमुपासितं ॥ मध्यान्हेऽपि च संधिः स्यात्पूर्वस्याऽन्होऽपरस्य च ॥ पूर्वाह्णाहोपराह्णश्च क्षपाचेति श्रुतिक्रमः ॥ पुनः सएव तत्रैव ॥ (श्लो०-७१) त्रिंशत्कोट्यस्तु विख्यातामंदेहानामराक्षसाः इत्यादिना स्वाध्यायब्राह्मणोक्तप्रकारेण मंदेहानां सूर्येण प्रत्यहं युद्धादि निरूप्याह ॥ (अ०२श्लो० ८०।८१) मत्वेत्यनुदितादिरये संध्योपास्तिकरोभवेत् ॥ उदिते सति या संध्या वाल्क्रीडोपमा हि सा॥ संध्या येन न विज्ञाता नच संध्याउपासिताः ॥ सजीवन्नपि शूद्रः स्यात्सदा पातकसंयुतइति॥आचारमाधवीये प्रथमाध्याये संध्यां प्रशंसति यमः ॥ संध्यामुपासते ये तु सततं शंसितव्रताः ॥ विधूतपापास्ते यांति ब्रह्मलोकं सनातनं ॥ यदन्हात्कुरुते पापं कर्मणा मनसा गिरा॥आसीनः पश्चिमां संध्यां प्राणयामैस्तु हंति तत्॥यद्रात्र्यात्कुरुते पापं कर्मणा मनसा गिरा॥ पूर्वसंध्यामुपासीनः प्राणायामैर्व्यपोहति॥ऋषयोदीर्घसंध्यत्वादीर्घमायुरवाप्नुयुः॥प्रजां यशश्च कीर्तिं च ब्रह्मवर्चसमेवचेति ॥ अकरणे प्रत्यवायोदर्शितोदक्षे-

ण ॥ संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥ यदन्यत्कुरुते क-र्म न तस्य फलभाग्भवेदिति ॥ गोभिलोऽपि॥संध्या येन न विज्ञा-ता संध्यायेनाऽनुपासिता ॥ जीवमानोभवेच्छूद्रोमृतः श्वा चाऽ-भिजायतइति ॥ विष्णुपुराणेऽपि ॥ उपतिष्ठंति ये संध्यां येन पूर्वां न पश्चिमां ॥ व्रजंति ते दुरात्मानस्तामिस्रं नरकं नृपेति ॥ कूर्मपु-राणे ॥ योऽन्यत्र कुरुते कर्म धर्मकार्यं द्विजोत्तमः ॥ विहाय सं-ध्याप्रणतिं स याति नरकायुतमिति ॥ एतत्सर्वमनार्त्तविषयं ॥ त-थाच ॥ याज्ञवल्क्यः ॥ अनार्त्तश्चोत्सृजेद्यस्तु सविप्रः शूद्रसंमतः ॥ प्रायश्चित्ती भवेच्चैव लोके भवति निंदितइति॥अत्रिरपि ॥ नोपति-ष्ठंति ये संध्यां स्वस्थावस्थासु वै द्विजाः॥हिंसंति वै सदापापा भ-गवंतं दिवाकर मिति ॥ विष्णुपुराणेऽपि ॥ सर्वकालमुपस्थानं सं-ध्यायाः पार्थिवेष्यते ॥ अन्यत्र सूतकाशौचविभ्रमातुरजीविनइ-ति ॥ सूतकादौ सत्यपि सामर्थ्ये संध्योपासनं न कार्यमित्याह मरीचिः ॥ सूतके कर्मणां त्यागः संध्यादीनां विधीयतइति ॥ यद-पि पुलस्त्येनोक्तं ॥ संध्यामिष्टिंच होमं च यावज्जीवं समाचरेत् ॥ न त्यजेत्सूतके चापि त्यजन्गच्छत्यधोगतिमिति ॥ तन्मानसिकसं-ध्याभिप्रायं ॥ यतस्तेनैवोक्तं ॥ सूतके मृतके चैव संध्याकर्म न संत्यजेत्॥मनसोच्चारयेन्मंत्रान्प्राणायाममृते द्विजइति ॥ एतद्विदि-त्वा यः संध्यामुपास्ते शंसितव्रतः ॥ दीर्घमायुः सविंदेत सर्वपापैः प्रमुच्यतइति ॥ पुनर्माधवः ॥ (अ० १श्लो० ३९) संध्यादीनां नि-त्यत्वं चाग्निहोत्रादिवद्यावज्जीवकर्त्तव्यतया ऽवगम्यते जीवनवद-धिकारत्वं च दिनेदिनइति वीप्सया ऽवगम्यते ॥ यथाच वसंते व-

संते ज्योतिषा यजेतेत्यत्र वीप्सया ऽवगमस्तद्वदिति॥पुनराचारकांडद्वितीयाध्याये हारीतः॥चत्वारोथाश्रमास्तेते संध्यावंदनवर्जिताः॥ ब्राह्मण्यादेव हीयते यदप्युपगतं बुधैरिति॥बौधायनोऽपि ॥ अनागतां तु ये पूर्वामनतीतां तु पश्चिमां॥संध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताइति॥स्मृत्यंतरेऽपि॥सायंप्रातः सदा सध्यां ये विप्रानोह्युपासते॥कामं तान् धार्मिकोराजा शूद्रकर्मसु योजयेत्॥मनुरपि ॥ सावित्रीपतितात्राल्याभवंत्यार्यविगर्हिताइति॥ दक्षस्मृतौ॥ संध्याकाले च संप्राप्ते मध्यान्हे च ततः पुनः॥ योन संध्यामुपासीत ब्राह्मणोहि विशेषतः ॥ सजीवन्नेव शूद्रस्तु मृतः श्वा चैव जायते॥संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥ यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेत् ॥ धर्मसिधौ तृतीयपरिच्छेदपूर्वार्द्धे संध्याप्रस्तावे ॥ संध्यामुपासते ये ते निष्पापाब्रह्मलोकगाः ॥ अन्यकर्मफलं नास्ति संध्याहीनेऽशुचित्वतः ॥ जीवमानोभवेच्छूद्रो मृतः श्वा जायते ध्रुवमिति ॥ धर्मप्रवृत्तौ शाकलः ॥ संध्याकाले तु संप्राप्ते संध्यां नैव मुपासते॥ जीवमानोभवेच्छूद्रोमृतः श्वानोऽपि जायते॥ देवाग्निद्विजविद्यानां कार्ये महति संस्थिते॥ सध्याहीने न दोषोऽस्तियतस्तत्कर्मसाधनादिति॥अतोऽस्यावशकभगवत्सेवाद्यनुरोधात् गत्यंतराभावतः संध्यावदनादीनां किंचित्कालविलोपेऽपि न दोषः ॥ अतएव सारसंग्रहे स्कादे भगवद्वचनं ॥ मन्निमित्तं कृतं कर्म कर्मलोपोभवेद्यदि॥तत्कर्म कुर्वते नित्यं तिस्रः कोट्योमहर्षयः ॥ मन्निमित्तं कृतं पापं सद्धर्माय चकल्पते॥ मामनादृत्य धर्मोपि पापं स्यान्मत्प्रभावतइति ॥ तत्रैव वाराहे ॥ संध्योपास्तिं करिष्यंति द्विजाविष्णुपराङ्मुखाः ॥ रौरवं नरकं प्राप्य चां

डालीं योनिमाप्नुयुः ॥ नानुव्रजति योमोहाद्व्रजंतिर्हरिमुत्सवे ॥ ज्ञानाग्निदग्धक्लेशोऽपि वसंते नरके ऽशुचाविति ॥ अयं किंचित्कर्मकाललोपादौ दोषाभावोभगवत्सेवापरतंत्रस्य गत्यंतराभाव एव वेदितव्यः ॥ अस्तु किमनेन प्रासंगिकेन ॥ तस्मादाशौचादिप्रतिबंधककालव्यतिरिक्तावसरे अनार्त्तस्य भगवत्सेवादिना गत्यंतराभाववता अप्रतिरुद्धस्य संध्यावंदनादिकनित्यकर्मत्यागाभ्यासे शास्त्रप्रामाण्याब्राह्मण्यतिरोभावोऽस्माकं संमतएव ॥ नन्वेवं सतीदानीं बहुषु ब्राह्मणजातिष्वनेकेषां सर्वदा संध्यावंदनराहित्येनाब्राह्मणत्वात् संध्यादिकृद्भिर्विद्वद्भिरपि स्वल्पैस्तत्तज्जातीयैरनुष्ठीयमानस्तैः सह सहभोजनादिव्यवहारः कथमविरुद्धः स्यादितिचेत् इत्थं॥ बहूनां तादृशत्वे बहुभिर्न विरोद्धव्यमिति न्यायेन स्वल्पैर्बहुविरोधस्य कर्तुमशक्यत्वात् युगानुरूपाणां द्विजानामनिंद्यत्वस्मरणाच्च युक्तः सइति॥तथाच बृहत्पराशरः प्रथमाध्याये॥(श्लो० ३१)युगेयुगेषु ये धर्मास्तेषु धर्मेषु ये द्विजाः॥तेषां निंदा न कर्त्तव्या युगरूपाहि ते द्विजाइति॥युगरूपाः युगानुरूपाः कालपरतंत्राइतिमाधवः॥उक्तं च भारतआरण्यके पर्वणि॥भूमिर्नद्योनगाः शैलाः सिद्धादेवर्षयस्तथा॥कालं तमनुवर्त्तंते यथाभावायुगेयुगे ॥ कालं कालं समासाद्य नराणां नरपुंगव॥बलवर्ष्मप्रभावायान भवंत्युद्भवंति चेति॥ अतएव गायत्रीमात्रविज्ञाअपि सम्यक्शौचाद्याचारनियंत्रिताः सर्ववर्णान्नभक्षणाद्यनाचारशून्या ब्राह्मणागत्यंतराभावादनुचर्यादौ शिष्टैः स्वीक्रियंते॥स्मर्यते च तृतीयाध्याये मनुना॥(श्लो० ११८). सावित्रीमात्रसारोऽपि वरं विप्रः सुयंत्रितः ॥ नायंत्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयीति ॥ निर्णयसिंधौ श्राद्धप्रकरणे श्राद्ध-

योग्यब्राह्मणगणनायां ॥ गायत्रीसारमात्रोऽपि वरं विप्रः सुयंत्रितः ॥ नायंत्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयीति हेमाद्रौ व्यासः ॥ पुनर्नवमाध्याये मनुः ॥ (श्लो० ३१७) अविद्वांश्चैव विद्वांश्च ब्राह्मणोदैवतं महत् ॥ प्रणीतश्चाप्रणीतश्च यथाऽग्निर्दैवतं महत् ॥ श्मशानेष्वपि तेजस्वी पावकोनैव दुष्यति ॥ हूयमानश्च यज्ञेषु भूयएवाभिवर्त्तते ॥ एवं यद्यप्यनिष्टेपु वर्त्तंते सर्वकर्मसु ॥ सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तदिति ॥ प्रथमाध्यायेऽपि ॥ ब्राह्मणोजायमानोहि पृथिव्यामधिजायतइति जन्मतएव ब्राह्मणस्योत्कर्षउक्तः ॥ एवं जन्मना ब्राह्मणः श्रेयानित्यादीनि वचनांतराण्यपि द्रष्टव्यानि॥जातिमात्रब्राह्मणवधादौ प्रायश्चित्तादिकमप्यनुसंधेयं ॥ अतोजातिमात्रस्याऽपि ब्राह्मणस्य इतरापेक्षयोत्कर्पात् युगानुरोधेन ब्राह्मणानामनियत्वात् गत्यंतराभावाच्च तेषामपि ब्राह्मणत्वं स्वीकृत्य तैः सह यथार्हं सर्वव्यवहारात् सर्वत्र शिष्टाः समाचरंतीति सर्वं सुस्थं॥तस्मात् ॥सच्छास्त्राणां विचारेण स्वच्छाचारे सतांपथे ॥ कस्मादकस्मात्प्रश्नोऽसत्तर्कसंपर्ककर्कशः॥१॥

## ॥ अथ पंचमप्रश्नस्यावांतरस्तृतीयः प्रश्नः॥ ३ ॥

संध्यावंदनाद्यकरणप्रयुक्तपापनाशायप्रायश्चित्तं भवत्संमतं न वा ॥ ३५ ॥

### ॥उत्तरं॥

प्रायश्चित्तं तु भवतोनूनं नैवास्ति संमतं॥बालवत्पृच्छ्यते यस्मादर्थे ऽस्मिन् सर्वसंमते ॥ १ ॥ पूर्वप्रश्ने संध्याराहित्येन ब्राह्मण्याभा-

वः प्रतिपादितः ॥ इह तु पापमात्रमिति ग्रन्थकस्य पूर्वापरानुसंधानवैदग्धी ॥ आस्तामित्थंकारं ॥ संध्यालोपे सकृदभ्यासादिभेदेन विविधप्रायश्चित्तानां धर्मशास्त्रसिद्धत्वात्तत्तदधिकारिविशेषेण तत्तत्पापप्रणोदनाय तत्तत्प्रायश्चित्तमनुष्ठेयमेवेत्यत्र कोवाऽऽस्तिकः संमतिं न दद्यात् ॥ संध्यावंदनलोपेऽपि सकृदभ्यासादिभेदेन प्रायश्चित्तवैविध्यं तु दिङ्मात्रेण दर्शयामः ॥ तत्र पराशरमाधवीयप्रथमाध्याये (श्लो० ३७) व्याख्याने प्रजापतिः ॥ संध्योपासनहानौ तु नित्यस्नानं विलुप्य च॥होमं चनित्यकं शुध्येद्गायत्र्यष्टसहस्रकृदिति ॥ संवर्त्तस्मृतौ ॥ (अ० १श्लो० २१) उपासीत नचेत्संध्यामग्निकार्यं नवा कृतं॥गायत्र्यष्टसहस्रं तु जपेत् स्नायात्समाहितइति ॥इदं सकृत्समुदायलोपविषयं ॥एकतरसंध्यामात्रस्य सकृल्लोपे तु अत्रिस्मृतौ ॥सायंप्रातस्तु यःसंध्यां प्रमादाद्विक्रमेत्सकृत् ॥ गायत्र्यास्तु सहस्रं हि जपेत्स्नात्वा समाहितइति ॥ संध्यावंदनवद्गायत्रीजपस्याऽपि सकृल्लोपे ब्रह्मचारिणोवा संध्यालोपे त्वपरार्के संवर्त्तः ॥ यः संध्यांचैव नोपास्ते अग्निकार्यं यथाविधि॥ गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितइति॥ इदं कमलाकरभट्टेनापि सिंधौ तृतीयपरिच्छेदे पूर्वार्द्धे ब्रह्मचारिधर्मेषु संगृहीतं॥ धर्मसिंधौ च तृतीयपरिच्छेदपूर्वार्द्धे ब्रह्मचारिधर्मेषूच्यते ॥ संध्याग्निकार्यलोपे ऽष्टसहस्रगायत्रीजपः ॥ क्वचित्सकृल्लोपे मानस्तोकेतिमंत्रस्य शतं जपउक्तः ॥ भिक्षालोपे ऽष्टशतं ॥ अभ्यासे द्विगुणं पुनः संस्कारश्चेति ॥पुनस्तत्रैव संध्याप्रस्तावे संध्यात्रये कालातिक्रमे प्रायश्चित्तार्थमेकमर्घ्यमधिकं दत्वा रात्रौ प्रहरपर्यंतं दिनोक्तकर्माणि कुर्यात् ॥ ब्रह्मयज्ञं सौरं च वर्जयेत् ॥ सर्वथा संध्यालो-

पे प्रतिसंध्यमेकोपवासोऽयुतमष्टोत्तरसहस्रं वा गायत्रीजपः ॥ अशक्तौ प्रतिसंध्यालोपे शतगायत्रीजपः ॥ द्व्यहं त्र्यहं लोपे तदावृत्तिः ॥ ततःपरं कृच्छ्रादिकल्प्यमिति ॥ इदं विशेषतोव्यवस्थापूर्वकं प्रायश्चित्तमयूखमुक्तावलींदुशेखरसिंधुप्रभृतिषु सविस्तरं निर्णीतमेवेति निःसंदिग्धविषये प्रासंगिकलेखाद्विरम्यते ॥' अतः ॥ संध्यायतां तु नित्यं नः संध्याद्यंकर्म निर्मलं ॥ प्रायश्चित्तप्रसंगोन प्रायश्चित्तस्थिते हरौ ॥ १ ॥

## ॥अथ पंचमप्रधानप्रश्नावलंबी चतुर्थः प्रश्नः॥ ४॥

गृहस्थानां पंचदेवपूजनमावश्यकं न वा॥२६॥

## ॥ उत्तरं ॥

सर्वेषां तु गृहस्थानां पंचदेवतपूजनं ॥ नावश्यकं तथा शास्त्रशिष्टाचाराद्यभावतः ॥ १ ॥ सदैव दैवतं स्वेष्टमेकं पूज्यं तु सर्वथा ॥ प्रामाणिकनिबंधेषु बहुष्वेवं विनिर्णयात् ॥२॥ नित्या पंचामरार्चा तु तादृग्दीक्षावतां मता ॥ एकैकस्याऽर्चनं येषु संप्रदायेषु संमतं ॥ ॥३॥तत्तद्वार्तिजनैस्ते ते लंघनीयान सर्वथा ॥ सुरार्चैव स्मृता नित्या निंदिता बहुभक्तता ॥ ४ ॥ गण्यते बृहदारण्ये पुण्यमेकार्चनं सदा ॥ तदेव नित्यं सर्वेषां नीर्णीतं माधवादिभिः ॥ ५ ॥ किंच मुख्या हरिहरान्यतरार्चैव वै कलौ ॥ तत्रापि सेवनं मुख्यं देवदेवस्य केवलं ॥ ६ ॥ कीर्तनाद्यैरेवमुक्तेः कलेर्मलविलोपनात् ॥ तथा गत्यंतराभावात्संध्यावन्नित्यतोक्तितः ॥ ७ ॥ सर्वानुकूलं तन्मूलं सर्ववैदिककर्मणां ॥ सर्वैरवश्यं कर्तव्यं सिध्येत्सर्वार्चनं ततः ॥ ॥ ८ ॥ तस्मात्पूज्यतमं नान्यऽत्साक्षान्मोक्षस्तदर्चनात् ॥ शालग्रा-

मद्वारवतीशिले प्रतिमया सह ॥ ९ ॥ पूज्ये त्रैवर्णिकैः स्पृष्ट्वा स्त्रीशुद्रैः प्रतिमैव तु ॥ दूराच्छूद्रैर्वैष्णवैस्तेऽर्च्ये विप्रकरेण वा ॥ १० ॥ प्रत्यवेत्येव संध्यावन्नित्यं मूर्त्यर्चनं विना ॥ नराणां नरकप्राप्तिस्तद्धीनानां न तद्युजां ॥ ११ ॥ शालग्रामस्य महिमा नहि मातुं तु शक्यते ॥ सूतकादावप्यहेयमुच्यते क्वचिदर्चनं ॥ १२ ॥ गुरुदत्ततनौ सेव्यएकोऽखिलसुरेश्वरः ॥ मूर्त्युक्तपोभारते ऽस्मिन् वर्षे हर्षेण तां गृहे ॥ १३ ॥ भजेन्नतूयान् दुर्गादींस्तामसार्च्यानमुक्तिदान् ॥ देवांतराणां सेवा तु काम्या सांतफला ऽध्रुवा ॥ १४ ॥ अवैधयागरूपा सा वैष्णवानां निषिध्यते ॥ सिध्येत्सर्वसुपर्वाऽर्चा सर्वांशीश्वरसेवनात् ॥ १६ ॥ विविधैर्हेतु भिर्विद्वत्केतुभिः शास्त्रसेतुभिः ॥ सेवा श्रीनेतुरेवाऽत्र सर्ववर्णेषु वर्णिता ॥ १७ ॥ तथाहि ॥ गौतमकृताचारसूत्रे ( प्रश्नः १ खं० ५ ) अहरहः स्नानं देवर्षिपितृतर्पणं ब्रह्मयज्ञोविधिवदिष्टदेवतापूजनं स्वाध्यायोऽतिथिकार्यं च षट्कर्माणि दिनेदिने स्वावुदिते इति ॥ अत्र दिनेदिनइति वीप्सया स्नानादिवद्देवार्चनेऽपि स्वेष्टदेवतापूजनस्यैव नित्यत्वमुच्यते॥इष्टत्वं च मोक्षदातृत्वेन स्वमहापुरुषकृतपूजनत्वेन चोपासनाप्रयोजकश्रद्धाविषयत्वं॥तस्मात्पंचानामपि देवानां साहित्येनैव पूजनस्य ननित्यत्वं॥अतएव याज्ञवल्क्याचाराध्याये गृहप्रकरणे (श्लो० ४)स्नात्वा देवान् पितृंश्चैव तर्पयेदर्चयेत्तथा इत्यत्र मिताक्षरायां नित्यतर्पणं व्याख्याय तदनंतरं हरिहरहिरण्यगर्भप्रभृतीनामन्यतमं यथावाहनासनमृग्यजुःसाममंत्रैस्तत्प्रकाशकैः स्वनामभिर्वा चतुर्थ्यंतैर्नमस्कारयुक्तैराराधयेद्यथोक्तविधिनेत्युक्तं ॥ अत्रगृहस्थधर्मानाहेति पूर्वोपक्रमः ॥ अतोगृहस्थैः सर्वैरपि

पंचापि देवाः पूजनीयाएवेति नियमोन सिद्ध्यति॥अन्यतमपूजायाएव नित्यत्वविधानात् ॥ अतएव माधवीये विष्णुपुराणे ॥ स्वस्थः प्रसन्नचित्तस्तु कृतासनपरिग्रहः॥ अभीष्टदेवतानां तु कुर्वीत स्मरणं नरइति भोजनानंतरकृत्येष्वपि स्वेष्टदेवतायाएव स्मरणं विधीयते ॥ तथा धर्मसिंधौ तृतीयपरिच्छेदे ॥ न स्नायादुत्सवेऽतीते मंगलं विनिवर्त्य च ॥ अनुव्रज्य सुहृद्बंधूनर्चयित्वेष्टदेवतामिति ॥ माधवीये च शयनविधौ हारीतः ॥ रात्रिसूक्तं जपित्वा विष्णुं नमस्कृत्य सर्पापसर्पभद्रंतइतिश्लोकं जपित्वेष्टदेवतास्मरणं कृत्वा समाधिमास्थायान्यांश्च वैदिकान् मंत्रान् सावित्रीं जपित्वा मंगल्यश्रुतं शंखं च शृण्वन् दक्षिणशिराः स्वपेतइति ॥ एवमादिषु स्वेष्टदेवतायाएवार्चनस्मरणादिकं निरूप्यते॥इह हारीतवचने इष्टदेवतास्मरणं पंचादीनां स्मरणानावश्यकत्वाय॥विष्ण्वतिरिक्तदेवोपासकस्याऽपि विष्णुनमस्कारप्राप्त्यर्थं विष्णुं नमस्कृत्येति ॥ तेन विष्णोः प्राधान्यं ॥ गौतमतंत्रे सप्तमाध्याये ( श्लो० ३७) यथाप्राणं यथा ज्ञानं तथा कुर्यादतंद्रितः ॥ यद्यत्कृत्यं मंगलार्थं तत्तत्कुर्यात्तथातथा ॥ आदर्शदर्शनं कुर्यात् घृतस्पर्शं च कज्जलं॥ सस्योप्यपोषणार्थाय क्षेमं योगं च चिंतयेत् ॥ ३९ ॥ स्नायाच्च कृष्णपूजार्थं नद्यादौ विमले जले ॥ पूजा च पंचधा प्रोक्ता तासां भेदान् शृणुष्व मे ॥ ४० ॥ अभिगमनमुपादानं यागः स्वाध्याययोगकौ ॥ इति पंचप्रकारार्चां क्रमेण कथयामि ते ॥ ४१ ॥ अत्राऽभिगमनं नाम देवतास्थानमार्जनं ॥ उपलेपनं निर्माल्यदूरीकरणमेवच ॥ ४२ ॥ उपादानं नाम गंधपुष्पादिचयनं तथा ॥ इज्यानामेष्टदेवस्य पूजनं च तथा पुनः॥४३ ॥स्वाध्यायोनाम मं

ह्यर्थं संधानपूर्वकोजपः॥सूक्तस्तोत्रादिपाठश्च हरेः संकीर्तनं तथा॥
॥४४॥तत्त्वादिशास्त्राभ्यासश्च स्वाध्यायः परिकीर्तितः॥योगोनाम
स्वदेवस्य स्वात्मत्वेनैक्यभावना ॥४५॥ इति पंचप्रकाराणां कथि-
ता तव सुव्रत ॥ सामीप्यसारूप्यसार्ष्टिसालोक्यसायुज्यफलदा
क्रमात् ॥ अत्रापि नित्यकृत्येषु स्वेष्टदेवस्यैवार्चनं कण्ठपूजायाः
प्राधान्यं चोक्तं ॥ तथा॥धर्मसिंधौ तृतीयपरिच्छेदे पूर्वार्धे आन्हि-
कप्रकरणे देवार्चनमुपक्रम्य ॥ देवार्चनं प्रकर्तव्यं त्रिकालेऽपि य-
थाक्रमं॥अशक्तौ विस्तरायानर्मध्यान्हे चंदनादिनः ॥ सायं नीरा-
जनं कुर्यात्रिकाले तुलसीदलं ॥ यथा संध्या तथा पूजा त्रिका-
ले मोक्षदा स्मृतेति कमलाकरः ॥ तत्र विष्णुशिवब्रह्मसूर्यशक्ति-
विनायकादिष्वभिमतां देवतामर्चयेदित्यन्यतमपूजैवोक्ता ॥ अतो-
ऽपि गृहस्थैः पंचैव देवताः पूज्याइति नियमोन सिध्यति ॥ तथा
भवताऽल्याहृते आचारादर्शेऽपि विष्णुपुराणे ॥ ततोगृहार्चनं कुर्या-
दभीष्टसुरपूजनं ॥ जलाभिषेकं पुष्पाणां धूपादेश्च निवेदनमिति ॥
नागदेवकृताचारप्रदीपे ॥ अथ देवार्चनं ॥ तत्र योगी ॥ ततोगृहा-
र्चनं कुर्यादभीष्टसुरपूजनं॥जलाभिषेकपुष्पादि धूपादिविनिवेदनै-
रिति ॥ आचारप्रकाशे ब्राह्मे ॥ ब्रह्माणं विष्णुमीशं वा सूर्यमग्निं ग-
णाधिपं ॥ दुर्गां सरस्वतीं लक्ष्मीं गौरीं वा नित्यमर्चयेदिति ॥ अ-
त्राऽपि वा शब्देनाऽन्यतमायाः स्वेष्टदेवतायाएव पूजनमुच्य-
ते ॥ अतएव नीलकंठभट्टकृताह्निके इदमेव वचनं दक्षवचनत्वे-
नोपन्यस्य स्वस्वाभीष्टदेवतां स्वस्वाभीष्टयोगेन षोडशोपचारैः पं-
चोपचारैर्वा यथामिलितोपचारैर्वा पूजयेदित्युक्तं ॥ मदनपारिजा-

ते तु पूज्यदेवतानिगमे दर्शिताइत्युक्तेदमुपन्यस्तं ॥ तथा ॥ आचारमाधवे ( अ० १ ) आग्नेये ॥ मंत्रैर्वैष्णवरौद्रैस्तु सावित्रैः शाक्तिकैस्तथा ॥ विष्णुं प्रजापतिं वाऽपि शिवं वा भास्करं तथा ॥तल्लिंगैरर्चयेन्मंत्रैः सर्वदेवान् समाहितइति॥इहाऽपि पूर्ववदेव वाशब्दस्यार्थः ॥ अतएवमादिष्वनेकत्र गृहस्थधर्मोपक्रमेष्वपि स्वेष्टदेवतायाएवावश्यपूज्यत्वकथनात् सर्वैरपि गृहस्थैः पंचायतनपूजैव कर्त्तव्येति नियमासिध्या शैववैष्णवगाणेशादिलक्षणस्वस्वसंप्रदायानुसारेणोक्तास्वन्यतमास्वाभीष्टदेवतैवैका तत्तत्संप्रदायवर्तिभिरर्चनीया॥अतएव च पराशरस्मृतिव्याख्यायां प्रथमाध्याये(श्लो० ३८ ) षट्कर्माभिरतोनित्यं देवतातिथिपूजकइत्यस्य व्याख्याने-बह्वृवेदशाखाधर्मशास्त्रादिव्याख्याता माधवोऽपि बृहदारण्यकादिश्रुत्युपन्यासपूर्वकमेकदेवार्चनमेव व्याख्याय ( श्लो० ३९ ) संध्या स्नानं जपोहोमोदेवतानां च पूजनमित्यस्य विवरणे समयमाह्निकं निरूपयन् क्रमप्राप्तदेवतार्चननिर्णये ब्रह्माणं शंकरं सूर्यं तथैव मधुसूदनं ॥ अन्यांश्चाभिमतान् देवान् भक्त्या त्वक्रोधनो नरः ॥ स्वैर्मंत्रैरर्चयेन्नित्यं पत्रैः पुष्पैस्तथाऽम्बुभिरिति कूर्मपुराणवचनं सर्वेषां समुच्चयेनार्चनविधिभ्रमजनकमुपन्यस्य तद्वारणायाह ॥ यद्यपि पूर्ववचनव्याख्याने पूजनीयोदेवएकएवेति महता प्रबंधेन प्रपंचितं तथापि दर्शनभेदमाश्रित्य विष्णुशंकरादिभेदोपन्यासोन विरुध्यते ॥ दर्शनभेदश्च पुराणसारे वर्णितः ॥ शैवं पाशुपतं शाक्तं सौरं वैनायकं तथा ॥ वैष्णवं च तथा षष्ठं दर्शनानि षडेव हीतीति ॥ चतुर्विंशतिमतव्याख्यायामप्याचारकांडे समयमाह्निकं निरूपयता क्रमप्राप्तदेवार्चने-उक्तकूर्मपुराणवचनमुदाहृत्य य-

द्यपि परमार्थतोदेवएकएव॥एकोदेवःसर्वभूतेषुगूढः एकंसद्विप्राबहु- धावदंतीत्यादिश्रुतिनिचयस्वरसादुत्तरमीमांसास्थलाघवादिन्यायो- पष्टंभाच्च ॥ तथाप्यौपाधिकभेदमाश्रित्य अन्याश्चेत्याद्युक्तिरिति द्रष्टव्यं॥ भागवतेऽप्यतएवोक्तं मूर्त्याभिमतयात्मनइतीति वदता भट्टोजिदीक्षितेन तदेवदर्शितं॥ एवं मदनपारिजाते तृतीयस्तवके आन्हिकनिरूपणे विविधदेवार्चनमुक्तोच्यते॥ अथवा वेदाविरु- द्धस्वस्वदीक्षानुसारेण देवतार्चनं कुर्यादिति॥ एतेन पंचायतनपू- जाविधायकाः स्नानं संध्यां ततोहोमं गृहस्थोक्तेन वर्त्मना॥ कृ- त्वा सूर्यं गणपतिं लक्ष्मीमीशं तथा हरिं॥ पौरुषेण तु सूक्तेन नि- त्यमर्चां समारभेदित्याचारार्कपरशुरामनिबंधपदार्थादर्शादयोऽपि गृहीततत्पूजानियमपरत्वेन दत्तोत्तराः॥अतएव गौतमतंत्रे दशमा- ध्याये॥(श्लो० ६९)पंचात्मिकायां दीक्षायां गणेशादिक्रमायजेत्॥ यदा मध्ये तु गोविंदमाग्नेय्यां गणनायकमित्यादिना पंचात्मकदी- क्षासत्वएवपंचायतनपूजायाः कर्तव्यतोच्यते॥तस्मान्न सर्वसंप्रदा- यवर्तिनां गृहस्थानां तत्पूजनमावश्यकं॥ तेषां स्वसंप्रदायप्रधा- नायाः स्वाभीष्टदेवतायाएवैकस्याअर्चनस्य शास्त्रसिद्धत्वात्॥ ए- वमेव व्रतादिव्यवस्थाऽपि संप्रदायभेदेनैव तत्र तत्रोच्यते॥ यथा धर्मप्रवृत्तौ॥ दिनद्वयेऽपि वर्त्तेत चतुर्थी या विधूदये॥ परैव व्रति- भिः कार्या गणनाथपरायणैः॥ गाणेशसंप्रदायस्थैरित्यर्थः॥ तत्रै- व॥ श्रवणद्वादशी सा स्यादुपोष्या विष्णुतत्परैरिति॥वैष्णवैरित्यर्थः॥ तत्रैव॥ पारंपर्यागतं वंशे देव्याः शरदि पूजनं॥ पतिपद्येव कर्तव्यं नचान्यत्र कदाचनेति॥ परंपरातः शक्तिभक्तैरेव कार्यमित्यर्थः॥ इहैव॥ अर्धरात्रे यदा न स्यान्माघे मासि चतुर्दशी॥त्रयोदश्या यु-

ता कार्या नरैः शिवपरायणैरिति ॥ शैवसंप्रदायस्थैरित्यर्थः ॥ अत्रैव शिवपुराणे ॥ प्रदोषव्यापिनी ग्राह्या शिवरात्रिः शिवप्रियैः ॥ इतिदिक् ॥ एतेनाऽपि गणेशादिसंप्रदायभेदाएकैकदेवोपासनाविशिष्टाअनादिसिद्धाएवेति फलति ॥ तस्मादस्ति देवतार्चनमात्रस्यावश्यकत्वं ॥ दक्षस्मृतावाह्निकमुपक्रम्य ॥ देवकार्यं ततः कृत्वा गुरुमंगलवीक्षणं ॥ देवकार्यस्य सर्वस्य पूर्वाण्हेऽन्हिविधीयतइति॥ एवमादिषु नित्यत्वविधानात् ॥ आचारमाधवचतुर्विंशतिमतव्याख्यादिषु ॥ ( अ० १ ) योमोहादथवाऽऽलस्यादकृत्वा देवतार्चनं ॥ भुंक्ते सयाति नरकं सूकरेष्वभिजायतइति कूर्मपुराणादिवचनेष्वकरणे प्रत्यवायश्रुतेश्च ॥ ननु सर्वेषां सर्वदेवार्चनस्यावश्यकत्वं ॥ अत्रिस्मृतौ ( श्लो० ३२८ ) बहुभक्तोदीनमुखोमत्सरी क्रूरबुद्धिमान् ॥ एतेषां नैव दातव्यः कदाचिच्च प्रतिग्रहइति निंदास्मरणान् ॥ बहुभक्तः एकत्र स्वेष्टदेवे दृढाश्रयराहित्याद्बहुदेवोपासकः ॥ किंचातएवैकस्य देवस्यैवोपास्यत्वं पराशरस्मृतिप्रथमाध्याये ( श्लो० ३८ ) षट्कर्माभिरतोनित्यं देवताऽतिथिपूजकः ॥ हुतशेषं तु भुंजानोब्राह्मणोनाऽवसीदतीत्यस्य विवरणे प्रतिपादयति माधवः यथा नित्यमित्युत्तरत्रान्वेति नतु पूर्वत्र ॥ अध्यापनादीनां त्रयाणामनित्यत्वात् ॥ देवताच अतिथिश्च देवतातिथी तयोः प्रतिदिनं पूजकोभवेत् ॥ देवतास्वरूपंच वाजसनेयिब्राह्मणे शाकल्ययाज्ञवल्क्यसंवादे विचार्यनिर्णीतं ॥ तत्र शाकल्यः प्रष्टा याज्ञवल्क्योवक्ता देवताविस्तारसंक्षेपौ स्वरूपं च प्रष्टव्योऽर्थः ॥ अत्र चैषा श्रुतिः ॥ ( अ० ५ ब्राह्मण ९ पृ० ६४२ ) अथहैनं विदग्धः शाकल्यः पप्रच्छ कतिदेवायाज्ञवल्क्येति सहैतयैव निविदा प्रतिपेदे

यावंतोवैश्वदेवस्य निविद्युच्यंते त्रयश्च त्रीच शता त्रयश्चत्रीचस-
हस्रेत्योमितिहोवाच कत्येवदेवायाज्ञवल्क्येति यत्रस्त्रिꣳशदित्योमि-
तिहोवाच कत्येवदेवायाज्ञवल्क्येति षडित्योमितिहोवाच कत्येव-
देवायाज्ञवल्क्येति त्रयइत्योमिति होवाच कत्येवदेवायाज्ञवल्क्येति
द्वावित्योमितिहोवाच कत्येवदेवायाज्ञवल्क्येत्यध्यर्धइत्योमिति हो-
वाच कत्येवदेवायाज्ञवल्क्येत्येकइत्योमितिहोवाच कतमे ते त्रय
श्चत्रीचशतात्रयश्चत्रीचसहस्रेति सहोवाच महिमानएवैषामेते त्रय
स्त्रिꣳशत्त्वेव देवाइति कतमेतेत्रयस्त्रिꣳशादित्यष्टौवसवएकादशरुद्रा-
द्वादशादित्यास्तएकत्रिꣳशदिंद्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति॥
कतमे वसवइत्यग्निश्च पृथिवीच वायुश्चांतरिक्षं चादित्यश्च द्यौश्च
चंद्रमाश्च नक्षत्राणिचैते वसवएतेषु हीदं सर्वंवसुहितमेतेहीदꣳसर्वंवा
सयते तस्माद्वसवइति कतमे रुद्राइति दशेमे पुरुषे प्राणाआत्मैकादश-
स्ते॥यदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयंति तयद्रोदयंति तस्मा-
द्रुद्राइति कतमआदित्याइति द्वादशवैमासाः संवत्सरस्यैतआदित्या-
एते हीदंसर्वमाददानायति तेयदिदं सर्वमाददानायंति तस्मादादि-
त्याइति॥ कतमइंद्रः कतमःप्रजापतिरितिस्तनयित्नुरेवेंद्रोयज्ञः प्रजा
पतिरिति ॥ कतमस्तनयित्नुरित्यशनिरिति कतमोयज्ञइति पशवइ-
ति ॥ कतमे षडित्यग्निश्च पृथिवीच वायुश्चांतरिक्षं चादित्यश्च द्यौ-
श्चैते षडित्येते हीदं सर्वंषडिति ॥ कतमे ते त्रयोदेवाइतीमएव त्र-
योलोकाएषु हीमे सर्वेदेवाइति ॥ कतमौ तौ द्वौ देवावित्यन्नं चैव
प्राणश्चेति ॥ कतमोध्यर्धइति योयंपवतइति ॥ तदाहुर्यदयमेकइ-

यदास्माच्छरीरान्मर्त्यांद्व तेयदिदं पठेति.

वैवपवतेथकथमध्यर्धइति यदस्मिन्निदं सर्वं मध्यार्ध्नोत्तेनाध्यर्ध-इति ॥ कतमएकोदेवइति प्राणइति सब्रह्म त्यदित्याचक्षतइति ॥ अस्याः श्रुतेरयमर्थः ॥ उपासनार्हाणां देवानां संख्या विस्तारेण कतीति पृष्टोयाज्ञवल्क्योविजिगीषुकथायां प्रवृत्तत्वात्परबुद्धिव्या मोहाय निविदा प्रत्युत्तरं प्रतिपेदे ॥ निविच्छब्दोवैश्वदेवनामके शस्त्रविशेषेऽवस्थितानां संख्यावाचिनां पदानां समुदायमाचष्टइ-ति वैदिकप्रसिद्धिः ॥ततोयावंतोदेवावैश्वदेवस्य निविद्युच्यंते तावं-तउपास्याइत्युक्तं भवति ॥ तानिच पदानि त्रयश्च त्रीचेत्यादीनि शतत्रयं सहस्रत्रयं षट्कं च देवविस्तारः ॥ कत्येवेत्येवकारेण तत्रत-त्र देवांतरशंका व्युदस्यते यएव देवाः पूर्वंविस्तृताः तएवं संक्षेपेण कियंतइति तत्रतत्र प्रश्नार्थः ॥ कतीतिसंख्याप्रश्नः ॥ कथमेतदिति स्वरूपविशेषप्रश्नः ॥ तत्र शतसहस्रसंख्याकाये देवाउक्तास्ते सर्वे प्रधानभूतान भवंति ॥ किंतर्हि प्राधान्येन हविर्भुजां त्रयस्त्रिंशद्दे-वानां योगमहिम्ना स्वीकृतभौतिकविग्रहाएव ततोन तेषां स्वरूप-विशेषाः पृथङ्निरूपणीयास्त्रयस्त्रिंशद्देवेषु श्रुतावस्वादयः पुराणप्र-सिद्धेभ्योवस्वादिभ्योन्ये तेषु शब्दप्रवृत्तिर्यौगिकी ॥ प्राणाः कर्म बुद्धींद्रियाणि ॥ आत्मांतःकरणं ॥ इंद्रप्रजापतिशब्दौ लक्षणया-स्तनयित्नुयज्ञयोर्वर्त्तेते लक्षितलक्षणयात्वशनिपश्वोः ॥ अन्नप्रा-णौ भोग्यभोक्त्रभिमानिनौ॥ अध्यर्धशब्दोरूढ्या संख्यावाची यो-गेन तु समृद्धं वायुं वक्ति ॥ वायुः सूत्रात्मा॥ वायुर्वैगौतमसूत्रमि-तिश्रुतेः ॥ अंते प्राणशब्दः परमात्मवाचकः ॥ तदेव स्पष्टयितुं स-ब्रह्मेत्युक्तं ॥ त्यच्छब्दः परोक्षवाची ॥ अकृतब्रह्मविचारं पुरुषं प्र-ति ब्रह्मणः शास्त्रैकसमधिगम्यत्वात् परोक्षइति ॥ तत्रतु प्राणशब्द-

वाच्यः परमात्मैवैकोमुख्योदेवः ॥ तत्स्वरूपंच श्वेताश्वतराविस्पष्टमामनंति ॥ ( अ० ६ ) एकोदेवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा ॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलोनिर्गुणश्च ॥ एतमेव देवं शास्त्रकुशलास्तैस्तैः शब्दविशेषैर्बहुधा व्यवहरंति ॥ तथामंत्रवर्णः ॥ सुपर्णं विप्राः कवयोवचोभिरेकं संतं बहुधा कल्पयंति ॥ तेच शब्दविशेषाविस्पष्टमन्यस्मिन् मंत्रेश्रूयंते ॥ इंद्रं मित्रं वरुणमग्निमाहुरथोदिव्यः ससुपर्णोगरुत्मान् इति ॥ इत्यादिना एकदेवार्चनमेव माधवेन सम्यङ्निर्णीतं ॥ अयं च सर्ववेदवेदांतप्रसिद्धः परमात्माख्यएकोदेवः श्रीपुरुषोत्तमएव ॥ एकोह वै नारायणआस ॥ सर्वे वेदायत्पदमामनंति ॥ वेदैश्च सर्वैरहमेव वेद्यः ॥ मत्तः परतरं नान्यत्किंचिदस्तिधनंजय ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ ब्रह्मेति परमात्मेति भगवानिति शब्द्यतइत्यादिश्रुतिस्मृतिपुराणवचनेभ्यः॥प्राणशब्दवाच्यश्चेह सएव सर्वोत्तमत्वरूपात्तल्लिंगात्तथैव समन्वयाच्च ॥ यथा सूत्रितमाचार्येण ॥ अतएवप्राणइति ॥ प्राणस्तथानुगमादितिच ॥ अतएव बृहदारण्यकभाष्ये शंकराचार्याः प्राणइति सप्राणोब्रह्म सर्वदेवात्मकत्वान्महद्ब्रह्म त्यदित्याचक्षते त्यदिति तद्ब्रह्माचक्षते ॥ परोक्षाभिध्यायकेन शब्देन देवानामेतदेकत्वं नानात्वं चानंतानां देवानामित्यादि ॥ अतोमाधवादिभिर्मुख्यतरत्वेन निर्णीतमेकदेवार्चनं वस्तुतस्तु पुरुषोत्तमार्चनमेव तथापि तत्तत्सांप्रदायिकैः स्वेष्टदेवे परमात्मबुद्ध्या तस्यैवार्चनं कर्तव्यमिति सर्वसंमतः शिष्टाचारः ॥ एवमपि सर्वगृहस्थानां पंचदेवपूजनं नावश्यकं ॥ प्रथमाध्याये बृहत्पराशरः ॥ ( अ० १ श्लो० ४७ ) उषित्वा यत्रतत्रापि स्वा-

चारं न विवर्जयेत् ॥ षट्कर्माणि प्रकुर्वीरन्निति धर्मस्य निश्चयइति ॥ अतः षट्कर्माण्यपि स्वाचारेणैव कर्त्तव्यानि ॥ शाखाधिकरणन्यायात् तदनुल्लंघनपूर्वकमेव तत्करणविधानाच्च ॥ षट्कर्मसु देवतार्चनमप्युक्तं यथाह द्वितीयाध्याये सएव ( श्लो० ७ ) संध्या स्नानं जपश्चैव देवतानां च पूजनम् ॥ वैश्वदेवं तथा ऽऽतिथ्यं षट्कर्माणि दिनेदिनइति ॥ तस्मात्परंपरातः पंचदेवपूजनाचारवतैव तत्कार्यं नत्वेकदेवार्चनविशिष्टसंप्रदायवता स्वसंप्रदायानुल्लंघ्य भ्रमादपि तद्विधेयं ॥ कमलाकरभट्टकृतवह्वृचाह्निकादिषु विष्णुशिवगणेशदुर्गासूर्याणां शालग्रामलिंगप्रतिमादौ प्रत्येकं समुदायेन वा वैदिकीमागमोक्तां तांत्रिकीं च मिश्रां वा यथासंप्रदायं पुरुषसूक्तेन पूजां कुर्यादित्यादि निरूप्यते ॥ प्रत्येकमित्यन्यतमपूजाभिप्रायं ॥ समुदायेनेति पंचायतनपूजाभिप्रायं ॥ माधवादिभिस्तथैव निर्णीतत्वादितिव्याख्यानं ॥ अन्यच्च ॥ कलियुगेतु हरिहरान्यतरार्चनस्यैवावश्यकत्वविधानान्नैव पंचदेवार्चनस्य सर्वेषां नित्यत्वं ॥ यथा ॥ चतुर्विंशतिमतव्याख्यायामाह्निकनिरूपणे देवार्चनप्रस्तावे॥तत्रापि कलौ हरिहरयोः पूजाप्रशस्तेत्यादिना भट्टोजिदीक्षितेनान्यतरार्चनस्यैवावश्यकत्वं निर्णीतं॥तथा॥धर्मसिंधौ तृतीयपरिच्छेदे आन्हिकप्रक्रमे॥तत्रापि कलौ हरिहरयोः पूजाप्रशस्ता॥न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकं॥तस्मादनादिमध्यांतं नित्यमाराधयेद्धरिं॥अथवा देवमीशानं भगवंतं सनातनं ॥ प्रणवेनाथवा रुद्रगायत्र्या त्र्यंबकेन वा॥तथोन्नमः शिवायेति मंत्रेणानेनवायजेदिति॥ चतुर्विंशतिमतव्याख्यादिषु चेमानिकूर्मपुराणवचनत्वेन स्फुटं लिखितानि ॥ अत्र सर्ववैदिककर्ममूलभूतत्वा-

द्विष्णवर्चनमेव मुख्यं तदभावे शिवार्चनं ॥ अथवादेवमीशानमि-
ति विकल्पोक्तेः ॥ तथा धर्मसिंधावेव कलियुगकार्याकार्यविचा-
रानंतरं ॥ विष्णुं शिवं वा भजतां गुरोः पित्रोश्च सेविनां ॥ गोवै-
ष्णवमहाशैवतुलसीसेविनामपि ॥ न स्यात्कलिकृतोदोषः काश्यां
निवसतामपि ॥ कलौ गुरूणां भजनमीशभक्त्यधिकं स्मृतमिति ॥
तथा कलौ दानं महाश्रेष्ठं शिवविष्ण्वोश्च कीर्तनं ॥ अत्रापि शि-
वोपासनं शैवपरं ॥ विष्णुं शिवं वा भजतामिति वाशब्देन एकत-
रोपासनानिर्द्धारात् ॥ गोवैष्णवमहाशैवेतिभेदेन निर्देशाच्च ॥ एते-
न हेमाद्रौ कमलाकराह्निकादिषु च धृतं ब्रह्माणं शंकरं सूर्यं त-
थैव मधुसूदनं ॥ पत्रैः पुष्पैः फलैर्वापि भक्त्या त्वक्रोधनोर्चयेत् ॥
तत्रापिच कलौ नित्यं पूजयेद्धरिशंकराविति कलौ पंचदेवपूजना-
नावश्यकत्वबोधनपूर्वकहरिहरमात्रार्चननित्यत्वविधायकं नृसिंह-
पुराणवचनमपि नियमेनैकदेवोपासनाविशिष्टसंप्रदायाविशिष्ट-
साधारणस्मार्तपरं वेदितव्यं ॥ अथ तत्रापि कलौ भगवदर्चनमेव
मुख्यं ॥ यथा तत्रैवोच्यते ॥ गीता गंगा तथा विष्णुः कपिलाऽश्व-
त्थसेवनं॥एकादशीव्रतं चैव सप्तमं न कलौ युगे इति॥तथा धर्मा-
ब्धिसारएव ध्यायन्कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्॥यदाप्नोति
तदाप्नोति कलौ संकीर्त्य केशवमिति हेमाद्रौ व्यासवचनं ॥ अत्र
कृतयुगाद्यधिकरणकध्यानादिफलार्थं कल्यधिकरणककीर्तनं वि-
धीयतइति वाक्यार्थः कौस्तुभकर्तृपितामहैर्भक्तिनिर्णये विस्तरेण
निरूपितः॥हेमाद्रौ ॥ कलिं सभाजयंत्यार्यागुणज्ञाः सारभागिनः ॥
यत्र संकीर्तनेनैव सर्व. स्वार्थोऽभिलभ्यतइति श्रीभागवतवचनमुदा-

त्य संकीर्तनेन हरिसंकीर्तनेनेत्यर्थइति हेमाद्रावेव व्याख्यातं ॥ कृष्णवर्णं त्विषा कृष्णं सांगोपांगास्त्रपार्षदं॥ यज्ञैः संकीर्त्तनप्रायैर्यजंतीह सुमेधसः ॥ यज्ञादिस्वस्वाचारमाचरद्भिरपि कलिषु संकीर्तननिष्ठैर्भाव्यमित्याशयइति कौस्तुभे ॥ अनेन चतुर्वर्गफलं नारायणाश्रयणमात्रेण भवतीतिसिद्धं ॥ यावै साधनसंपत्तिः पुरुषार्थचतुष्टये ॥ तया विना तदाप्नोति नरोनारायणाश्रयइति भारतोक्तेः ॥ श्रीभागवतेऽपि धर्मार्थकाममोक्षाख्यं यइच्छेच्छ्रेयआत्मनः ॥ एकं ह्येव हरेस्तत्र कारणं पादसेवनमिति ॥ अत्रैकपदावधारणादिपदैरन्यसाधनानपेक्षत्वं भक्तियोगस्योच्यते ॥ ज्ञानयोगादेश्च हरिपदसेवनसापेक्षत्वं ध्वन्यते ॥ तथाच स्पष्टमेकादशादौ ॥ तस्मान्मद्भक्तियुक्तस्य योगिनोवै मदात्मनः ॥ न ज्ञानं नच वैराग्यं प्रायः श्रेयोभवेदिह ॥ यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्चयत् ॥ योगेन दानधर्मेण श्रेयोभिरितरैरपि॥सर्वं मद्भक्तियोगेन मद्भक्तोलभतेंऽजसा ॥ स्वर्गापवर्गं मद्धाम कथंचिद्यदि वांछतीति इत्यादिना सम्यङ्निरूप्योच्यते तत्रैव ॥ तस्मात्सर्वथा सर्वैः कलौ श्रीहरिपादसेवनादिभक्तियोगाश्रयणमेव कर्त्तव्यमिति सिद्धमिति ॥ एवं नागदेवकृताह्निकेऽपि देवपूजानिरूपणे ॥ आवाहनादिकं कर्म यन्नचोक्तं मया त्विह ॥ तत्सर्वं प्रणवेनैव कर्त्तव्यं चक्रपाणये ॥ धूपादि दद्यात्सावित्र्या यथाशक्त्या समाहितः ॥ एवं संपूज्य देवेशं क्षणं ध्यायन्निरंजनं ॥ असितनिशितधारं यस्य चक्रं कराग्रे मणिकनकविचित्रं कुंडलं यस्य कर्णे ॥ भ्रमरशतसहस्रैः सेव्यते यस्य माला असुरकुलनिहंता प्रीयतां वासुदेवः ॥ इत्यादियोगिप्रभृतिवचनोपन्यासेन विष्णुपूजनमेवोक्तं ॥ चतुर्विंशतिमतव्याख्याक-

स्त्य संकीर्तनेन हरिसंकीर्तनेनेत्यर्थइति हेमाद्रावेव व्याख्यातं ॥ कृष्णवर्णं त्विषा कृष्णं सांगोपांगास्त्रपार्षदं॥ यज्ञैः संकीर्त्तनप्रायैर्यजंतीह सुमेधसः ॥ यज्ञादिस्वस्वाचारमाचरद्भिरपि कलिषु संकीर्तननिष्ठैर्भाव्यमित्याशयइति कौस्तुभे ॥ अनेन चतुर्वर्गफलं नारायणाश्रयणमात्रेण भवतीतिसिद्धं ॥ यावै साधनसंपत्तिः पुरुषार्थचतुष्टये ॥ तया विना तदाप्नोति नरोनारायणाश्रयइति भारतोक्तेः ॥ श्रीभागवतेऽपि धर्मार्थकाममोक्षाख्यं यइच्छेच्छ्रेयआत्मनः ॥ एकं ह्येव हरेस्तत्र कारणं पादसेवनमिति ॥ अत्रैकपदावधारणादिपदैरन्यसाधनानपेक्षत्वं भक्तियोगस्योच्यते ॥ ज्ञानयोगादेश्च हरिपदसेवनसापेक्षत्वं ध्वन्यते ॥ तथाच स्पष्टमेकादशादौ ॥ तस्मान्मद्भक्तियुक्तस्य योगिनोवै मदात्मनः ॥ न ज्ञानं नच वैराग्यं प्रायः श्रेयोभवेदिह ॥ यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्चयत् ॥ योगेन दानधर्मेण श्रेयोभिरितरैरपि॥सर्वं मद्भक्तियोगेन मद्भक्तोलभतेंऽजसा ॥ स्वर्गापवर्गं मद्धाम कथंचिद्यदि वांछतीति इत्यादिना सम्यङ्निरूप्योच्यते तत्रैव ॥ तस्मात्सर्वथा सर्वैः कलौ श्रीहरिपादसेवनादिभक्तियोगाश्रयणमेव कर्त्तव्यमिति सिद्धमिति ॥ एवं नागदेवकृताह्निकेऽपि देवपूजानिरूपणे ॥ आवाहनादिकं कर्म यन्मचोक्तं मया त्विह ॥ तत्सर्वं प्रणवेनैव कर्त्तव्यं चक्रपाणये ॥ धूपादि दद्यात्ताविभ्या यथाशक्त्या समाहितः ॥ एवं संपूज्य देवेशं क्षणं ध्यायन्निरंजनं ॥ असितनिशितधारं यस्य चक्रं कराग्रे मणिकनकविचित्रं कुंडलं यस्य कर्णे ॥ भ्रमरशतसहस्रैः सेव्यते यस्य माला असुरकुलनिहंता प्रीयतां वासुदेवः ॥ इत्यादियोगिप्रभृतिवचनोपन्यासेन विष्णुपूजनमेवोक्तं ॥ चतुर्विंशतिमतव्याख्याक-

मि विष्णोरमिततेजसः ॥ यज्ज्ञानान्मुनयः सर्वे विष्णोः सायुज्यमाप्नुयुः॥ पट्रत्वमीपु हरेः सम्यगर्चनं मुनिभिः कृतं॥ अप्स्वग्नौ हृदये सूर्ये स्थंडिले प्रतिमासु चेत्यादि ॥ ( श्लो० ३२ ) सूक्तेन विष्णुविधिना समुदीरितेन योऽनेन नित्यमजमादिमनंतमूर्ति॥ भक्त्याऽर्चयेत्पठति यश्च सविष्णुदेहं विभ्रोविशेद्धरिवरेण कृतार्थदेह इत्युपसंहारः ॥ अत्र भगवदर्चनस्य साक्षान्मोक्षकारणत्वमुक्तं ॥ तथैव कमलाकरभट्टान्हिके वसिष्ठः ॥ योऽर्चयेत्केशवं नित्यं सयाति परमां गतिमिति॥ गौतमतंत्रे दशमाध्याये( श्लो० १५ ) शालग्रामेमणौ यंत्रे मंडले प्रतिमासु च॥नित्यं पूजा हरेः कार्या नतु केवलभूतले ॥ गंडक्यां चैव देशे च शालग्रामस्थलं महत् ॥ पाषाणं यत्तु तत्रत्यं शालग्राममिति स्मृतं ॥ शालग्रामशिलास्पर्शात् कोटिजन्माघनाशनं ॥ १७ ॥ किंपुनर्यजनं तत्र हरिसान्निध्यकारकं ॥ शालग्रामैकयजनात् शतलिंगफलं लभेत् ॥ १८ ॥ बहुभिर्जन्मभिः पुण्यैर्यदि कृष्णशिलां लभेत् ॥ गोष्पदेन च चिन्हेन तेन संस्थाप्यते जनुः ॥ कामक्रोधादिदोषोत्थसर्वदुःखनियंत्रणात् ॥ यंत्रमित्याहुरेतस्मिन्देवः प्रीणाति पूजितइति ॥ २० ॥ धर्मसिंधौ तृतीयपरिच्छेदे ॥ शालग्रामसंबंधितोयवच्चक्रांकशिलातोयस्याऽपि पानविधानात्सापि शालग्रामसन्निधौ पूज्येति ॥ तथा चतुर्विंशतिमतव्याख्यायामाचारकांडे पाद्मे ॥ द्वारकाशैलसंभूतं यस्तोयं पिबते कलौ ॥ पापानि तस्य नश्यंति शतजन्मार्जितान्यपि॥धृते शिरसि पीते च सर्वास्तुष्यंति देवताः ॥ प्रायश्चित्तं हि पापानां कलौ पादोदकं हरेरिति॥शिलैवशैलं ॥ प्रज्ञादित्वात्स्वार्थेऽण् ॥ अत्र द्वारावतीशिलासंबंधितोयपानविधानात् सापि

ताराधनं भवेदिति ॥ पुनस्तत्रैव निगमे ॥ विष्णुमीशं विधातारं सूर्यमग्निं गणाधिपमिति बहूनर्चनीयानुक्त्वा तत्र विष्ण्वर्चनस्यैव सर्ववैदिककर्माधिकत्वान्नित्यत्वं बोधयितुं अप्स्वग्नौ हृदये सूर्ये स्थंडिले प्रतिमासु च ॥ विष्णोराराधनादन्यन्नास्ति कर्म च वैदिकमिति निगमवचनमेवोपन्यस्तं ॥ मदनपारिजाते नृसिंहपुराणे ॥ जलदेवं नमस्कृत्य ततोगच्छेद्गृहं बुधः ॥ पौरुषेण तु सूक्तेन ततो विष्णुं समर्चयेत् ॥ तत्रैव योगियाज्ञवल्क्यः ॥ विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः ॥ तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दनात् ॥ दद्यात्पुरुषसूक्तेन यः पुष्पमपएवच ॥ अर्चितं स्याज्जगदिदं तेन सर्वं चराचरं ॥ अप्स्वग्नौ हृदये सूर्ये स्थंडिले प्रतिमासु च ॥ षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतमिति ॥ उक्तं नृसिंहपुराणवचनं माधवादिभिरपि संगृहीतं ॥ तथा॥अर्चनं संप्रवक्ष्यामि विष्णोरमिततेजसइति॥अप्स्वग्नौ हृदये सूर्यइतिच आग्नेयपुराणवचनत्वेन लिखितमाचारमाधव चतुर्विंशतिमतव्याख्यादिषु ॥ निर्णयसिंधौ ( परि० २ ) पाद्मे ॥ त्रिकालमर्चयेद्विष्णुं त्यक्तभोगो जितेंद्रियः ॥ पुनस्तत्रैव पाद्मे ॥ शंखचक्रधरं देवं माधवं नाम पूजयेत् ॥ पराशरमाधवीये ( अ० १ श्लो० ३८ ) व्याख्यायां विष्णुधर्मोत्तरे ॥ येऽर्चयंति सदा विष्णुं शंखचक्रगदाधरं ॥ सर्वपापविनिर्मुक्ताब्रह्माणं प्रविशंति ते इति ॥ बृहत्पराशरोऽपि द्वितीयाध्याये देवार्चनप्रकरणे ॥ गायत्र्योंकारन्यस्तांगः पूजयेद्विष्णुमव्ययं ॥ विन्यस्य व्याहृतीः सर्वाः प्रोक्तस्थानक्रमेण तु ॥ ब्रह्मीभूतः शुचिः शांतोदेवयागमुपाचरेत्॥विष्णुरादिरयं देवः सर्वामरगणार्चितः ॥ नामग्रहणमात्रेण पापराशिं छिनत्ति यः ॥ तदर्चनं प्रवक्ष्या-

मि विष्णोरमिततेजसः ॥ यज्ज्ञानान्मुनयः सर्वे विष्णोः सायुज्यमाप्नुयुः॥ षट्स्वमीषु हरेः सम्यगर्चनं मुनिभिः कृतं॥ अप्स्वग्नौ हृदये सूर्ये स्थंडिले प्रतिमासु चेत्यादि ॥ ( श्लो० ३२ ) सूक्तेन विष्णुविधिना समुदीरितेन योऽनेन नित्यमजमादिमनंतमूर्तिं॥ भक्त्याऽर्चयेत्पठति यश्च सविष्णुदेहं विशोविशेद्धरिवरेण कृतार्धदेह इत्युपसंहारः ॥ अत्र भगवदर्चनस्य साक्षान्मोक्षकारणत्वमुक्तं ॥ तथैव कमलाकरभट्टाह्निके वसिष्ठः ॥ योऽर्चयेत्केशवं नित्यं सयाति परमां गतिमिति॥ गौतमतंत्रे दशमाध्याये( श्लो० १५ ) शालग्रामेमणौ यंत्रे मंडले प्रतिमासु च॥नित्यं पूजा हरेः कार्या नतु केवलभूतले ॥ गंडक्यां चैव देशे च शालग्रामस्थलं महत् ॥ पाषाणं यत्तु तत्रत्यं शालग्राममिति स्मृतं ॥ शालग्रामशिलास्पर्शात् कोटिजन्माघनाशनं ॥ १७ ॥ किंपुनर्यजनं तत्र हरिसान्निध्यकारकं ॥ शालग्रामैकयजनात् शतलिंगफलं लभेत् ॥ १८ ॥ बहुभिर्जन्मभिः पुण्यैर्यदि कृष्णशिलां लभेत् ॥ गोष्पदेन च चिन्हेन तेन संस्थाप्यते जनुः ॥ कामक्रोधादिदोषोत्थसर्वदुःखनियंत्रणात् ॥ यंत्रमित्याहुरेतस्मिन्देवः प्रीणाति पूजितइति ॥ २० ॥ धर्मसिंधौ तृतीयपरिच्छेदे ॥ शालग्रामसंबंधितोयवच्चक्रांकशिलातोयस्याऽपि पानविधानात्सापि शालग्रामसन्निधौ पूज्येति ॥ तथा चतुर्विंशतिमतव्याख्यायामाचारकांडे पाद्मे ॥ द्वारकाशैलसंभूतं यस्तोयं पिबते कलौ ॥ पापानि तस्य नश्यंति शतजन्मार्जितान्यपि॥धृते शिरसि पीते च सर्वास्तुष्यंति देवताः ॥ प्रायश्चित्तं हि पापानां कलौ पादोदकं हरेरिति॥शिलैवशैलं॥ प्रज्ञादित्वात्स्वार्थेऽण् ॥ अत्र द्वारावतीशिलासंबंधितोयपानविधानात् सापि

शालग्रामसंनिधौ पूज्येति गम्यतइति भट्टोजिदीक्षितः ॥ कमला- कराह्निके चेदमुदाहृत्य तथैव निर्णीतं ॥ स्पष्टं तद्विधिवाक्यं तु हे- माद्रौ ॥ शालग्रामशिला यत्र तत्र द्वारवतीशिला ॥ पूज्या वै भ- क्तिभावेन त्वन्यथा निष्फला भवेदिति ॥ कमलाकराह्निके च नृ- सिंहपरिचर्यायां विष्णुधर्मोत्तरेऽपि तत् ॥ शालग्राममयोदेवोदेवो- द्वारवतीभवः ॥ उभयोः संगमोयत्र मुक्तिस्तत्र न संशयइति ॥ नित्यमेव तत्पूजनाऽकरणे प्रत्यवायस्तत्रैव ॥ न यत्र पूज्यते देवः शालग्रामशिलाभवः ॥ श्मशानतुल्यं तद्गेहं सद्विजोनरकाशनइ- ति॥एतेन तोयपानमात्रं कार्यं पूजायां तु मानाभावइति मयूखे सं गृहीतमेकदेशिमतं निरस्तं वेदितव्यं॥यत्तु विष्णुधर्मोत्तरे॥शालग्राम शिलां वाऽपि चक्रांकितशिलां तथा॥ब्राह्मणः पूजयेन्नित्यं क्षत्रि- यादिर्नपूजयेदिति॥तत्तु क्षत्रियादिरादिर्यस्येति मध्यमपदलोपिब- हुव्रीहिगर्भात्तद्गुणसंविज्ञानबहुव्रीहिणा शूद्रपरमितिनीलकंठः ॥ ममतु कलौ तादृशसंस्कारादिविशिष्टक्षत्रियवैश्ययोरभावेन क्षत्रि- यत्ववैश्यत्वव्यवहारमात्रवतोस्तयोः पूजानिषेधकमिदमित्यपि भा- ति॥तथा मयूखएव पाद्मे ॥ब्राह्मणक्षत्रवैश्यानां त्रयाणां मुनिसत्त- म॥अधिकारः स्मृतः सद्भिः शालग्रामशि लार्चनइति ॥ तस्मादि दं शालग्रामार्चनं त्रैवर्णिकानां पुंसामेव ॥ स्त्रीशूद्रकरसंस्पर्शो वज्र स्पर्शोऽधिकोमतइत्यादिलैंगादिवचनेभ्यः॥वैष्णवदीक्षावतां शूद्राणां तुब्राह्मणद्वारा तदर्चने न दोषः ॥ यथा धर्माब्धिसारे॥प्रणवोच्चार- णाच्चैव शालग्रामशिलार्चनात् ॥ ब्राह्मणीगमनाच्चैव शूद्रश्चांडाल- तां व्रजेत् ॥ दीक्षायुक्तैस्तथाशूद्रैर्मद्यपानविवर्जितैः ॥ कर्त्तव्यं ब्रा- ह्मणद्वारा शालग्रामशिलार्चनमिति ॥ अत्र प्रथमश्लोकआपस्तं-

ववचनत्वेन द्वितीयश्च पाद्मत्वेनोदाहृतोभट्टोजिनीलकंठादिभिः ॥ स्वहस्तेनाऽपि स्पर्शनरहितं तत्पूजनं तु स्त्रीशूद्रैः कर्तुं शक्यं ॥ यथा तत्रैवोच्यते॥स्त्री शूद्रोवा स्पर्शसहितं शालिग्रामचक्रांकितवाणलिंगानि नार्चयेत्॥शूद्रोवाऽनुपनीतोवा सधवा विधवांऽगना॥दूरादेवा स्पृशन् पूजां प्रकुर्याच्छिवकृष्णयोः॥शालग्रामवाणयोरेव स्पर्शननिषेधोनतु प्रतिमादौ ॥ सर्ववर्णैस्तु संपूज्याः प्रतिमाः सर्वदेवताः॥ लिंगान्यपि तु पूज्यानि मणिभिः कल्पितानि चेत्युक्तेः ॥ शालग्रामशिला क्रीता मध्यमा याचिता ऽधमा ॥ उक्तलक्षणसंपन्ना पारंपर्यक्रमागता ॥ उत्तमा सा तु विज्ञेया गुरुदत्ता तु तत्समा ॥ तत्राऽप्यामलकीतुल्या पूज्यासूक्ष्मैव या भवेत्॥ यथायथा शिला सूक्ष्मा तथा स्यात्तु महत्फलमित्यादि ॥ तयोः स्पर्शरहिततत्पूजनं चतुर्विंशतिमतव्याख्यादिषु च विस्तरेण निर्णीतं ॥ कृतमनेन प्रासंगिकेन ॥ प्रकृतमनुसरामः ॥ अस्तिच विष्णुपूजायाः संध्यावंदनादिवन्नित्यत्वं ॥ प्रातर्मध्यंदिने सायं विष्णुपूजां समाचरेत् ॥यथा संध्या तथा नित्या विष्णुपूजा स्मृता बुधैरिति कालनिर्णयदीपिकायां नारदीयात् ॥ इदं शंखचक्रादिधारणवादेऽपि संगृहीतं ॥ तथा आचारमाधवे कौर्मे ॥ न विष्ण्वाराधनात्पुण्यं वर्त्तते कर्म वैदिकं ॥ तस्मादनादिमध्यांतं नित्यमाराधयेद्धरिमित्यादि॥ दूषणोद्धारे चाऽचारचंद्रोदये कौर्मे ॥ विमोहादथवाऽऽलस्यादकृत्वा माधवार्चनं ॥ भुंक्ते सयाति नरकं सूकरेष्विह जायते ॥ अनर्चयित्वा गोविंदं येस्तु भुक्तं नराधमैः ॥ शुनोविष्ठासमं चान्नं नीरं च सुरयासममिति ॥ स्कांदे ॥ केशवार्चा गृहे यस्य न तिष्ठति महीपते ॥ तस्यान्नं नैव भोक्तव्यमभक्षणसमं स्मृतमिति ॥ नार-

सिंहे ॥ ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रांत्यजातयः ॥ संपूज्य तं सुरश्रेष्ठं भक्त्या सिंहवपुर्धरं ॥ मुच्यंते चाशुभैर्दुःखैर्जन्मकोटिशतोद्भवैरिति ॥ इत्युक्तमंत्रजाना तत्पूजनं तु मानसिकमेवेति प्रतिजानाति॥आस्तामप्रकृतमेतत्॥तथा श्रीभागवते॥श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदेति पूजादेर्नित्यत्वं श्रूयते ॥ तथा षष्ठस्कंधे स्वदूतान् प्रति यमः ॥ जिव्हा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविंदं ॥ कृष्णाय नो नमति यच्छिरएकदाऽपि तानानयध्वमसतोऽकृतविष्णुकृत्यानिति तत्सेवादे॥ विष्णुकृत्यस्याकरणे [illegible]लोकनीति[illegible] क्रमेश्वरनाप्ते (सूत्र ४४) संमान्यबहुमानेतिसूत्रव्याख्याने वचनं ॥ नरके प[illegible]यमानस्तु यमेन परिभाषितः॥किं त्वया नार्चितोदेवः केशवः क्लेशनाशनः ॥ विष्णुपुराणे तृतीयांशसप्तमाध्याये नकुलभीष्मसंवादांतर्गतकालिंगभीष्मसंवादे(श्लो० १४) स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ॥ परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानामित्यादि यावदध्यायसमाप्ति भगवदेकभक्तानां वैष्णवानां यमलोकादर्शनं तदर्चनभजनादिशून्यानामेव च तद्यातनादिकं निरूपितं ॥ सारसंग्रहे ॥ अतिपापसमाचाराः कर्मण्यनधिकारिणः ॥ शालग्रामार्चकाये ते नैव यांति यमालयम्॥ कामक्रोधप्रलोभैश्च व्याप्तोऽसौ वै नराधमः॥सोऽपि याति हरेर्लोकं शालग्रामशिलार्चनात्॥अशुचिर्वा दुराचारी सत्यशौचविवर्जितः॥ शालग्रामशिलां स्पृष्ट्वा सद्यएव शुचिर्भवेत् ॥ ब्राह्मणक्षत्रियविशां सच्छूद्राणामथाऽपिवा॥शालग्रामे ऽधिकारोऽस्ति नचान्येषां कदाचन ॥ अयं शूद्राणामर्चनाऽधिकारएकादशचक्राकितानिरुद्रा·

ख्यशालग्रामविषयकोबोध्यः ॥ धर्मसिंध्वादिषु तथोक्तेः॥ तथाहेमाद्रौ॥ब्राह्मणैर्वासुदेवस्तु नृपैः संकर्षणस्तथा ॥ प्रद्युम्नः पूज्यते वैश्यैरनिरुद्धस्तु शूद्रजैरिति ॥ तल्लक्षणं तत्रैव विष्णुधर्मोत्तरे ॥ पंचचक्रोवासुदेवः षड्भिः प्रद्युम्नउच्यते ॥ संकर्षणः सप्तचक्रोऽनिरुद्ध एकादशैः स्मृतइति॥कमलाकराह्निकचतुर्विंशतिमतव्याख्यामयूखादिषु चेदमुदाहृतं॥अथवा वैष्णवदीक्षावतां शूद्राणां ब्राह्मणद्वारा सर्वशालग्रामार्चनस्याऽभ्यनुज्ञापकतया वचनमुपसंहर्त्तव्यं॥प्रकृतमनुसरामः॥पुनस्तत्रैव ॥ अर्चनं वंदनं दास्यं प्रणामं दर्शनं नृणां ॥ शालग्रामशिलायां तु सर्वं कोटिगुणं भवेत्॥सस्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥ पौरुषेण तु सूक्तेन पूजयेत्पुरुषोत्तमं ॥ पराशरे ॥ पंचरात्रविधानेन तथा वैखानसेन वा ॥ स्मृत्युक्तेनाऽथवा कुर्यात् क्रियालोपं न कारयेत् ॥ एवं संपूजयेद्देवं यावज्जीवं द्विजोत्तमाः ॥ श्रौतस्मार्तागमोक्तानां कुर्यादन्यतमक्रियां ॥ सूतके मृतके वाऽपि विष्णुं नित्यं तथाऽर्चयेत् ॥ शालग्रामशिलां स्पृष्ट्वा सद्यएव शुचिर्भवेत् ॥ मद्भक्तिबलमाश्रित्य मद्भक्तोदीक्षितोयदि॥न त्यजेन्मम कर्माणि सूतके मृतकेऽपि वा ॥ सूतके मृतके चैव नित्यं विष्णुं तथाऽर्चयेत्॥ साऽनुष्ठानस्य विप्रस्य सद्यः शुद्धिः प्रजायते॥ जपोदेवार्चनविधिः कार्योदीक्षाऽन्वितैर्नरैः ॥ नास्ति पापं यतस्तेषां सूतके वा जितात्मनामिति ॥ आचारमयूखे लैंगे ॥ ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि ॥ स्त्रीशूद्रकरसंस्पर्शोवज्रस्पर्शाधिकोममेति॥इयं सूतकादौ शुद्धिर्वैष्णवदीक्षावतामत्यापत्तिमात्रविषयेति निर्णयसिंध्वादयः॥आचारमयूखकमलाकराह्निकादिषु स्कां-

दे ॥ कामासक्तोऽथवा क्रुद्धः शालग्रामशिलार्चनात् ॥ भक्त्या वा यदि वाऽभक्त्या कलौ मुक्तिमवाप्नुयात् ॥ वैवस्वतभयं नाऽस्ति तथा च कलिकालजं ॥ यः कथां कुरुते विष्णोः शालग्रामशिलाग्रतः ॥ शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते ॥ महापूजां तु कृत्वाऽऽदौ पूजयेत्तां ततोबुधइति ॥ चतुर्विंशतिमतव्याख्यायां त्विह प्रथमश्लोके कलौ भक्तिमवाप्नुयादिति पाठः ॥ तथाचै· तावता शालग्रामचक्रांकशिलासहिता भगवत्प्रतिमैवाऽर्चनीया ॥ इदं च भगवदर्चनं गुरुदत्तप्रतिमायामेव मुख्यं ॥ यथा सारसंग्रहे पाराशरे ॥ अभिवाद्य नमस्कृत्य प्रणिपत्य ततोगुरुम् ॥ तस्य प्रसा- दलब्धं हि गृहीत्वा विग्रहं हरेः ॥ श्रीभूमिनीलासहितं सायुधं सपरिच्छदम् ॥ अर्चयेत्प्रयतोनित्यं यथाकालमतंद्रितः ॥ अ- प्सु व्योम्नि तथाऽर्चायां वन्हौ हृदि तथा गुरौ ॥ तत्रैव स्मृतिः ॥ सर्वतस्त्वं जगत्साक्षी चराचरगुरुः पिता ॥ सर्वलोकेश्वरः साक्षात् सृष्टिस्थित्यंतकारकः ॥ ईश्वरोभगवान्विष्णुः परमात्मा जगत्पतिः ॥ अनंतः पुरुषः साक्षात्परं ब्रह्म शिवप्रभुः ॥ नारायणः सर्वपतिः परं ज्योतिः परात्परः ॥ तस्मात्तु भगवान्विष्णुः परमात्मा सईश्वरः ॥ भारते ॥ रुद्रं समाश्रितादेवारुद्रोब्रह्माणमाश्रितः ॥ ब्रह्मा समाश्रि- तोमह्यं नाहं कंचिदुपाश्रये ॥ ममाश्रयस्तु नो कश्चित्सर्वेषामा- श्रयोह्यहम् ॥ इदं रहस्यं कौंतेय प्रोक्तवानहमव्ययम् ॥ तथा ॥ नारायणात्परोदेवोन भूतोन भविष्यति ॥ एतद्रहस्यं वेदानां पुराणानां च सत्तम ॥ सर्वे देवाः सपितरोब्रह्माद्याश्चांडमध्य- गाः ॥ विष्णोः सकाशादुत्पन्नाइतीयं वैदिकी श्रुतिः ॥ नृसिंहपु- राणे ॥ ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा ॥ स्वंस्वं पदमनु-

प्राप्ताः केशवस्य प्रसादतः॥येतु सामान्यभावेन मन्यंते पुरुषोत्तमम् ॥ ते वै पाखंडिनोज्ञेयानरकार्हानराधमाः॥विष्णुनामसहस्रेऽपि॥ दैवतं देवतानां च भूतानां योऽव्ययः पिता॥ यतः सर्वाणि भूतानि भवंत्यादियुगागमे ॥ यस्मिंश्च प्रलयं यांति पुनरेव युगक्षये ॥ तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ॥ भगवद्गीतायां ॥ पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ॥ नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्योलोकत्रयेऽप्यप्रतिमप्रभावः॥ वसिष्ठः ॥ श्रीमहाविष्णुमन्येन हीनदेवेन दुर्मतिः ॥ साधारणं सकृद्भूते सोंऽत्यजोनांऽत्यजोंऽत्यजइति ॥ अतः सर्वथा सर्वदेवदेवत्वात् सर्वप्रधानत्वाच्च श्रीभगवानेव आराध्योऽस्माभिः ॥ तदर्चनं च अत्र भारतवर्षे तु प्रतिमायामेव मुख्यं ॥ सारसंग्रहे पाद्मे ॥ जंबुद्वीपे महापुण्ये वर्षे वै भारते शुभे ॥ अर्चायां सन्निधिर्विष्णोर्नेतरेषु कदाचन ॥ इतरेषु जलाग्न्यादिषु ॥ भारतेऽस्मिन्महावर्षे नित्यं सन्निहितोहरिः ॥ सर्वावस्थासु सौलभ्यमर्चायां विदते जनैः ॥ तस्माद्धि भारते वर्षे मुनिभिस्त्रिदशैरपि ॥ सेव्यते ऋषिभिर्देवि तपोयज्ञक्रियादिभिः ॥ ऐंद्रद्युम्ने तथा कूर्मे सिंहाद्रौ वदरीवने ॥ कृतशौचे प्रयागे च पौंड्रके चैव दंडके ॥ वैकुंठाद्रौ पदे चैव श्वेताद्रौ करवीरके ॥ कांच्यामनंतशयने श्रीरंगे गौरवाचले ॥ नारायणाचले सौम्ये वाराहे वामनाश्रमे ॥ एवमाद्याः स्वयं व्यक्ताः सर्वकामफलप्रदाः ॥ अथवा स्थापनं विष्णोः स्वगृहे तद्विशिष्यते ॥ शिलया दारुलोहाद्यैः कृत्वा प्रतिकृतिं हरेः ॥ विष्णुयामले॥मृदा च रम्यरत्नेन ताम्रेण रजतेन वा ॥ कृत्वा दारुमयं विंवमर्चयेत्कांचनेन वा ॥ पुण्यं दशगुणं विद्यादेतेषामुत्तरोत्तरं ॥ मूर्तिपूजनस्योत्कर्ष-

दिकं तु मूर्तिपूजनवादादिषु श्रीपुरुषोत्तमचरणादिभिर्विचारितमे-
वेत्यलं प्रसक्तानुप्रसक्त्या ॥ अवगतपूजाऽऽवश्यकत्वादिविधायका-
नि वचनानि च पारेपरार्द्धं सर्वत्र वेदपुराणेतिहासादिषु संत्येवेत्य-
लं सकलसलिलनिधिजलपिपासासोदर्या निखिलतल्लिखनलाल-
सया ॥ तस्मादस्माभिर्मोक्षादिसमयेष्टदानदक्षिणः सर्वदेवदेवः श्री-
नंदनंदनएव सेवनीयः सानंदं नतु कदाचिदपि कथंचिदपि कि-
मपि देवतांतरं ॥ अपिच ॥ उमादुर्गादयोदेवानोपास्यास्ते मुमुक्षु-
भिः ॥ सकामैरेव कर्त्तव्यमवैधं तु तदर्चनं ॥ तथाहि ॥ श्रीभागव-
ते प्रथमस्कंधे द्वितीयाध्याये ( श्लो० २५ ) मुमुक्षवोघोररूपान्
हित्वा भूतपतीनथ ॥ नारायणकलाः शांताभजंति ह्यनसूयवः ॥
॥२५॥ रजस्तमःप्रकृतयः समशीलाभजंति वै॥पितृभूतप्रजेशादीन्
श्रियैश्वर्यप्रजेप्सवः ॥ २६ ॥ तथा व्यवहाराध्याये दिव्यप्रकरणे
कोशविधाने ॥ ( श्लो० १८ ) देवानुग्रान्समभ्यर्च्येत्यय उग्रान्
दुर्गादीनिति मिताक्षरा ॥ तथा सारसंग्रहे वसिष्ठस्मृतौ ॥ रजस्वलां
सूतिकां च श्वानं काकं च गर्दभं ॥ कुक्कुटं विड्वराहं च पूयपाखं-
डिनस्तथा ॥ बहिर्देवालकंस्पृष्ट्वा सवासाजलमाविशेदिति ॥ देवा-
लकंनाम गणेशं भैरवं दुर्गां रुद्रादीनुग्रदेवतान् ॥ योऽर्चयेद्भक्ति-
मान् विप्रः सवै देवालकः स्मृतः ॥ वेदवेद्यं ब्राह्मणेशं भुवि कर्म
प्रियं हरिं ॥ योऽर्चकोब्राह्मणश्रेष्ठोनचदेवालनामकइति ॥ किंच
देवांतरोपासनात् काम्यफलमेव सिध्येन्नतु मोक्षादिकमपीति स-
कामानामेव तदुपासनं योग्यं ॥ यथा ॥ सप्तमाध्याये भगवा-
न् ॥ ( श्लो० १६ ) चतुर्विधाभजंते मां जनाः सुकृतिनोऽर्जुन ॥
आर्तोजिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभेति चतुर्विधभक्तानुक्त्वा ॥

(श्लो० १७) तेषां ज्ञानी नित्ययुक्तएकभक्तिर्विशिष्यते इत्यनन्यभक्ततया ज्ञानिनं प्रशंस्य देवतांतरप्रपत्तेर्निरवकाशत्ववारणायाह॥ (श्लो० २०) कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यंते ऽन्यदेवताः ॥ तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥ योयोयां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ॥ तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहं ॥ २१ ॥ सतया श्रद्धया युक्तस्तस्याऽऽराधनमीहते ॥ लभते च ततः कामान् मयैव विहितान् हि तान् ॥ २२ ॥ अंतवत्तु फलं तेषां तद्भवत्यल्पमेधसां॥देवान्देवयजोयांति मद्भक्तायांति मामपीति ॥ २३ ॥ तथानवमाध्याये ॥ (श्लो० २५) यांति देवव्रतादेवान् पितॄन् यांति पितृव्रताः ॥ भूतानि यांति भूतेज्यायांति मद्याजिनोऽपि मामिति ॥ नचात्र यजतिर्यागार्थएवेति शंक्यं ॥ भक्तिमीमांसायां (सू० ६६) तद्यजिःपूजायामितरेषांनैवमितिसूत्रेण पूजार्थत्वनिश्चयात् ॥ एवमादिवचनेष्वन्यदेवताभक्तेः फलस्य सांतत्वं काम्यत्वमत्यंतभक्तावपि तत्तद्देवताप्राप्त्या मोक्षाभावश्चोक्तइति नैव निष्कामैर्भगवदतिरिक्तः कश्चिदुपास्यः ॥ वासुदेवं परित्यज्य योऽन्यदेवमुपासते ॥ तृषितोजान्हवीतीरे कूपं खनति दुर्मतिरित्यादिवचनेभ्यः ॥ देवांतराणां मोक्षासमर्पकत्वं तु मुचकुंदादिप्रसंगोपन्यासात् प्रागपि समर्थितं ॥ गौतमकृताचारसूत्रेपि आन्हिकनिरूपके प्रथमप्रश्ने देवतार्चनप्रक्रमे उच्यते॥ (खं० १२) आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ॥ ऐश्वर्यमीश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनादिति ॥ आचारप्रकाशादिषु तु इदमेव तृतीयचरणे ज्ञानं महेश्वरादिच्छेदितिपाठभेदेन मात्स्यवचनत्वेनोदाहृतं ॥ आचारचंद्रोदये च साक्षान्मोक्षदातृत्वं

भगवतएवेति सम्यक् प्रपंचितं ॥ तथा विष्णुपुराणे ॥ ( अं१अ० २०श्लो०२१ ) यथा ते निश्चलं चेतोमयि भक्तिसमन्वितं ॥ तथा त्वं मत्प्रसादेन निर्वाणमपि यास्यसि ॥ तथा तत्रैव॥भोमान् मनोरथान् कामान् स्वर्गिवंद्यं परं पदं॥प्राप्नोत्याराधिते विष्णौ निर्वाणमपिचोत्तममिति ॥ तथा ॥ दक्षस्मृतावपि अंते मोक्षोपायचिंतने॥ योगमभ्यसमानस्य ध्रुवं कश्चिदुपद्रवः ॥ विद्या वा यदिवाऽविद्या शरणं तु जनार्दनइति ॥ अत्र विघ्ननिवृत्तौ कारणत्वं विद्योद्भवे जातेऽपि अविद्यया तस्मिन्नजातेऽपि वा सर्वशरणीकरणीयत्वं भगवतएवोक्तं ॥ श्वेताश्वतरे च श्रूयते ॥ योब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोति तस्मै ॥ तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ तस्मान्मुकुंदएवमुमुक्षुभिः सेव्यः ॥ तथा श्रीभागवतेऽपि द्वितीयस्कंधतृतीयाध्याये ॥ ( श्लो०२ ) ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिमित्यादिना विविधदेवांतरोपासनस्य तत्तत्कामनाविशेषवदधिकारकत्वं निरूप्य निगद्यते॥ (श्लो०१०) अकामः सर्वकामोवा मोक्षकामउदारधीः ॥ तीव्रेण भक्तियोगेन यजेत पुरुषं परं॥एतावानेव यजतामिह निश्रेयसोदयः॥भगवत्यचलोभावोयद्भागवतसंगतइति ॥ अतः सात्विकैः सर्वकामैरकामैर्मोक्षकामैश्चसाधारणैरपि श्रीहरिरेवैकउपास्यः किंपुनस्तदेकशरणैर्वैष्णवैः ॥ तेषामन्याश्रयकरणे ऽनन्यत्वभंगप्रसंगात् ॥ अनन्यतया भजनोत्कर्षं त्वाह नवमाध्याये भगवान् ॥ ( श्लो०१३ ) महात्मानस्तुमां पार्थ दैवीं प्रकृतिमाश्रिताः ॥ भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययं ॥ तथा ॥ ( श्लो०२२ ) अनन्याश्चिंतयंतोमां ये जनाः पर्युपासते ॥ तेषां नित्याभियुक्तानां योगक्षेमं व-

हाम्यहं ॥ तथा ॥ ( श्लो०३० ) अपिचेत्सुदुराचारोभजते माम-
नन्यभाक् ॥ साधुरेव समंतव्यः सम्यग्व्यवसितोहि सः ॥ क्षिप्रं
भवति धर्मात्मा शश्वच्छांतिं निगच्छति ॥ कौंतेय प्रतिजानीहि न
मे भक्तः प्रणश्यतीति ॥ एवमन्यान्यपि वचनानि विस्तरभयान्न-
लिख्यंते ॥ अपिच सर्वेषामपि देवानां भगवदंशत्वं ॥ विश्वं ना-
रायणं देवमित्युपक्रम्य सब्रह्म सशिवः सहरिः सेंद्रः सोक्षरः प-
रमः स्वराट् ॥ तथा ॥ इंद्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससु-
पर्णोगरुत्मान् ॥ एकं सद्विप्रावहुधा वदंत्यग्निं यमं मातरिश्वान-
माहुः ॥ एवमादिश्रुतिभिः योयोयांयां तनुं भक्त्येत्यादिस्मृतिभि-
श्च तथा निश्चयात् ॥ एतदेवोदयनाचार्यैः स्वकृतकुसुमांजलि-
विवेके देवः शुद्धस्वभावइत्यौपनिषदाइत्यारभ्य किंबहुना कार-
वोऽपि यं विश्वकर्मेत्युपासतइत्यंतेन संगृहीतं ॥ अतोभगवदर्च-
नेनैव गतार्थं सर्वेषामर्चनं ॥ सर्वार्चनानां भगवदर्चनपर्यवसायि-
त्वस्य आकाशात्पतितं तोयं यथा गच्छति सागरं ॥ सर्वदेवन-
मस्कारः केशवं प्रतिगच्छतीत्यादिवचनसिद्धत्वात् ॥ पंचायतनपू-
जायाअपि स्पष्टतया स्वार्चनपर्यवसायित्वमाह पद्मपुराणे का-
र्तिकमाहात्म्ये सत्यभामां प्रति भगवान् ॥ सौराः शैवाश्च गाणे-
शावैष्णवाः शक्तिपूजकाः ॥ मामेव प्राप्नुवंतीह वर्षाभः सागरं य-
था ॥ एवमन्यत्रापि द्रष्टव्यं ॥ अतोयुक्तमनन्यतया भगवदर्च-
नादेव सर्वार्चनानां गतार्थत्वं ॥ उक्तंच तृतीयस्कंधे ॥ यथा तरो-
र्मूलनिषेचनेन तृप्यंति तत्स्कंधभुजोपशाखाः ॥ प्राणोपहाराच्च
यथेंद्रियाणां तथैव सर्वार्हणमच्युतेज्येति ॥ दशमस्कंधे पूर्वार्द्धे च-
त्वारिंशत्तमाध्याये अक्रूरः ॥ ( श्लो०५ ) त्रय्या च विद्यया के-

चित्त्वां वै वैतानिकाद्विजाः ॥ यजंते विततैर्यज्ञैर्नानारूपामराख्यया ॥ अन्ये च संस्कृतात्मानोविधिना ऽभिहितेन ते ॥ यजंति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्त्तिकं ॥ ७ ॥ त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणं ॥ बव्हाचार्यविभेदेन भगवन् समुपासते ॥ ८ ॥ सर्वएव यजंति त्वां सर्वदेवमयेश्वरं ॥ ये प्यन्यदेवताभक्तायद्यप्यन्यधियः प्रभो ॥ ९ ॥ यथाऽद्रिप्रभवानद्यः पर्जन्यापूरिताः प्रभो ॥ विशंति सर्वदा सिंधुं तद्वत्त्वां गतयोंऽततः ॥ १० ॥ इति ॥ गौतमतंत्रे दशमाध्याये देवांतराणां पूजनप्रकारमुक्त्वा तेषां सर्वेषां तदंशत्वमाह ॥ ( श्लो० ११ ) यथा सिंधुसमुद्भूतास्तरंगाभिन्नतां ययुः॥तथा कृष्णसमुद्भूताएते तादात्म्यतां ययुः॥तद्ध्यानेनैव ते ध्येयाः साधकेन शुभंयुना ॥ एवं सर्वाकृतिमयं देशिकः कृष्णमर्चयेत्॥धर्मार्थकाममोक्षाश्च करे तस्य सुनिश्चिताइत्यादि ॥ सारसंग्रहे परतत्वनिर्णये आथर्वणी श्रुतिः ॥ एकएव नारायणआसीत् न ब्रह्मा नेशानोनेमे द्यावापृथिवी नारायणाद्ब्रह्माजायते नारायणाद्रुद्रोजायते नारायणात्प्रजापतिः प्रजायतइति ॥ तत्रैव ॥ विष्णुयामले महामते ॥ सर्वशास्त्रमयी गीता सर्वदेवमयोहरिः ॥ सर्वतीर्थमयी गंगा सर्वधर्मोदयापरइति ॥ तत्रैव स्कांदे ॥ ये त्वर्चयंति देवेशं सुपर्णोपरि संस्थितं ॥ किं करिष्यंति ते तीर्थैर्देवतानां च दर्शनैः ॥ किं यज्ञैः किं व्रतैर्वापि किं दानैः किमुपोषणैः ॥ मूर्तिं नारायणीं यत्र पश्यंति गरुडोपरीति ॥ अतोभगवदर्चनेनैव गतार्थत्वाद्वैष्णवानामन्यार्चनेन नाऽस्ति कश्चिदर्थः ॥ निषिद्धंचैतत् ॥ नारदपंचरात्रद्वितीयरात्रद्वितीयाध्याये ॥ ( श्लो० ६५ ) कृष्णानुपहतोविद्वानित्यादिना वैष्ण-

वस्वरूपमुक्तोच्यते ॥ (श्लो० ७३) एवं भृत्यस्य रक्षार्थं कृष्णोदत्वा सुदर्शनं॥ तथाऽपि सुस्थोन प्रीतस्तं त्यक्तुमक्षमः क्षणं ॥ एवं भूतोदयासिधुर्भक्तानुग्रहकारकः ॥ अतः संतोहि तं त्यक्त्वा न सेवंते सुरांतरमिति ॥ तथा सारसंग्रहे ब्रह्मरात्रे ॥ न त्रिपुंड्रं द्विजैर्धार्यं पद्माकारं तथैवच ॥ नचान्यदेवताभक्तिरापद्यपि कदाचनेति ॥ आचारप्रकाशे काशीखंडे ॥ नाऽन्यं देवं नमस्कुर्यान्नाऽन्यं मंत्रमुदीरयेत् ॥ सदोपवीतवद्धार्याः शंखचक्रगदादयः ॥ ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतइति ॥ पुनः सारसंग्रहे वसिष्ठः ॥ यः कर्म कुरुते विप्रोविना विष्ण्वर्चनं क्वचित् ॥ ब्राह्मण्याद्भ्रश्यते सद्यश्चांडालत्वं सगच्छति ॥ अर्चयित्वा तु गोविंदमितरानर्चयेत्पृथक् ॥ अवैष्णवत्वं तस्याऽपीतरभक्त्या भवेध्रुवं ॥ योनरोवैष्णवं चिन्हं धृत्वा च तमसा चरन् ॥ त्यजेद्वैदिकं धर्मं सोऽपि पाखंडतां व्रजेत् ॥ नैसर्गिकं तु जीवानां दास्यं विष्णोः सनातनं ॥ तद्विना वर्त्तते मोहादात्मचौरः सकथ्यते ॥ शंखचक्रविहीनास्तु देवतांतरपूजकाः॥द्वादशीविमुखाविप्राः शैवाश्चावैष्णवाः स्मृताः ॥ अवैष्णवानां संसर्गात्पूजनाद्वंदनादपि ॥ यजनाध्ययनात्सद्योवैष्णवत्वाच्च्युतोभवेत् ॥ सर्वत्राऽवैष्णवान् विप्रान् पतितांश्च विवर्जयेत्॥वैष्णवानेव विप्रांस्तु सर्वकर्मसु योजयेदिति॥अतएव पुराणेषु प्राचीनवैष्णवानामितिहासेषु अन्याश्रयाकरणमनेकत्र निरूप्यते ॥ यथा वृहन्नारदीये पुरुषोत्तममाहात्म्ये त्रयोविंशाध्याये चित्रवाहुराजोपाख्याने कथ्यते॥ (श्लो० ८) तया सह महीपालोबुभुजे मेदिनीं युवा ॥ विना श्रीकृष्णदेवं सनैव जानाति दैवतमि-

ति ॥ एवं ध्रुवांबरीषादीनामितिहासा अपि निरीक्षणीयाः ॥ अन्यच्चास्ति ॥ अन्यदेवताभक्तेरवैधत्वं यथाऽऽह नवमाध्याये भगवान् ॥ ( श्लो० २३ ) येऽप्यन्यदेवताभक्तायजंते श्रद्धयाऽन्विताः ॥ तेऽपि मामेव कौंतेय यजंत्यविधिपूर्वकमिति ॥ अवैधस्य चाकर्त्तव्यत्वं धर्मशास्त्रप्रसिद्धं ॥ यथाऽऽह द्वितीयाध्याये बृहत्पराशरः ॥ ( श्लो० १४३ ) विधिदृष्टं तु यत्कर्म करोत्यविधिना तु यः ॥ न किंचित्फलमाप्नोति क्लेशमात्रं हि तस्य तत् ॥ विधिहीनं भावदुष्टं कृतमश्रद्धयाऽपि यत् ॥ तद्धरंत्यसुरास्तस्य मूढत्वादकृतात्मनः ॥ श्रद्धाविधिसमायुक्तं यत्कर्म क्रियते नृभिः ॥ शुचिभिरेकचित्तैश्च तदानंत्याय कल्पतइति ॥ अतोवैधभगवदर्चनैकनिरतैर्देवांतरार्चनरूपमवैधं तत्पूजनं नैवास्माभिर्विधीयते ॥ किंच ॥ आदित्यानामहं विष्णुरित्यादिवचनैर्देवांतराणां विभूतित्वात्तदुपासनायाभक्तित्वाभावाच्च न तेऽस्माभिर्भजनीयाः ॥ सूचितं चैतद्भक्तिमीमांसाद्वितीयाध्यायप्रथमाह्निके भगवता शांडिल्येन ॥ ( सूत्रं ५० ) प्राणित्वान्नविभूतिष्विति ॥ नचैवं सतिवृष्णीनां वासुदेवोऽस्मीति विभूतित्वाविशेषाद्वासुदेवस्याऽप्यभजनीयत्वं शंक्यं ॥ तत्र साक्षात् परब्रह्मत्वस्यानेकश्रुत्यादिप्रमाणसिद्धत्वात् ॥ प्रपंचितं चैतदपि तत्रैव ॥ ( सू० ५२ ) वासुदेवेपीतिचेन्नाकारमात्रत्वादित्यधिकरणे ॥ अथ नारदपंचरात्रे प्रथमरात्रेद्वादशाध्याये ( श्लो० ४७ ) भजंति केचिच्छुद्धांतं परमात्मानमीश्वरं ॥ केचित्तदंशमंशांशं प्राप्नुवंति क्रमेण तमिति ॥ अतोंशांशभजनापेक्षयांशिनएव भजनं योग्यं ॥ तथा तत्रैव द्वितीयाध्याये नारदसनत्कुमारौ प्रति परमेष्ठी ॥ ( श्लो० ६२ ) देवा-

न्यांश्च भजते हरिं जानाति तत्परः॥ तपः करोति तं प्राप्तुमाकां-
क्षन्मध्यमोजनइति ॥ तेन भगवद्भक्तेरंगतया ऽपि देवतांतरभक्तिर्म-
ध्यमानामेव नतूत्तमानां ॥ गीतासप्तमाध्याये ॥ ( श्लो १६ ) च-
तुर्विधाभजंते मामित्युपक्रम्य ( श्लो० १७ ) तेषां ज्ञानी नित्य-
युक्तएकभक्तिर्विशिष्यतइत्यनन्यभक्तिमतएव नित्ययुक्तत्वस्या-
ऽत्यंतप्रियत्वादिधर्मैरत्युत्तमत्वस्य च स्मरणात् ॥ अन्यभक्तिमतो-
निंदितत्वं तु सारसंग्रहे प्रजापतिस्मृतौ ॥ नारायणं परित्यज्य हृ-
दिस्थं प्रभुमीश्वरं ॥ योन्यमर्चयते देवं परबुद्ध्या सपापभाक् ॥ व-
सिष्ठः ॥ नारायणः परं ब्रह्म ब्राह्मणानां हि दैवतम् ॥ सोमसूर्या-
दयोदेवाः क्षत्रियाणां विशामपि ॥ शूद्रादीनां तु रुद्राद्याअर्चनी-
याः प्रकीर्तिताः ॥ भारते ॥ ब्रह्माणं शितिकंठं च याश्चान्यादेव-
ताः स्मृताः ॥ प्रतिबुद्धान सेवंते यस्मात्परिमितं फलं ॥ पाद्मे भृ-
गुवचनम् ॥ शुद्धसत्त्वमयोविष्णुः कल्याणगुणसागरः ॥ नारायणः
परं ब्रह्म विप्राणां दैवतं हरिः ॥ सएव पूज्योविप्राणां नेतरः पुरुष-
र्षभ ॥ मोहाद्यः पूजयेदन्यं सपाखंडी भविष्यति॥अशुद्धब्रह्मरुद्रा-
द्याराजसत्तमविमिश्रिताः ॥ नान्यः कश्चिन्नराणां वै पूजनीयः क-
दाचन ॥ नान्यं देवं निरीक्षेत नान्यं देवं च पूजयेत् ॥ नचान्यं
प्रणमेद्विप्रोनान्यदायतनं विशेत् ॥ वाराहे ॥ यत्सत्वं सहरिर्देवोह-
रिस्तत्परमं पदं ॥ सत्वं रजस्तमश्चेति त्रितयं चैतदुच्यते ॥ लिंग-
पुराणे ॥ हिरण्यगर्भोरजसातमसा शंकरः स्वयं ॥ सत्वेन सर्वगोवि-
ष्णुः सर्वात्मा सदसन्मयः ॥ सात्विकैः सेव्यते विष्णुस्तामसैरे-
व शंकरः ॥ राजसैः सेव्यते ब्रह्मा संकीर्णैश्च सरस्वती ॥ बौद्धो-
रुद्रस्तथा वायुर्दुर्गागणपभैरवाः ॥ यमस्कंदौ नैर्ऋतश्च तामसादे-

वताः स्मृताः ॥ वसिष्ठस्मृतौ ॥ वासुदेवं परित्यज्य योन्यदेवमुपासते ॥ सहेमराशिमुत्सृज्य पांसुराशिं जिघृक्षति ॥ पाद्मे ॥ यक्षराक्षसभूताद्याः कुष्मांडागणभैरवाः ॥ नार्चनीयाः सदा देवि विष्णुलोकमभीप्सुभिः ॥ रजस्तमोऽभिभूतानामर्चनं प्रतिपिध्यते ॥ रौरवं नरकं यांति यक्षभूतगणार्चनात् ॥ तस्मात्तु सर्वयज्ञस्य भोक्तारं पुरुषोत्तमम् ॥ ज्ञात्वा सर्वत्र कुर्वीत नित्यनैमित्तिकीः क्रियाइति ॥ भगवदतिरिक्तस्य मोक्षासमर्पकत्वादपि मुमुक्षुभिः सर्वथा तेषामभजनीयत्वमुपपादितं प्राक् ॥ यानि तु ॥ तस्य भोगं च मोक्षं च प्रभ्रस्तुटः प्रयच्छतीत्यादीनि देवांतरपूजनेऽपि मोक्षफलकत्वप्रतिपादकानि वचनानि क्वचित् क्वचिदुपलभ्यंते ॥ तानि तु तत्तद्देवसायुज्यसालोक्याद्यन्यतमप्राप्तिलक्षणमोक्षपराण्येव ॥ देवान्देवयजोयांति यांतिदेवव्रतादेवानित्यादिस्मृतिभ्यः ॥ निबंधेष्वपि तत्तद्देवपूजाप्रक्रमे तत्तत्पूजकस्य तत्तल्लोकप्राप्तिबोधकवचनोपन्यासाच्च ॥ यथाऽऽचारप्रकाशे भविष्यपुराणे ॥ भक्त्या पूजयते योऽर्कमर्कपुष्पैः सितासितैः ॥ तेजसा सोऽर्कसंकाशोऽर्कलोके महीयते ॥ तथा ॥ कल्पकोटिसहस्राणि कल्पकोटिशतानिच ॥ वसेदर्कपुरे श्रीमान् सूर्यतुल्यपराक्रमइति ॥ तथा महाभारते ॥ सदा तं यजते यस्तु श्रद्धया मुनिपुंगव ॥ लिंगेवा स्थंडिले वाऽपि शंकरं विधिपूर्वकं ॥ युगदोषं विनिर्जित्य रुद्रलोके प्रमोदतइति ॥ चतुर्विंशतिमतव्याख्याऽऽचारमयूखादिष्वपीदमुदाहृतं ॥ तथा भविष्यपुराणे ॥ कल्पकोटिसहस्राणि कल्पकोटिशतानिच ॥ वसेच्छिवपुरे श्रीमान् शिवतुल्यपराक्रमइति ॥ तथा तत्रैच ॥ दधीत्यं घृतसंयुक्तं शिवे यश्च निवेदयेत् ॥ रुद्रलोकमवाप्नो-

ति गाणपत्यं च विंदतीति॥गाणपत्यमित्यत्र गणपतिशब्दात्तस्येद-
मित्यर्थेऽश्वपत्यादित्वादणि चातुर्वर्ण्यादेराकृतिगणत्वात् स्वार्थे ष्य-
ञ् ॥ स्कांदे ॥ एकं मोचाफलं पक्वं यः शिवाय निवेदयेत् ॥ स-
र्वभक्ष्यैर्महाभोगैः शिवलोके महीयतइति ॥ मोचाकदली ॥ एव-
मादीनि तत्रतत्र वचनांतराणि द्रष्टव्यानि ॥ अतः साक्षात्परममो-
क्षप्रदानौदार्यं तु नंदनंदनस्यैव ॥ तथा स्वभक्तसर्वमनोरथपूरकत्व-
मपि ॥ उक्तंच विष्णुपुराणे तृतीयांशे ॥ ( अ० ५ ( श्लो० ३ )
भौमान् मनोरथान् कामान् स्वर्गिवंद्यं परं पदं ॥ प्राप्नोत्याराधिते
विष्णौ निर्वाणमपि चोत्तममिति ॥ नचैवं फलश्रवणात् काम्यत्वं
शंक्यं ॥ अकरणे प्रत्यवायबोधकैरुदाहृतचरादिवचननिचयैः सि-
द्धायानित्यतायाः केनाऽपि प्रत्याख्यातुमशक्यत्वात् ॥ नित्यत्व-
साधकानि तु सदाशब्दप्रयोगादीनि बहूनि भगवदर्चनविधिवा-
क्येषु दृश्यंते ॥ तानिच संग्रहकारेणेत्थं संगृहीतानि ॥ नित्यं सदा-
यावदायुर्नकदाचिदतिक्रमेत् ॥ इत्युक्त्या ऽतिक्रमे दोषश्रुतेरत्या-
गचोदनात्॥फलाश्रुतेर्वीप्सयाच तन्नित्यमिति कीर्तितमिति ॥ इ-
होक्तनित्यत्वसाधकविशिष्टानि कानिचिद्वाक्यानि पूर्वमुपन्य-
स्तानि ॥बहूनि च तत्रतत्रोपलभ्यंतइत्यलं ॥अथ फलश्रवणात्त्वस्तु
तस्यैव काम्यत्वमपि ॥ नचैवमपि नित्यकाम्यसंयोगविरोधः शं-
क्यः ॥ खादिरवदेकस्यैव पूजनस्य द्विरूप्यसंभवेनाऽविरोधात् ॥ य-
था ॥ खादिरोयूपोभवतीति नित्यः खादिरोविहितः ॥ खादिरं वी-
र्यकामस्य यूपं कुर्वीतेतिकाम्यः ॥ अतएकस्यैव खादिरस्य तुल्य-
बलेन प्रमाणद्वयेन द्विरूप्यं स्वीकृतं जैमिनिना ॥ तथाचसूत्रं ॥ ए-
कस्यतूभयार्थत्वेसंयोगपृथक्त्वमिति ॥ नचेह नित्यस्य क्रत्वर्थत्वात्

काम्यस्य च पुरुपार्थत्वात् प्रकृतेच द्विविधस्याप्यर्चनस्य पुरुषार्थ- त्वाद्विषमोपन्यासइतिशंक्यं ॥ एकस्यैव प्रमाणद्वयेन द्वैरूप्यमात्रे तात्पर्यात् ॥ अस्तुवाऽग्निहोत्रमेवाऽत्र विस्पष्टोदृष्टांतः ॥ नह्यग्निहो- त्रं नित्यं वा काम्यं वापि क्रत्वंगं भवितुमर्हति ॥ स्वतः क्रतुत्वात्॥ किंतु पुरुपार्थमेव ॥ तत्र यावज्जीवमग्निहोत्रं जुहोतीत्यनेन नित्यं विधीयते ॥ अग्निहोत्रं जुहुयात् स्वर्गकामइतिच काम्यं ॥ निमि- त्तभेदेन प्रयोगभेदात्तद्भेदोयावज्जीवाधिकरणे निर्णीतः ॥ तस्या- धिकरणस्य संग्राहकौ चेमौ श्लोकौ माधवेनोक्तौ ॥ यावज्जी- वं जुहोतीति धर्मः कर्मणि पुंसि वा ॥ कालत्वात्कर्मधर्मोऽतः काम्यएकः प्रयुज्यतां ॥ न कालोजीवनं तेन निमित्तप्रविभागतः॥ काम्यप्रयोगोभिन्नः स्याद्यावज्जीवप्रयोगतइति॥प्रयोगमात्रभेदो- नतुकर्मभेदः ॥ द्वितीयाध्यायद्वितीयपादोक्तशब्दांतराभ्यासादिहे- त्वभावात् ॥ तथाचैकस्यैवाग्निहोत्रस्य द्वैरूप्यवत् प्रकृते ऽपि द्वैरू- प्यं ॥ अथ केवलनित्यानुष्ठायिनां सकृत्प्रयोगेऽपि कामनासिद्धि- स्तु वस्तुस्वभावात् ॥ स्पष्टंचेदं विविदिपाधिकरणे ॥ तस्यापि सं- ग्राहकौ श्लोकौ तेनैवोक्तौ ॥ विद्यार्थमाश्रमार्थं च द्विःप्रयोगो ऽथवासकृत् ॥ प्रयोजनविभेदेन प्रयोगोऽपि विभिद्यते ॥ श्राद्धा- र्थभुक्त्या तृप्तिः स्याद्विद्यार्थेनाश्रमस्तथा ॥ अनित्यनित्यसंयोग- उक्तिभ्यां खादिरे मतइति ॥ अयमर्थः ॥ तमेतं वेदानुवचनेन ब्रा- ह्मणाविविदिषंति यज्ञेन दानेन प्रजयाऽनाशकेनेति यज्ञादीनां वि- द्यार्थत्वंश्रूयते ॥ गृहस्थाद्याश्रमार्थत्वं च तेषांप्रसिद्धमेव ॥ तत्र विद्यार्थाश्रमार्थयोः पृथक् प्रयोगः सकृद्वेति संशयः ॥ प्रयोजन- भेदात् प्रयोगभेदइति पूर्वपक्षः ॥ श्राद्धभोजने श्राद्धनिष्पत्तिस्तृ-

मिश्रभवति॥नचद्विर्भुज्यते तद्वद्विद्यार्थेनैव यज्ञादिना आश्रमसिद्धि-रिति सिद्धांतः॥नित्यानित्यसंयोगस्तु खादिरवत्प्रमाणद्वयसिद्धइति तत्र नित्येन कामनासिद्धिः पश्वर्थानुष्ठितप्रयाजादिना पशुतंत्रांतः-पातिपुरोडाशादिसिद्धिवत् प्रसंगेनैव नतु तंत्रेणेत्यलं॥एवमत्युत्तम-त्वादेव महात्मानोहरिभक्तिमेव प्रार्थयंते॥यथा विष्णुपुराणे प्रथमां-शविंशाध्याये ॥ ( श्लो० १८ ) प्रल्हादआह॥नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहं ॥ तेषुतेष्वच्युता भक्तिरच्युताऽस्तु सदा त्वयि॥ या प्रीतिरविवेकानां विषयेष्वनपायिनी ॥ त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पत्विति ॥ एवं सर्वत्रैव वेदपुराणादिष्ववलोकनीयं॥ तथा श्रवणकीर्तनस्मरणादिमात्रेण स्वचरणसरोजैकमधुकराणां मो क्षादिलक्षणतत्तत्सकलेष्टप्रतिबंधकतत्तन्निखिलदुरितप्रकरतूलकु-लज्वालनविशालबहलज्वालाजालप्रबलकालानलत्वमपि तस्यै-वाऽस्ति॥यथा विष्णुपुराणे॥(अं० २अ० ६श्लो० ३२।३३)पापे गुरू णि गुरुणि लघूनिच लघुन्यपि ॥ प्रायश्चित्तानि मैत्रेय जगुः स्वा-यंभुवादयः ॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ॥ यानि तेषामशेषाणां कृष्णानुस्मरणं परम्॥ तथा ॥ ( अं० ६अ० ७श्लो० ९ ) यन्नामकीर्त्तनं भक्त्या विलापनमनुत्तमम् ॥ मैत्रेयाऽशेषपा-पानां धातूनामिव पावकइति ॥ महाभारते शांतिपर्वणि मोक्षध-र्मे ॥ ( अ० ३४५ श्लो० १३३०५ ) सर्वाश्रमाभिगमनं सर्वती-र्थावगाहनं ॥ न तथा फलदं सौते नारायणकथा यथा ॥ पावि-तांगाः स्म संवृत्ताः श्रुत्वेमामादितः कथाम् ॥ नारायणाश्रयां पु-ण्यां सर्वपापप्रणाशिनीं॥ पुनर्विष्णुपुराणे॥ (अंश.२ अ० ६श्लो०

अ० ३४३ श्लो० २१३ ॥

२९ ) तस्मादहर्निशं विष्णुं संस्मरन् पुरुषोमुने ॥ न याति नरकं शुद्धः संक्षीणाऽखिलकल्मषः ॥ अत्रैव ॥ ( अं० २अ० ६ श्लो० ३४) कृते पापेऽनुतापोवै यस्य पुंसः प्रजायते॥प्रायश्चित्तं तु,तस्यैकं हरिसंस्मरणं परमिति ॥ तथा ॥ (अंश३अ० ७श्लो० ३४।३५) किंकरादंडपाशौ वा न यमोनच यातनाः ॥ समर्थास्तस्य यस्यात्मा केशवालंबनः सदा ॥ चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत् ॥ नाशौचं विद्यते तस्य सपवित्रतरोयतइति॥स्वमेश्वरभाष्ये द्वितीयाध्याय द्वितीयाह्निके (सू० ७६)लघ्वपि भक्ताधिकारइत्यस्य व्याख्याने वचनं ॥ महापातकयुक्तोऽपि ध्यायन्निमिषमच्युतं॥ पुनस्तपस्वी भवति पंक्तिपावनपावनः ॥ विष्णुपुराणे ॥ ( अं० ६ अ० ७श्लो० १० ) कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणां ॥ प्रयाति विलयं सद्यः सकृद्यत्राऽनुसंस्मृते ॥ नृसिंहपुराणे ॥ ( अ० ८ श्लो० २८।२९ ) नारकाः कृष्णकृष्णेति नारसिंहेति चुक्रुशुः ॥ इति संकीर्तितोविष्णुर्नारकैर्भक्तिपूर्वकं ॥ नारक्योयातनाः सर्वास्तेषां नष्टामहात्मनां ॥ एवं श्रीभागवतादिष्वप्यनेकत्र निरीक्षणीय ॥ विस्तरभयाद्विरम्यते ॥ एतच्च शांडिल्यमहर्षिणाऽपि भक्तिमीमांसायां ( सू० ७४ ) स्मृतिकीर्त्योः कथादेश्चार्तौ प्रायश्चित्तभावादित्यादिसूत्रैः स्पष्टतया निर्णीतम् ॥ अथ नृसिंहपुराणे ॥ ( अ० . ५.श्लो० ४६ ) गंगाप्रयागगयपुष्करनैमिषाणि पुण्यानि यानि कुरुजांगलयामुनानि ॥ कालेन तीर्थसलिलानि पुनंति पापान् पादोदकं भगवतः प्रपुनाति सद्यइति ॥ आचारार्के धर्मप्रवृत्तौ च भविष्ये ॥ समभ्यर्च्य पिबेद्देवं यः पादसलिलं हरेः ॥ सयाति परमं स्थानं तद्विष्णोः प-

रमं पदमिति ॥ इत्थं तत्पादोदकादीनामपि पापहरत्वात् किं वाच्यं तत्स्मरणादीनां तादृशत्वे ॥ अतोमोक्षादिप्रतिबंधकदुरितध्वंसायाऽपि कंसारितोनाऽस्माकमितरोपासनोपयुज्यते ॥ तस्मात्स्वस्वसांप्रदायिकगुरूपदिष्टप्रकारेण भगवतएवैकस्यार्चनं वैष्णवैः कर्त्तव्यं ॥ विधाय देवतापूजां प्रातर्होमादनंतरं ॥ गुरूक्तेन तु मार्गेण मूलमंत्रं जपेद्बुधइत्याचारार्के मरीचिवचनात् ॥ तथा ॥ वैष्णवानां हरेरर्चा तपस्या च श्रुतौ श्रुता ॥ वैष्णवस्त्वं गृहे तिष्ठ कुरु कृष्णपदार्चनं ॥ अंतर्बहिर्हरिर्यस्य तस्य किं तपसा सुत ॥ नांतर्बहिर्हरिर्यस्य तस्य किं तपसा वृथा ॥ तपसा हरिराराध्योनान्यः कश्चन विद्यते ॥ यत्रतत्र कृतं कृष्णसेवनं परमं तपइति ब्रह्मवैवर्त्तब्रह्मखंडीयैकादशाध्याये नारदं प्रति ब्रह्मवाक्येभ्यः ॥ वत्से चतुर्षु वेदेषु धर्मेषु संहितासु च ॥ पुराणेष्वितिहासेषु पंचरात्रादिकेषु च ॥ अन्येषु धर्मशास्त्रेषु वेदांगेषु च सुव्रते ॥ सर्वेष्टं सारभूतं च मंगलं कृष्णसेवनमिति ब्रह्मवैवर्त्तप्रकृतिखंडे सावित्रीं प्रति ब्रह्मवाक्याच्च ॥ किंच भक्त्युत्कर्षस्तु सर्वत्रवर्णितएव ॥ अस्तिचाऽस्य कायिकादिव्यापाररूपस्य भगवत्सेवनस्याऽपि भक्तित्वं ॥ भजइत्येषवै धातुः सेवायां परिकीर्त्तितः ॥ तस्मात्सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसीति ॥ नित्यमेतत्कर्तॄणामुत्कर्षं त्वाह स्वस्मृतावत्रिः ॥ (श्लो० ३६५) धन्यानामपि धन्यास्ते देवानामपि मानवाः ॥ विष्णोः परिस्तुतिर्येषु हीयते न कदाचनेति ॥ तथा श्रीभागवते भगवत्सेवायाः शावौ करौ नोकुरुतः सपर्यां हरेर्लसत्कां-

सृति

चनकंकणौवेत्यादिष्वकरणे निंदाश्रवणात् ॥ न योगसिद्धी-रपुनर्भवं वा वांछंति यत्पादरजःप्रपन्नाः ॥ सालोक्यसार्ष्टि-सारूप्यसायुज्यैकत्वमप्युत ॥ दीयमानं न गृण्हंति विना मत्सेवनं जनाः ॥ तथा ॥ नेच्छंति सेवया पूर्णाः कुतोऽन्य-त्कालविद्रुतं ॥ मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुरित्या-दिषु मोक्षाधिकत्वकथनाच्च श्रीपुरुषोत्तमस्य सैवैकाऽस्माकमाव-श्यकी नतु काऽपि कस्याऽपि देवांतरस्यार्चनादिकं तथा ॥ शि-वादीनामपि श्रीभगवदेकभक्तत्वमपि वैष्णवानांयथाशंभुरित्या-दिषु प्रसिद्धं ॥ तथा ॥ नारदपंचरात्रेऽपि चतुर्थरात्रतृतीयाध्याये पार्वतीं प्रति शिवः ॥ ( श्लो० १८६ ) नावैष्णवाय दातव्यं वि-कल्पोपहतात्मने ॥ भक्तिश्रद्धाविहीनाय विष्णुसामान्यदर्शिने ॥ तथा ॥ ( श्लो० १८८ ) कलौ सद्यः फलं कल्पग्राममेष्यति ना-रदः ॥ लोकानां भाग्यहीनानां येन दुःखं विनश्यति ॥ क्षेत्रेषु वै-ष्णवेष्वेतदार्यावर्त्ते भविष्यति ॥ नाऽस्ति विष्णोः परं सत्यं नाऽस्ति-विष्णोः परं पदं ॥ १८९ ॥ नाऽस्ति विष्णोः परं ज्ञानं नाऽस्ति मो-क्षोऽस्त्ववैष्णवे ॥ नास्ति विष्णोः परोमंत्रोनास्ति विष्णोः परं तपः ॥ नास्तिविष्णोः परं ध्यानं नास्ति मंत्रोऽस्त्ववैष्णवः ॥ किं तस्य बहु-भिर्मंत्रैः किं जपैर्बहुविस्तरैः ॥ वाजपेयसहस्रैः किं भक्तिर्यस्य जनार्दने ॥ सर्वतीर्थमयोविष्णुः सर्वशास्त्रमयः प्रभुः ॥ सर्वक्रतुम-योविष्णुः सत्यं सत्यं वदाम्यहं ॥ आब्रह्मसारसर्वस्वं सर्वमेतन्मयो-दितं ॥ १९३ ॥ पार्वत्युवाच ॥ अहो बत महत्कष्टं समस्तसुखदे हरौ ॥ विद्यमानेऽपि सर्वेशे मूढाः क्लिश्यंति संसृतौ ॥ यमुद्दिश्य स-दा नाथोमहेशोऽपि दिगंबरः ॥ जटिलोभस्मलिप्तांगस्तपस्वी वी-

क्षितोजनैः ॥ १९६ ॥ अतोऽधिकोन देवोऽस्ति लक्ष्मीकांतान्मधुद्विषः ॥ यत्तत्वं चिंत्यते नित्यं त्वया योगीश्वरेण हि ॥ १९७ ॥ अतः परं किमधिकं पदं श्रीपुरुषोत्तमात् ॥ तमविज्ञाय तान् मूढायजन्ते ज्ञानमानिनः ॥ मुषिताऽस्मि त्वया नाथ चिरं यदयमीश्वरः ॥ प्रकाशितोन मे यस्य दत्ताद्यादिव्यशक्तयः ॥ १९९ ॥ अहोसर्वेश्वरोविष्णुः सर्वदेवोत्तमोत्तमः ॥ भवदादिगुरुर्मूढैः सामान्यइव लक्ष्यते ॥ २०० ॥ इत्यादि ॥ अलं बहुलेखेन ॥ तस्मात्॥ ॥ यैः पंचदेवपूजायाः पारंपर्येण वा स्वयं ॥ गृहीतोनियमस्तेषामेव साऽऽवश्यकी मता ॥ १ ॥ न सर्वेषां गृहस्थानां स्वेष्टस्यैवार्चनं यतः ॥ स्मृतं गृहस्थधर्मेषु याज्ञवल्क्यादिषु स्फुटं ॥ २ ॥ कलौ तु पूजनं मुख्यं द्वयोरेव हरीशयोः ॥ स्वसंप्रदायभेदेन तदपीह व्यवस्थितं ॥ ३ ॥ एकोदेवः केशवोवा शिवोवेति सतां मतिः ॥ तत्राऽपि सर्वथोत्कर्षोहरेरेवाऽर्चनादिषु ॥ ४ ॥ अनूदितः शास्त्रसिद्धः सर्वकाले कलौ तथा ॥ दुर्गादीनां तथोमत्वं तामसैरेव सेव्यता ॥ ५ ॥ मुमुक्षूणां हरेरेव सेवनं केवलं बलं ॥ एकैककामदा यस्मादन्ये देवान मोक्षदाः ॥ ६ ॥ कृष्णांशांशतयाऽन्येषामर्चनादेर्गतार्थता ॥ वैष्णवानामन्यभक्तौ दोषाधिक्यं च दर्शितं ॥ ७ ॥ तस्मादस्माभिस्तु नंदनंदनस्यैव केवलं ॥ पादारविंदमानंदादमंदं सेव्यते सदा ॥८॥ पूज्यैः श्रीवल्लभाचार्यवर्यैर्दर्शितया दिशा ॥ किं वृथाऽन्यकथातोनस्तथा यांतु पथा परे ॥ ९ ॥ पदवाक्यप्रमाणज्ञैराचार्यैः श्रुतिसंमतं ॥ सिद्धांतं वर्णितं द्रष्टुं कुदृशा न क्षमोऽयमः ॥ १० ॥

## अथ प्रक्रांतपंचमप्रधानप्रश्नावलंबी पंचमः प्रश्नः॥५॥

पार्थिवपूजनमंतरा गृहस्थानां भोजनमुचितं नवा ॥ ३७ ॥

### ॥ उत्तरं ॥

अयं दत्तोत्तरप्रायः पूर्वप्रश्नोत्तरेणतु ॥ तथापि कथ्यते तथ्यं पथ्यं किंचिद्बुचोनृणां ॥१॥ क्काऽपि पार्थिवपूजायानित्यत्वं नोपपाद्यते॥ काम्यत्वं कीर्त्यते तस्यास्तस्मादस्याः कृतिं विना ॥ २ ॥ सामान्यतोगृहस्थानामपिदोषोन भोजने॥ हरेरनन्यदासानां वैष्णवानां कुतस्तरां ॥ ३ ॥ तथाहि ॥ यदीदं सर्वेषां नित्यमभविष्यत्तर्हि मनुयाज्ञवल्क्यादयः स्वशास्त्रे क्वचिदपि तस्य नित्यत्वमवक्ष्यन् ॥ नत्वेवं ॥ अतोनैवं ॥ नचैवमपि कृतेतुमानवाधर्माइत्यादौ मन्वादिशास्त्राणां युगांतरेषु प्राधान्यकथनात् पार्थिवपूजनस्यच द्वापरेपारदंश्रेष्ठंपार्थिवंतुकलौयुगइतिसिंधूदाहृतवचनेन कलियुगएव श्रेष्ठत्वसिद्धेस्तेषु तस्याऽनिरूपणेऽपि न कलियुगेऽस्य नित्यत्वहानिरिति शंक्यं ॥ प्राधान्येन कलिधर्मस्मर्त्राऽपि पराशरेण (अ० १) षट्कर्माभिरतोनित्यं संध्यास्नानंजपोहोमइत्यादौ आन्हिकनिरूपणे न क्वापि पार्थिवपूजनस्य गंधोऽपि दर्शितः ॥ तद्व्याख्यायां च महता प्रबंधेन सर्वाण्यपि प्रत्यहकर्त्तव्यान्यनेकस्मृतिवचनोपन्यासपुरःसरं व्याकुर्वता सर्वज्ञकल्पेन माधवेनाऽपि न पार्थिवपूजनस्य नामाऽपि गृहीतं ॥ यदि कलियुगेऽपीदं सर्वेषामेव नित्यं स्यात्कथं तर्हि क्वाऽपि नोक्तं स्यात् ॥ किंच ॥ लघु-

विष्णुस्मृतौ द्वितीयाध्याये ॥ (श्लो० १) अथाऽतः संप्रवक्ष्यामि गृहिणां धर्ममुत्तममित्युपक्रम्य स्नानसंध्यादिरूपान् भोजनात् प्रागवश्यमनुष्ठेयान्नित्यधर्मान्निरूप्याह ॥ (श्लो० ६) मध्यान्हे त्वथ संप्राप्ते शिष्टं भुंजीत वाग्यतः ॥ भुक्तोपविष्टोविश्रांतोब्रह्म किंचिद्विचारयेदिति ॥ नत्वत्र मध्ये पार्थिवपूजनगंधोऽप्यस्ति ॥ एतदग्रे ॥ (श्लो० १०) हुत्वाचैवाऽग्निहोत्रं तु कृत्वा चाग्निपरिक्रियां ॥ बलींश्च विधिवद्दत्वा भुंजीत विधिपूर्वकमिति ॥ नाऽत्राऽपि पार्थिवपूजनमुद्दिष्टं ॥ अतोगृहस्थानां तदंतरा भोजने न कोपि दोषः ॥ तस्यनित्यत्वाभावात् ॥ वह्वृचान्हिकचतुर्विंशतिमतव्याख्याकमलाकरभट्टान्हिकप्रभृतिष्वतिप्रामाणिकसर्वसाधारणान्हिकग्रंथेषु काप्यनुल्लिखितत्वेन तथैव निश्चयात्॥तिलकप्रकरणे आचारादर्शाद्यान्हिकग्रंथेषु तिलकविधानं नेति किमिति वदता भगता ऽत्याहते आचारादर्शेऽपि पार्थिवपूजायाअविधानेन त्वयाऽपि तदनित्यत्वस्य स्वीकर्तव्यत्वाच्च॥नचाऽस्य फलश्रवणमात्रेण नित्यत्वं शक्यं कल्पयितुं ॥ प्रत्यवायाश्रवणेन तत्कल्पनायोगात् ॥ याज्ञवल्क्यप्रथमाध्याये राजधर्मप्रकरणे ॥ (श्लो० ५०) योदंड्यान्दंडयेदित्यस्य मिताक्षरायां दंड्यानां दंडनस्य फलश्रवणात् काम्यत्वमाशंक्य तदकरणे वसिष्ठेन प्रायश्चित्तविधानान्नित्यत्वमुक्तं ॥ तेन यस्य करणे फलमात्रश्रवणं तत्सर्वं काम्यमेवेति सिध्यति ॥ अथास्य काम्यत्वं तु दर्शयामः ॥ तत्र धर्माब्धिसारे द्वितीयपरिच्छेदे माघनिर्णये ॥ अथ मृन्मयलिंगे शिवपूजाचीकीर्षायांतद्विधिरित्यादिना पार्थिवपूजाप्रकारोदर्शितः ॥ अत्र आरंभे चिकीर्षायामित्युक्त्या तादृशपूजायाअनित्यत्वं गम्य-

ते ॥ पुनस्तत्रैव तृतीयपरिच्छेदे पूर्वार्द्धे संततिकामस्य कर्मविपाकग्रंथोक्तं हरिवंशश्रवणादिकमुक्त्वा तद्विषये बालकसुवर्णप्रतिकृतिदानादीनि विधानांतराणि वदन्नाह ॥ अथवा प्रत्यहं पार्थिवलिंगपूजां कृत्वा अभिलाषाष्टकजपं संवत्सरं कुर्यात् ॥ अभिलाषाष्टकस्तोत्रं कौस्तुभे ज्ञेयमिति ॥ अतोऽपि स्पष्टमेव पार्थिवपूजनस्य काम्यत्वं ॥ तथाऽऽचारप्रकाशे कौर्मे ॥ लवणेन च सौभाग्यं पार्थिवं सर्वकामिकं॥अनेकफलदं भूरि सैकतं परिकीर्तितमित्यादिना लिंगभेदनिरूपणे पार्थिवस्य कामदत्वमेव निरूपितं॥आचारमयूखेचेदमेव सर्वशिवागमवचनत्वेनोपन्यस्तं ॥ तत्रोपसंहारेऽपि॥ आगमोक्तनियोगं तु ज्ञात्वा सम्यग्विचक्षणः ॥ वस्तुमात्रस्य कुर्वीत लिंगं तत्तत्फलाप्तयइत्यनेन सर्वेषां तेषां कामोपयोगित्वमात्रं दर्शितं ॥ कामनाभेदेन पार्थिवस्य संख्याभेदश्च तत्रैव विद्यार्थीलिंगसाहस्रमित्यादिनोक्तस्तथा तत्र निर्णयसिंधौ च तृतीयपरिच्छेदपूर्वार्द्धे अथपार्थिवपूजेत्युपक्रम्य ॥ नंदिपुराणे ॥ आयुष्मान् बलवान् श्रीमान् पुत्रवान् धनवान् सुखी ॥ वरमिष्टं लभेल्लिंगं पार्थिवं यः समर्चयेत् ॥ तस्मात्तु पार्थिवं लिंगं ज्ञेयं सर्वार्थसाधकम् ॥ इत्यादि ॥ अत्राप्यायुरादिकामनाविशेषपूर्त्यर्थमेव तदर्चनमिति फलति ॥ यत्तु शूलपाणौ लैंगे ॥ वरं प्राणपरित्यागः शिरसोवापि कर्तनं ॥ नत्वेवापूज्य भुंजीत शिवलिंगे महेश्वरं ॥ सूतके मृतके चैव न त्याज्यं शिवपूजनमिति तत्तु शैवपरं ॥ तत्रैव भविष्ये ॥ धत्तूरकैश्च योलिंगं सकृत्पूजयते नरः॥सगोलक्षफलं प्राप्य शिवलोके महीयतइत्यादिभिस्तस्य शिवलोककामुकपरतानिश्चायनात्॥आचारमयूखे शिवधर्मे ॥ सहस्रमर्चयेल्लिंगं निरयं सन ग-

च्छति ॥ रुद्रलोकमवाप्नोति भुक्त्वा भोगाननुत्तमान्॥तथा ॥ वालु-
कानिच लिंगानि पार्थिवानि च कारयेत्॥सहस्रपूजना त्सोऽपि ल-
भते वांछितं फलमिति स्पष्टमेव शैवपरत्वं कामुकपरत्वं च तदर्चनस्य
दर्शितं॥कामनाश्च मारणमोहनादिरूपा॥महाराजभयादिनिमित्ते-
षु संख्याभेदश्च तत्रैवोक्तः ॥ परेतु शूलपाणिधृतवचनं शैवस्य क-
चिदपिलिंगे शिवपूजाऽऽवश्यकतावोधकं॥वचने न्नदादिशब्दाभा-
वात् शैवैर्वाणलिंगादौपूजितेऽपि पृथक्पार्थिवमवश्यं पूज्यमित्येवं
प्रमापकशास्त्रसदाचारयोरदर्शनाच्चेत्याहुः ॥ तथा तिथितत्त्वे लैंगे॥
विना भस्मत्रिपुंड्रेण विनारुद्राक्षमालया ॥ पूजितोऽपि महादेवोन
स्यात्तस्य फलप्रदइति भस्मरुद्राक्षराहित्येन कृतपूजनस्य नैष्फल्य-
कथनात्॥वैष्णवे तद्धारणनिषेधस्य तिलकादिप्रश्नोत्तरे प्रपंचयिष्य-
माणत्वात्॥आचारमयूखे नंदिपुराणे॥गोभूहिरण्यवस्त्रादिवलिपुष्प-
निवेदनै॥र्ह्योंनमःशिवायेति मंत्रः सर्वार्थसाधकः ॥ सर्वमंत्राधि-
कश्चायमोंकाराद्यः षडक्षरः॥तन्मंत्रजापी तत्कर्मरतस्तद्गतमानसः॥
निष्कामःपुरुषोराजन् सरुद्रपदमश्नुते॥एवमादिषु कदाचिन्निष्का-
मतया तदर्चनस्याऽपि शिवमंत्रघटितस्तोकाभिलापुकशैवविषय-
कत्वनिश्चयात्॥योवै स्वां देवतामति यजतइति तैत्तिरीयादिषु स्व-
देवताव्यतिरिक्तदेवतायजने दोषातिशयश्रावणाच्च वैष्णवादीना-
मेतदकर्त्तव्यमेव ॥ विस्तरस्तु प्रत्युतशिवपूजादेः प्रतिषेधः क्रियते
तत्कथमित्यस्योत्तरेद्रष्टव्यः ॥ अतोयेषां कुले पार्थिवपूजनात् प्रा-
क् न भोक्तव्यमिति नियमोभवेत्तेषामेव तद्दते भोजनमनुचितं
येषां तु नैवं तेषामुचितमेव ॥ तस्य काम्यत्वेन संध्यावंदनादिवत्त-
दकरणे प्रत्यवायाभावात् ॥ येनाऽस्य पितरोयातायेन याताः पि-

तामहाः ॥ तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यतीति मनुना स्वकुलाचारस्याऽपि नियामकत्वस्मरणाच्च ॥ यत्त्विदानीं केचन राजानः कुलाचाराद्यभावेऽपि दुराग्रहं कुर्वंति तद्दुर्जनशिक्षा-वशात्॥ याज्ञवल्क्येन प्रथमाध्याये राजधर्मप्रकरणे ( श्लो० ३५) यस्मिन् देशे यआचारोव्यवहारः कुलस्थितिः ॥ तथैव परिपा-ल्योऽसौ यदा वशमुपागतइति बलात्कारेण कुलाचारसांकर्यक-रणस्य निषेधात् ॥ एवं मानवादिशास्त्रेष्वपि द्रष्टव्यं ॥ अतोयेषां कुले नैवमाचारस्तेषु नृपतिनाऽपि नबलात्कारः कार्यः ॥ काम्य-त्वेनाऽनवश्यकर्त्तव्यताकतया शास्त्रविरोधाभावात्काम्यत्वं तु म-न्वादिभिर्नित्यविधेयेष्वस्य क्वाऽपि विधानाभावादित्युक्तं प्राक् ॥ इत्थं सामान्यतोगृहस्थानामपि तदनावश्यकत्वे कुतस्तरां श्रीपते-रनन्यभक्तानां वैष्णवानां तत्प्रसंगः ॥ एकभक्तिर्विशिष्यते अन-न्याश्रितयंतोमांयेजनाःपर्युपासते ॥ भजंत्यनन्यमनसोज्ञात्वाभू-तादिमव्ययमित्यादिवचनविरोधात् ॥ अतः कामनावशादन्यदेवो-पासने ऽपि वैष्णवानां तु स्वधर्मपरित्यागान्महानेवाऽनर्थः स्यात् यथा चतुर्णामपि वर्णानां स्वधर्मपरित्यागिनां पृथक्पृथगनिष्ट-फलान्याह द्वादशाध्याये मनुः ॥ स्वेभ्यः स्वेभ्यस्तु कर्मभ्यश्च्युता-वर्णाह्यनापदि ॥ पापान् संसृत्य संसारान् प्रेष्यतां यांति शत्रुषु ॥ ॥ ७० ॥ वांताऽश्युल्कामुखः प्रेतोविप्रोधर्मात्स्वकाच्च्युतः ॥ अमे-ध्यकुणपाशी च क्षत्रियः कटपूतनः॥मैत्राक्षज्योतिकः प्रेतोवैश्यो-भवति पूयभुक् ॥ चैलाशकश्च भवति शूद्रोधर्मात्स्वकाच्च्युतइति॥ ॥ ७२ ॥ तस्माद्वेदादिप्रतिपादितप्रातिस्विकसांप्रदायिककर्मैव स-र्वैर्मुमुक्षुभिर्विधेयं ॥ तदप्याह तुर्याध्याये मनुरेव ॥ ( श्लो० १४)

वेदोदितं स्वकं कर्म नित्यं कुर्यादतंद्रितः ॥ तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमांगतिमिति ॥ अत्रमुक्तावल्यां परमां गतिं मोक्ष-लक्षणां प्राप्नोति ॥ नित्यकर्मानुष्ठानात् पापक्षये सति निष्पा-पांतःकरणेन ब्रह्मसाक्षात्कारान्मोक्षावाप्तेः ॥ तदुक्तं मोक्षधर्मे ॥ ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ॥ तत्रादर्शतलप्रख्ये प-श्यत्यात्मानमात्मनीति व्याख्यातं ॥ नत्वेवं काम्यकर्मणां काऽपि साक्षान्मोक्षपर्यवसायित्वमस्तीत्यलं ॥ तथाच ॥ शैवस्यावश्यकं काम्यमन्येषां पार्थिवार्चनं ॥ कृतेऽपि तदतोदोषोगृहस्थानां न भोजने ॥ १ ॥ कुतस्तरां वैष्णवानां तद्भ्राम्यत न भोजनाः॥श्रीहरिं भजताऽनन्याः सेवंते यं नभोजनाः ॥ २ ॥

## अथ पंचमप्रधानप्रश्नावलंबी षष्ठः प्रश्नः ॥६॥

वलिवैश्वदेवादिकं कर्तव्यं नवा ॥ ३८ ॥

## ॥उत्तरं॥

अनावश्यकता पूर्वं स्थलभेदेन भण्यते ॥ आवश्यकं यथाशास्त्रं वैश्वदेवादिकं मतं ॥ १ ॥ प्रत्यवायादकरणे करणे सत्फलाप्ति-तः ॥ मोक्षोपयोगात्कार्यं तद्विष्णून्छिष्टेन वैष्णवैः ॥ २ ॥ अत्र य-द्यपिनित्यत्वाद्भगवद्ध्यानानुगुणत्वाच्च जपयज्ञमेव सर्वस्मृतिषु स-र्वोत्कृष्टतया निर्दिष्टं मुख्यतया ऽऽश्रयतां नेदमावश्यकं ॥ मनु-ना कृताकृतत्वकथनात्॥तथाहि ॥ द्वितीयाध्याये ( श्लो०८६ ) ये पाकयज्ञाश्चत्वारोविधियज्ञसमन्विताः ॥ सर्वे ते जपयज्ञस्य

कलां नार्हंति षोडशीं॥ जप्येनैव तु संसिध्येद्ब्राह्मणोनात्र संशयः॥ कुर्यादन्यन्नवा कुर्यान्मैत्रोब्राह्मणउच्यते ॥८७॥ अत्रैव कुल्लूकभट्टो ब्रह्मयज्ञादन्ये ये पंचमहायज्ञांतर्गतावैश्वदेवहोमवलिकर्मनित्यश्राद्धातिथिभोजनात्मकाश्चत्वारः पाकयज्ञाइत्यादिना तदेव स्फुटीचकार ॥ पुनश्चतुर्थाध्याये मनुः ॥ (श्लो० २१) ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा ॥ नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेदिति पंचयज्ञानां नित्यकर्त्तव्यतामुक्त्वाऽऽह ॥ (श्लो० २२।) एतानेके महायज्ञान् यज्ञशास्त्रविदोजनाः ॥ अनीहमानाः सततमिंद्रियेष्वेव जुव्हति ॥ २२॥ वाच्येके जुव्हति प्राणं प्राणे वाचं च सर्वदा ॥ वाचि प्राणे च पश्यंतोयज्ञनिर्वृत्तिमक्षयां ॥ ज्ञानेनैवापरे विप्रा यजंत्येतैर्मखैः सदा ॥ ज्ञानमूलां क्रियामेषां पश्यंतोज्ञानचक्षुषेति ॥२४॥ नचेदं गृहस्थभिन्नपरं ॥ तद्धर्ममध्यपातात् ॥ तथैव व्याख्यानेऽपि कुल्लूकभट्टेन गृहस्थपदाभ्यसनाच्च ॥ एवमेव कौषीतकीरहस्यब्राह्मणे श्रूयते ॥ यावद्वै पुरुषोभाषते न तावत्प्राणितुं शक्नोति प्राणं तदा वाचि जुहोति यावद्धि पुरुषः प्राणिति न तावद्भाषितुं शक्नोति वाचं तदा प्राणे जुहोतीति ॥ बृहत्पराशरोऽपि द्वितियाध्याये जपप्रकरणे ॥ (श्लो० ६०) विधियज्ञाः पाकयज्ञा ये चाऽन्ये वहवोमखाः ॥ सर्वे ते जपयज्ञस्य कलां नार्हंति षोडशीं ॥ ६० ॥ जप्येनैकेन सिद्धेन किंनसिद्धं भवेदिह ॥ कुर्यादन्यन्नवा कुर्यान्मैत्रोब्राह्मणउच्यतइति क्वचिद्भगवद्भक्तिसिद्धस्याऽपि तत्करणे प्रयोजनाभावः स्मर्यते ॥ यथा ॥ एकादशस्कंधे नवयोगीश्वरप्रसंगे ॥ देवर्षिभूताप्तनृणां पितॄणां न किंकरोनाऽयमृणी च राजन् ॥ सर्वा-

त्मना यः शरणं शरण्यं गतोमुकुंदं परिहृत्य कर्तमिति ॥ लघुपराशरेणतु ( अ० २ ) कलौ गृहस्थधर्मानुपक्रम्य ॥ स्वयं कृष्टे तथा क्षेत्रे धान्यैश्च स्वयमर्जितैः ॥ निर्वपेत्पंचयज्ञांश्च क्रतुदीक्षां च कारयेदिति स्वकृष्टक्षेत्रजान्नैरेव यज्ञाः कर्त्तव्याइत्यप्युक्तं ॥ नच वैश्वदेवस्यान्नसंस्कारत्वात्तं विना दुष्टमन्नमभोज्यमेवेति वाच्यं॥ वैश्वदेवानंतरमतिथ्यंतरप्राप्तौ पुनः पाककरणे बलिवैश्वदेवादिनिषेधेन तस्यान्नसंस्कारत्वाभावनिश्चायनात् ॥ यथा ॥तृतीयाऽध्याये मनुरेव ॥ ( श्लो० १०८ ) वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ॥ तस्याप्यन्नं यथाशक्ति प्रदद्यान्नबलिं हरेदिति ॥ अत्रैव कुल्लूकभट्टः ॥ बलिनिषेधादन्नसंस्कारत्वाभावोवैश्वदेवस्याऽवगम्यते ॥ अन्नसंस्कारपक्षे कथमसंस्कृतान्नभोजनमनुजानीयादित्याह ॥ नाप्यस्य संध्यावंदनवत्प्रतिव्यक्तिनियतत्वमस्ति ॥ अविभक्तभ्रातृष्वन्यतमकृतवैश्वदेवादिना सर्वेषां चारितार्थ्यात् ॥ यथाह पंचमाध्याये यमः ॥ पृथक् पिंडं पृथक् श्राद्धं वैश्वदेवादिकं च यत् ॥ भ्रातरश्च पृथक्कुर्युर्नाविभक्ताः कदाचनेति ॥ अलं बहुना ॥ तस्माज्जपयज्ञात्याग्रहवतां ज्ञाननिष्ठानां वैश्वदेवादिकं नावश्यकमिति शक्यं वक्तुं मन्वादिवचनेभ्यः ॥ नच तेषां वचनानां जपविधिशेषार्थवादत्वेन स्वार्थेऽप्रामाण्यं कल्प्यं॥ अर्थवादानामपि बहुधा स्वार्थे प्रामाण्यस्य पूर्वमीमांसाप्रथमाध्यायद्वितीयपादभाष्ये तत्त्वदीपादिषु श्रीमदाचार्यैरुभयभाष्यप्रकाशावरणभंगादिषुगोस्वामिपुरुषोत्तमचरणादिभिश्च सविस्तरं निर्णीतत्वात् ॥ अतएव माधवेनाप्याचारकांडद्वितीयाध्याये मातुलसुतापरिणयविचारे ॥ तस्मादुसमानादेवपुरुषादत्ताचायश्चजाये-

ते उतत्तृतीये संगच्छावहै चतुर्थे संगच्छावहाइत्यर्थवादरूपाया अपि वाजसनेयश्रुतेः स्वार्थे प्रामाण्यं प्रेताग्निहोत्रन्यायानुसंधानादंगीकृतं ॥ उक्तंच तेनैव ॥ यद्यप्ययमर्थवादस्तथापिमानांतरविरोधाभावात् स्वार्थे प्रमाणं॥विरोधवचनानामभावात् सपिंडाविषयत्वस्य वर्णितत्वात्तस्मादविरुद्धार्थवादेनानूदितत्वात् उपरिधारणवद्विधिः कल्पयितुं शक्यते इति ॥ उपरि धारणंतु प्रेताऽग्निहोत्रे श्रूयते ॥ अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो यज्ञं धारयतीति॥ तत्र पैतृकस्य हविषोऽधस्तात्समंत्रकं समिद्धारणं विधाय तद्वाक्यशेषेण समिधोहविरुपरिधारणं दैवे कर्मणि यत्कृतं तत्किमर्थवादः उत विधीयतइति संशयः ॥ तत्राधोधारणविधिस्तावकत्वेन तदेकवाक्यतालाभादर्थवादइति पूर्वपक्षः ॥ प्रसिद्धं स्वर्थमनूद्य तेन स्तुतिर्युक्ता ॥उपरिधारणं तु न क्वापि प्रसिद्धं ॥ अतः स्तावकत्वायोगाद्वाक्यभेदमभ्युपगम्याप्यपूर्वार्थत्वाद्विधिः कल्प्यते ॥ एवं तृतीये पुरुषे संगच्छावहाइत्यादावपि अपूर्वार्थत्वेन मातुलसुतां विवहेदिति विधिः कल्प्यते माधवेन ॥ तथाऽत्राऽपि जपयज्ञेऽत्यंतनिरतस्य वैश्वदेवाद्यकरणविधिरपीतिशिवं ॥ एतानेके महायज्ञानित्यादिवचनानां तु स्वतंत्रतयाऽन्यशेषत्वाभावान्नार्थवादत्वसंभावनाऽपीति सर्वं सुस्थं ॥ किंच ॥ आधुनिकानामल्पविद्यत्वादपि न होमाधिकारः ॥ एकादशाऽध्याये ( श्लो० ३६ ) नवै कन्या न युवतिर्नाल्पविद्योन बालिशः ॥ होता स्यादग्निहोत्रस्य नार्तोनासंस्कृतस्तथा ॥ नरके हि पतंत्येते जुव्हतः सच यस्य तत् ॥ तस्माद्वितानकुशलोहोता स्याद्वेदपारगइति मनूक्तनिषेधस्येहापि शक्यप्रसरत्वात् ॥ अतोवैश्वदेवाद्यकरणेऽपि न क्षतिरि-

ति शक्यमुपपादयितुं ॥ तथाप्येषां नित्यत्वात् आचार्यचरणैश्च महता प्रपंचेन नित्यनैमित्तिकयोरवश्यकर्त्तव्यताकत्वस्य पूर्वमीमांसाभाष्यादिष्वंगीकृतत्वात् ॥ सर्वथैवेदं द्विजैः स्वस्वशाखोक्तप्रकारेण सर्वदा कर्त्तव्यमित्येवाऽस्माकं संमतं ॥ अतएव विज्ञानेश्वरोऽपि (अ० १) गृह्यप्रकरणे ॥ (श्लो० ६) बलिकर्मस्वधाहोमेत्यादिश्लोकत्रये वैश्वदेवादीनां नित्यत्वं विस्तरेण निर्णीतवान् ॥ तथा तृतीयाध्याये प्रकीर्णप्रायश्चित्तप्रकरणे (श्लो० ३) विप्रदंडइत्यस्यमिताक्षरायां पंचमहायज्ञाकरणे तु बृहस्पतिराह ॥ अनिर्वर्त्य महायज्ञान् योभुंक्ते प्रत्यहं गृही॥अनातुरः सति धने कृच्छ्रार्द्धेन विशुध्यतीति॥द्वितीयाध्याये बृहत्पराशरः॥(श्लो० १८) स्नात्वा जप्त्वा च हुत्वा च शक्त्या दत्वा च योऽश्नुते॥सोऽमृतं नित्यमश्नाति तस्य स्नानमनामयं॥अस्नात्वा ऽश्नन् मलं भुंक्ते अजप्त्वा पूयशोणितं॥अजुह्वन्न कृमीन् कीटानदत्त्व शकृत्तथेति॥लघुपराशरोऽप्याह॥ (अ० १श्लो० ३८) हुतशेषं तु भुंजानोब्राह्मणोनाऽवसीदतीति ॥ इहैव माधवीये हुतशब्दोमहाभारते व्याख्यातः ॥ वैश्वदेवादयोहोमाहुतमित्युच्यते बुधैरिति ॥ तत्रैव (श्लो० ५८) वैश्वदेवे तु संप्राप्ते इत्यस्य व्याख्याने पंचमहायज्ञान् प्रशंसति हारीतः ॥ देवानृषीन् पितॄंश्चैव भूतानि ब्राह्मणांस्तथा ॥ तर्पयेद्विधिना विप्रोब्रह्मभूयाय कल्पतइति ॥ पुराणेऽपि ॥ यत्फलं सोमपानेन प्राप्नोति धनवान् द्विजः ॥ सम्यक् पंचमहायज्ञैर्दरिद्रस्तदवाप्नुयादिति ॥ अकरणे प्रत्यवायमाह व्यासः ॥ पंचयज्ञांस्तु योमोहान्नकरोति गृहाश्रमी ॥ तस्य नायं च न परोलोकोभवति धर्मतइति ॥ शंखलिखितयोः स्मृतौ ॥ वैश्वदेवेन ये हीनाआति-

थ्येन विवर्जिताः ॥ सर्वे ते वृषलाज्ञेयाः प्राप्तवेदाअपि द्विजाः ॥ ॥ २ ॥ अकृते वैश्वदेवे तु ये भुंजंते द्विजातयः ॥ वृथा ते तेन पाकेन काकयोनिं व्रजंति वै ॥ ३ ॥ अन्नं व्याहृतिभिर्हुत्वा तथा मंत्रैस्तु शाकलैः ॥ तद्विभज्य च भूतेभ्यस्ततोऽश्नीयादनग्निमान्॥४॥ शातातपस्मृतौ॥वैश्वदेवेन ये भीताआतिथ्याच्च बहिष्कृताः॥सर्वे ते वृषलाज्ञेयाः प्राप्तवेदाअपि द्विजाः॥अकृत्वा वैश्वदेवं तु ये भुंजंति त्वधार्मिकाः॥वृथा तेनान्नपाकेन काकयोनिं व्रजंतितइति॥संवर्तस्मृतौ॥ (अ० १श्लो० २४) पंचयज्ञविधानं च कुर्यादहरहर्द्विजः ॥ न हापयेत्तु विप्रेण श्रेयस्कामः कदाचन॥हानिं तेषां प्रकुर्याच्च सदा मरणजन्मनोरिति ॥ अत्रैवाऽग्रे ॥ (श्लो० ४१।४२ ) पुत्रे जाते पितुः स्नानं सचैलं तु विधीयते ॥ माता शुध्येद्दशाहेन स्नातस्य स्पर्शनं पितुः ॥ होमस्तत्र तु कर्तव्यः शुष्कान्नेन फलेन च॥पंचयज्ञविधानं तु न कार्यं मृत्युजन्मनोरिति ॥ अत्रिस्मृतौ ॥ महायज्ञविधानं तु न कुर्यान्मृतिजन्मनोः॥होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा ॥१०॥ मिताक्षरातृतीयाध्याये ( श्लो० १७ ) जलमेकाहमाकाशइत्यस्य व्याख्यायां ॥ विप्रोदशाहमासीत वैश्वदेवविवर्जितइति ॥ आचारमाधवे तृतीयाध्याये गोभिलः ॥ अग्निहोत्रादिहोमार्थं शुद्धिस्तात्कालिकी स्मृता ॥ पंचयज्ञान्नकुर्वीत ह्यशुद्धः पुनरेव सइति ॥ तत्रैव जातूकर्ण्यः ॥ पंचयज्ञविधानं च न कुर्यान्मृत्युजन्मनोरिति ॥ अतआशौचद्वयेऽपि वैश्वदेवादयः पाकयज्ञाब्रह्मयज्ञश्च न कार्याएव ॥ श्राद्धे भोक्तुरपि बलिनिषेधोमाधवेन दर्शितः ॥ ( अध्याय ३ ) श्राद्धप्रकरणे॥

---

हीना

श्राद्धभोक्ता न बलिं दद्यात् ॥ अतएवाऽत्रिः ॥ दत्ते वा ऽप्य- थवा ऽदत्ते भूमौ योनिक्षिपेद्बलिं॥तदन्नं निष्फलं याति निराशैः पि तृभिर्गतमिति ॥ सर्वदा वैश्वदेवत्यागे तु फलमुच्यते अत्रिस्मृतौ ॥ (श्लो० ४२ ॥ ) योगृहीत्वा विवाहाग्निं गृहस्थइतिमन्यते ॥ अन्नं तस्य न भोक्तव्यं वृथापाकोहि सस्मृतः ॥ वृथापाकस्य भुं- जानः प्रायश्चित्तं चरेद्द्विजः॥प्राणेनाप्सु त्रिरात्रस्य घृतं प्राश्य वि- शुध्यति॥वैदिके लौकिके चापि हुतोच्छिष्टे जले क्षितौ ॥ वैश्वदेवं प्रकुर्वीत पंचसूनाऽपनुत्तयइति॥सर्वदा वैश्वदेवादिकरणे मोक्षप्राप्ति लक्षणं फलंत्वाह माधवीयाचारकांडे प्रथमाध्याये (श्लो० ३७) व्याख्याने हारीतः ॥ पाकयज्ञान्यजेन्नित्यं हविर्यज्ञांस्तुनित्यशः ॥ सौम्यांस्तु विधिपूर्वेण यइच्छेद्ब्रह्मचाव्ययमिति ॥ वैश्वदेवलोपे प्रायश्चित्तमपि वक्तितत्रैवकात्यायनः॥ पितृयज्ञात्यये चैव वैश्वदे- वात्ययेऽपिच ॥ अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा ॥ भोजने पतितान्नस्य चरुर्वैश्वानरोभवेदिति ॥ अतः शास्त्रसिद्धनित्यकर्म- त्वात् बलिवैश्वदेवादिकं यथाऽधिकारं तदधिकारिभिः सर्वैः कर्त्त- व्यमेवेत्येवाऽस्माकं संमतं ॥ नहि वयं शास्त्रविरुद्धानुरुद्धविषय- योः प्रसह्य संमत्यसंमती वक्तुं शक्नुमः ॥ इदं तु ब्रूमः॥ इदं वैश्वदे- वादिकं वैष्णवैर्भगवत्प्रसादेनैव कर्त्तव्यमिति ॥ विष्णोर्निवेदितान्ने न यष्टव्यं देवतांतरं ॥ पितृभ्यश्चाऽपितद्देयं तदानंत्याय कल्पतइ- त्यादिनृसिंहपरिचार्यायुदाहृतवचनेभ्यः ॥ जलदेवं नमस्कृत्य ततोगृहगतः पुमान् ॥ विधिना पुरुषसूक्तस्य तत्र विष्णुं समर्चये- त् ॥ वैश्वदेवं ततः कुर्याद्बलिकर्म यथाविधीत्याचारादर्शादि-

त्रांते

धृतनृसिंहपुराणादिवचनैः पौर्वापर्येण तथैवाध्यवसायाच्च ॥ किंच ॥ श्राद्धानंतरमपि वैश्वदेवकरणमुच्यते किं तत्र वाच्यं भगवन्निवेदनानंतरं तत्करणे ॥ श्राद्धानंतरं वैश्वदेवादिकरणं त्वाह तृतीयाध्याये मनुः ॥ ( श्लो० २६५ ) उच्छेपणं तु तत्तिष्ठेद्यावद्विप्राविसर्जिताः ॥ ततोगृहबलिं कुर्यादिति धर्मोव्यवस्थितइति॥ अत्रैव मुक्तावल्यां ॥ ततः संपन्ने श्राद्धकर्मणि वैश्वदेवबलिहोमकर्मनित्यश्राद्धातिथिभोजनानि कर्त्तव्यानि॥बलिशब्दस्य प्रदर्शनार्थत्वात् ॥ अतएव मत्स्यपुराणे ॥ निवृत्त्य प्रतिपत्त्यर्थं पर्युक्ष्याग्निं च मंत्रवित् ॥ वैश्वदेवं प्रकुर्वीत नैत्यकं विधिमेवचेति ॥ अलं प्रसक्तानुप्रसक्त्या ॥ अतः ॥ यथाधिकारं कर्त्तव्यं वैश्वदेवादिकं नरैः ॥ नित्यनैमित्तिके यस्मादावश्यकतया मते ॥१॥ वैश्वदेवाद्यकरणे ज्ञाननिष्ठादिभिर्द्विजैः ॥ उक्तमन्वादिवचनानुरोधात्क्वाऽपि नक्षतिः ॥२॥ कार्याकार्यविचारं तु वेत्त्येकस्तत्त्वतः प्रभुः॥यथाचारं यथाबुद्धि यथाशक्ति यथाकुलं ॥३ ॥ निराकुलं तु कर्त्तव्यं सर्वैः सत्कर्मनिर्मलं ॥ अतोभगवताऽप्युक्ता कर्मणोगहना गतिः ॥ ४ ॥

## अथ पंचमप्रधानप्रश्नावलंबी सप्तमः प्रश्नः॥ ७॥

भगवन्निवेदितवस्तूनां ग्रहणे विधिनिषेधयोः का गतिः ॥ ३९ ॥

### ॥ उत्तरं ॥

निवेदितानां हरये वस्तूनां ग्रहसेधनं॥सुदुर्लभं कदाचिच्चेत्तदभक्तपरं भवेत् ॥१॥ निर्माल्यादिनिषेधस्तु देवांतरपरोमतः ॥ निषेधभ्रमकृद्वाक्यस्यार्थस्तूक्तः पुरातनैः ॥ २ ॥ अतोनिवेदितं नित्यं ग्राह्यं भ-

गवतोऽखिलं ॥ श्रुतिस्मृतिपुराणेषु तद्भोजनविधानतः ॥ ३ ॥ पुण्यातिशयतश्चित्ताद्यतिशुद्धेरघक्षयात् ॥ प्रसादः श्रीहरेर्भोज्योऽनेकसत्फलसाधकः ॥ ४ ॥ अनिवेद्य न भुंजीत यत्किंचिदपि कर्हिचित्॥हरयेऽनेकधा तत्राऽत्यंतदोषप्रसक्तितः ॥ ५ ॥ सर्वसाधारणग्रंथैर्विस्तरेण प्रमाणतः ॥ गुरुणा निरणायीदमिह किंचित् प्रपंच्यते ॥ ६॥ तत्र निषेधवाक्यानां संभवे तेषां विषयव्यवस्थापनार्थं प्रथमं विधिवाक्यान्युच्यंते ॥ तत्रादौ श्रुतिः॥ महोपनिषदि ॥ एक एव नारायणआसीत् नब्रह्मानद्यावापृथिवी सर्वेदेवाः सर्वेपितरः सर्वेमनुष्याः विष्णुनाऽशितमश्नंति विष्णुनाऽऽघ्रातं जिघ्रंति विष्णुनापीतं पिबंति विष्णुना रसितं रसयंति तस्माद्विद्वांसोविष्णूपहृतं भक्षयेयुरिति ॥ सारसंग्रहे पद्मपुराणे ॥ विष्णोर्नैवेद्यकं शुद्धं मुनिभिर्मोक्षकांक्षिभिः ॥ अन्यदेवस्य नैवेद्यं भुक्त्वा चांद्रायणं चरेत् ॥ मुनिभिर्भुज्यतइतिशेषः॥ विष्णुदेहपरामृष्टं माल्यं पापहरं शुभम् ॥ योनरः शिरसा धत्ते सयाति हरिमंजसा ॥ नैवेद्यमन्नं तुलसीविमिश्रं विशेषतः पादजलेन सिक्तं ॥ योऽश्नाति नित्यं पुरतोमुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यं ॥ विष्णोर्निवेदितं चान्नं योऽश्नाति भुवि मानवः ॥ सयाति परमं स्थानं पुनरावृत्तिवर्जितम्॥नारदीये॥ नारायणस्य नैवेद्यं विप्रहत्याविनाशनं ॥ तदेवाष्टगुणं पापं भूमौ कणनिपातनादिति ॥ तत्रैव दाल्भ्यः ॥ अन्नपानादिकं विष्णोः प्रसाद नित्यसेवनं ॥ सर्वाऽघनाशनं सर्वपुण्यदं मुक्तिदं श्रुतं ॥ विष्णोर्निवेद्यमश्नीयाद्वैष्णवस्तु विशेषतः ॥ शतजन्मकृतं पापं तत्क्ष-

महताविस्तरेण

णादेव नश्यतीति ॥ हारीते ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ॥ पावनं भगवद्भुक्तं भुंजते चाऽयभोजनमिति ॥ भारद्वाजः ॥ योन दद्याद्धरेर्भुक्तं पितॄणां श्राद्धकर्मणि ॥ अश्नंति पितरस्तस्य विण्मूत्रं तु सह द्विजैः ॥ विष्णोर्निवेदितं नित्यं देवेभ्योजुहुयाद्धविः ॥ पितृभ्यश्च विशेषेण सर्वमानंत्यमश्नुते ॥ विष्णवे कल्पितं चान्नं दद्याद्भक्तेभ्यएवच ॥ वैश्वदेवं ततः कुर्यात् श्राद्धकर्मादिकं ततः ॥ तथा ॥ हरिभुक्तशेषं तद्दद्यात्पितॄणां च दिवौकसां ॥ तदेव जुहुयादग्नौ भुंजीयाच्च स्वयं नरः ॥ यदालभेत सिद्धान्नं भुंजीत प्रोक्ष्यमेव तत्॥ विष्णुभुक्तमिति ध्यात्वा सात्विकस्तु विशेषतः ॥ नैवेद्यभक्षणविचाराख्यग्रंथे मात्स्ये ॥ विष्णोर्नैवेद्यशेषेण वैश्वदेवं ततश्चरेत् ॥ अग्नौ ध्यात्वा च मद्बीजं जामदग्न्यं महाद्युतिं ॥ तदग्नौ वैश्वदेवं च मम प्रीत्यै चरेद्बुधः ॥ ये देवास्तत्र तिष्ठंति वैश्वदेवे तु कर्मणि ॥ सर्वेष्वपि च मां ध्यायेत्सर्वकार्यार्थसिद्धये ॥ तथा व्याहृतिहोमेषु चतूरूपं स्मरेत्ततः॥ अनिरुद्धश्च प्रद्युम्नः संकर्षणस्तथैवच ॥ वासुदेवस्तथा पुत्र चतूरूपं प्रकीर्त्तितं ॥ ब्रह्मोवाच ॥ छिधि सर्वज्ञ देवेश संशयं मे महत्तरं ॥ विष्णोर्नैवेद्यशेषेण वैश्वदेवं कथं चरेत् ॥ इत्युक्तं तु त्वया पूर्वं तत्र मे संशयोमहान् ॥ त्वदर्पितान्नं देवेश देवानामुचितं नृणां ॥ भक्तानां मोक्षदं यस्मात्तस्माद्ग्रासं तु मन्मुखैः ॥ त्वदर्पितं तु नैवेद्यं कथं त्वं पुरुषोत्तम ॥ गृह्णासि भो स्वधिष्ठाने त्वदुच्छिष्टं यतः पुरा ॥ श्रीहंसउवाच ॥ साधु साधु महाभाग शृणुष्व कमलोद्भव ॥ त्वया पृष्टं प्रवक्ष्यामि शृणुष्वावहितोभव ॥ यथाऽग्नौ संस्कृताज्यं वा प्रागग्नावेव हूयते ॥ मदर्पितं प्रगृह्णामि यज्ञहोमद्विजातिषु ॥ सर्वस्वं मां

समुद्दिश्य ते स्मृताः कामकौशलाः ॥ अयोग्यं तु यथा होमे घृतं संस्कारवर्जितं ॥ ऋते समर्पणं प्राज्ञ यज्ञादौ विफलं भवेत् ॥ अहं यदि न गृह्णामि तेषां तु ग्रहणं कुतः ॥ भक्तानां मोदनार्थाय गृह्णामि कमलासन॥ तस्मान्निवेदितान्नं हि ददतां नाऽस्ति पातकं॥ पितॄन् देवांस्तथा विप्रानुद्दिश्य पुरुषर्षभ ॥ मम नैवेद्यशेषेण यजंति च मदर्पणं ॥ प्रतिमायामर्पितं तन्नार्पयेत्प्रतिमांतरे ॥ अधिष्ठानेषु देवेश ते यांति ह्यधमं तमः ॥ अग्निविप्राद्यधिष्ठानेष्वर्चयेत्तु मदाज्ञया ॥ पुनः सारसंग्रहे पंचरात्रे ॥ यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम् ॥ तेनैव पिंडांश्च तिलैर्विमिश्रां स्त्कोटिकल्पं पितरः सुतृप्ताः ॥ विष्णोर्निवेदितान्नेन यष्टव्यं देवतांतरम् ॥ पितृभ्यश्चाऽपि तद्देयं तदानंत्याय कल्पते ॥ श्राद्धे होमे तथा भक्षे उपहारे तथैव च॥ न दूष्यं वैष्णवान्नं च पचेद्भक्त्या यथाविधि ॥ यत्तु आश्वलायनः॥दानाध्ययनदेवार्चाजपहोमव्रतादिकं ॥ न कुर्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनात्॥ एतन्नित्यवर्ज्यमिति वोपदेवः ॥ इदं विष्णुभिन्नदेवपरं ॥ विष्णोर्निवेदितान्नेन यष्टव्यं देवतांतरं ॥ पितृभ्यश्चाऽपि तद्देयं तदानंत्याय कल्पते ॥ पितृशेषं तु योदद्याद्धरये परमात्मने ॥ रेतोधाः पितरस्तस्य भवंति क्लेशभागिनइति स्कांदात् ॥पितरः सर्वमनुष्याविष्णुनाऽशितमश्नंतीतिश्रुतेः॥ यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानां ॥ तेनैव पिंडांस्तुलसीविमिश्रानाकल्पकोटिं पितरस्तु तृप्ताइति ब्राह्मोक्तेश्चेति श्रीधरस्वामिनृसिंहपरिचर्यादयः ॥ तथा हेमाद्रिनिर्णयसिध्वादिषु विष्णुधर्मोत्तरे ॥ श्राद्धान्हि तु समभ्यर्च्य नृवराहं जनार्दनमिति ॥ तदेवोक्तं ॥ यत्तु निर्णयसिंधौ श्रा॥

द्धप्रकरणे श्रीधरादिधृतानि इमानि द्वित्राणि वचनान्युदाहृत्यैतत्स-
र्वं निवंधविरोधान्निर्मूलमित्युक्तं॥तस्य एतद्वचनान्यप्रामाणिकान्ये
वेति नतात्पर्यं किंतु माधवनिवंधानुदाहृतत्वमित्येव तात्पर्यं॥निर्णय-
सिंधावनेकत्र निर्मूलत्वलिखनेऽपि क्व क्व किं किं तात्पर्यमित्ये-
तदवगमार्थं धर्मसिंधुद्वितीयपरिच्छेदे कार्तिकमासनिर्णये तुलसी-
काष्ठमालाधारणस्य निर्मूलत्वं प्रत्यक्षवचनोपन्यासेन वारयि-
त्वाऽग्रे आषाढमासप्रकरणे आषाढशुद्धद्वादश्यामनुराधायोगरहि-
तायां पारणं कार्यमित्युक्त्वा तत्र प्रमाणत्वेनाभाकासितपक्षेषु मै-
त्रश्रवणरेवती ॥ मैत्राद्यपादे स्वपितीह विष्णुरित्यादीनि भविष्य-
स्थविष्णुधर्मस्थानि वाक्यानि लिखित्वा यथाते इदं निर्मूलमित्यु-
क्तं ॥ एवं प्रकरणांतरेऽपि तस्य च माधवादिमूलग्रंथेषु नोपलभ्य-
तइत्येव तत्परिभाषातात्पर्यं नत्वप्रामाणिकत्वे इत्यादिना काशी-
नाथोपाध्यायैः परिभाषालिखनात्तदनुरोधेनात्र तथैव निश्चया-
त् ॥ यत्रतु यत्त्वादिपदलेखनपूर्वकं निर्मूलत्वं लिख्यते तत्रैवाप्रा-
माणिकत्वे सिंधोस्तात्पर्य्यमिति ॥ माधवस्यैतद्वचनानुल्लेखे तात्प-
र्यं तु विष्णुनैवेद्यभक्षणस्य सर्वसाधारणत्वेऽपि तेन पिंडादिकरण
स्य वैष्णवातिरिक्तेष्वनावश्यकत्वमित्येवेति उक्तस्थलधर्मसिंधुपुरु-
षार्थचिंतामण्यादिपर्यालोचनेन स्फुटं भाति ॥ आस्तामेतत् ॥
भगवन्नैवेद्यभक्षणं तु सर्वशास्त्रसिद्धं निर्णयसिंधुकृतोप्यभिप्रेतमे-
व ॥ यथा तत्रैव प्रथमपरिच्छेदे स्कांदे ॥ कृत्वा चैवोपवासं तु
योऽश्नाति द्वादशीदिने ॥ नैवेद्य तुलसीमिश्रं हत्याकोटिविनाशन-
मिति ॥ तथा तेनैव कमलाकरभट्टेन कृते आन्हिके विष्णुपूजानि-
रूपणे वसिष्ठः ॥ उच्छिष्टभोजनं दासान् विष्वक्सेनादिकास्त-



था ॥ दत्वा शेषं तु भुंजीयान्नैवेद्यं स्वयमेव हि ॥ योर्चयेत्क्षेत्र
नित्यं सयाति परमांगतिमिति ॥ तद्रक्षणं विहितं गौतमकृताचा-
रसूत्रे प्रथमप्रश्नद्वादशखंडे ॥ शालग्रामशिलातोयं यः पिबेत्तस्य
पुनस्तन्यपानं न विद्यते कोटिजन्माघनाशनं विष्णुपादोदकमव
श्यं पेयं भूमौ बिंदुनिपातनात्तदेवाष्टगुणं पापं भवेद्रूपं हृदि नाम
मुखे हरे र्नैवेद्यमुदरे पादोदकं मस्तके तुलसी यस्य सोऽच्युतोभ-
वतीति ॥ श्रीभागवतेऽपि नवमस्कंधचतुर्थाध्यायेंबरीषोपाख्या-
ने ॥ (श्लो०१८) सवै मनः कृष्णपदारविंदयोर्वचांसि वैकुंठगु-
णानुवर्णने ॥ करौ हरेर्मंदिरमार्जनादिषु श्रुतिं चकाराऽच्युतसत्क-
थोदये ॥ मुकुंदलिंगालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽगसंगं ॥ घ्रा-
णंच तत्पादसरोजसौरभे श्रीमत्तुलस्यारसनां तदर्पिते ॥ पादौ हरेः-
क्षेत्र पदानुसर्पणे शिरोहृषीकेशपदाभिवंदने ॥ कामं च दास्ये नतु
कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिरित्यादि॥अत्र रसनां
तदर्पितइति सदा नैवेद्यस्यैव भक्षणमुक्तं॥अतएवतद्व्याख्यायां तद-
र्पिते तस्मै निवेदितान्नादाविति श्रीधरस्वामी॥आचारप्रकाशे विष्णु-
पूजाप्रकरणे पाद्मे॥शंखोदकं हरेर्भुक्तं निर्माल्यं पादयोर्जलं॥चंदनं
धूपशेषस्तु ब्रह्महत्याऽपहारकः॥धूपं चारार्तिकं विष्णोः कराभ्यां यस्तु
वंदते ॥ कुलकोटि समुद्धृत्य याति विष्णोः परं पदमिति ॥ मदन-
पारिजाते तृतीयस्तवके देवतार्चनप्रकरणे स्कांदे॥विष्णुमूर्ध्नि स्थि-
तं पुष्पं शिरसा योवहेन्नरः ॥ अपर्युषितपापः स्याद्यावद्युगचतु-
ष्टयमिति ॥ अपर्युषितपापः उत्पत्तिसमकालं नश्यत्पातकः ॥ ध-
र्मप्रवृत्तौदेवपूजाप्रकरणे॥पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतं॥
अन्यदेवस्य नैवेद्यं भुक्त्वा चांद्रायणं चरेत् ॥ अयात्वं शिवनिर्मा-

ल्यं पत्रं पुष्पं फलं जलं ॥ शालग्रामस्य संपर्कात्सर्वे यांति पवित्रतामिति ॥ गौतमतंत्रे ऽष्टमाध्याये ॥ ( श्लो० १ ) अथ द्वादशधा शुद्धिर्वैष्णवानामिहोच्यते ॥ गृहोपसर्पणं चैव तथाऽनुगमनं हरेः ॥ भक्त्या प्रदक्षिणं चैव पादयोः शोधनं पुनः ॥ पूजार्थं पत्रपुष्पाणां भक्त्यैवोत्तोलनं हरेः ॥ करयोः सर्वशुद्धीनामियं शुद्धिर्विशिष्यते॥ तन्नामकीर्तनं चैव गुणानामपि कीर्त्तनं ॥ भक्त्या श्रीकृष्णदेवस्य वचसः शुद्धिरिष्यते ॥ तत्कथाश्रवणं चैव तस्योत्सवनिरीक्षणं ॥ श्रोत्रयोर्नेत्रयोश्चैव शुद्धिः सम्यगिहोच्यते॥पादोदकस्य निर्माल्यमालयोरपि धारणं ॥ उच्यते शिरसः शुद्धिः प्रणतस्य हरौ पुनः ॥ आघ्राणं गंधपुष्पादेर्निर्माल्यस्य तपोधन ॥ विशुद्धिः स्यादलं तस्य घ्राणस्यापि विधीयते॥पत्रपुष्पादिकं यच्च कृष्णपादयुगार्पितं ॥ तदेकं पावनं लोके तद्धि सर्वं विशोधयेत् ॥ नारदपंचरात्रेऽपि चतुर्थरात्रैकादशाध्याये ऽनयैवाऽनुपूर्व्या इमे श्लोका उपलभ्यंते ॥ सारसंग्रहे ब्रह्मांडपुराणे ॥ हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ॥ पादोदकं च निर्माल्यं यस्य मूर्ध्नि सवैष्णवः ॥ तत्रैव पुराणांतरे ॥ पादोदकस्य माहात्म्यं जानात्येव हि शंकरः ॥ विष्णु पादोदकं पीत्वा शुद्धिमाप्नोति तत्क्षणात् ॥ स्नानपादोदकं वाऽपि पिबन् शिरसि धारयेत् ॥ पुण्यपापविनिर्मुक्तोवैष्णवीं गतिमाप्नुयात् ॥ विष्णुगात्रेण संस्पृष्टं पत्रं वा पुष्पमेव वा ॥ शिरसा धारयेद्योवै सयाति हरिमंजसा ॥ पादोदकं पिबेन्नित्यं चक्रांकितशिलाहरेः ॥ प्रक्षालयति तत्तोयं ब्रह्महत्यादिकं हरेत् ॥ पीते पादोदके विष्णोर्वैष्णवानांविशेषतः ॥ तत्र नाचमनं कुर्याद्यथा सोमे द्विजोत्तमैः ॥

तीर्थप्रसादस्वीकाराऽनंतरं वैष्णवोद्विजः ॥ न हस्तक्षालनं कुर्यान्न तत्राऽचमनक्रियां ॥ पद्मपुराणे॥संसारमलपंकस्य विष्णुपादोदकं विना ॥ प्रक्षालनं न पश्यामि कल्पकोटिशतैरपि ॥ विष्णुश्रीपादतीर्थं हि कोटिजन्माघनाशनं ॥ तदेवाष्टगुणं पापं भूमौ बिंदुनिपातनात् ॥ परमाणुसमं तीर्थं यावत्संपतते भुवि ॥ तावद्वर्षसहस्राणि पतंति नरके नराइति ॥ स्कांदे मार्गशीर्षमाहात्म्ये (अ.१० श्लो०३८) पादोदकंपिबेद्योवै शालग्रामसमुद्भवं ॥ पंचगव्यसहस्रैस्तु प्राशितैः किंप्रयोजनं ॥ ३८ ॥ शालग्रामशिलातोयं यः पिबेद्बिंदुनासमं ॥ मातुः स्तन्यं पुनर्नैव सपिबेन्मुक्तिमान्नरः॥३९॥ आशौचं नैव विद्येत सूतकेमृतकेऽपि च॥येषां पादोदकं मूर्ध्नि प्राशनं ये प्रकुर्वते॥ ४०॥ अंतकालेऽपि यस्येदं दीयते पादयोर्जलं॥सोऽपि सद्गतिमाप्नोति सदाचारवहिष्कृतः॥४१॥सोऽपि पूतोभवत्याशुसद्यः पादांबुधारणात् ॥चांद्रायणात्पादकृच्छ्रादधिकं पादयोर्जलं ॥४२॥ अपेयं पिबते यस्तु भुंक्ते यश्चाप्यभोजनम्॥अगम्यागमनोयोवै पापाचारश्च योनरः॥४३॥अगुरुं कुंकुमंवापि कर्पूरं चानुलेपनं॥ममपादांबुसंस्पृष्टं तद्वै पावनपावनं॥४४॥दृष्टिपूतं तु यत्तोयं भवेद्वै विप्रसत्तम॥तद्वै पापहरं नृणां किं पुनः पादयोर्जलं ॥ ४५ ॥ नारदपंचरात्रे प्रथमरात्रदशमाध्याये ब्रह्मदेवः॥ (श्लो०८२) विष्णुपादोदकोच्छिष्टं भुंजते येच नित्यशः॥पश्यंति च शिलाचक्रं पूजां कुर्वंति नित्यशः॥ जीवन्मुक्ताश्च ते धन्याहरिदासाश्च भारते॥पदेपदेऽश्वमेधस्य प्राप्नुवंति फलं ध्रुवं॥नहि तेषां पराभूताः पुण्यवंतोजगत्त्रये ॥ तेषां च पादरजसा तीर्थं पूतं तथा धरा ॥ तेषां च दर्शनं स्पर्शं वांछंति मुनयः सुराः॥ पुरुषाणां सहस्रं च पूतं तज्जन्ममात्रतइति॥

तत्रैव पंचदशाध्याये नारदोपाख्याने व्यासः ॥ (श्लो० २) स-जज्ञे शूद्रयोनौ च पितुः शापेन दैवतः ॥ विष्णुप्रसादं भुक्त्वा च बभूव ब्रह्मणः सुतः ॥ अत्रैव चतुर्थरात्रनवमाध्याये॥( श्लो० १०) यावद्भक्ष्यं भवेत्पुंसस्तावद्दद्याज्जनार्दने॥ नैवेद्यं यत्तु भक्ष्यं च तदादिकचतुर्विधमिति ॥ अत्रैव रात्रे एकादशाध्याये ॥ श्लो० १८ ) शालग्रामशिलातोयं न पीत्वा यस्तु मस्तके ॥ प्रक्षेपणं प्रकुर्वीत ब्रह्महा सनिगद्यते ॥ १८ ॥ विष्णोः पादोदकं पीतं कोटिजन्माघनाशनं ॥ तदेवाष्टगुणं पापं भूमौ बिन्दुनिपातनात् ॥ १९ ॥ अकालमृत्युहरणं सर्वव्याधिविनाशनं॥ विष्णोः पादोदकं पुण्यं शिरसा धारयाम्यहं ॥ हत्यां हंति तदंघ्रिजाऽपि तुलसी स्तेयं च तोयं पदे नैवेद्यं बहुअन्नपानजनितं गुर्वंगनासंगजं ॥ श्रीशाधीनमतिः स्थितिर्हरिजनैस्तत्संगजं किल्बिषं शालग्रामशिलार्चनस्य महिमा कोऽप्येषलोकोत्तरइति ॥ तत्रैव प्रथमरात्रद्वितीयाध्याये सनत्कुमारनारदौ प्रति परमेष्ठी ॥ ( श्लो० ६४ ) परं श्रीकृष्णभजनं ध्यानं तन्नामकीर्त्तनं ॥ तत्पादोदकनैवेद्यभक्षणं सर्ववांछितं ॥ अतीव मूढोविप्रश्च प्राक्तनाद्दुरुदोषतः॥तामसोहि न जानाति श्रीकृष्णं त्रिगुणात्परं ॥ अज्ञानादथवा ज्ञानात्सत्संगादेव प्राक्तनात् ॥ भुंक्ते नैवेद्यमीशस्य कृष्णस्य परमात्मनः॥सच मुक्तोभवेत्पुत्रमुच्यते सर्वपातकात् ॥ सयाति दिव्ययानेन गोलोकं लोकमुत्तमं ॥ शृणु वत्स प्रवक्ष्यामि पूर्वाख्यानं पुरातनमित्यादिना यावदध्यायसमाप्ति कस्यचित्कान्यकुब्जद्विजस्येतिहासप्रसंगेन भगवत्प्रसादमाहात्म्यं वर्णितं ॥ तथा तत्रैव सनत्कुमारेण पुनर्नैवेद्यमाहात्म्यं पृष्टः पद्मयोनिस्तृतीयाध्यायादारभ्य सुभद्रस्येतिहासनिरूपणेन सवि-

स्तरं तदाह ॥ तथा नैवेद्यभक्षणविचाराख्यग्रंथे पाद्मे ॥रमा ब्रह्मादयोदेवाः सनकाद्याः शुकादयः॥श्रीनृसिंहप्रसादोऽयं सर्वे गृह्णंतु वैष्णवाः ॥ ब्रह्मांडपुराणे॥यथाकालोपपन्ने तु भोजने हरयेऽर्पिते॥ कृतेऽथ वैश्वदेवे तु ब्राह्मणान् भोजयेत्ततः ॥ योयासे तु तथा दत्ते वासुदेवार्पितं शुभं ॥ गायत्र्या मूलमंत्रेण संप्रोक्ष्य शुभवारिणा ॥ कृतं सत्यमितिमंत्राभ्यां पात्रं तत्परिषेचयेदित्यादि॥ कृतंत्वासत्येनेतिसायं सत्यंत्वर्तेनेतिप्रातरित्यर्थः॥स्कांदे॥कोटिचांद्रायणैश्चैव मासोपोषणकोटिभिः॥तत्फलं प्राप्यते तस्माद्विष्णोर्नैवेद्यभक्षणात्॥पावनं विष्णुनैवेद्यं सुभोज्यमृषिभिः स्मृतं ॥ अन्यदेवस्य नैवेद्यं भुक्त्वा चांद्रायणं चरेत् ॥ श्रीभागवतएकादशस्कंधे षष्ठाध्यायउद्धवः ॥ शय्यासनाटनस्थानस्नानक्रीडोत्सवादिषु ॥ कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेमहि ॥ त्वयोपभुक्तस्रग्गंधवासोऽलंकारचर्चिताः ॥ उच्छिष्टभोजिनोदासास्तव मायां जयेमहीति भगवदुच्छिष्टभोजनस्य मायाजयसाधनत्वं वक्ति ॥ स्कांदे मार्गशीर्षमाहात्म्यदशमाध्याये स्वपूजानिरूपणे ब्रह्माणं प्रतिभगवान् ॥ (श्लो० ३२) पश्चाच्छेषं मयादत्तं शिरस्याधाय सादरं ॥ एवं ब्रूयात्ततोवत्स मम पूजा प्रवर्त्तयेत् ॥ मंत्रहीनं क्रियाहीनमित्यादि ॥ अत्र भगवन्निवेदितवस्तूनां भगवद्दीयमानत्वबुध्या यथायोग्यं स्वीकरणे सत्येव पूजाप्रवर्तनमुक्तं ॥ तत्रैव चतुर्दशाध्याये ॥ (श्लो० ३०) तीर्थयज्ञाधिकफलं कलिदोषविनाशनम्॥ममोच्छिष्टं सुगतिदमपि दुष्कृतकर्मणां॥एवंविधानिविविधान्येव विधिवचनानि तत्रतत्र प्रामाणिकग्रंथेषूपलभ्यंतएवेत्यतिविस्तरभियोपरम्यते ॥

अथ निषेधवचनानि ॥ तत्र यद्यपि भगवन्निवेदितभोजननिषेधकानि वचांसि दुर्लभानि तथापि निषेधभ्रांतिजनकानि यथोपलंभं लिख्यंते ॥ तत्र क्वचित् सनत्कुमारसंहितायां ॥ निवेदितं तु यद्द्रव्यं पुष्पं फलमथापिवा ॥ निर्माल्यमिति तत् प्रोक्तं तत्प्रयत्नेन वर्जयेत् ॥ तथा आचारप्रकाशे स्कांदे ॥ निर्माल्यं च निवेद्यं च विशेषेण विवर्जयेत् ॥ रुद्रेण भुक्तं निर्माल्यं न तथा देवतांतरैः ॥ नैवेद्यं विष्णुना भुक्तममृतं चान्यदैवतैः ॥ निर्माल्यं च निवेद्यं च भुक्त्वा चांद्रायणं चरेत् ॥ तथा श्रीभागवते एकादशस्कंधे (अध्याय११श्लोक४०) अमानित्वमदंभित्वं कृतस्याऽपरिकीर्तनं ॥ अपि दीपावलोकं मे नोपयुंज्यान्निवेदितं ॥ पुनः सनत्कुमारसंहितायां ॥ निर्माल्यं भक्षयित्वैवमुच्छिष्टमगुरोरपि॥मासं पयोव्रतोभूत्वा जपन्नष्टाक्षरं सदा ॥ ब्रह्मकूर्चं ततः पीत्वा पूतोभवति मानवइति ॥ अथैषां व्यवस्थोच्यते ॥ तत्र कथंचिदपि बाधितुमशक्यानां पूर्वोपन्यस्तादीनां श्रौतस्मार्तपौराणानामनेकप्रामाणिकनिबंधोदाहृतानां विष्णुनैवेद्यभक्षणप्रत्यक्षविधिवाक्यानां बलात्सामान्यतोनिर्माल्यादिनिषेधकानां वचनानामुत्सर्गापवादन्यायेन शिवप्रभृतिदेवतांतरनिर्माल्यादिनिषेधपरत्वमभ्युपेयं सामान्यतोनिर्यासाशनादिनिषेधानां हिंगुकर्पूरवर्जमित्यादिवचनांतरैकवाक्यतया तदतिरिक्तनिर्यासादिनिषेधपरत्ववत् ॥ शिवादितत्तद्देवतनामनिर्देशपूर्वकं तत्तन्निर्माल्यादिनिषेधकवचःसहस्रोपलंभेनाऽपि तथैव युक्तं ॥ निर्यासस्य नाश्यमितिनिर्यासाशननिषेधकतैत्तिरीयश्रुतेः अथो खलु यएव लोहितोयोवा व्रश्चनान्निर्येपति तस्य नाश्यं काममन्यस्येत्यपिमवाक्यबलात्॥(मनु०अ०५श्लो०

६ ) लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथेत्यादि वर्ज्यपरिगणकस्मृतिबलाच्च लोहितव्रश्चनोद्भिन्ननिर्यासनिषेधपरत्ववत् ॥ हेमाद्र्यादिषु सामान्यतोवृंताकभक्षणादिनिषेधकानां वृंताकं श्वेतवृंताकमित्यादिवचनांतरोपलंभेन संकोचात्तत्तन्निषेधपरत्ववच्च॥ये तु क्वचिद्देवांतरनैवेद्यनिर्माल्यभक्षणधरणादिविधयोऽपि केचिदुपन्यस्तास्तेतु तद्भक्तविषयाः॥रुद्रांगलग्नमग्नौ च दहेत्सर्वं च तत्क्षणात्॥ शिष्टेभ्योऽप्यथ देवेभ्योयत्तु दीनेषु निक्षिपेत्॥विप्रेभ्यस्त्वथ तद्देयं ब्रह्मणे यन्निवेदितं ॥ वैष्णवं सात्वतेभ्यश्च भस्मांगेभ्यश्च शांभवं॥ सौरमंगेभ्यः शाक्तेभ्यःस्नानीयेयन्निवेदितमितिभवदत्याद्दत्ताचाराद्दर्शाद्बाह्यतब्रह्मपुराणोक्तस्नानघृतादिप्रतिपत्तिन्यायात् ॥ अयं देवतांतरनिवेदितान्नादिग्राह्याग्राह्यत्वविचारोऽनुपदमेवाऽग्निमप्रश्नस्योत्तरे कर्त्तव्य एवेत्यत्रोपरम्यते ॥ नचैवंसति विष्णुनैवेद्यभक्षणविधीनामपि सात्वतपरत्वमस्त्विति शंक्यं॥तत्र स्नानघृतमात्रस्य प्रस्तुतत्वात् ॥ तत्रैव ब्रह्मपुराणएव ब्रह्मांगलग्नं विप्रेभ्योवैष्णवं च प्रदीयतइति श्रीविष्णोः स्नानघृतादेरपि सर्वब्राह्मणेभ्यः प्रदानरूपप्रतिपत्त्यंतरनिरूपणेन रुद्रसंबंधिवस्तुवच्छिष्टाग्राह्यत्वस्योच्छेदाच्च॥ वक्ष्यमाणादिभिरनेकसर्वसाधारणनिबंधधृतैस्तदभक्षणे तदतिरिक्तभक्षणे च प्रत्यवायबोधकैर्वीप्सादिघटितैर्वचननिचयैः सिद्धायाः विष्णुनैवेद्यभक्षणस्य सर्वसाधारण्येन नित्यतायाः केनाऽपि प्रत्याख्यातुमशक्यत्वाच्च ॥ यत्तु स्कांदवचनं पूर्वमुक्तं तत्राचारप्रकाशे ॥त्वयोपभुक्तस्रग्गंधेति श्रीभागवतवचनोपन्यासेन विष्णुनैवेद्यस्य भक्ष्यत्वं प्रतिपाद्य अग्रे तदेव स्कांदवचनद्वयमुपन्यस्य तद्भक्तिहीनविषयमित्युक्तं ॥ युक्तं चैतत् ॥ भक्तिराहित्येऽपि सा-

मान्यान्नवुध्या तद्भक्षणस्य नचोपजीवेद्देवेशंननिर्माल्यानिभक्ष-येदितींद्राद्यादिवचनैः प्रतिषिद्धत्वात् ॥ भक्तिमद्भिस्तु एकादश-स्कंधाद्युक्तरीत्या सर्वलाभोपहरणं कृत्वा तन्निवेदितान्नादिभिरेव शरीरनिर्वाहोविधेयः॥ भागवततत्त्वभास्करे भागवतधर्मानुपक्रम्य विष्णुयामले ब्राह्मेमुहूर्त्तउत्थानमित्यारभ्य सर्वं भोजनाद्याकृत्य-मुक्त्वा ॥ साधूनां स्वागतं पूजाशेषनैवेद्यभोजनं ॥ तांबूलशेषग्रह-णं वैष्णवैः सह संगमइत्युक्तेः ॥ वस्त्रादिकमपि भगवते ऽर्पयित्वैव धार्यं ॥ तत्रैव विष्णोर्निवेदितानां तु वस्त्रादीनां च धारणमित्युक्तेः॥ तथा गृहादिकमपि भगवत्संबंधित्वादेव संरक्षणीयं ॥ उक्तं च भ-क्तिमीमांसाद्वितीयाध्यायप्रथमाह्निके ( सू० ४४ ) संमानबहु-मानेतिसूत्रव्याख्याने तदीयताभावस्तु बसोरुपरिचरस्य ॥ महा-भारते शांतिपर्वणि ( अ० ३३७ श्लो० १२७१८ ) आत्मराज्यं धनं चैव कलत्रं वाहनं तथा ॥ एतद्भागवतं सर्वमिति तत्प्रेक्षते स-देति ॥ यत्तु अपिदीपावलोकंमेनोपयुंज्यान्निवेदितमिति भागवत-वचनं तत्र नैवेद्यभक्षणविचारकारः॥ अपिदीपावलोकमित्यत्र अ-*पिशब्दस्य पूर्वार्द्धेन संगतिः॥नैवेद्यपरत्वे पूर्वापरग्रंथविरोधादित्या-*हु॥तस्यायमाशयः॥ कृतस्याप्यपरिकीर्त्तनमिति योज्यं॥ तेन निवे-दितं दीपावलोकमपि नोपयुंज्यात् किमुतान्यदिति कैमुतिकन्याश्र-यणात् दीपावलोकमात्रस्य निषेधइति ॥ विपक्षे पूर्वापरग्रंथविरो-धस्तु दास्येनात्मनिवेदनं सर्वलाभोपहरणं यद्यदिष्टतमंलोकेयच्चाति-प्रियमात्मनः तत्तन्निवेदयेन्मह्यंतदानंत्याकल्पतइति पूर्वापरवाक्या-नामसंगतिरूपः॥आत्मनोऽप्ययाग्रत्वापत्तेः सर्वलाभोपहरणेन जी-वनाऽसंभवात् जीवनोपयोगिलाभभिन्नलाभस्यैवार्पणे सर्वतद्रुपहर-

णासिद्धेश्च लोकेष्टस्वातिप्रियवस्तुजातयोरपि भगवतएव निवेदनी-
यत्वेन स्वस्य तदलाभापत्तेश्च ॥ तस्माद्दासभूतैर्मोक्षप्रतिबंधकमायां
जिगीषुभिस्तन्महाप्रसादबुध्या भोक्तव्यमेव॥ अथैतामपिशब्दयो-
जनां छिष्टां मन्यमानः श्रीधरस्वामीत्विह स्वयमन्येन वा निवेदि-
तं न स्वीकुर्यात्॥एतच्च साधारणस्थावरविषयं रागप्राप्तविषयं वा॥
भक्त्या तु पासमेव ॥ षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्त्तितं॥वि-
ष्णोर्नैवेद्यसिक्थेन पुण्यं तद्भुंजतां कलौ॥हृदिरूपं मुखे नाम नैवेद्य-
मुदरे हरेः ॥ पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतइत्यादि-
वचनेभ्यः ॥ यद्वा अन्यस्मै निवेदितं मे नोपयुंज्यात् मह्यं ननिवे-
दयेदित्यर्थः॥ विष्णोर्निवेदितान्नेन यष्टव्यं देवतांतरम्॥ पितृभ्यश्चै-
व तद्देयं तदानंत्याय कल्पते ॥ पितृशेषं तु योदद्याद्धरये परमात्म-
ने ॥ रेतोऽधाः पितरस्तस्य भवंति क्लेशभागिनइत्यादिवचनेभ्यइति
व्याचख्यौ ॥ अत्रस्थावरप्रतिमानैवेद्यभक्षणस्याप्यनेकत्र शास्त्रस-
दाचारसिद्धत्वात्प्रथमपक्षाऽरुच्या रागप्राप्तविषयंवेति पक्षांतरमुक्तं॥
तदेव सारसंग्रहे भृगुसंहितायां स्फुटीकृतं॥उपवासव्रतानां च भक्तानां
ब्रह्मचारिणां॥ विष्णुतीर्थं प्रसादं च स्वीकुर्याद्भक्तियोगतः॥रसगंधा-
दिलोभेन स्वीकुर्याद्भक्तिकंटकइति॥ अत्र पूर्वार्द्धे हस्तादितिशेषः॥
तृतीयाऽर्धे तु यः स्वीकुर्यात्सभक्तिकंटकइत्यर्थः॥तथा तत्रैव विष्णु-
रहस्ये॥ मंत्रपूतं हि नैवेद्यं निषिद्धाय ददाति यः॥सिद्धोऽपि पातकी
नित्यमारुरुक्षुस्तु किं पुनः॥निषिद्धास्तु भक्तिहीननास्तिकचांडाला-
दयः ॥ मंत्रपूतमित्यनेनाऽमंत्रनिवेदितदाने तु न दोषइत्यन्ये ॥पुन-
स्तत्रैव भारते ॥ अंत्यजाय तु योदद्याद्विष्णुशेषं हविः स्वयं॥ निर-
यं समहाघोरं रौरवं प्राप्नुयान्नरः॥ भगवद्भक्तिहीनस्य नैवेद्यं विष-

मुच्यते ॥ भगवद्भक्तियुक्तस्य तदेवचाऽमृतं भवेत् ॥ वराहे ॥ विष्णू-च्छिष्टं न दातव्यं नाऽभक्ताय कदाचन ॥ दाता प्रतिग्रहीता च उभौ नरकभागिनौ ॥अतोनिषेधा भक्तिहीनसाधारणान्नबुद्धिरागमात्रभोजिविषयाः विधयश्च तदतिरिक्ताऽऽस्तिकचातुर्वर्णिकविषयाइति श्रीधराद्यभिमताव्यवस्था ॥ अथ महाप्रसादबुद्धीनां भक्तानां तु रागतोभोजनेऽपि पापनाशोभवत्येव ॥ भक्त्या लोभात्कौतुकाद्वा क्षुधासंशमनेऽपि वा ॥ आकंठं भक्षितं तद्वै पुनाति सकलादघादित्यादिवचनेभ्यः ॥ अनयैवाऽरुच्या श्रीधरस्वामिना यद्वेत्यादिना व्याख्यानांतरं कृतं ॥ उचितं चैतत् ॥ नारदपंचरात्रे चतुर्थरात्रैकादशाध्याये द्वात्रिंशदपराधनिरूपणे ॥ (श्लो० १५) शक्तौ गौणोपचारश्च अनिवेदितभक्षणं ॥ तत्तत्कालभवानां च फलादीनामनर्पणं ॥ विनियुक्तावशिष्टस्य प्रदानं व्यंजनस्य चेतीतरदेवादिविनियुक्तावशिष्टवस्त्वर्पणस्याऽपराधत्वकथनात् ॥ भागवततत्त्वभास्करे तु इदमेव प्रदानंव्यंजनादिकमितिपाठभेदेन पाद्मवचनत्वेनोपन्यस्तं ॥ आस्तामेतत् ॥ अतोनिषेधाभावाद्बहुलविधिसत्वादत्यावश्यकत्वाच्च सर्वैरप्यास्तिकैर्भगवत्प्रसादोभोज्यएव॥ यानि तु कचित् ॥ ब्रह्मांगलग्नंविप्रेभ्योवैष्णवंचप्रदीयतइति वैष्णवंसात्वतेभ्यश्चेत्यादिवचांस्युक्तानि तानि संकल्प्यनिवेदितस्य स्वयमभोज्यत्वा त्तथा निवेदितान्नादिप्रतिपत्तिबोधकानीत्येकः पक्षः ॥ ब्राह्मणेभ्योवैष्णवेभ्यश्चादत्वा भगवत्प्रसादः स्वेन न भोज्यइत्येवं बोधकानीत्यपरः ॥ साधूनां स्वागतं पूजाशेषनैवेद्यभोजनमित्यादिविष्णुयामलादिवचनेषु तथा प्रतीतेः ॥ ननु स्वनिवेदितं निवेदकेन नैवभोक्तव्यमितितात्पर्यवंति ॥ वचनस्वारस्याभा-

वात् ॥ विधिशतव्याकोपाच्च ॥ विधीयते च स्वयमर्पितग्रहणं भक्तिसूत्रद्वितीयाध्याये ॥ ( सू० ६८ ) स्वयमर्पितंग्राह्यमविशेषादिति॥ नन्वेवं सति परार्पितस्याग्राह्यतैव प्रसज्यतइतिचेदयमस्य सूत्रस्य निष्कर्षः ॥ यत्र प्रतिमादौ बहवः स्वस्वसत्ताकवस्तुनिवेदकाभवेयुस्तत्र स्वयमर्पितमेव स्वेन स्वेनोपभोक्तव्यं नतु निवेदकानभ्यनुज्ञातं परार्पितमपि ॥ परसत्ताकतदनभ्यनुज्ञातभगवदर्पितग्रहणे दोषस्मरणादिति॥ अथ परार्पितमपि तन्निवेदकेन भगवद्भक्तेन दीयमानं तु प्रसादं यथायोग्यं गृह्णीयादेव ॥ उपवासव्रतानां च भक्तानां ब्रह्मचारिणां॥ विष्णुतीर्थं प्रसादं च स्वीकुर्याद्भक्तियोगतइति भृगुसंहितादिषु तद्विधानात् ॥ वैष्णवं च प्रदीयतइतिब्रह्मपुराणादिवचःस्वपि तथैव प्रतीतेः ॥ अन्नंनंनिंद्यात् अन्नंनपरिचक्षीतेत्यादिश्रुतिभिः सामान्यतोऽन्नप्रत्याख्याने निषिद्धे प्रसादरूपस्य तस्य सुतरामप्रत्याख्येयत्वसिद्धेः॥ कंठरवेणतत्प्रत्याख्याननिषेधकानामप्यनेकवचसां श्रीजगन्नाथमाहात्म्यादिषूपलब्धेश्च॥ अथ तत्राऽपि ज्ञात्यादिविचारस्त्वावश्यकएवेति तत्त्वं ॥ तेन परार्पितस्य सर्वथा अग्रहणं प्रत्युक्तं ॥ इह केचित्तुरागतोभोजननिषेधः परार्पितविषयः॥भृगुसंहितादिवचनस्वारस्यात् ॥ स्वयमर्पितं तु सर्वदा ग्राह्यमेव॥ रागारागयोरविशेषादिति सूत्रतात्पर्य॥तेन भक्त्यालोभात्कौतुकाद्वेतिपद्मादिवचांसि स्वार्पितविषयाणीत्याहुः ॥ अथैतन्नाप्ये स्वमेश्वरस्तु पूजायां भगवते दत्तनैवेद्यनिर्माल्यादिकं वैष्णवंसात्वतेभ्यइत्यादिना प्रतिपाद्यत्वेन विहितं तदिह सात्वतत्त्वाविशेषादेव भगवद्भक्तेन स्वयमपि ग्राह्यं॥ भोजनधारणादिना स्वोपकार्यमित्यर्थः ॥ स्वयमपि ग्रहणे प्रतिपत्तिः सिध्यति ॥ धर्म-

शाठ्यं तु वर्जनीयमेव ॥ यथा अग्न्याद्युद्देशेन पुरोडाशस्यापि उत्तरार्धात्स्विष्टकृतमवद्यति यजमानपंचमाः पुरोडाशं भक्षयंतीति प्रतिपत्तिस्तथेदमपि वचनादेव ॥ अन्यथा सात्वतेभ्योऽपि न प्रतिपादयेत् परद्रव्यत्वात् वचनादितिचेन्न॥नहि वचने स्ववर्जनमुक्तं॥ अथ ब्राह्मणेभ्योदद्यादित्यादिना ब्राह्मणत्वादात्मनेऽपि दानप्रसंगादितिचेन्न ॥ दानस्य स्वस्वत्वध्वंसेन परस्वत्वापादनरूपत्वात् ॥ नचैवं प्रतिपत्तौ युक्तं॥पुरोडाशस्याऽपि यजमाने प्रतिपत्तिदर्शनात्॥ क्रयादिवत् प्रतिपत्तिरपि स्वत्वापादिकेवेत्याद्याह ॥ अतोभाष्यानुसारेण तु स्वयंपदस्यग्राह्यमित्यनेन संबंधः प्रतीयते नत्वर्पितमित्यनेनेति ॥ कोऽपि चोद्याऽवसरः॥अथ भगवतउपायनत्वेन निवेदितं सुवर्णरजतरत्नपात्राभरणगवाश्वभूम्यादिकं तु स्वार्पितं परार्पितं वा नैव ग्राह्यं ॥ देवस्वत्वादित्यन्यत्रविस्तरः॥तस्माद्भगवन्निवेदितं यथार्हं सर्वैर्भोक्तव्यमेव ॥ नित्यत्वात् ॥ अस्तिहि नैवेद्यभक्षणस्य नित्यत्वं ॥तदभक्षणे प्रत्यवायश्रवणात्॥यच्चाऽऽहारार्थं गृहे पच्यते तस्याऽपि भगवते ऽनिवेदितस्याऽशने दोषाऽतिशयश्रवणाच्च ॥ यथाऽऽचारप्रकाशे भगवत्पूजानिरूपणे गारुडे ॥ नैवेद्यं तुलसीमिश्रं घंटाद्यैर्जयनिःस्वनैः॥ नीराजनैश्च हरये दद्यादापोशनं ततः ॥ ब्रह्मांडे ॥ पत्रं पुष्पं फलं तोयमन्नं पानीयमौषधं ॥ अनिवेद्य न भुंजीत यदाहाराय कल्पितं ॥ कौर्मेपि ॥ अनर्पयित्वा गोविंदे यैर्भुक्तं धर्मवर्जितं ॥ शुनोविष्ठासमं चाऽन्नं नीरं च सुरया सममिति ॥ दूषणोद्धारे च सदाचारचंद्रोदये ऽपीदमेवोपन्यस्तं ॥सारसंग्रहे पाद्मे ॥ भक्त्या लोभात्कौतुकाद्वा क्षुधासंशमनेऽपि वा॥ आकंठं भक्षितं यद्वै पुनाति सकलादघात्॥ ममान्नं निक्षिपेद्यस्तु मम निर्दा

करोति यः ॥ मद्दर्शनेन यत्पुण्यं तत्सर्वं तस्य नश्यति ॥ विष्णोर्निवेदितान्नं योनाऽश्नाति स्पर्शशंकया ॥ वायसोविड्वराहश्च विष्ठायां जायते कृमिरिति ॥ परमेष्ठिसंहितायां ॥ संत्यज्य विष्णुनैवेद्यं यः कुर्यादन्नभक्षणं ॥ सयाति नरकं घोरं यावच्चंद्रदिवाकराविति ॥ स्कांदे ॥ तीर्थैः पवित्रितोवाऽपि तपस्वी वा जितेंद्रियः ॥नारायणस्य नैवेद्यमभुक्त्वा पतितः क्षणादिति ॥ वाराहे॥मदन्नत्याजिनं मूढं तथा मद्भक्तदूषकं ॥ कल्पकोटिशतेनाऽपि न क्षमामि कदाचनेति॥ उशनाआह॥ग्रामप्रतिष्ठाशेषं तु गृहार्चायां निवेदयेत्॥ततोंऽतर्यामिणे दद्यात् स्वयं भुंजीत वैष्णवः ॥ प्राणेभ्योजुहुयादन्नं मन्निवेदितमुत्तमं॥ममाऽपि हृदयस्थस्य पितृभ्यश्च विशेषतः॥स्रक्चंदनादि तांबूलं योभुंक्ते नार्पितं हरेः॥कल्पकोटिसहस्राणि रेतोविण्मूत्रभुग्भवेत् ॥ अनिवेदितमन्नाद्यं योभुंक्ते मूढचेतसा ॥ श्वानविष्ठासमं चान्नं पानं तत्सुरया समं ॥ पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधं ॥ नाऽर्पयंति च ये विष्णोस्तुल्यं गोमांसभक्षणैरिति ॥ पंचरात्रे ॥ अवैष्णवानां पकान्नं पतितान्नं तथैवच ॥ अनर्पितं तथा विष्णोः श्वमांससदृशं भवेदिति ॥ नारदपंचरात्रद्वितीयरात्रद्वितीयाध्याये नारदं प्रति महादेवः ॥ ( श्लो० ६५ ) कृष्णानुग्रहतोविद्वाँल्लब्ध्वा च जन्म भारते ॥ न भजेत्कृष्णपादाब्जं तदत्यंतविडंबनं ॥ असार्थकं तस्य जन्म वृथा तद्गर्भयातना ॥ निष्फलं तच्छरीरं च नश्वरं व्यर्थजीवनं ॥ जीवन्मृतोहि पापी सचांडालादधमोऽशुचिः ॥ भुंक्ते नित्यमभक्ष्यं चाप्यनिवेद्यं हरेरहो ॥ विण्मूत्रकृमभक्ष्यं च नित्यं भुंक्ते च सूकरः ॥ नहि कृममभक्ष्यंच भुंक्ते स-

नि गणयन् विष्णुः ॥ अभोज्यान्नभक्षणं परस्वापहरणमिति ॥ तथा ॥ आत्मार्थं क्रियारंभोऽनाहिताग्निनेत्याद्याह ॥ अतः पातकरूपत्वादेव निषेधत्वात्मार्थंपाकमाचाराध्यायेऽपि गृहस्थप्रकरणे याज्ञवल्क्यः ॥ ( श्लो० ८ ) नपचेदन्नमात्मने इति ॥ अत्रैव मिताक्षरायां॥नपचेदन्नमात्मार्थं॥अन्नग्रहणं सकलादनीयप्रदर्शनार्थमिति विज्ञानेश्वरः ॥ मदनपारिजाते तृतीयस्तबके मार्कंडेयपुराणे॥आत्मार्थं पचनं यस्य रत्यर्थं यस्य मैथुनं॥वृत्त्यर्थं यस्य चाऽधीतं निष्फलं तस्य जीवितमिति ॥किंच भगवदनुद्देशेन पक्वाः कृसरसंयावादयोवृथेत्युच्यंते तेषां च यत्नतोवर्जनीयत्वमाह पंचमाध्याये मनुः ॥ ( श्लो० ६ ) शेलुं गव्यं च पेयूषं यत्नतः परिवर्जयेत् ॥ वृथा कृसरसंयावं पायसापूपमेवच॥अनुपाकृतमांसानि देवान्नानि हवींषिचेति ॥ शेलुं श्लेष्मातकफलं ॥गव्यंपेयूषं नवप्रसूतेर्गोर्घनीभावशालि दुग्धं ॥ एतद्व्याख्याने देवताद्यनुद्देशेन आत्मार्थं यत्पच्यते तद्वृथा ॥ कृसरस्तिलेन सह सिद्धओदनः ॥ तथाच छंदोगपरिशिष्टं ॥ तिलतंडुलसंपक्वः कृसरः सोऽभिधीयते ॥ संयावं घृतक्षीरगुडगोधूमचूर्णसिद्धस्तत्करिकेति प्रसिद्धः ॥ क्षीरतंडुलमिश्रः पायसः ॥ अपूपःपिष्टकः ॥ एतान् वृथा पक्वान् विवर्जयेत् ॥ पशुयागादौ मंत्रबलेन पशोः स्पर्शनमुपाकरणं तद्रहितः पशुरनुपाकृतः तस्य मांसानि॥देवान्नानि नैवेद्यार्थमन्नानि प्राङ्निवेदनात् हवींषि च पुरोडाशादीनि होमात् प्राग्वर्जयेदिति कुल्लूकभट्टः ॥ पुनरेकादशाध्याये मनुः ॥ ( श्लो० ५६ ) गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षडिति गर्हितस्य लशुनादेरिति व्याख्या ॥ लशुनादिषु च मनुना पंचमाध्याये वृथाकृसरादिकमपि गणितं ॥ याज्ञवल्क्य-

श्व प्रथमाध्याये भक्ष्याभक्ष्यप्रकरणे ॥ (श्लोक७) वृथाकृसरसं-
यावपायसापूपशष्कुलीरिति वृथा कृसरादीनभक्ष्यत्वेनाह॥नन्विह
कृसरादिपरिगणनात् तदितरस्य तु अनिवेदितस्याऽपि भक्षणे न
दोषइति चेत्॥न॥अत्रैव मिताक्षरायां न पचेदन्नमात्मन इति कृस-
रादीनां निषेधे सिद्धे पुनरभिधानं प्रायश्चित्तगौरवार्थमित्युक्तेः॥इह
कोयष्टिकादीनां कलविंकादीनां च मध्ये गणनात् मांसभक्षणप्रा-
यश्चित्तं युज्यतइति कश्चित्॥मनूक्तगर्हितादनप्रायश्चित्तमत्रोचित
मित्यपरः॥तत्र कामतारतम्येनाभ्यासतारतम्येन च व्यवस्थाऽस्त्विति
भाति॥मिताक्षरायां तु तृतीयाध्याये अभक्ष्यभक्षणप्रायश्चित्तप्रक-
रणे लिखितआह॥वृथाकृसरसंयावपायसापूपशष्कुलीः॥आहिता
ग्निर्द्विजोभुक्त्वा प्राजापत्यं समाचरेदिति ॥ अनाहिताग्नेस्तु शेषेपू-
पवसेदहरित्युपवासोद्रष्टव्यइति विज्ञानेश्वरः ॥ नच वृथादेवता-
द्युद्देशमंतरेण साधितादिति विज्ञानेश्वरेण व्याख्यानात् वैश्वदेवे
अनुपयोजितमेव कृसरादिकं वृथा नतु भगवदनर्पितमपीति शंक्यं॥
स्मृत्यर्थसारे ॥ वैश्वदेवादिरहितान्नभोजने वृथाकृसरसंयावपाय-
सापूपशष्कुलीमधुमांसानां चामत्योपवासोमत्या त्रिरात्रं कार्यं वा-
कार्यं आहिताग्निस्तु त्रिरात्रं कार्यं वा कुर्यादिति भेदनिर्देशपूर्वकं
प्रायश्चित्तोपदेशात्॥अत्र वृथा कृसरादीनां वैश्वदेवादीत्यादिपदसं-
गृहीतसर्वपाकयज्ञानुपयुक्तान्नाद्भेदप्रतीतेः ॥ भगवतः सर्वादिदेव-
त्वेन सर्वदेवानां तदवयवत्वेन च प्रकृते विज्ञानेश्वरादिव्याख्या-
विरोधाभावाच्च ॥ कमलाकराह्निके विष्णुपूजायां॥अन्नं चतुर्वि-
धं स्वादु रसैः षड्भिः समन्वितं ॥ भक्ष्यभोज्यसमायुक्तं नैवेद्यं तु स-
मर्पयेत् ॥ एकादशस्कंधे॥( अ० ११ ) यद्यदिष्टतमं लोके यच्चाऽ-

-तिप्रियमात्मनः ॥ तत्तन्निवेदयेन्मह्यं तदानंत्याय कल्पते ॥ एवमा-
दिवचनैः कसरादीनामुक्तमवस्तूनामवश्यसमर्पणीयताऽध्यवसाया-
च्च ॥ आस्तामेतत् ॥ एवमत्यावश्यकत्वात्सिद्धं भगवदर्पितभोजन-
स्य, नित्यत्वं ॥ नित्यत्वज्ञापकानि च संग्रहकारेणोक्तानि ॥ नित्यं
सदा यावदायुर्न कदाचिदतिक्रमेत् ॥ इत्युक्त्याऽतिक्रमे दोषश्रुतेर-
त्यागचोदनात् ॥ फलाश्रुतेर्वीप्सया च तन्नित्यमितिकीर्तितमिति ॥
माधवादिभिरप्येतदेवोदाहृत्यैकादशीव्रतादिषु नित्यत्वं निर्णीतं ॥
तत्र प्रकृतविषये नित्यशब्दं प्रयुंक्ते भारद्वाजः॥विष्णोर्निवेदितं नि-
त्यं देवेभ्योजुहुयाद्धविरित्यादि ॥ भुंजीयाच्चस्वयंनरइत्युपसंहारः॥
नारदपंचरात्रे ॥ नित्यं ते भुंजते संतस्तन्नैवेद्यं पदोदकमिति ॥ एवं
सदाशब्दोऽपि द्रष्टव्यः ॥ तथा जीवनहेतुभूताऽऽहारार्थं संपादितव-
स्तुनोऽपि भगवते निवेद्यैव भोक्तव्यत्वस्मरणादार्थिकं यावदायुर्ग-
हणं दर्शितं प्राक् ॥ तथा गीतायां॥यत्करोषि यदश्नासि यज्जुहोषि
ददासि यत्॥यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणं ॥ शुभाशुभफ-
लैरेवं मोक्ष्यसे कर्मबंधनैरिति ॥ अत्र यदश्नासीत्यादिना तदेव ग-
म्यते ॥ यदिति सामान्यनिर्देशेन अन्नं वा पत्रपुष्पादिकं वा य-
दायद्भोक्तव्यं तदा तदेव समर्पणीयमिति बोध्यते ॥ उक्तंच तत्रैव॥
पत्रं पुष्पं फलं तोयं योमे भक्त्या प्रयच्छति ॥ तदहं भक्त्युपहृत-
मश्नामि प्रयतात्मनइति ॥ नारदपंचरात्रेऽपि ॥ यावद्भक्ष्यं भवेत्पुं-
सस्तावद्दद्याज्जनार्दनइति ॥ आचारप्रकाशेऽपि पूजाप्रकरणात्पृथ-
क् विष्णोददंनैवेद्यंसंपद्यतां इदंविष्णवे इति मंत्रेणान्नस्य निवेदन-
मुक्तं ॥ अस्याऽनतिक्रमस्तु दर्शितआचारप्रकाशे ब्रह्मांडे ॥ अनि-
वेद्य न भुंजीत यदाहाराय कल्पितमिति ॥ भागवततत्त्वभास्करे ॥

प्रसादापहणं विष्णोर्वर्जयेद्वैष्णवः सदेति ॥ अतिक्रमे दोपश्च श्रूयते केवलाघोभवतिकेवलादी अनर्पयित्वागोविंदे नारायणस्यनैवेद्यमभुक्त्वापतितःक्षणात् ममान्नंनिक्षिपेद्यस्त्वित्यादिषु ॥ अत्यागचोदनंच संत्यज्यविष्णुनैवेद्यं मदन्नत्याजिनंमूढमित्यादौ स्पष्टं प्रतीयते ॥ फलश्रुतिश्च तत्त्वभास्करे विष्णुयामले साधूनांस्वागतंपूजाशेषंनैवेद्यभोजनमित्यादौ ॥ अथ स्कांदे मार्गशीर्षमाहात्म्ये भगवान् ॥ ( अ० १४ श्लो० २४ ) यदुक्तं भवता ब्रह्मन् भोक्तव्यं किं शृणुष्व तत्॥भोक्तव्यं मम चोच्छिष्टं मम भक्तिपरायणैः ॥ पवित्रकरणं पुत्र पापिनामपि मुक्तिदं ॥ ममाशनस्य शेषं च योभुनक्ति दिनेदिने ॥ सिक्थे सिक्थे भवेत्पुण्यं चांद्रायणशतोद्भवमिति॥अत्र दिनेदिनइति वीप्सा तस्मात्सिद्धमस्य नित्यत्वं ॥ नच दिनपदाद्रात्रौ तद्भोजनप्रसंगः ॥ गौतमतंत्रे ( अ० १४ श्लो० ११ ) विष्णोर्निवेदितान्नं यद्रात्रौ भुंजेदकुत्सयन् ॥ यदन्ना देवता यस्यतदन्नः पुरुषोभवेदिति रात्रावपि तस्यैव भोजनविधानात् ॥ तेन पूर्वत्र दिनपदमहोरात्रपरं॥ इत्थं चैतावता सायंप्रातर्द्विजातीनामशनंश्रुतिचोदितमित्यादिपूक्तं द्विवारमशनं भगवन्नैवेद्येनैव विधेयमिति सिद्धं ॥ तदेतत्सर्वमनुसंधायात्र निष्कर्षोदर्शितः श्रीमदाचार्यैः ॥ निवेदिभिः समर्प्यैव सर्वं कुर्यादितिस्थितिरिति ॥ अन्यथा सर्वदोषाणां न निवृत्तिः कथंचन॥असमर्पितवस्तूनां तस्माद्वर्जनमाचरेदितिच ॥ निवेदिभिः सहेत्यर्थः॥ सहार्थकयोगाभावेऽपि वृद्धोयूनेति ज्ञापकात्सहार्थे तृतीया ॥ अतोविस्पष्टतरेऽस्मिन् भगवदर्पितवस्तुग्रहणविषये बहुलविलेखनालं॥ इत्थं ॥ अच्युतार्पितवस्तूनां ग्रहणे सूरिसंमता ॥ विधीनां च निषेधानां व्यवस्था स्था-

पिता मया ॥ १ ॥ अतोरसमयाः शास्त्रसमयात्सुनिरामयाः ॥ प्रसादं श्रीहरेर्भुक्त्वा प्रसादं यात सर्वदा ॥ २ ॥

## ॥ अथ पंचमप्रधानप्रश्नावलंव्यष्टमः प्रश्नः ॥ ८ ॥

॥ देवतांतरनिवेदितमन्नंभोज्यं नवा ॥ ४० ॥

## ॥ उत्तरं ॥

देवतांतरनैवेद्यभोजनं प्रतिषिध्यते॥सौरशाक्तादिनैवेद्यभुक्तौ कामादकामतः ॥ १ ॥ तत्रतत्र निबंधेषु प्रायश्चित्तं प्रपंच्यते ॥ शिवनिर्माल्यसंसर्गनिषेधः सुतरां मतः ॥ २ ॥ क्वचिद्विधिस्तु तद्भक्ते पंचदेवार्चके थऽवा ॥ प्रवर्त्तते तदन्नादेः शालग्रामेण शोधनात् ॥ ॥ ३ ॥ वैष्णवानां त्वनन्यत्वस्मरणात्तादृशव्रतात् ॥ सत्पारंपरिकाचारान्नारात्तत्संगइष्यते ॥ ४ ॥ तस्मान्नभोज्यमस्माभिः कस्माअपि समर्पितं ॥ रमाधरसुधामिश्रं हरिभुक्तं विनेतरत् ॥ ५ ॥ तथाहि ॥ नारायणभट्टकृतधर्मप्रवृत्तौ देवपूजाप्रकरणे ॥ पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतं ॥ अन्यदेवस्य नैवेद्यं भुक्त्वा चांद्रायणं चरेदिति॥सारसंग्रहे पाराशरे॥देवतांतरभोक्ता वा समबुद्धिरथापि वा ॥ नास्तिकोवेदहीनोवा न प्रतिष्ठां समाचरेदिति ॥ देवतांतरशब्देन तन्निवेदितमन्नाद्यं लक्ष्यते ॥ तत्रैव पद्मपुराणे॥ विष्णोर्नैवेद्यकं शुद्धं मुनिभिर्मोक्षकांक्षिभिः॥अन्यदेवस्य नैवेद्यं भुक्त्वा चांद्रायणं चरेत्॥अत्र पूर्वार्द्धे भुज्यतइतिशेषः॥प्रकरणादन्यशब्दश्च विष्णुभिन्नपर्यायः ॥ स्कांदे च मार्गशीर्षमाहात्म्यचतुर्दशाध्याये भगवान् ( श्लो० २५ ) भोक्तव्यं मम चोच्छिष्टमित्यादिना स्वप्रसादस्याऽवश्यभोक्तव्यत्वमुक्त्वाऽऽह ॥ ( श्लो ० ३१ ) अन्येषां दे-

वतानां च न गृह्णीयाच्च भक्षितं ॥ अभक्तानां च पक्वान्नं भुक्त्वा च नरकं व्रजेदिति ॥ अत्राप्यन्यशब्दः पूर्ववत् ॥ नचेदमायहात्म्यं-चेदवशिन्नदेवपरं कल्प्यं ॥ शैवसौरादिनैवेद्यभक्षणेऽपि प्रायश्चित्त-निरूपणात् ॥ यथा स्मृत्यर्थसारे ॥ शैवसौरनिर्माल्यनिवेद्यभक्षणे चांद्रं ॥ अभ्यासे द्विगुणं ॥ मत्याऽभ्यासे सांतपनं ॥ अन्यनिर्माल्ये त्वनापद्येवमिति ॥ धर्मसिंधौ च तृतीयपरिच्छेदपूर्वार्द्धे॥शैवसौरनै-वेद्यभक्षणे चांद्रायणमित्यादि ॥ अयेपूर्ववत् ॥ प्रायश्चित्तेंदुशेखरे॥ रुद्रनिर्माल्यस्पर्शे सचैलस्नानं॥शैवसौरनिर्माल्यनैवेद्यभक्षणे चांद्रं॥ अभ्यासे द्विगुणं ॥ अमत्याऽभ्यासे सांतपनं ॥ अनापदि हरेरन्यनै-वेद्यभक्षणे एवमेव ॥ विष्णोरनिवेदितभोजनेऽर्द्धकृच्छ्रप्रायश्चित्तं ॥ हरेर्निर्माल्यनैवेद्यभक्षणे चांद्रायणफलमिति स्मृत्यर्थसारेइति॥त-था श्राद्धहेमाद्रौ स्कांदे ॥ स्पृष्ट्वा रुद्रस्य निर्माल्यं वाससा आप्लुतः शुचिरिति॥निर्णयसिंधौ तृतीयपरिच्छेदपूर्वार्द्धे चेदमुदाहृतं॥प्राय-श्चित्तमयूखेतु अथ रुद्रनिर्माल्यस्पर्शे कालिकापुराणे ॥ स्पृष्ट्वारु-द्रस्य निर्माल्यं सवासा आप्लुतः शुचिरिति तदेव कालिकापुराणव-चनत्वेनोक्तं॥एवमितरेष्वपि प्रायश्चित्तहेमाद्रिमयूखप्रभृतिषु प्रमा-णोपन्यासपुरःसरं सविस्तरमिदं निर्णीतमेवाऽस्तीति निर्मत्सरधिया-ऽवधेयं ॥ विस्तरभयात्तद्ग्रंथलेखाद्विरम्यते ॥ अतोभगवद्भिन्नसर्व-देवनैवेद्यभक्षणे यथाशास्त्रं प्रायश्चित्तानां तत्रतत्र प्रामाणिकग्रंथेषु व्यवस्थापितत्वान्नकेनाऽपि तान्यद्रनीयानि॥इत्थमेव देवयोनीनां यक्षादीनामप्यन्नं निषेधत्येकादशाध्याये मनुः॥(श्लो० ९२)यक्ष-रक्षःपिशाचान्नं मद्यं मांसं सुरासवं॥तद्ब्राह्मणेन नात्तव्यं देवानाम-

श्नता हविरिति॥अथ भवत्प्रश्नवाक्ये निवेदितपददर्शनादिदं प्रतिभाति ॥ यद्भवदिष्टतया श्रूयमाणसदानंदगिरिकृतशैवसुधाकरोदाहृतनारदवचनानुसारेण निर्माल्यषाड्विध्यमंगीकृत्य तत्र पंचविधस्य प्रतिषेधः॥निवेदितस्य तु भक्षणं विधिविषयइति भवद्भिः स्वीक्रियतइति॥तत्र नारदवचनोपन्यासस्तु सदानंदगिरिणा॥तत्र व्यवस्थामाह॥नारदः॥शिवानुभूतमखिलं निर्माल्यं परिभाषते॥भोज्यं धार्यमिति द्वेधा षड्विधं च तदिष्यते ॥ देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितं ॥ चंडद्रव्यं बहिः क्षिप्तं निर्माल्यं षड्विधं मतमिति निर्माल्यषड्विधत्वमुक्त्वा दासीदासादीनां देवस्वत्वं हेमरूप्यकरत्नादीनां देवताद्रव्यत्वं संकल्पपूर्वकं समर्पितानामन्नजलादीनां नैवेद्यत्वं चोक्त्वा एतत्रिविधनिर्माल्यमनर्हमिति कथ्यते ॥ प्रमादाद्भोजनं कुर्वन् भूमौ सस्यादमंगलइति एतत्रिविधस्याऽप्यस्य भोजनं निंदित्वा शिवोपभुक्तस्रग्गंधमन्नपानादिकं तथा ॥ निवेदितमितिप्रोक्तं सर्वपापहरं परमिति निवेदितस्रग्गंधादिभोजनं संस्तुत्य चंडद्रव्यबहिःक्षिप्तयोरभक्ष्यत्वमुक्त्वा इदमाह ॥ निर्माल्यं षड्विधं भोज्यमेकमेव निवेदितं ॥ अतोयानि विधायकवचनानि तानि निवेदितविषयाणि ॥ यानितु निषेधवाक्यानि तानि देवस्वादिपंचविधनिर्माल्यविषयाणीति नारदसंमता व्यवस्था वेदितव्येत्येवं शैवसुधाकरे कृतः ॥ तत्र यद्यपि मया ग्रंथांतरे अयुक्ताः शैवसुधाकरभागाः पंक्तिशः खंडनीयाएव तथाऽपि भवत्तोषार्थं किंचिदिहोच्यते॥ भवन्मते यदि सर्वसाधारण्येन शिवनिवेदितग्रहणमभिमतं तर्हि शास्त्रसिद्धानां तद्भक्षणे चांद्रायणादिप्रायश्चित्तानां कावा गतिरिति चिंत्यतां ॥ अथ नारदोक्तरीत्या नैवेद्यनिवेद्ययोर्भेदेन प्रायश्चित्त

विधायकग्रंथेषु च नैवेद्यशब्दोल्लेखेन प्रायश्चित्तानि तद्विषयाणीति चेद्ब्रूपे तर्हि मद्ममन्नं प्रयत्नेन निवेद्याऽश्नाति यः सदा॥सभूपालः सर्ववेत्ता भवत्येव हि सर्वथा ॥ अतीतानागतं ज्ञानं भूपालत्वं च शाश्वतं ॥ जातिस्मरत्वं सौंदर्यं मन्नैवेद्यस्य भक्षणात्॥ मन्नैवेद्यमनुच्छिष्टं मत्वा ऽनुच्छिष्टमुत्तमं ॥ योऽश्नाति सतु सर्वज्ञः सभूपालोऽपि जायते ॥ निर्माल्यसलिलं पीत्वा देवस्य मम शूलिनः॥क्षयापस्मारकुष्ठाद्यैः सद्योमुच्येत बंधनात्॥निर्माल्यं परमं पुण्यं नैवेद्यं पापनाशनं॥ब्रह्मचारिगृहस्थानां यतीनां च विमुक्तिदमिति स्वस्मिन्निबद्धश्रद्धराजव्यामोहनार्थं विधिवाक्यतया तदुदाहृतब्रह्मांडवचनविरोधात्॥अत्र स्फुटं नैवेद्यशब्दोपादानपुरःसरं तत्प्रशंसनात्॥ अथ मया शिवदीक्षावतस्तु पंचविधनिर्माल्यस्याऽपि ग्राह्यता स्वीकृतेत्यविरोधइतिचेत्तर्हीमानि वचनानि पारंपरिकशिवदीक्षाविशिष्टराजमात्रविषयाणि तादृशब्रह्मचार्यादिविषयाणि चेति त्वया स्वमुखेनैवोरीकृतमिदानीं॥तथा च सति परंपरातः सर्वदर्शनानुसारिणामविरोधेन सर्वधर्मपरिपालकानां विशेषतोवैष्णवानां बहूनां राज्ञां ईदृशवचसां सर्वराजसाधारण्यप्रदर्शनेन व्यामोहनादितःपरं विरम्यतां॥अथ यदि स्वपरिभाषामुल्लंघ्य ब्रह्मांडस्थनैवेद्यशब्दस्य निवेदितपरत्वं स्वीक्रियेत तदातु अनर्हममनैवेद्यमित्यादिवचनेष्वपि तथा तद्भक्षणप्रायश्चित्तविधायकग्रंथेष्वपि नैवेद्यशब्दस्य निवेदितपरत्वकथने न मुखबंधोभवतीति तथैव स्वीकुरु ॥ अथैवंसति विधिनिषेधयोः कथं व्यवस्था स्यादितिचेदुक्तरीत्या निवेदितस्य विहितप्रतिषिद्धत्वान्नारदोक्तविधेः शैवमात्रपरत्वं निषेधश्च तदितरसर्वसाधारणइतिस्यादेवसा॥नचैवंसति शैवस्याऽपि निवेदि-

तमात्रग्रहणं प्राप्तं नतु तदतिरिक्ताभरणादिग्रहणं देवताद्रव्यत्वात्॥ तथाचसति पुष्पं फलं सुगंधं च वस्त्राण्याभारणानि च॥शिवार्पितानि स्वीकुर्यादन्यथा किल्बिषी भवेदित्यादिमदुदाहृतलैंगादिवचनानां का गतिः स्यात् ॥ ईदृशविधीनां शैवमात्रपरत्वं निवेदितमात्रग्रहणस्य सर्वसाधारणत्वमिति मदुक्तव्यवस्थायाभवद्भिरस्वीकारादिति शंक्यं॥लैंगस्थाभरणग्रहणादिविधेर्नारदोक्ततन्निषेधस्य च शैवमात्रविषयकत्वेऽपि त्वदुदाहृतवचनादनुपदमग्रिमेण त्वयाऽप्युदाहृतेन शिवाऽग्रे शिवनिर्माल्यंगृह्णीतैव शिवद्विजात् ॥ स्वयमेवाददानस्तु नरकं प्रतिपद्यतइति लैंगवचनेन पूर्वोक्तविधेः शिवाग्रप्रदेशेशिवद्विजदत्तविषयकत्वं नारदोक्तनिषेधस्य च स्वयमादानविषयकत्वमिति व्यवस्थासामंजस्यात् ॥ यत्तु सूतसंहितायां शंभोर्निर्माल्यकं शुद्धं भुंजीयात्सर्वतोद्विजः॥ अन्यदेवस्य नैवेद्यं भुक्त्वा चांद्रायणं चरेत् ॥ स्कांदे॥प्रसादमन्यदेवस्य भुंजतां किल्बिषं भवेत् ॥ शिवस्यैव तु निर्माल्यं भक्त्या धार्यं द्विजातिभिरिति वचनद्वयं तेनोपन्यस्तं तत्तु बहुग्रंथेषु सकृच्छैवनिर्माल्यभक्षणेऽपि चांद्रायणविधानात् ॥ अत्रच शिवातिरिक्तविष्ण्वादिनैवेद्यभक्षणे तद्विधानात् ॥ प्रामाणिकनिबंधेष्वस्य वचोद्वयस्याऽनुपलब्धेश्च कल्पितमिव भाति ॥ तथाप्यकल्पितत्वनिश्चये सति तद्दुराग्रहिशैवपरमस्तु उदितानुदितप्रकरणसिद्धनहिनिंदान्यायेन शैवस्य तद्भक्षणस्तावकंवा नतु कथंचिदपि सर्वसाधारणं भवितुमर्हति ॥ बहुभिर्निर्मत्सरसर्वसाधारणग्रंथकारैरनेकश्रुत्यादिवचनावलंबेन विष्णुनैवेद्यभक्षणस्य तदभक्षणे तदनिवेदितभक्षणे च प्रत्यवायस्य तत्प्रायश्चित्तस्य च सम्यग्व्यवस्थापितत्वेन तत्रत्याचिख्यासायावि-

हायस्तलालिंलिंगिपाकल्पत्वात्॥यातु रुद्रभुक्तं भुंजीतरुद्रपीतंपि-
वेदित्यादिः तस्माद्ब्राह्मणाःप्रशांतमनसोनिर्माल्यमेव भक्षयतीत्यंता-
बृहज्जाबालश्रुतिस्तेनोपन्यस्ता॥ सातु उपक्रमोपसंहारादितात्पर्य-
लिंगपर्यालोचने शैवपरैव॥तत्राऽपि कालाग्निरुद्रबृहज्जाबालाद्य-
भ्यासाद्विरक्तमनस्कगृहाश्रमत्यागिशिवयोगाभ्यासिब्राह्मणपरैवेति
स्फुटमुद्भाति॥अयमेवाऽर्थस्तल्लिखिते श्रुतिभागेऽपि प्रशांतमनसइ-
त्यनेनोच्यते॥किंच निर्माल्यमेवेत्येवकारेणावधारणात्तदतिरिक्तस्या
भक्षणीयत्वं प्रतीयते॥विधेः परिसंख्यारूपत्वं च सदानंदगिरिणैवो-
पपादितं॥तथाच सति विष्णुनैवेद्यभक्षणादिविधिश्रुतयोनिरवका-
शत्वाद्याकुप्येरन्॥ अतोऽवधारणादिशून्यतद्विधिश्रुतिबलाज्जाबाल-
श्रुतेः शिवैकोपासिमात्रपरत्वमिति युक्तं॥श्रुत्यंतरबलेन श्रुतिसंको-
चस्य जैमिन्यादिसंमतत्वेन तत्र विरोधाभावात्॥अस्याः श्रुतेर्विस्त-
रशः पूर्वापरभागोपन्यासपूर्वकं निर्णयस्तु विस्तरभयादन्यत्र मया
कृतत्वाच्चेह नक्रियते॥अथ बहुलस्मृतिपुराणवाक्यैकवाक्यतयैतद्वि
चारे तु इयं आयतनविशेषेष्वेव नैवेद्यादिग्रहणविधायिका शैवा-
नामिति युक्तं भाति॥तथाहि निर्णयसिंधौ च पुरुषार्थप्रबोधे भवि-,
ष्ये॥ज्योतिर्लिंगं विना लिंगं यः पूजयति सत्तमः॥तस्य नैवेद्यनिर्मा-
ल्यभक्षणात्तप्तकृच्छ्रकं ॥ शालग्रामोद्भवे लिंगे बाणलिंगे स्वयंभु-
वि ॥ रसलिंगे तथाऽऽर्षेच सुप्रसिद्धप्रतिष्ठिते ॥ हृदये चंद्रकाते च,
स्वर्णरौप्यादिनिर्मिते॥शिवदीक्षावना भक्तेनेद भक्ष्यमितीर्यतइति ॥,
अत्रोपक्रमे यः पूजयतीति कथनादुपसंहारे च स्पष्टमेव शिवदी-
क्षावताभक्तेनेत्युक्तेश्चैतेष्वायतनेष्वपि निवेदितं भक्तिमच्छैवैनैव
भोक्तव्यमिति सिध्यति नतु साधारण्येन सर्वैरिति ॥ एतेन बाण-

लिंगे स्वयंभूते चंद्रकांते हृदि स्थिते ॥ चांद्रायणसमं ज्ञेयं शंभो-र्नैवेद्यभक्षणं ॥ लिंगे स्वयंभवे बाणे रत्नजे रसनिर्मिते ॥ सिद्धप्र-तिष्ठिते चैव न चंडाधिकृतिर्भवेत् ॥ यत्र चंडाधिकारोऽस्ति तद्भो-क्तव्यं न मानवैः ॥ चंडाधिकारोनो यत्र भोक्तव्यं तत्र भक्तितः ॥ त्रैविक्रम्याम्॥बाणलिंगे च लौहे च सिद्धलिंगे स्वयंभुवि॥प्रतिमा-सु च सर्वासु न चंडोऽधिकृतोभवेत् ॥ कमलाकराह्निके स्कांदे ॥ बाणलिंगे स्वयंभूते चंद्रकांतादिरत्नजे ॥ सौवर्णे राजते शंभोर्नैवे-द्यमपि भक्षयेत् ॥ अपिशब्दात्तीर्थादि गृह्णीयात्तदुक्तं तत्रैव ॥ नि-र्माल्यं धारयेद्भक्त्या शिरसा पार्वतीपतेः ॥ वाजिमेधस्य यज्ञस्य फलं प्राप्नोति निश्चितमित्येवमादीनि वचनानि शैवपरत्वेनैव व्यव-स्थापितानि वेदितव्यानि॥भक्तितइत्युक्तेश्च॥पादोदकं च निर्माल्यं भक्तैर्धार्यं विशेषतइत्याचारप्रकाशोदाहृताग्निपुराणाच्च॥आचारार्के शिवनारदसंवादे ॥ बाणलिंगे न चंडांशोन च निर्माल्यकल्पना ॥ सर्वं बाणार्पितं ग्राह्यं भक्त्या भक्तैश्च नाऽन्यथेति वचनाच्च॥तेन बा-णलिंगे नैवेद्यादेर्ग्राह्याग्राह्यत्वविचारनिषेधः शैवानामेव॥ निर्णय-सिध्वाचारप्रकाशधर्मसिध्वादिषु शैवैस्तथैव व्यवस्थास्वीकाराच्च ॥ यत्तु काशीखंडे॥जलस्य धारणं मूर्ध्नि विश्वेशस्नानजन्मनः॥एषजा-लंधरोबंधः समस्तसुरवल्लभः ॥ तथा ॥ स्नापयित्वा विधानेन योलिंगस्नपनोदकम् ॥ त्रिः पिबेत्त्रिविधं पापं तस्येहाऽऽशु विनश्यति॥ लिंगस्नपनवार्भिर्यः कुर्यान्मूर्ध्न्यभिषेचनं॥गंगास्नानफलं तस्य जा-यते ऽत्र विपाप्मनइत्यादि ॥ तत्र इदं पूर्ववाक्यवशाद्विश्वेश्वरविष-यमितिकेचित् ॥ काशीस्थपुराणप्रसिद्धसर्वलिंगविषयं काशीखं-डे रत्नेश्वराख्याने तथैव दर्शनादित्यन्ये ॥ इति पक्षद्वयं निर्णयसिं-

धुकारेणोपन्यस्तं ॥ तस्माच्छैवैरपि सर्वत्र सर्वलिंगार्पितं नैव ग्राह्यं किंतु बाणादिलिंगार्पितमेव ॥ अथ कदाचिच्छ्रद्धातिशयवशात्क्वचित्स्थावरादिलिंगार्पितमपि तैर्गृह्येत तदाऽपि निवेदितमेव ॥ निर्माल्ये षड्विधे भोज्यमेकमेव निवेदितमिति तदुदाहृतनारदवचनात् ॥ यत्तु तेन प्रलपितं ॥ इदं च निवेदितं शिवेतरदेवभक्तैरपि भोज्यं ॥ रुद्रभुक्तं भुंजीतइति पूर्वोदाहृतश्रुतिबलात् ॥ ततोऽतिरिक्तं तु एतैर्न भोज्यं ॥ शिवभक्तैस्तु निवेदितादितरदपि भोक्तव्यमिति ॥ तदयुक्ततरं॥श्रुतेः शैवमात्रपरतायाः पूर्वं व्यवस्थापितत्वात् ॥ शैवेतरस्य तद्भोजनावश्यकताविधायकप्रमाणांतराऽनुपलब्धेः ॥ तदुदाहृतशिवपुराणादिवचनानां शिवभुक्तस्य शैवैकभोज्यत्वप्रतिपादकानां नारदवचनेन कथंचिदपि बाधायोगात् ॥ तद्वचसां निवेदितभिन्नविषयकत्वकल्पने मानाभावात् ॥ प्रत्युत नारदोक्तं निवेदितभोजनमेव शिवपुराणादिवचनैरितरानर्हत्वाच्छैवमात्रविषयकमिति कथने वचनैकवाक्यत्वसामंजस्यात् ॥ बाणलिंगाद्यर्पितमहणस्याप्युक्तभविष्यादिवचनैः शैवमात्रविषयकत्वाऽवधारणेन सर्वलिंगेष्वपि निवेदितमन्नाद्यं शैववैष्णवादिभिः सर्वैरपि ग्राह्यमिति केनाऽपि प्रामाणिकेन वक्तुमशक्यत्वात् ॥ वक्ष्यमाणादिवचनैरतिनिषिद्धत्वाच्च ॥ यच्च शैवेन निवेदितादितरदपि भोक्तव्यमित्युक्तं तत्तु शिवार्पितदासीदासादिरूपदेवस्वस्यापि स्वसदृशशैवोपभोग्यत्वप्रापकमिति भूषणं तत्संन्यासाश्रमस्य ॥ वस्तुतस्तु स्थावरलिंगादिषु निर्माल्यस्य चंडायैवाऽर्पणीयत्वाच्छैवानामपि निवेदितातिरिक्तस्य तस्य स्वयं भोजनमनुचितमेव॥तथाहि ॥ निर्णयसिंधौ (प०३पू०) सिद्धांतशेखरे॥धराहिरण्यगोरत्नताम्ररौप्यांशुकादि-

कान् ॥ विहाय शेषं निर्माल्यं चंडेशाय निवेदयेत् ॥ अन्यदन्नादिपानीयं तांबूलं गंधपुष्पकं ॥ दद्याच्चंडाय निर्माल्यं शिवभुक्तं तु सर्वशः ॥ आचार्यशिवचंडानामाज्ञाभंगे तु लक्षकम् ॥ धनस्य भक्षणे तेषां पादोनं लक्षमीरितं ॥ निर्माल्ये भक्षिते लक्षपादतः शुद्धिरीरिता ॥ दानं च भक्षणसमं तदर्द्धं तदुपेक्षणे ॥ अकामाद्भक्षणे यद्वा निर्माल्यस्य जपेत्सुधीः॥ ब्रह्मपंचकसाहस्रं धर्मेण सहितं ततः ॥ कामतोभक्षणे दीक्षा प्रायश्चित्तं न चाऽन्यतः ॥ निर्माल्यलंघने ऽघोरं प्रजपेदयुतं ततः ॥ स्पर्शश्च लंघनसमोविक्रयो भक्षणेन च ॥ एष्वाद्यं श्लोकद्वयमाचारार्केऽप्युदाहृतं ॥ प्रयोगपारिजाते क्रियासारे ॥ मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत्॥ अंगुष्ठतर्जन्यमाभ्यां निर्माल्यमपनोदयेत् ॥ अपनीतं च निर्माल्यं चंडेशाय निवेदयेत् ॥ अशून्यमस्तकं लिंगं सदा कुर्वीत पूजकइति॥सिंधुद्वये चेदं तृतीयपरिच्छेदपूर्वार्द्धउदाहृतं॥एवमन्यत्राऽपि दृश्यं ॥ यत्तु निर्मलत्वाच्च निर्माल्यं नृणां नैर्मल्यकारणं ॥ यद्यदात्महितं लोके तत्तद्द्रव्यं परं च यत् ॥ शिवलिंगार्पितं कुर्यात्तत्र तुष्यति शंकरइति ब्रह्मांडवचनत्वेन शैवसुधाकरे उदाहृतं तत्तु अनन्यशैवाना वाणादिष्वर्पणविषयं ॥ तेषां हृदयभावितलिंगार्पण विषयं वा ॥ अतः सर्वं सुस्थं ॥ अथ केचित्स्मार्ताः शुच्यशुचिभेदेन ग्राह्यग्राह्यत्वव्यवस्थां वदंति ॥ श्रीदत्तस्तूपनीतानुपनीतविषयकत्वेन तामाह ॥ तन्मतेऽपि पंचायतनपूजादौ शालग्रामेण सह वाणाद्यर्चनएव तदर्पितं पत्रपुष्पादिकं भक्तिमद्भिः स्मार्तैर्ग्राह्यमिति सिद्ध्यंति ॥ यथातिथितत्त्वे हेमाद्रौ परिशिष्टे॥ अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलं ॥ शालग्रामशिलासंगात्सर्वं याति प-

विन्नतामिति ॥ अत्र पंचायतनपूजायां तंत्रेण च निवेदितमित्यर्थ-इति निर्णयसिंधुकारः ॥ आचारार्के तु पाद्मस्कांदब्रह्मपुराणेषु सं-ग्रहेच ॥ शिवउवाच ॥ अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलं ॥ शालग्रामशिलालग्नं सर्वं याति पवित्रताम् ॥ नैवेद्यं मे नरोभुक्त्वा शुद्ध्यै चांद्रायणं चरेदिति ॥ चतुर्विंशतिमतव्याख्याऽऽचारकांडे तु ॥ शालग्रामेण सह पूजायां सत्यां शिवनिर्माल्यमपि ग्रहणा-र्हं ॥ तदुक्तं स्कांदे ॥ अग्राह्यं शिवनिर्माल्यमित्यादि॥कमलाकरा-न्हिकेऽप्येवमेवोक्तं ॥मयूखादिषु चेदंवह्वृचगृह्यपरिशिष्टत्वेन स्कां-दवचनत्वेन चाऽनेकत्रोपन्यस्तं ॥ एतेन शैवसुधाकरे इदमुदाहृत्य शालग्रामसंसर्गोनाम शालग्रामस्य सर्वदेवात्मकत्वे सर्वदेवपूजा-ऽऽधारतया तत्र शिवबुध्या पूजायां पत्रादीनामर्पणमिति लक्षण-प्रकाशे स्थितं॥ कृत्यरत्नावल्यां तु शिवनाभिविषयकमेतदितिस्थि-तं ॥ पूजाप्रकाशोदाहृतपाद्मे ॥ शालग्रामशिलालिंगे यः करोति समार्चनं ॥ तेनाऽर्चिता कार्तिकेयलिंगानामेकसप्ततिः ॥ननु शाल-ग्रामेण सह पूजितशिवायार्पणमिति भ्रमितव्यमिति यदाधुनिक-भ्रांतेनोक्तं तन्निरस्तं वेदितव्यं॥ केनाऽपि प्रामाणिकेन तथाऽनंगी-कारात् ॥ शालग्रामस्य संसर्गादिति तल्लिखितपाठे षष्ठीश्रुत्या सं-सर्गपदेन च भेदप्रतीत्या शालग्रामे शिवाऽभेदबुध्या पूजनपरता-याः शिवनाभिपरतायाश्च वक्तुमयुक्तत्वात् ॥ तथासति शालग्रा-मे शिवार्चायां शिवनाभौ समार्चायामितिवा कथनस्यौचित्यात्॥ त्वन्मते अक्षरस्वारस्यहानेः सर्वसहृदयवेद्यत्वाच्च॥ यत्तु पाद्मवच-नमुक्तं तत्तु तादृशलिंगपूजाप्रशंसकमिति न तेन प्रकृतसिद्धिः ॥

अतोवद्धुनिबंधोक्तरीत्या शालग्रामसाहित्येन बाणाद्यर्चनएव पं-चदेवार्चकादीनां स्मार्तानां तन्निर्माल्यनिषेधप्रतिप्रसवार्थमेतदित्येव सतां मनोरमं ॥ तस्मात् स्मार्तानां भक्तिमतां बाणादौ स्वयमेव निर्माल्यग्रहणेऽपि न क्षतिः ॥ शालग्रामसाहित्येन पावित्र्यात् ॥ अथ तदसाहित्येऽपि कचिज्ज्योतिर्लिंगादौ पूजकदत्तं चंदनादिमात्रं किंचिदेव धारयंति ॥ एतत्सर्वं धर्मसिंधुकृता स्फुटीकृतं ॥ यथा तृतीयपरिच्छेदपूर्वार्द्धे शिवनैवेद्याशने प्रायश्चित्तमुक्तोच्यते ॥ इदं च ज्योतिर्लिंगस्वयंभूलिंगसिद्धप्रतिष्ठापितलिंगातिरिक्तस्थावरलिंगविषयं ॥ ज्योतिर्लिंगादौ तु पूजकेन दत्तं फलतीर्थादिकं भक्त्या शुध्यर्थं ग्राह्यं न लोभेन ॥ पंचायतनस्थितलिंगेषु चरेषु प्रतिमासु चान्नादेरपि स्वयं ग्रहणेऽपि नदोषः ॥ ज्योतिर्लिंगाद्यन्य स्थिरलिंगेषु तीर्थोदकचंदनमात्रं श्रद्धावद्भिः शिवोपासकैरेव ग्राह्यं ॥ ज्योतिर्लिंगादौ पूजकदत्तमन्नमपि भक्ष्यमिति केचिदिति ॥ अतः स्मार्त्तानामपि सर्वत्र शिवलिंगार्पितचंदनादिमात्रमपि ग्राह्यत्वेन न सिध्यति किमुत शैवसुधाकरोदितं सर्वत्र शिवनिवेदितान्नभक्षणं ॥ अनेकत्र प्रतिषिद्धत्वात् ॥ प्रतिषेधस्तु यथा आचारमयूखे शिवपूजानिरूपणे भविष्ये॥ दत्वा नैवेद्यवस्त्रादीन्नाददीत कदाचन ॥ त्यक्तव्यं शिवमुद्दिश्य तदादाने न तत्फलमिति ॥ आदाने ग्रहणे इति मयूखकारः ॥ पुनस्तत्रैव स्कांदे ॥ निर्माल्यं यो-हि मद्भक्त्या शिरसा धारयिष्यति ॥ अशुचिर्भिन्नमर्यादोनरः पापसमन्वितः ॥ नरके पच्यते घोरे तिर्यग्योनौ च संभवेदिति ॥ तथा सारसंग्रहे दत्तात्रेयः॥निर्माल्यं भक्षयित्वैवमुच्छिष्टमगुरोरपि॥ मासंपयोव्रतोभूत्वा जपन्नष्टाक्षरं सदा ॥ ब्रह्मकूर्चं ततः पीत्वा पू-

तोभवति मानवः ॥ तत्रैव ॥ निर्माल्यं नैव संभक्षेत्कूपे सर्वं च नि-क्षिपेत् ॥ स्वीकुर्याद्यदि संमोहाद्रौरवं नरकं व्रजेत् ॥ मक्षिकापा-दमात्रं तु निर्माल्यं न स्पृशेत्कचित् ॥ यदि स्पृशेत्समोहाद्वै नरके-षु निमज्जति ॥ शिवपुराणे रुद्रवाक्यम् ॥ पूजां कुर्यात्रिसंध्यं तु त-था भक्तिमचंचलाम् ॥ मम तीर्थप्रसादं च नैवेद्यं परिवर्जयेत् ॥ अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम् ॥ निवेद्य भक्त्या ऽभक्ष्यं तत्सर्वं कूपे विनिक्षिपेत् ॥अन्यच्च॥पत्रं पुष्पं फलं चान्नं महादेवस-मर्पितं॥नाश्नीयात्परिगृह्यैतन्निखनेद्वा जले क्षिपेत् ॥ तत्रैव वायुपु-राणे॥ जिव्हाचापल्यसंयुक्तोद्विजः संस्कारवर्जितः॥शिवनिर्माल्य-भोजी च रौरवं नरकं व्रजेत्॥ ग्रंथांतरे शिवपुराणे॥निर्माल्यलंघने दोषोधारणे च विशेषतः॥ न धारयेत्कचिच्छंभोर्निर्माल्यं नच भ-क्षयेदिति ॥ एवमादीन्यनेकत्र सर्वसाधारण्येन तन्निषेधकानि व-चनानि बहून्येवोपलभ्यंते ॥ अतः स्मार्तादिभिरपि उक्तस्थलाद-न्यत्र शिवनिवेदितं नैव ग्राह्यमितिनिर्मत्सराणां सतामविप्रतिपन्नं॥ दत्तात्रेयादिवचनेषु कचित्केवलनिर्माल्यशब्ददर्शनेऽपि प्रकरणब-लात् रुद्रेणभुक्तंनिर्माल्यमित्याचारप्रकाशोदाहृतस्कांदवचनेन शि-वानुभूतमखिलंनिर्माल्यंपरिभाषतइति शैवसुधाकरधृतनारदवच-नेनच तथैव परिभाषणान्निर्माल्यशब्दः शिवार्पितविषयएव बो-ध्यः॥ किंच देवस्वादेरग्राह्यत्वं तु तेनाप्युक्तं ॥ अस्तिच शिवनिवे-दितान्नादेरपि शिवस्वत्वं ॥ द्रव्यमन्नं फलं तोयं शिवस्वं न स्पृशे-त्कचित्॥लंघयेन्नैव निर्माल्यं कूपे सर्वं विनिक्षिपेत् ॥ मक्षिकापा-दमात्रं यः शिवस्वमुपजीवति ॥ लोभान्मोहात्सपच्येत कल्पांते न-रके नरइत्याचारार्के पद्मपुराणात् ॥ यस्तु तेन शैवस्य प्राणधा-

आपर्याप्तादधिकतरस्याऽपि शिवनिर्माल्यस्य लोभादिना ग्रहणे दोषाभावो दर्शितः॥सतु आचारप्रकाशाद्यनेकग्रंथोदाहृतैः लोभा-न्नधारयेच्छंभोर्निर्माल्यं नच भक्षयेत् ॥ नस्पृशेदपि पादेन लंघये-न्नाऽपि नारदेत्यादिभिरादित्यपुराणाद्यनेकवचनैरयुक्ततरएवेति ध्ये-यं ॥ अथ प्रायश्चित्तेंदुशेखरादिषु हरेरन्यनिर्माल्यादिभक्षणे त्वनापद्येवमिति अन्यशब्दनिर्दिष्टदुर्गाप्रभृतीनामन्नादिग्रहणे पूर्वो-क्तचांद्रायणादिप्रायश्चित्तातिदेशात्तदप्यभोज्यमेव साधारण्येन स्मार्तादीनां सर्वेषां ॥ आपदि तद्भक्षणेतु लघु प्रायश्चित्तं ज्ञेयं ॥ इत्थं विष्ण्वतिरिक्तदेवनैवेद्यादिग्रहणनिषेधोयथाशास्त्रं सर्वसाधा-रणोव्याख्यातः ॥ अथ वैष्णवैस्तु बाणलिंगादिनिवेदितं तथा य-त्किंचिद्देवांतरप्रतिमादिनिवेदितं च नैव भोक्तव्यं ॥ अनन्यत्वभंग-प्रसंगात्॥ स्वव्रतलोपापत्तेः आचारविरोधात् मनोदोषसंभवात् दे-वांतरानर्चकत्वात् भगवन्नैवेद्यमात्रभोजनविधानात् तदितरभोज-नप्रतिषेधाच्च ॥ तथाहि॥ अनन्याश्रितयंतोमां भजंत्यनन्यमनसो-ज्ञात्वाभूतादिमव्ययं विसृज्यदौरात्म्यमनन्यसौहृदाइत्यादिषु वैष्ण-वानामनन्यत्वमुच्यते तच्चाऽन्यदेवोच्छिष्टभोजने भंज्येत॥योवै स्वां देवतामतियजतइति तैत्तिरीयादिश्रावितदोषश्च प्रसज्येत ॥ किंच भगवन्निवेदितमेव भोक्तव्यं नतु तदनिवेदितं नाप्यन्यदेवनिवेदित-मिति वैष्णवानां व्रतं ॥तल्लोपश्चोपपातकं भवति॥ यथा ह तृतीया-ध्याये उपपातकगणनायां याज्ञवल्क्यः ॥ ( श्लोक ३२ ) कौटि-ल्यं व्रतलोपनमिति ॥ अत्र व्रतशब्दस्य ईदृशशिष्टाप्रतिषिद्धभ-गवद्भक्तव्रतपरत्वं नतु स्नातकादिव्रतपरत्वमिति मिताक्षरायां स्फु-टं ॥ अपिच ॥ नभगवदर्पितवद्देवतांतरनैवेद्यस्याभक्षणे सर्वसाधा-

रण्येन किंचित्प्रायश्चित्तमुपलभामहे ॥ अतस्तद्भक्षणं वैष्णवैः स्वपारंपरिकाऽविगीताचारविरोधादपि न कार्यं ॥आचाराध्याये स्नातकप्रकरणे॥(श्लो० ११)विरुद्धं वर्जयेत्कर्मेति याज्ञवल्क्येन तादृशकर्मणोवर्ज्यत्वस्मरणात् ॥ इह जनपदकुलाचारग्रामविरुद्धं च कर्मवर्जयेदिति मिताक्षरा ॥ मनुरप्याह ॥ येनाऽस्य पितरोयाताः येन याताः पितामहाः॥ येन यायात्सतां मार्गं तेन गच्छन्न दुष्यतीति॥मिताक्षरायां च(अध्याय१)श्राद्धप्रकरणे (श्लो० ३७।३८) गंधोदकतिलैर्युक्तमिति॥येसमानेत्यादीनां व्याख्यानेप्यनेकत्र एतदेवाऽनुसृत्य व्यवस्था क्रियते ॥ तथा वृहत्पराशरोऽपि प्रथमाध्याये ॥ ( श्लो० ४७ ) उषित्वा यत्रतत्राऽपि स्वाचारं न विवर्जयेदिति तस्यावर्जनीयत्वमाह ॥ आचारमाधवे च तृतीयाऽध्याये श्राद्धवर्ज्यब्राह्मणेषु यमः ॥ सद्भिश्च निंदिताचारः स्वकर्मपरिवर्जकइत्यादिगणयित्वाऽन्ते उपसंहरति ॥ चतुराश्रमवाह्याश्च सर्वे ते पंक्तिदूषकाः ॥ इत्येतैर्लक्षणैर्युक्तास्तान् द्विजान्न नियोजयेदिति ॥ अतः स्वाचारविरोधादपि तदभोज्यं ॥ अन्यच्च याज्ञवल्क्यस्मृतौ व्यवहाराध्याये दिव्यप्रकरणे कोशविधाने ॥ ( श्लो० १८ ) देवानुग्रान् समभ्यर्च्येत्यत्र उग्रान् देवान् दुर्गादीनिति व्याचक्षाणेन विज्ञानेश्वरेण तेषां तामसत्वं दर्शितं॥तदेव श्रीभागवतादिषु॥(स्कंध१) रजस्तमःप्रकृतयः समशीलान् भजंति वै ॥ तथा ॥ मुमुक्षवोघोररूपान् हित्वा भूतपतीनथ ॥ नारायणकलाः शांताभजंति सनसूयवइत्यादौ स्फुटीकृतं॥अतस्तामसानां शक्तिभूतपतिप्रभृतीनामुच्छिष्टं न भोक्तव्यं ॥ तामसान्नभक्षणे अन्नकार्यस्य मनसस्तामसत्वसंभवेन सात्विकेषु मोक्षादिसाधकेष्वभीष्टावश्यककर्मसु प्र-

वृत्तिविघातापातात् ॥ मनसोऽन्नकार्यत्वं तु छांदोग्ये श्वेतकेतुवि-
द्यायां श्रूयते ॥ ( खंड५ ) अन्नमशितं त्रेधा विधीयते ॥ तस्य यः
स्थविष्ठोधातुस्तत्पुरीपं भवति योमध्यमस्तन्मांसं योऽणिष्ठस्तन्म-
नइति ॥ अग्रे ( खंड६ ) एवमेव खलु सोम्यान्नस्याऽश्यमानस्य
योऽणिमा सऊर्ध्वः समुदिषति तन्मनोभवतीति ॥ तथा ॥ (खंड५
त०६ ) अन्नमयं हि सोम्य मनआपोमयः प्राणस्तेजोमयी वागि-
तीतिच ॥ अतस्तद्भक्षणं मोक्षप्रतिबंधकं ॥ यांति देवव्रतादेवान् दे-
वान्देवयजोयांतीत्याद्युक्ततुच्छफलसंपादकं चेत्यपि हेयं ॥ किंच
तथासति मनोदोषेण वागपि दुष्येदेव ॥ वाचोमनःशोध्यत्वात् ॥
यथा ॥ ( अ० ३ श्लो० ३१ ) कालोऽग्निः कर्ममृद्वायुमनोज्ञानं
तपोजलमित्यस्य व्याख्याने मनोपिवाचः शुद्धिसाधनं॥ यथा स-
माम्नायि मनसा वा ईषिता वाग्वदतीत्यादीत्याह विज्ञानेश्वरः ॥
अतश्चित्तादिशुद्धीच्छुभिर्न तद्भोज्यं ॥ अपरंच ॥ वैष्णवानां देव-
तांतरानर्चनं प्रागुपपादितं ॥ अतोऽनर्चकत्वादपि न तदुच्छिष्टा-
न्नादिकंतैर्ग्राह्यं॥अतिनिषिद्धत्वात्॥निषेधस्तु सारसंग्रहे वायुपुराणे
शिवनिर्माल्यप्रक्रमे ॥अनर्चकद्विजातीनां तीर्थपानं सुरासमं॥प्रसा
दोमांसतुल्यः स्याच्चंदनं रुधिरं स्मृतमिति॥इतरच्च भगवन्निवेदित-
मात्रभोजित्वएव वैष्णवत्वं सिध्यति॥सारसंग्रहे ब्रह्मांडे॥हृदि रूपं
मुखे नाम नैवेद्यमुदरे हरेः॥पादोदकं च निर्माल्यं यस्य मूर्ध्नि सवै-
ष्णवइति॥अत्र सर्वं वाक्यं सावधारणमिति न्यायेन नैवेद्यमात्रभो-
जित्वमपि वैष्णवलक्षणत्वेन प्रतीयते॥तथा नारदपंचरात्रप्रथमरा-
त्रद्वितीयाध्याये परमेष्ठी॥(श्लो०२३)नहि पूतस्त्रिभुवने श्रीकृष्ण-
सेवकात्परः ॥ शालग्रामशिलाचक्रे करोति कृष्णपूजनं ॥तत्पादो-

दकनैवेद्यं नित्यं भुंक्ते च यः पुमान् ॥ सवैष्णवोमहापूतस्तन्मंत्रोपासकः शुचिः ॥ पुनाति पुंसां शतकं जन्ममात्रात्सबांधवमिति ॥ अत्र वैष्णवानामपि जीवनार्थं भगवन्निवेदितदेवतांतरनिवेदितान्नयोरन्नत्वाऽविशेषात्साधारण्येन भोजने प्राप्ते तत्पादोदकनैवेद्यंनित्यंभुंक्तेचयःपुमानित्यनेन भगवन्निवेदितस्यैव भोजनं परिसंख्यायते ॥ तदेव नित्यपदेन दृढीक्रियते॥ तादृशस्यैव च वैष्णवत्वमुच्यते ॥ अतोवैष्णवैस्तु तदेव भोज्यं नतु देवतांतरनिवेदितमपि ॥ परिसंख्यायाइतरनिवृत्तिफलकत्वात् ॥यथा ॥चयनप्रकरणे इमामगृभ्णन्रशनामृतस्येति मंत्रस्य रशनाग्रहणप्रकाशकत्वल्लिंगात् अश्वगर्दभोभयरशनाग्रहणे प्राप्तेऽपि इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्तइति परिसंख्यायकवाक्यबलात् तस्य गर्दभरशनांऽगत्वं निवर्तते॥यथा वा रागतः पंचनखापंचनखानां साधारण्येन भक्षणे प्राप्ते पंचपंचनखाभक्ष्याइत्यनेन तदितरभक्षणं निषिध्यते ॥ अथ स्कांदे मार्गशीर्षमाहात्म्यचतुर्दशाध्याये विधातारं प्रति भगवान् ॥( श्लो० २४ ) यदुक्तं भवता ब्रह्मन् भोक्तव्यं किं शृणुष्व तत् ॥ भोक्तव्यं च ममोच्छिष्टं मम भक्तिपरायणैः ॥ पवित्रकरणं पुत्र पापिनामपि मुक्तिदं ॥ ममाशनस्य शेषं च योन्नं भुंक्ते दिनेदिने ॥ सिक्थे सिक्थे भवेत्पुण्यं चांद्रायणशतोद्भवं ॥ अवशिष्टमथोच्छिष्टं भक्तानां भोजनद्वयं ॥ नान्यद्वै भोजनं तेषां भुक्त्वा चांद्रायणं चरेत् ॥ अनर्पयित्वा योभुंक्ते अन्नपानादिकं च यत् ॥ श्वानविष्ठासमं चान्नं पानं च मदिरासमं॥ तस्मान्ममार्पयेत्पुत्र अन्नपानादि चौषधं ॥ भक्षयेत्परया भक्त्या अशुचेः शुचिकारणं ॥ तीर्थयज्ञाधिकफलं कलिदोषविनाशनं ॥ ममोच्छिष्टं सुगतिदमपि

दुष्कृतकर्मणां ॥ अन्येषां देवतानां च न गृह्णीयाच्च भक्षितं॥ अभक्तानां च पक्वान्नं भुक्त्वा च नरकं व्रजेदिति ॥ अत्राऽपि किंवाभोक्तव्यमिति प्रश्नस्य भगवता मद्भक्तैस्तु मदुच्छिष्टमेवभोक्तव्यं नतु कथंचित्किंचिदितरदपीत्युत्तरमुक्तं॥ तथा कंठरवेणैवाऽन्यदेवताभुक्ताशननिषेधः ॥ तदशने चांद्रायणप्रायश्चित्तं॥ अन्यथानरकप्राप्तिश्चोक्तैव ॥ इत्थमितरत्राऽपि दृश्यं ॥ अतोवैष्णवैर्नदेवतांतरनिवेदितं किंचिदपि भोज्यं किंतु सर्वं भगवदर्पितमेव ग्राह्यं ॥ सर्वेषां तदावश्यकताया अनुपदमतीतप्रश्नस्योत्तरे सम्यक्समर्थितत्वात् ॥ अपिच भगवन्नैवेद्यभक्षणस्य श्रवणकीर्त्तनादिरूपभक्त्यंतःपातित्वमपि क्वचिदुच्यते ॥ यथा सारसंग्रहे साधनरूपभक्तिनिरूपणे पाद्मे ॥ आद्यं तु वैष्णवं प्रोक्तं शंखचक्रांकनं हरेः ॥ धारणं चोर्ध्वपुंड्राणां तन्मंत्राणां परिग्रहः॥कीर्तनं श्रवणं चैव वंदनं पादसेवनम् ॥ तत्पादोदकसेवा च तन्निवेदितभोजनम् ॥ तदीयानां च सेवा च द्वादशीव्रतनिष्ठता॥ तुलसीरोपणं विष्णोर्देवदेवस्य शार्ङ्गिणः ॥ भक्तिः षोडशधा प्रोक्ता भवबंधविमुक्तये ॥ तत्रैव हारीतोपि ॥ शंखचक्रोर्ध्वपुंड्रादिधारणं स्मरणं हरेः॥तन्नामकीर्तनं चैव तन्निवेदितभोजनं ॥ तत्पादवंदनं चैव तत्पादांबुनिषेवणं ॥ एकादश्युपवासश्च तुलस्याअर्चनं हरेः ॥तदीयानामर्चनं च भक्तिर्नवविधा स्मृतेति गौणभक्तीनां च परमभक्तिज्ञानयोः साधकत्वं तत्र तत्र प्रसिद्धमेव ॥ अतस्तदुभयेप्सुभिस्तदन्यतरेप्सुभिश्चैताः सर्वा अपि साधनरूपाभक्तयः सादरमनुष्ठेयाएव ॥ भगवन्नैवेद्यभक्षणे च सर्वप्रामाणिकात्यादृतत्वं कस्याऽपि साधोर्विसंमत्यभावश्चास्त्येवेति किंबहुना ॥ तथाचायं निष्कर्षः ॥ भगवन्नैवेद्यभक्षणं तु स-

वैषामावश्यकं ॥ षड्विधशिवनिर्माल्येषु निवेदितमात्रं शैवैः सर्वत्र भोज्यं इतरत्तु चंदनादिकं वस्त्रादिकं च कदाचित्पूजकेन दत्तं चेच्छ्रद्धया ग्राह्यं नतु लोभेन ॥ बाणलिंगाद्यर्पितं तु सर्वं स्वयमपि ग्राह्यं ॥ स्मार्तैस्तु सर्वथा सर्वविधं शिवनिर्माल्यं हेयमेव ॥ पंचायतनादौ शालग्रामेण सहार्चितबाणलिंगादेस्तीर्थादिकं तु भक्तिमत्त्वे सति ग्राह्यं तथा ज्योतिर्लिंगस्याऽपि पूजकेन दीयमानं तीर्थचंदनादिमात्रं श्रद्धातिशये शुद्ध्यर्थं किंचिद्ग्राह्यं॥केचित्स्मार्ताः गृहेऽर्चितकेवलबाणादेरपि श्रद्धावशात्तीर्थलेशं गृह्णंति ॥ आचारादर्शेतु॥ततोगृहार्चनं कुर्यादभीष्टसुरपूजनमित्यादिना गृहे देवार्चनमुपक्रम्य रुद्रांगलग्नमग्नौचदहेत्सर्वंचतत्क्षणात्॥तथा ॥ भस्मांगेभ्यश्च शांभवमिति शिवनिवेदितप्रति पत्तिरुक्ता॥भस्मांगेभ्यः शैवेभ्यः देयमित्यनुवर्त्तते॥अत्र भस्मांगशब्देन चंडेश्वरादयएवोच्यंतइति केचित् ॥ प्राकृता अपीत्यपरे॥गृहे चंडाद्यभावात्प्राकृताएवेत्यन्ये॥ गृहेच बाणचललौहाद्यन्यतमलिंगस्यैव पूजनं भवति नतु स्थावरादेरिति तद्विषयिण्येवेयं प्रतिपत्तिरिति केचित् ॥ अथ सूर्यादि देवतांतरनैवेद्यं तु स्मार्तादिभिः सर्वैरपि न भोक्तव्यं॥ तद्भोजने प्रायश्चित्तनिरूपणात् ॥ तत्प्रतिपत्तिश्च दर्शिता आचारादर्शे ब्रह्मपुराणएव ॥ शिष्टेभ्योऽप्यथ देवेभ्योयत्तद्दीनेषु निक्षिपेदिति ॥ तथा॥ सौरमंगेभ्यः शाक्येभ्यस्तायिनेयन्निवेदितं॥स्त्रीभ्यश्च देयं मातृभ्योयत्तु किंचिन्निवेदितमिति ॥ स्त्रीभ्यः भिक्षुकदीनस्त्रीभ्यः॥अथ पंच विधपंचायतननैवेद्यप्रतिपत्तिस्तत्पार्षदेभ्यः समर्पणरूपा दर्शिता गौतमतंत्रे दशमाध्याये॥(श्लो० १३८)विष्वक्सेनाय वै दद्याच्छेषं

नैवेद्यमुत्तमं॥उच्छिष्टभोजिनोऽप्येते एतेपामवधारयेत्॥गणेशे वक्रतुंडाय सूर्यचंद्रांशवेऽर्पयेत्॥विष्णौ तु विष्वक्सेनाय शिवे चंडेश्वराय च ॥ शक्त्युच्छिष्टं शेषिकायै दद्यादर्चनसिद्धये॥अन्यथा नैव सिद्धिः स्यादर्चकोनरकं व्रजेदिति ॥ अथ भगवदनन्यभक्तैर्वैष्णवैस्तु सर्वदा भगवदर्पितमेव भोक्तव्यं नतु देवतांतरनिवेदितं किंचिदपीति श्रीः ॥ यत्तु भगवद्भक्त्यादिद्वेषिणा सदानंदगिरिणा यद्यपि शिवनिर्माल्यमेव भोक्तव्यं नान्यदेवनिवेदितं नवा निवेदितमिति पूर्वोदाहृतश्रुत्यादिवलात् सिद्धेर्थे प्रतिपदं सामान्यतश्च श्रीमद्भागवतादिवचांसि निषेधरूपाणि बहुशउपलभ्यंते तथापि विस्तरभयात् अस्मासु परेषां विद्वेष्टृत्वसंभावनाभयाच्च तानि नोपन्यस्यंतइति साहसादुक्तं ॥ तत्तु प्रक्रांतप्रश्नद्वयोत्तरेण निरस्तमेवेति एतन्निरीक्षकैः साधारणैरपि स्वयमेवावऽगंस्यते ॥ विदुषां तु तत्पूर्वमेव सुविदितमेवास्तीत्यलं॥सर्वेषांशिवोच्छिष्टग्रहणाऽऽपद्दप्रतिपादकः शैवसुधाकरभागोऽपि प्रायेण सर्वोऽप्यत्रैव खंडितोवेदितव्यः॥यानि च तेन नारदवचांस्युक्तानि तानि किं पुराणस्थान्याहोस्वित् स्मृतिस्थानि ॥ अन्यतरस्थितत्वेऽपि कस्मिन् भागे कतमश्लोकरूपाणीत्यन्वेष्टव्यं॥इत्थं तदुदाहृतेषु बहुषु वचनांतरेष्वपि समूलत्वं चिंत्यं ॥ भगवन्नैवेद्यस्य तु सर्वथा बाधोऽशक्यएव ॥ शिवोमूर्ध्ना धत्ते चरणसलिलं यस्य सततं मखे भागान् गृह्णंत्यपि भुवि यदंघ्रौ सुरगणाः ॥ श्रुतीर्यन्निश्वासान्हृदि च वदने विभ्रति सदा ऽखिलाविप्राधाता सृजति सकलं यस्य तनयः॥ १ ॥ मनश्चंद्रोयस्यौषधिचयमशेषं पचति यत्पदं चादित्यःप्रोज्वलयति जगद्यस्य महसा॥कृशानौ यद्वक्त्रे जगति सकलं जुव्हति हविर्द्विज-

न्मानः सर्वे वदनजनुषोऽश्नंति स्म ततः ॥ २ ॥ सर्ववेदोपदिष्टाग्रेः शिष्टाराध्यस्य तस्य कः ॥ ईष्टे संबंधरहितं भोक्तुमक्लिष्टकर्मणः ॥ ॥ ३ ॥ देवतांतरनैवेद्यस्याग्राह्यत्वं निरूपितं ॥ क्वाचित्कविधिवाक्यानां विषयश्च प्रदर्शितः ॥ ४॥ अस्माभिर्भुज्यते नैव तस्माद्देवांतरार्पितं ॥ न स्मार्तैरपि सर्वत्र भस्माऽऽलिप्तैस्तु तत्क्वचित् ॥५॥ कंदर्पदर्पहा ऽऽनंदसंदोहाऽमंदमंदिरं ॥ सेव्यएकोऽरविंदाक्षोभोज्यमेकं तदर्पितं ॥ ६ ॥

## अथ षष्ठः प्रधानः प्रश्नः ॥ ६ ॥

॥ भवन्मार्गे तिलकं कीदृशं केन द्रव्येण कर्त्तव्यं ॥ ६ ॥

## ॥ उत्तरं ॥

निर्दोषमस्माभिरूर्ध्वपुंड्रमेव विधीयते ॥ गोपीचंदनमिश्रेण भगवत्कुंकुमादिना ॥ अस्य वैष्णवचिन्हत्वात् पावनत्वादघक्षयात्॥आवश्यकत्वाद्भगवत्प्रापकत्वाच्च धारणं ॥ तथा हि॥पाद्मोत्तरखंडे दशमाध्याये देवीं प्रति शिवः ॥ ये कंठलग्नतुलसीनलिनाक्षमालाये बाहुमूलपरिशोभितशंखचक्राः ॥ येवा ललाटफलके लसदूर्ध्वपुंड्रास्ते वैष्णवाभुवनमाशु पवित्रयंति ॥ पराशरमाधवीये सत्यव्रतोऽपि ॥ ऊर्ध्वपुंड्रमृजुसौम्यं ललाटे यस्य दृश्यते ॥ चांडालोऽपि विशुद्धात्मा पूज्यएव न संशयइति ॥ अपिशब्दात् कैमुतिकेनान्येषां पावित्र्यं बोधयति॥आथर्वणोपनिषदि ॥ ॐनमस्कृत्य भगवंतं नारदः सर्वेश्वरं वासुदेवं पप्रच्छ श्रीभगवन्नूर्ध्वपुंड्रविधिं द्रव्यमंत्रस्थानादिसहितं मे ब्रूहीति॥तं होवाच भगवान् वासुदेवइत्यादिना म-

हृता प्रपंचेनैतन्निरूपितं ॥ अन्ये पुनरिमाः श्रुतीरप्युदाहरंति ॥ कठशाखायां ॥ धृतोर्ध्वपुंड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा॥स्वरेण मंत्रेण सदा हृदि स्थितं परात्परं यन्महतोमहांतम्॥ महोपनिषदि ॥ धृतोर्ध्वपुंड्रः परमेशितारं नारायणं सांख्ययोगाधिगम्यम् ॥ स्मृत्वा विमुच्येत नरः समस्तैः संसारपाशैरिह चैव विष्णुः ॥ आथर्वणे ॥ हरेः पादाकृतिमात्मनोहिताय मध्ये छिद्रं ऊर्ध्वपुंड्रं योधारयति सपरस्य प्रियोभवति सपुण्यवान् भवति समुक्तिवान् भवतीति ॥ किंच ॥ पुनः पद्मपुराणे ॥ ऊर्ध्वपुंड्रस्य माहात्म्यं वक्ष्यामि शुभदर्शने ॥ धारणादेव मुच्येत भववंधविमूढधीः ॥ एकांतिनोमहाभागाः सर्वे मम हिते रताः ॥ सांतरालं प्रकुर्वीरन्नूर्ध्वपुंड्रं पदाकृतीत्यादिना सविस्तरं तिलकस्याऽऽवश्यकत्वं निरूपिपितं ॥ ननु तथाऽप्युक्तद्रव्येणैव ईदृशाकारस्यैव तस्य करणे किं मानमितिचेत् ॥ पृष्टानि द्रव्यभेदादिप्रमाणानि पृथक् त्वया ॥ तदुत्तरेषु वक्तव्याः प्रमाणप्रचयामया ॥ १ ॥

## ॥ अथाऽस्याऽवांतरः प्रथमः प्रश्नः॥ १ ॥

तत्रपूर्वं भगवतस्तत्प्रियायाश्च कीदृशं विधानं ॥ ४१ ॥

## ॥उत्तरं॥

ईश्वरे चोदनावाक्याऽनियोज्यत्वेन योज्यतां ॥ तिलकं किल किंचित्स्वरुचितोरुचिरं चिरं ॥ १ ॥ परंपरागताकारं द्रव्यैर्मृगमदादिभिः ॥ जातरूपमयं रत्नैर्जातरूपं च तज्जनैः ॥ २ ॥ तैर्द्रव्यैस्तत्प्रि-

त्या

यायास्तु तत्स्याल्लोके स्त्रियाइव ॥ यतः शास्त्रे लोकवत्तु लीलाकैवल्यमुच्यते॥ २॥तथाहि॥ईश्वरेषु हि न विधिव्यापारः प्रवर्तते॥न तस्य कार्यं करणं च विद्यते॥नमे पार्थाऽस्ति कर्त्तव्यं त्रिषु लोकेषु किंचनेत्यादिश्रुतिस्मृतिभ्यः॥अतोन तत्र तिलकादीनां द्रव्यादिनियमः किंतु भक्तरुच्यनुसारेणैव तद्विधानं॥तं यथायथोपासते तदेवभवतीत्यादि श्रुतिभ्यः येयथामांप्रपद्यंतेतांस्तथैवभजाम्यहमित्यादिस्मृतिभ्यः यद्यद्धियातउरुगायविभावयंतितत्तद्वपुःप्रणयसेसदनुग्रहायेत्यादिपुराणवचनेभ्यश्च॥अतः सुवर्णरौप्यादिमयं वा कस्तूर्यादितद्योग्योत्तमद्रव्यैर्वा यथारुचि भक्तैर्भगवते तत्प्रियायै च तिलकं समर्पणीयं॥ नचदेवानां तिलकसमर्पणे सुवर्णादिघटिततत्समर्पणे वा मानाभावः शंक्यः॥आचाराध्याये गणपतिकल्पे (श्लो० २४) आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा॥महागणपतेश्चैवकुर्वन्सिद्धिमवाप्नुयादिति याज्ञवल्क्यवचनस्य मानत्वात् ॥ अत्रैव मिताक्षरायां ॥ तिलकं स्वर्णनिर्मितं रूप्यनिर्मितं च कुर्वन् सिद्धिमभिलपितामाप्नोति त्युक्तेश्च ॥ तथाऽऽचारप्रकाशे॥अथ दुर्गायाः सुवर्णनेत्रतिलकदानं भविष्यपुराणे॥ सौवर्णे त्वक्षिणी राजन् भगवत्यै प्रयच्छति ॥ गोसहस्रफलं प्राप्य सूर्यलोके महीयते ॥ तथा सुवर्णतिलकं दुर्गादेव्यै प्रयच्छति॥सगच्छति परं स्थानं यत्र सा परमामतेति ॥ एवमनेकत्र देवताविषये सुवर्णनेत्रतिलकादिसमर्पणं प्रसिद्धं ॥ नचैवं सति कस्तूर्यादिद्रव्यनिर्मितभगवत्तिलकस्य असांप्रदायिकत्वं शंक्यं ॥ कस्तूरीतिलकं ललाटपटले वक्षस्थले कौस्तुभमित्यादिप्राचीनवर्णनेन तथा सार्वत्रिकशिष्टाचारेण च शंकाऽनुदयात् ॥ अतएव श्रीभागवते ॥ ( स्कं० १० अ० ३५ श्लो० १० ) दर्शनी-

हृता प्रपंचेनैतन्निरूपितं ॥ अन्ये पुनरिमाः श्रुतीरप्युदाहरंति ॥ कठशाखायां ॥ धृतोर्ध्वपुंड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा॥स्वरेण मंत्रेण सदा हृदि स्थितं परात्परं यन्महतोमहांतम्॥ महोपनिषदि ॥ धृतोर्ध्वपुंड्रः परमेशितारं नारायणं सांख्ययोगाधिगम्यम् ॥ स्मृत्वा विमुच्येत नरः समस्तैः संसारपाशैरिह चैव विष्णुः ॥ आथर्वणे ॥ हरेः पादाकृतिमात्मनोहिताय मध्ये छिद्रं ऊर्ध्वपुंड्रं योधारयति सपरस्य प्रियोभवति सपुण्यवान् भवति समुक्तिवान् भवतीति ॥ किंच ॥ पुनः पद्मपुराणे ॥ ऊर्ध्वपुंड्रस्य माहात्म्यं वक्ष्यामि शुभदर्शने ॥ धारणादेव मुच्येत भवबंधविमूढधीः ॥ एकांतिनोमहाभागाः सर्वे मम हिते रताः ॥ सांतरालं प्रकुर्वीरन्नूर्ध्वपुंड्रं पदाकृतीत्यादिना सविस्तरं तिलकस्याऽऽवश्यकत्वं निरूपितं ॥ ननु तथाऽप्युक्तद्रव्येणैव ईदृशाकारस्यैव तस्य करणे किं मानमितिचेत् ॥ पृष्टानि द्रव्यभेदादिप्रमाणानि पृथक् त्वया ॥ तदुत्तरेषु वक्तव्याः प्रमाणप्रचयामया ॥ १ ॥

## ॥ अथाऽस्याऽवांतरः प्रथमः प्रश्नः॥ १ ॥

तत्रपूर्वं भगवतस्तत्प्रियायाश्च कीदृशं विधानं ॥ ४१ ॥

## ॥उत्तरं॥

ईश्वरे चोदनावाक्याऽनियोज्यत्वेन योज्यतां ॥ तिलकं किल किंचित्स्वरुचितोरुचिरं चिरं ॥ १ ॥ परंपरागताकारं द्रव्यैर्मृगमदादिभिः ॥ जातरूपमयं रत्नैर्जातरूपं च तज्जनैः ॥ २ ॥ तैर्द्रव्यैस्तत्प्रि-

त्या

यायास्तु तत्स्याल्लोके स्त्रियाइव ॥ यतः शास्त्रे लोकवत्तु लीलाकैवल्यमुच्यते॥३॥तथाहि॥ईश्वरेषु हि न विधिव्यापारः प्रवर्तते॥न तस्य कार्यं करणं च विद्यते॥नमे पार्थाऽस्ति कर्त्तव्यं त्रिषु लोकेषु किंचने त्यादिश्रुतिस्मृतिभ्यः॥अतोन तत्र तिलकादीनां द्रव्यादिनियमः किंतु भक्तरुच्यनुसारेणैव तद्विधानं॥तं यथायथोपासते तदेवभवतीत्यादि श्रुतिभ्यः येयथामांप्रपद्यंतेतांस्तथैवभजाम्यहमित्यादिस्मृतिभ्यः य द्यद्धियातउरुगायविभावयंतितत्तद्वपुःप्रणयसेसदनुग्रहायेत्यादिपुराणवचनेभ्यश्च॥अतः सुवर्णरौप्यादिमयं वा कस्तूर्यादितद्योग्योत्तमद्रव्यैर्वा यथारुचि भक्तैर्भगवते तत्प्रियायै च तिलकं समर्पणीयं॥ नचदेवानां तिलकसमर्पणे सुवर्णादिघटिततत्समर्पणे वा मानाभावः शंक्यः॥आचाराध्याये गणपतिकल्पे (श्लो० २४) आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा॥महागणपतेश्चैवकुर्वन्सिद्धिमवाप्नुयादिति याज्ञवल्क्यवचनस्य मानत्वात् ॥ अत्रैव मिताक्षरायां ॥ तिलकं स्वर्णनिर्मितं रूप्यनिर्मितं च कुर्वन् सिद्धिमभिलपितामाप्नोति त्युक्तेश्च ॥ तथाऽऽचारप्रकाशे॥अथ दुर्गायाः सुवर्णनेत्रतिलकदानं भविष्यपुराणे॥ सौवर्णे त्वक्षिणी राजन् भगवत्यै प्रयच्छति ॥ गोसहस्रफलं प्राप्य सूर्यलोके महीयते ॥ तथा सुवर्णतिलकं दुर्गादेव्यै प्रयच्छति॥सगच्छति परं स्थानं यत्र सा परमा मतेति ॥ एवमनेकत्र देवताविषये सुवर्णनेत्रतिलकादिसमर्पणं प्रसिद्धं ॥ नचैवं सति कस्तूर्यादिद्रव्यनिर्मितभगवत्तिलकस्य असांप्रदायिकत्वं शंक्यं ॥ कस्तूरीतिलकं ललाटपटले वक्षस्थले कौस्तुभमित्यादिप्राचीनवर्णनेन तथा सार्वत्रिकशिष्टाचारेण च शंकाऽनुदयात् ॥ अतएव श्रीभागवते ॥ ( स्कं० १० अ० ३५ श्लो० १० ) दर्शनी-

यतिलकोवनमालादिव्यगंधतुलसीमधुमत्तैरित्यादौ भक्तरुच्यनुसारेण यथाकथंचिन्मनोहरं तिलकं तस्य कार्यमिति दर्शितं ॥ तथा॥ गौतमीयतंत्रे च सप्तदशाध्याये ॥ ( श्लो० १५ ) चतुर्भुजं शंखचक्रगदाशार्ङ्गधरं हरिमिति तद्वर्णनमुपक्रम्य ॥( श्लो० १८ ) ललाटतटविन्यस्तकस्तूरीतिलकोज्वलमिति स्पष्टमेव मृगमदतिलकमभिहितं ॥ नारदपंचरात्रेतु ॥ ( रात्र २ अ० ५ ) भगवद्वर्णने ( श्लो०८ ) लोलालकस्फुरितभालतलप्रदीप्तगोरोचनातिलकमंजुलचित्रमालमिति ॥ गौतमीयतंत्रे च सप्तविंशाध्याये ॥ (श्लो० ३७ ) रोचनातिलकं भ्रांते कुंतलालिसमावृतमिति ॥ तथा तत्रैव एकोनविंशाध्याये ॥ ( श्लो०१८ ) गोरोचनाभालतिलकं नीलकुंतलशोभितं ॥ नारदाद्यैर्मुनिगणैरावृतं स्निग्धलोचनैः ॥ इतिच भगवतोगोरोचनातिलकमप्युक्तं॥ द्रव्यांतराण्याचारप्रकाशे नारदीये ॥ सचंदनं सकर्पूरं कुंकुमागुरुमिश्रितं ॥ मृगनाभिसमायुक्तं जातीफलविमिश्रितं ॥ तुलसीचंदनोपेतं महाविष्णोः सुखावहं ॥ गारुडे ॥ योहिभागवतोभूत्वा कलौ तुलसिचंदनं ॥ नचार्पयति वै विष्णोर्न सभागवतोनरइति ॥ अत्रोक्तेषु कानि चिच्चंदनादिद्रव्याणि भगवत्तिलकेऽप्युपयुज्यंतइतिबहवः ॥ एवं तत्प्रियायाअपि न द्रव्यादिनियमः ॥ भगवदभिन्नत्वात् ॥ पुराणादिष्वनेकधा वर्णनदर्शनाच्च॥यथा आदित्यपुराणे नारदोक्तराधिकानामसु॥नित्यमाघूर्णिता पूर्णा कस्तूरीतिलकांकितेति॥अतः कस्तूर्यान्यतमेन लौकिकसौभाग्यशालिस्त्रीवद्भगवत्प्रियाया अपि तिलकमर्पणीयं ॥ लौकिकरुच्यनुसारिवस्त्राभरणादिवत् ॥ लोकवत्तुलीलाकैवल्यं यथादेहेनयादेवइत्यादिषु तथैव प्रतीतेः ॥ पूजांऽगत्वेनोभयत्र

तत्समर्पणं त्वावश्यकमेव॥पूजांगत्वं तु यथाह सारसंग्रहे भगवत्पूजामुपक्रम्य हारीतः॥ स्नानपात्रोदमादाय स्नापयेत्कमलापतिम्॥ कस्तूरीतिलकं गंधं पुष्पाणि सुरभीणि च॥ वस्त्रं चैवोपवीतं च दद्यादाभरणानि चेत्याह॥ एवं नारदपंचरात्रे तृतीयरात्रे षष्ठाध्याये भगवत्पूजामुपक्रम्य॥ ( श्लो० १५।१६ ) भूयोवेणुं वदनस्थं वक्षोदेशे वनमालां॥ वक्षोजोर्ध्वं प्रयजेच्च श्रीवत्सं कौस्तुभरत्नं॥ श्रीखंडनिष्यंदविचर्चितांगोमूलेन भालादिषु चित्रकाणि॥ लिख्यादथो पंजरमूर्तिमंत्रैरनामयोदीपशिखाकृतीनीत्याकारोऽपि दर्शितः॥ इदंच पूर्वापरवचनानुरोधात्पूज्यभगवत्स्वरूपविषयमेवेति प्रतिभाति॥ इहाऽन्हिकस्योपक्रांतत्वात्पूजकस्य तु पूर्वं जपारंभ एव तिलकस्य विहितत्वात्॥ यदित्विदं पूजकस्यैव पूजामध्ये पुनस्तदंगभूततिलकविधानमित्यभ्युपगम्येत तदाऽपि भगवतस्तिलकसमर्पणस्य शास्त्रसिद्धत्वात्तत्र द्रव्यवदाकारस्यापि शास्त्रोक्तान्यतमस्य भक्तरुच्यनुसारेण विन्यासोऽस्तु॥ परं पुंड्रं तूर्ध्वमेव समर्पणीयं॥ अतएव गौतमीयतंत्रे षोडशाध्याये ( श्लो० २० ) रत्नसिंहासनासीनं पुंडरीकदलेक्षणमिति ध्येयं भगवत्स्वरूपमुपक्रम्योच्यते॥ ( श्लो० ३१ ) दिव्यमालांबरधरं दिव्यगंधानुलेपनं॥ ललाटे हृदये कुक्षौ कंठे बाव्होश्च पार्श्वयोः॥ विराजितोर्ध्वपुंड्रेण चंदनेन विभूषितमिति॥एवमन्यत्राऽपि दृश्यं॥ पूजांगत्वाद्धरेरूर्ध्वं तिलकं किल केनचित्॥सुद्रव्येणोचिताकारं यथाचारं विरच्यतां॥ ॥ १ ॥ तत्प्रियायाः श्रियालोके स्त्रियाइव विधीयते॥स्वरुच्या तिलकं भक्तैः सेवासक्तैर्निरंतरं॥ २ ॥

---

## ॥ अथद्वितीयोऽवांतरः प्रश्नः ॥ २॥

॥ तदनुगवच्छिष्याणां तत्पत्नीनां च समानरीत्या वा वैलक्षण्येनेति वक्तव्यं ॥ ४२ ॥

### ॥ उत्तरं ॥

शिष्टाचारोनहि स्त्रीणामूर्ध्वपुंड्रविधेः क्वचित् ॥ वैदिकत्वात्स्वपतिना कृते सति च सिद्धितः ॥ १॥ तत्र वैदिकत्वं तु वेदमंत्रोच्चारणविशिष्टेतिकर्त्तव्यताकत्वात् ॥ तथाहि ॥ आथर्वणोपनिषदि॥ अथ गोपीचंदनपापघ्न विष्णुदेहसमुद्भव॥ चक्रांकित नमस्तुभ्यं धारणान्मुक्तिदोभव ॥ १ ॥ इति प्रार्थनं ॥ इमंमेगंगेति जलमादाय विष्णोर्नुकमिति मर्दयेत् अतोदेवाअवंतुनइत्येताभिर्ऋग्भिर्विष्णुगायत्र्या त्रिवारमभिमंत्र्य ॥ शंखचक्रगदापाणे द्वारकानिलयाऽच्युत ॥ गोविंद पुंडरीकाक्ष रक्ष मां शरणागतमिति॥ मां ध्यात्वा गृहस्थोललाटादिद्वादशस्थलेष्वनामिकांगुल्या विष्णुगायत्र्या केशवादिद्वादशनामभिर्वा धारयेत्॥ ब्रह्मचारी वानप्रस्थोललाटकंठहृदयबाहुमूलेषु वैष्णव्या गायत्र्या कृष्णादिपंचनामभिर्वा धारयेत्॥ यतिस्तर्जन्या शिरोललाटहृदयेषु प्रणवेन धारयेदिति॥ वैदिके च स्त्रीणामनधिकारोऽस्मिन्कल्पे सर्वधर्मशास्त्रदुंदुभिघुष्टोऽस्त्येव ॥ यथाऽऽह मनुः ॥ ( अ० २ श्लो० ६६ ) अमंत्रिका तु कार्येयं स्त्रीणामावृदशेषतः॥ संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥ ६६ ॥ वैवाहिकोविधिः स्त्रीणां संस्कारोवैदिकः स्मृतः ॥ पतिसेवा गुरौ वासोगृहार्थोऽग्निपरिक्रियेति ॥ ६७ ॥ पुनर्नवमाध्यायेऽपि ॥ ( श्लो० १८ ) नास्ति स्त्रीणां क्रिया मंत्रैरिति धर्मोव्यवस्थितः॥ निरिंद्रियाह्यमंत्राश्च

स्त्रियोऽनृतमिति स्थितिः॥नचैवंसति स्वाध्यायजपहोमादिसंध्यादानादिकं च यत्॥ ऊर्ध्वपुंड्रं विना कुर्यात्तत्सर्वं निष्फलं भवेदित्यादिस्मृतिसारसमुच्चयादिधृतवचनैरूर्ध्वपुंड्राहित्येन कृतानां सर्वकर्मणां वैफल्यकथनात् स्त्रीकर्तृकेऽपि दानादौ वैफल्यप्रसंगात् तद्वारणाय तस्याअपि तदावश्यकमिति शंक्यं ॥ सदोपवीतिना भाव्यं सदा बद्धशिखेन च॥विशिखोव्युपवीतश्च यत्करोति न तत्कृतमित्युपवीतराहित्येन कृतकर्मणां वैफल्यस्मरणेऽपि स्त्रीणां तदनधिकारात् विवाहोत्तरं पतिकृतोपवीतद्वयधारणेनैव तासां कर्मवैफल्यनिवृत्तिसंभवात् ॥ अतएव पंचमाध्याये स्त्रीधर्मेषु मनुः ॥ (श्लो० १५५) नास्ति स्त्रीणां पृथग्यज्ञोन व्रतं नाप्युपोषितमिति ॥ बृहत्पराशरोऽपि चतुर्थाध्याये स्त्रीधर्मानुपक्रम्य ॥ (श्लो० ६४) सामाहनृक्कमित्याद्यैर्देवैर्न्यस्ता नृणां तनौ ॥ अर्धकाया नराणां ताः स्त्रीणां नातः पृथग्व्रतमिति ॥ व्रतशब्देन सांप्रदायिकनित्यकर्तव्यतिलकादेरपि संग्रहः ॥ पुनर्निर्णयसिंधौ ॥ (परिच्छेद १) स्कांदे ॥ नास्ति स्त्रीणां पृथग्यज्ञोन व्रतं नाऽप्युपोषणं ॥ भर्तृशुश्रूषयैवैताल्लोकानिष्टान् व्रजंतिहि ॥ यद्देवेभ्योयच्च पित्रादिकेभ्यः कुर्याद्भर्ताऽभ्यर्चनं सत्क्रिया च ॥ तस्यार्द्धं वै सा फलं नान्यचित्ता नारी भुंक्ते भर्तृशुश्रूषयैवेति ॥ अतोऽग्निहोत्रादिवदूर्ध्वपुंड्रमपि पतिकृतमेव तासां फलं जनयति ॥ अतएव ऊर्ध्वपुंड्रं द्विजातीनामग्निहोत्रसमोविधिरिति निर्णयसिंधौ तृतीयपरिच्छेदपूर्वार्द्धधृतवचने ऊर्ध्वपुंड्रे अग्निहोत्रतौल्याऽतिदेशः ॥ किंच ॥ ऊर्ध्वपुंड्रविषये मुख्यद्रव्यस्य गोपीचंदनतुलसीमूलमृत्तिकादेर्धारणं

न क्वापि स्त्रीणां विधीयते ॥ प्रत्युत स्त्रीणां नित्यं मांगलिकधारण-नियमात् मांगल्येषु च सर्वेषु न धार्यं गोपिचंदनमिति वचनात्ता-सां तद्धारणनिषेधएव गम्यते ॥ गंधादिबिंदुस्तु ललाटे ताभिः का-र्यएव ॥ अवैधव्यकरत्वात् ॥ उपवासव्रतादिष्वपि अत्याज्यत्वस्म-रणाच्च ॥ यथोक्तं हेमाद्रौ व्रतकांडे स्त्रीव्रतमुपक्रम्य गारुडे॥ गंधा-लंकारतांबूलपुष्पमालानुलेपनं॥उपवासे न दुष्यंति दंतधावनमंज-नमिति ॥ तथा तत्रैव भविष्ये॥ अंजनं च सतांबूलं कुंकुमं रक्तवा-ससी ॥ धारयेत्सोपवासाऽपि अवैधव्यकरं यतः ॥ विधवा यतिमा-र्गेण कुमारी वा यदृच्छयेति॥ मदनरत्ने व्यासः॥ दंतधावनपुष्पादि व्रतेष्वस्यान दुष्यतीति ॥ अत्राप्यादिशब्देन पूर्वोक्तगंधादिसंग्रहः॥ अथ स्त्रीव्रतेषु विशेष उच्यते इत्युपक्रम्य निर्णयसिंधौ मनुः ॥ पुष्पाऽलंकारवस्त्राणि गंधधूपाऽनुलेपनं॥उपवासे न दुष्यंति दंतधा-वनमंजनमिति॥इदं च गंधधारणं स्त्रीभिर्वर्तुलरूपेणैव कार्यं ॥धर्म-शास्त्रेष्वनेकत्र स्त्रीशूद्रयोस्तौल्यकथनात् ॥ मदनपारिजाते तृतीय-स्तवके ब्रह्मपुराणे ॥ ऊर्ध्वपुंड्रं द्विजः कुर्यात् क्षत्रियस्तु त्रिपुंड्रक-म् ॥ अर्द्धचंद्रं तु वैश्यस्य वर्त्तुलं शूद्रजातिष्विति ॥ शूद्राणां वर्त्तु-लविधानात्स्त्रीणामपि गंधधारणे आकारानिर्देशेन वर्त्तुलकरण-स्यैवाऽवगम्यमानत्वात् ॥ तथैव वैष्णवस्मार्त्तादिसर्वसमतसार्वत्रि-कशिष्टाचारदर्शनाच्च ॥ एतेनैव एकं पुंड्रं च नारीणां शूद्राणां च विधीयतइत्ति पाद्मवचनमपि व्याख्यातं वेदितव्यं ॥ शूद्रेषु वर्त्तु-लविधायकपूर्वोक्तब्रह्मपुराणवाक्यैकवाक्यतया एतद्वाक्यस्थपुंड्र-शब्दस्य वर्त्तुलपरत्वनिश्चयात्॥तेनैव नारीणामपि साहचर्येण निः-संशयं वर्त्तुलस्यैव प्राप्यमाणत्वात्॥ अन्यथा पुंड्रशब्दाद्वृत्तिवाक्य-

भेदाद्यनेकदोषप्रसंगाच्च महानिबंधेषु स्त्रीणां पुंड्रे आकारांतरसमर्प-कवचनांतरादर्शनेन तदपवादायोगाच्च॥नच पुंड्रशब्देन वर्त्तुलग्रह-णमयोग्यमिति शंक्यं ॥ हेमाद्रौ देवलः॥ललाटे पुंड्रकं दृष्ट्वा स्कंधे मालां तथैव च॥निराशाः पितरोयांति दृष्ट्वा च वृषलीपतिम्॥अत्र पुंड्रशब्देन वर्त्तुलमित्यपरार्कमदनरत्ननिर्णयसिंध्वादिभिरंगीकारा-त् ॥ माला तु पुष्पादेरेव श्राद्धकाले कर्त्तुर्निषिद्धेत्यन्यत्र विस्तरः॥ अतएवांगनानां न क्वाऽपि ऊर्ध्वपुंड्रविधानस्य शिष्टाचारोदरीदृश्य-ते॥एवमेव शैवस्मार्त्तादिस्त्रीणां भस्मत्रिपुंड्रादिधारणसंप्रदायोऽपी-त्यलं॥तस्मात् स्त्रीभिर्नोर्ध्वपुंड्रं कार्यं धार्यस्तु सर्वदा ॥ अमंदसौभ-गपदं गंधविद्वः ससुंदरः ॥ १ ॥

## ॥ अथ तृतीयोऽवांतरः प्रश्नः ॥ ३ ॥

तत्तद्द्रव्यभेदे च किं प्रमाणं ॥ ४३ ॥

## ॥ उत्तरं ॥

द्रव्यत्वेनोर्ध्वपुंड्रस्य मृद्गोपीचंदनादिमा॥विष्णोः प्रसादभूतं च प्रो-च्यते चंदनादिकं ॥ १॥ तथाहि ॥ स्कांदे मार्गशीर्षमाहात्म्ये ॥ शृ-णु वत्स प्रवक्ष्यामि पुंड्रं च त्रिविधं स्मृतं॥तुलसीमृत्स्नया सार्द्धं श्री-गोपीचंदनेन च॥हरिचंदनेन च ततः कार्यं तत्र विचक्षणैरिति॥तत्र पूर्वं मृदोनिरूप्यंते पराशरमाधवीये प्रथमाध्याये संध्यास्नानं-जपोहोमइत्यस्य व्याख्यायां ब्रह्मपुराणे ॥ पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः ॥ सिंधुतीरे च वल्मीके तुलसीमूलमाश्रिते ॥ मृदए-तास्तु संपाद्यावर्जयेत्त्वन्यमृत्तिकामिति ॥ चतुर्विंशतिमतव्याख्या-

चारकांडकमलाकराह्निकादिष्वपीमान्युदाहृतानि ॥ आचारप्रकाशे भारते ॥ पर्वताग्रे नदीतीरे रामक्षेत्रे विशेषतइति ॥ इतरत्पूर्ववत् ॥ तथा ॥ तत्रैव नीलकंठाह्निकादिषु च पाद्मे ॥ श्रीरंगे व्यंकटाद्रौ च श्रीकूर्मे द्वारिके शुभे ॥ प्रयागे नारसिंहाद्रौ वाराहे तुलसीवने ॥ गृहीत्वा मृत्तिकां भक्त्या विष्णुपादजलैः सह ॥ धृत्वा पुंड्राणि चांगेषु विष्णुसायुज्यमाप्नुयात् ॥ पर्वताग्रे नदीतीरे बिल्वमूले जलाशये ॥ सिंधुतीरे हरिक्षेत्रे विष्णुपादोदकान्विते ॥ पुंड्राणां धारणार्थाय गृह्णीयात्तत्र मृत्तिकां ॥ अभावे तूदकेनाऽपि पुंड्रं चेतत्सदाचरेदिति ॥ मदनपारिजाते तृतीयस्तबके आह्निकप्रकरणे व्यासआह॥जान्हवीतीरसंभूतां मृदं मूर्ध्ना बिभर्त्तियः॥बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलमिति॥इदमाचारप्रकाशेऽपि संगृहीतं॥धर्माब्धिसारेच (परि० ३) पूर्वार्द्धे आह्निकं प्रक्रम्य प्रातः पुंड्रं मृदा कुर्यादित्यारभ्य शिरसि वासुदेवेति मृदा तिलकोविधेयइत्यंतेन एतदेव स्फुटीकृतं॥पाद्मोत्तरखंडे तु ॥ यस्मिन्कस्मिन्महाभागावैष्णवाधारयंति वै ॥ तस्मिन्वैमृत्तिका ग्राह्या ऊर्ध्वपुंड्रस्य धारणइति ॥ अतश्चरणामृतादिमृत्तिकयाऽपि तिलकं युक्तं॥विष्णुपादजलैःसहेति वाक्यांतराऽनुगृहीतत्वाच्च॥आचारार्के तु ब्रह्मपुराणे ॥ गंगातीरसमुद्धृतामिति पादत्रयं पूर्ववत् ॥ नीलकंठाह्निके गारुडे ॥ तुलसीमृत्तिकापुंड्रं यः करोति दिनेदिने॥तस्याऽवलोकनात्पापं याति वर्षशतोद्भवं॥अथ गोपीचंदनं चिंत्यते॥तत्र आथर्वणोपनिषदि त्वस्यास्सैव विस्तरेण निरूपणं॥मदनपारिजाते उक्तस्थले सत्यतपाः ॥ गोमतीतीरसंभूतां गोपीदेहसमुद्भवां॥मृदं मूर्ध्ना वहेयस्तु सर्वपापैः प्रमुच्यतइति ॥ आचारप्रकाशेऽपि म-

हाभारते ॥ द्वारावत्युद्भवाद्गोपीचंदनादूर्ध्वपुंड्रकं ॥ कारयेन्नित्यमेवं हि पापं हंति दिनेदिनेइति ॥ धर्मप्रवृत्तौ ॥ ब्रह्मघ्नोवाऽथ गोघ्नोवा हैतुकः सर्वपापकृत् ॥ गोपीचंदनसंपर्कान्मुक्तोभवति तत्क्षणादिति ॥ नीलकंठाह्निके ब्रह्मपुराणे ॥ ब्रह्महा वाऽथ गोघ्नोवा पाखंडी सर्वपापकृत् ॥ गोपीचंदनसंपर्कात् पूतोभवति मानवः ॥ इत्थं चतुर्विंशतिमतव्याख्याकमलाकराह्निकरघुनाथभट्टाह्निकगोविंदार्णवाचारमयूखादिषु गोपीचंदनमहिमबोधकवचनानि बहून्येवोक्तानि तानि विस्तरभयादिह न लिख्यंते ॥ अथ भगवत्प्रसादभूतं गंधचंदनादिकं विचार्यते ॥ तत्र देवार्चनोत्तरं तदीयगंधेन तिलकं तु सुप्रसिद्धमेव ॥ यथोक्तमाचारमयूखे ब्रह्मांडे ॥ देवानभ्यर्च्य गंधेन सर्वपापापनुत्तये ॥ जलेन तिलकं कुर्याज्जलांतः कर्मसिद्धयइति ॥ भट्टोजिदीक्षितकमलाकराह्निकादिषु देवानभ्यर्च्य गंधेन एषधर्मः सनातनः ॥ जलमध्ये यदा संध्या तोयेन तिलकं तदेति ॥ आचारार्के च प्रयोगपारिजाते ॥ मृद्भस्म चंदनं प्रोक्तं तोयं चैव चतुर्थकं ॥ स्नात्वा पुंड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना ॥ देवानभ्यर्च्य गंधेन जलमध्ये जलेन त्विति ॥ अत्र देवप्रसादभूतगंधेनेत्येवाऽवगम्यते॥अभ्यर्च्येति पूर्वकालार्थकाव्ययस्य तदैव स्वारसिकतयाऽन्वयात्॥तथैव सति पापापनुत्तिरूपफलसंभवाच्च॥ अन्यथा श्रुतहान्यश्रुतकल्पनाप्रसंगाच्च ॥ किंच कौर्मे॥ यस्तु नारायणं देवं प्रपन्नः परमं पदं॥ धारयेत्सर्वदा पुंड्रं ललाटे गंधवारिभिरिति॥ अत्र धारयेत्सर्वदाशूलमिति क्वचित्पुस्तकेषु दृश्यमानः पाठस्तु श्रीपुरुषोत्तमचरणैरवतारवादावल्यां सगुणोपासकपरत्वेन सम्यग्व्यवस्थापितएवेति किमिहाऽप्रकृतेन तेन ॥ गौतमकृताचा-

रसूत्रेषु ( प्रश्न १ ) आन्हिकंप्रकृत्य ( खंड ७ ) नित्यस्नानंनिरूप्य ( खंड ८ ) संध्यादिसर्वकर्मवैफल्यवारणायाऽऽवश्यकोर्ध्वपुंड्रनिरूपणं प्रक्रम्य तत्र द्रव्यापेक्षायामुच्यते ॥ द्वारवत्युद्भवगोपीचंदनोर्ध्वपुंड्रधारणं नित्यं पापं हंति ॥ तथा ॥ जान्हवीतीरसंभूतं मृत्तिलकधारणं दृष्ट्वा ब्रह्महा शुध्येत् ॥ गोपीचंदनधारी सूर्यरूपं विभाति केवलं तमोनाशाय ॥ शालग्रामशिलालग्नं कुंकुमं चंदनं वा यस्तु धारयते समुक्तोभवतीति स्पष्टमेव भगवत्प्रसादभूतकुंकुमादेस्तिलकद्रव्यत्वं मुक्तिरूपसर्वोत्तमफलकत्वं चोक्तं ॥ गौतमीयतंत्रेऽपि सप्तमाध्याये आन्हिकमुपक्रम्य स्नानांतं निरूप्य ॥ ( श्लो० ६७ ) पीडयित्वांबरं चोरू प्रक्षाल्याचम्य वाग्यतः ॥धारयेद्वाससी शुद्धे परिधानोत्तरीयके ॥ अच्छिन्ने सदृशे शुक्ले आचामेत्पीठसंस्थितः॥ ऊर्ध्वपुंड्रं चंदनेन कृत्वा संध्यां समाचरेदिति ॥ पुनस्तत्रैव नवमाध्यायेऽपि मानसपूजामुपक्रम्य ॥ ( श्लो० १८ ) अथवा बाह्यसंभूतैः प्रकटैरर्चयेत् प्रभुं ॥ स्वागताद्यैर्निवेद्यांतैरात्माऽभेदेन पूजयेत्॥चंदनागुरुनिष्पंदचर्चितांगः स्वयं गुरुः॥विष्णुपंजरमंत्रेण तत्तत्स्थाने विधानवित्॥रचयेत्तिलकं भक्त्या प्रदीपकलिकानिभमिति ॥ अत्राप्यर्चनस्यानुपदमुक्तत्वात् भगवत्प्रसादभूतद्रव्येण तिलकं कर्त्तव्यमिति प्रतीयते ॥ किंच वस्तुतस्तु आथर्वणे तस्होवाच भगवान् वासुदेवः वैकुंठस्थानोद्भवं ममप्रीतिकरं मद्भक्तैर्ब्रह्मादिभिर्धारितं विष्णुचंदनं वैकुंठस्थानादाहृत्य द्वारकायां मया प्रतिष्ठितं चंदनं कुंकुमादिसहितं विष्णुचंदनं ममांगे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनात् गोपीचंदनमाख्यातं मदंगलेपनं पुण्यं चक्रतीर्थांतः स्थितमिति ॥ तथा चंदनस्य वैभवं यएवं

विद्वानिति ॥ तथा ॥ चंदनं वापि गोपीनां केलिकुंकुमसंभवमिति ॥ कृष्णगोपीरतोद्भूतं पापघ्नं गोपिचंदनं ॥ तत्प्रसादात्सर्वदेव चतुर्वर्गफलप्रदमित्यादिना गोपीचंदनस्याऽपि भगवत्प्रसादभूतकुंकुमत्वेनैव माहात्म्यं श्रावितमिति तत्प्रसादभूतकुंकुमचंदनादेः सर्वोत्तमत्वमेव ॥ अतएव मदनपारिजाते ब्रह्मपुराणे ॥ तिलकं तु द्विजः कुर्याच्चंदनेन यदृच्छयेतिवचनमुक्तं ॥ इदमाचारप्रकाशतैत्तिरीयनीलकंठाह्निककमलाकरकृतबह्वृचाह्निकप्रभृतिषु च संगृहीतं ॥ क्वचित्तु धर्मप्रवृत्तिस्मृत्यर्थसारनिर्णयसिंधुप्रभृतिषु अभ्यंगे सूतके चैव विवाहे पुत्रजन्मनि ॥ मांगल्येषु च सर्वेषु न धार्यं गोपिचंदनमिति निषेधोऽप्युदाहृतः ॥ अतोनित्यमावश्यकमंगलाचारैर्गृहस्थैस्तु गंधगोरोचनादिनैवोर्ध्वपुंड्रं सर्वकर्मवैफल्यवारणायावश्यकत्वाद्विधेयमिति केचित् ॥ नित्यं मंगलाचार धारणं तु विदधाति चतुर्थाध्याये प्रत्यहकर्त्तव्यधर्मेषु मनुः ॥ (श्लो० १४५) मंगलाचारयुक्तः स्यात् प्रयतात्मा जितेंद्रियः ॥ जपेच्च जुहुयाच्चैव नित्यमग्निमतंद्रितः ॥ मंगलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ॥ जपतां जुव्हतां चैव विनिपातोन विद्यतइति ॥ अतएवात्र अभिप्रेतार्थसिद्धिर्मंगलम् तद्धेतुत्वेन गोरोचनादिधारणमपि मंगलं ॥ गुरुसेवादिकमाचारस्तत्रोद्युक्तः स्यादिति कुल्लूकट्टोव्याचख्यौ ॥ इदंच गोरोचनादिधारणमूर्ध्वपुंड्ररूपेणैवेति निश्चीयते॥ जपहोमादिविनिपाताऽभावफलकत्वात् ॥साधारणस्य तादृशफलकत्वायोगात्॥कचिदपितद्बोधकप्रमाणानुपलंभात्॥ ऊर्ध्वपुंड्राहित्येन कृतजपादिविनिपातस्य तु स्वाध्यायजपहोमादि संध्यादानादिकं च यत्॥ऊर्ध्वपुंड्रं विना कुर्यात्तत्सर्वं निष्फलं भ-

वेदित्यादिवचनैर्धर्मप्रवृत्तिस्मृत्यर्थसारसमुच्चयमदनपारिजातादिषु व्यवस्थापितत्वाच्च॥धर्मप्रवृत्तौ तु द्रव्यांतरमप्युक्तं ॥ अभ्यंगोत्सव-कालेऽपि कस्तूरीचंदनादिनेति॥तथा तत्रैव ॥ ऊर्ध्वपुंड्रं मृदाकुर्या-त्तिर्यक्चैव तु भस्मना॥ चंदनेनोभयं कुर्यादन्यथा नरकं व्रजेत् ॥ अन्यथाभस्मनोर्ध्वपुंड्रकरणादौ सति॥ नीलकंठाह्निके ॥ नचोर्ध्वं धारयेद्भूतिं न तिर्यग्गोपिचंदनं॥तिर्यगूर्ध्वं च वृत्तं च धारयेच्चंदना-दिकं ॥ तत्रैव ब्रह्मांडे ऊर्ध्वपुंड्रं मृदा कुर्यात्त्रिपुंड्रं भस्मनासदा॥ति-लकं च द्विजः कुर्याच्चंदनेन यदृच्छया ॥ चतुर्विंशतिमतव्याख्या-चारकांडाचारमयूखादिषु संग्रहे॥ न कदाचिन्मृदा तिर्यङ् न्यसेदू-र्ध्वं न भस्मनेति॥ आचारार्के च प्रयोगपारिजाते॥मृदोर्ध्वपुंड्रं भ-स्मना तिर्यक् चंदनेनोभयमित्याह कात्यायनः॥ऊर्ध्वपुंड्रं मृदा कु-र्याद्भस्मना तु त्रिपुंड्रकं॥ उभयं चंदनेनैव अभ्यंगोत्सवरात्रिष्विति॥ परमानंदमंदारे पाद्मे॥ मृत्तिका चंदनं भस्म तोयं चैव चतुर्थकं॥ए-भिर्द्रव्यैर्यथालाभमूर्ध्वपुंड्रं विधीयते ॥ अत्रैव व्यासः ॥ ऊर्ध्वपुंड्रं मृदा कार्यं त्रिपुंड्रं भस्मना तथा ॥ चंदनेनोभयं कुर्यान्न तिर्यग्गो-पिचंदनादिति ॥ भट्टोजिदीक्षितकृताह्निककमलाकरभट्टाह्निका-चारमयूखेषु च ब्रह्मांडे॥ मृत्तिका चंदनंचैव भस्म तोयं चतुर्थकं॥ एभिर्द्रव्यैर्यथाकालमूर्ध्वपुंड्रं भवेत्सदा ॥ तत्रभस्मना पुंड्रं तु वैष्ण-वैर्न कार्यं॥न कदाचिन्मृदा तिर्यङ्न्यसेदूर्ध्वं न भस्म नेतिसंग्रहादिषु तन्नि षेधात् ॥ चतुर्विंशतिमतव्याख्यायां ब्रह्मांडवचनमुक्त्वा अत्र भस्मनोर्ध्वपुंड्रस्य विहितप्रतिषिद्धत्वाद्वृद्धाचारतोव्यवस्थेति कथना-त्॥नृसिंहभट्टीयेपि तस्य विहितप्रतिषिद्धत्वमुपपाद्य शिष्टाचारानु-साराद्व्यवस्थोक्तेश्च॥अतोहोमांते विद्धरेव कार्यः॥तथैव कात्यायन-

गृह्याद्यनुगृहीतात्तैत्तिरीयादीनां शिष्टाचारादित्यन्यत्रैव विस्तरः ॥ एवं चंदनादीनामप्यूर्ध्वपुंड्रद्रव्यत्वं व्याख्यातं ॥ किंच भवतामपि स्वधारणीये भस्मनि मिश्रणाय चंदनादीनां तत्तद्द्रव्याणामाग्रहोऽस्त्येव ॥ यथा बृहज्जाबालोपनिषदि तृतीयब्राह्मणे ॥ अथ भुशुंडः कालाग्निरुद्रं विभूतियोगमनुब्रूहीति सहोवाच विकटांगामित्याद्युपक्रम्य भस्मकरणांतं व्याख्याय श्राव्यते ॥ संयोज्य गांगसलिलैः कपिलामूत्रकेण वा ॥ चंद्रकुंकुमकाश्मीरमुशीरं चंदनं तथा॥अगरुत्रितयं चैव चूर्णयित्वा तु सूक्ष्मतः ॥ क्षिपेद्भस्मनि तच्चूर्णं ओमिति ब्रह्ममंत्रतः ॥ प्रणवेनाहरेद्विद्वान्ब्रह्मेति वटकानथ ॥ अणोरणीयानिति हि मंत्रेणच विचक्षणः॥इत्थं भस्म सुसंपाद्य शुष्कमादाय मंत्रविदिति॥तत्रैव चतुर्थब्राह्मणेऽपि भस्मनोद्धूलनमुपक्रम्य॥देवाग्निगुरुविप्राणां समीपेंऽत्यजदर्शने ॥ अशुद्धभूतले मार्गे कुर्यान्नोद्धूलनं व्रती॥शंखतोयेन मूलेन भस्मव्यामिश्रणं भवेत्॥योजितं चंदनेनाऽपि वारिणा संयुतं तु वा ॥ चंदनेन समालिपेज्ज्ञानार्थी चूर्णमेव तत्॥मध्याह्नात्प्राग्जलैर्युक्तं तोयं तदनुवर्जयेदिति ॥ शैवसुधाकरे तु धारिणासंयुतंतुवा ज्ञानार्थीभस्मचैवहीति पाठभेदादिदमुपन्यस्तं ॥ तत्रैव कौर्मे ॥ वैदिकैर्मंत्ररहितं चंदनागुरुकुंकुमं ॥ तिर्यक्पुंड्रात्मना धार्यं कांतिसौख्याभिलाषिभिरित्यादि ॥ यत्तु भस्मवच्चंदनादीनां त्यागेऽनर्थो न विद्यते ॥ चंदनादीन्यतोलौकिकान्येवात्र न संशयः ॥ दृष्टकांत्याद्यर्थं चंदनादेरुपरिभस्मनीत्यादीनि चंदनादीनां शोभादिदृष्टमात्रफलकत्वप्रतिपादकानि वचनान्युपन्यस्तानि ॥ तान्यप्रक्षिप्तत्वनिश्चये सति चंदनेनसमालिपेत्ज्ञाना-

र्यातिज्ञानरूपात्युत्तमादृष्टार्थकत्वप्रतिपादकजाबालश्रुतिविरोधा-
दप्रमाणानि सर्वावेष्टनस्मृतिवत् ॥ श्रुतिस्मृतिपुराणानां विरोधो-
यत्र दृश्यते ॥ तत्र श्रुतिर्बलिष्ठा स्याद्द्वयोर्द्वैधे स्मृतिर्वरेति लघुव्या-
सस्मरणात् ॥ द्वयोः स्मृतिपुराणयोः॥प्रपंचितं चैतत् विरोधे त्वनपे-
क्षं स्यादसति ह्यनुमानमित्यधिकरणे जैमिनिना ॥ नैवेद्यभक्षणवि-
चारादौ च शैवसुधाकरेऽपि तथैवांगीकृतं॥अमिश्रितयोः पृथक्पृथ-
क्धारणविषयाणि वा॥प्रकरणेन तथानिश्चयात्॥तस्मान्मिश्रद्रव्यै-
रपि पुंड्रधारणे न कस्यापि विवादइति कृतमतिशयेन ॥ अतएव
बहवः शिष्टा गोपीचंदनमिश्रेण भगवदुपभुक्तगंधचंदनादिनाऽपि
तिलकानि कुर्वंति॥एवंविधेषु निबंधेषु विविधवचनप्रचयोपन्या-
सेन तानि तानि तिलकद्रव्याणि निर्णीतान्येव॥तेषां च यथाकालं
यथाशिष्टाचारं यथास्वकुलधर्मं च व्यवस्था॥साधूनां समयश्चापि
प्रमाणं वेदवद्भवेदिति॥येनाऽस्यऽपितरोयातायेन याताः पितामहाः॥
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यतीत्यादिवाक्यैस्तथानिश्च-
यात् ॥ तस्मादिह न कोऽपि शंकावकाशः ॥ इत्थं ॥ स्तव्यानां
भुवि भव्यानां द्रव्याणां तिलके भिदा॥किंचित्प्राचीनवचनविचा-
रेण विनिश्चिता ॥ १ ॥

## ॥ अथ चतुर्थोऽवांतरः प्रश्नः ॥ ४ ॥

आकारभेदेचकिंप्रमाणं ॥ ४४ ॥

## ॥ उत्तरं ॥

चयावाचामनर्वाचां माधवाद्यैरुदाहृताः ॥ प्राचामाचारमिलिताः

पुंड्राकारविचारणे ॥ १॥ तथाहि ॥ पराशरमाधवीये प्रथमाध्याये ब्रह्मपुराणे ॥ वर्त्ति दीपाकृतिं वापि वेणुपत्राकृतिं तथा ॥ पद्मस्य मुकुलाकारं तथैव कुमुदस्यच ॥ मत्स्यकूर्माकृतिं वापि शंखाकारमतः परं ॥ दशांगुलप्रमाणं तु उत्तमोत्तममुच्यते ॥ नवांगुलं मध्यमं स्यादष्टांगुलमतः परं ॥ सप्तषट्पंचभिः पुंड्रं मध्यमं त्रिविधं स्मृतं॥चतुस्त्रिद्व्यंगुलैः पुंड्रं कनिष्ठं त्रिविधं भवेदिति॥नीलकंठान्हिकाचारप्रदीपचतुर्विंशतिमतव्याख्याप्रभृतिषु चैतान्युपलभ्यंते॥ इमान्येव वाक्यानि मदनपारिजाते ब्रह्मांडे भगवद्वाक्यत्वेन च लिखितानि॥आचारप्रकाशे तु दशांगुलप्रमाणमिति श्लोकद्वयं किंचित्पाठभेदेन आदित्यपुराणस्थमुदाहृतं ॥ आचारप्रकाशभट्टोजिदीक्षितान्हिककमलाकरान्हिकाचारमयूखादिषुच स्थानविशेषेण आकारविशेषः स्मर्यते ॥ निटिले बाहुवच्चैव दंडवत्कर्णपल्लवे ॥ हृदये कमलाकारमुदरे दीपवल्लिखेत् ॥ वेणुपत्रसमाकारं बाहुमध्येसमालिखेत् ॥ अधः पृष्ठे स्कंधदेशे लिखेज्जंबुफलाकृतिमिति॥ निटिले ललाटे ॥ भागवततत्त्वभास्करे तु स्मृतिसारे॥ललाटे ज्योतिषाकारं बाह्वोर्वै वंशपत्रवत्॥हृदये ऽश्वत्थपत्राभं शेषांगे तुलसीदलमिति ॥ तत्राऽपि निष्कामवैष्णवैस्तु ललाटे हरिचरणाकारं दंडाकारं वेत्येव धारणीयं नतु वेणुपत्राकारादि मोहनाद्यर्थत्वादिति सम्यग्भाति ॥ अतएव अवतारवादावल्यां पाद्मे ॥ अश्वत्थपत्रसंकाशोवेणुपत्रसमाकृतिः ॥ पद्मकुड्मलसंकाशोमोहनं चितयं स्मृतं ॥ महाभागवतः शुद्धः पुंड्रं हरिपदाकृति ॥ दंडाकारं तु वा देवि धारयेदूर्ध्वपुंड्रकमिति ॥ शुद्धोनिष्कामः ॥ नीलकंठान्हिकाचारप्रदीपादिषु ॥ नासामूलं समारभ्य वेणुपत्राकृतिं शुभं ॥ वश्यका-

मोद्विजः कुर्यात्तिलकं चंदनादिनेत्यादि ॥ तेन निटिले बाहुव-च्चैवेत्यंशस्तु सकामपरः ॥ उक्तपाद्मादिना तथाऽवगमात् ॥ अ-तएव तत्त्वदीपे श्रीमदाचार्याः ॥ दंडाकारं ललाटे स्यात्पद्माका-रं तु वक्षसि ॥ वेणुपत्रनिभं बाह्वोरन्यद्दीपाकृतिभवेदिति ॥ अत्र दंडाकारमिति चरणाकारस्याप्युपलक्षणं॥उक्तवक्ष्यमाणपाद्मवा-क्येपूभयोः प्रशंसनात्॥तयोस्स्वरूपं तु उपरि किंचिद्विस्तीर्णत्वे प-दाकृति ज्ञेयं समत्वे दंडाकृतीति ग्राह्यः॥इदं च सांतरालमेव कर्त्तव्यं॥ ऊर्ध्वपुंड्रं त्रिपुंड्रं वा मध्ये शून्यं प्रकल्पयेत्॥शृणु षण्मुख तन्मध्ये उ मया हं श्रिया हरिरित्याचारमयूखे चतुर्विंशतिमतव्याख्यायां क-मलाकराह्निके च प्रयोगपारिजाते संग्रहात्॥अवतारवादावलिभा गवततत्त्वभास्करादिषु महानिबंधेषु पाद्मे ॥ एकांतिनोमहाभागाः सर्वभूतहिते रताः॥सांतरालं प्रकुर्वंति पुंड्रं हरिपदाकृति ॥ ऊर्ध्वपुंड्र-मृजु सौम्यं सुपार्श्वं सुमनोहरं ॥ दंडाकारं सुशोभाढ्यं मध्येच्छिद्रं प्रकल्पयेत् ॥ ऊर्ध्वपुंड्रस्य मध्ये तु विशाले सुमनोहरे ॥ सांतराले समासीनोहरिस्तत्र श्रिया सह ॥ निरंतरालं यः कुर्यादूर्ध्वपुंड्रं द्वि-जाधमः ॥ सहि तत्र स्थितं विष्णुं श्रियं चैव व्यपोहति॥अच्छिद्र-मूर्ध्वपुंड्रं तु ये कुर्वंति द्विजातयः ॥ ते ललाटे तु सततं शुनः पादं न संशयइति ॥ बृहन्नारदीये पुरुषोत्तममाहात्म्ये विंशाध्याये (श्लो० २९ ॥) ऊर्ध्वपुंड्रमृजु सौम्यं दंडाकारं प्रकल्पयेत् ॥२९॥ ऊर्ध्वपुंड्रं त्रिपुंड्रं वा मध्ये छिद्रं प्रकल्पयेत् ॥ निवसत्यूर्ध्वपुंड्रे तु श्रिया सह हरिः स्वयं ॥ ३० ॥ त्रिपुंड्रे धूर्जटिः साक्षादुमया सह सर्वदा ॥ विना छिद्रं तु तत्पुंड्रं शुनः पादसमं विदुरिति ॥ भागवत-तत्त्वभास्करे पाद्मे ॥ नासादिकेशपर्यंत मूर्ध्वपुंड्रं सुशोभनं ॥ म-

ध्ये छिद्रसमायुक्तं तं विद्याद्धरिमंदिरं ॥ वामभागे स्थितोब्रह्मा दक्षिणे तु सदाशिवः॥ मध्ये विष्णुं विजानीयात्तस्मान्मध्येन लेपयेदिति ॥ अथाऽद्याऽपि यथाकालं गोपीचंदनादिना नाममुद्रादिमुद्राधारणं तु तिलकांतरालेऽपि विधेयमेव ॥ अतएवोर्ध्वपुंड्रविधावुक्तमाचारप्रकाशे॥ अत्र हलायुधीये विशेषः॥ मंत्रमष्टाक्षरं वाऽपि प्रीयते तस्य केशवः ॥ गोपीचंदनमुद्रां च कृत्वा भ्रमति भूतले॥ सोऽपि देशोभवेत्पूतः किं पुनर्यत्र संस्थितः ॥ पाद्मे ॥ कृष्णनामाक्षरैर्गात्रमंकयेच्चंदनादिना ॥ सलोकपावनोभूत्वा तस्य लोकमवाप्नुयात्॥तथा भगवद्वचः॥ममाऽवतारचिन्हानि दृश्यंते यस्य विग्रहे॥ मर्त्योमर्त्यो न विज्ञेयः सनूनं मामकी तनुरिति ॥ नीलकंठान्हिके च सनत्कुमारः ॥ कृष्णायुधांकितं देहं तोयचंदनतत्सया ॥ प्रयागादिषु तीर्थेषु सगत्वा किं करिष्यति ॥ यदायदा प्रपश्येत देहं शंखादिचिन्हितं ॥ तदातदा जगत्स्वामी तुष्टोहरति पातकमिति ॥ प्रथमश्लोकपूर्वार्द्धे यः कुर्यादिति शेषः ॥ कृतमनेनाप्रकृतप्रपंचनेन ॥ अस्तिहि मनुवचनं नापृष्टःकंचनब्रूयादिति ॥ तस्मात्तिलकानां तत्तदाकारभेदे न कोऽप्यप्रामाणिकत्वसंदेहगंधइति दिक् ॥ सारंसारं मया प्रोक्तमपारं शास्त्रमत्र तत्॥ नानाऽऽकारं यथाऽऽचारं सविचारं विधीयतां ॥ १ ॥

## ॥ अथ पंचमोऽवांतरः प्रश्नः ॥५॥

भारतादिमन्वादिस्मृतिष्वाचारादर्शाद्यान्हिकग्रंथेषु च तिलकविधानं नेति किम् ॥ ४५ ॥

दययाऽतिविराजमानोज्ञानप्रधानधिषणः प्रतिलब्धकाष्ठः॥अंतर्वि-रागसुभगोजितरागलोभः पूज्योगुरुर्गुरुतरोगिरिजे ममैषः॥सर्गादौ ब्राह्मणाः सृष्टावैष्णवत्वेन नोदिताः॥इतरे च त्रयोवर्णाः स्थितिर्बोध्या च वैष्णवीति॥तत्रैव गारुडे नारदः॥ गोपीचंदनसंभवं सुरुचिरं पुंड्रं ललाटे द्विजो नित्यं धारयते यदि प्रतिदिनं रात्रौ दिवा सर्वदा॥यत्पुण्यं कुरुजांगले रविग्रहे माघ्यां प्रयागे तथा तत्प्राप्नोति खगेंद्र विष्णुसदने संतिष्ठते देववत्॥पाद्मे॥मत्प्रियार्थं शुभार्थं च रक्षार्थं चतुरानन॥मत्पूजाहोमकालेच सायं प्रातः समाहितः॥मद्भक्तोधारयेन्नित्यमूर्ध्वपुंड्रं भवापहमिति॥स्कांदेऽपीदमेव वचनं॥आचारार्के तिलकप्रकरणे ब्रह्मपुराणे॥गंगातीरसमुद्भूतां मृदं मूर्ध्ना बिभर्त्ति यः॥बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलमिति॥पुनस्तत्त्वभास्करे ब्रह्मांडपुराणे॥वीक्ष्याऽऽदर्शे जले वाऽपि योविदध्यात्प्रयत्नतः॥ऊर्ध्वपुंड्रं महाभाग सयाति परमां गतिमिति ॥ स्कांदे मार्गशीर्षमाहात्म्ये ऽपीदं वाक्यं ॥ परमानंदमंदारे स्कांदे ॥ गोमतीतीरसंभूतां गोपीवापीसमुद्भवां ॥ मृदं मूर्ध्नावहेद्यस्तु सर्वपापात्प्रमुच्यतइति॥अवतारवादावल्यां स्कांदे मार्गशीर्षमाहात्म्ये ॥ मंत्रेणैवाऽभिमंत्र्याऽथ ललाटादिषु वैष्णवः ॥ धारयेदूर्ध्वपुंड्राणि यथासंख्यमतंद्रितः॥ब्रह्मन्द्वादशपुंड्राणि ब्राह्मणः सततं धरेदित्यादि॥ तिलककरणे विशेषस्तु पृथिवीचंद्रोदये ब्राह्मे ॥ सदर्भेण तु हस्तेन यः कुर्यात्तिलकं बुधः ॥ आचम्य सविशुध्येत दर्भत्यागेन चैव हीति ॥ एवमनेकेषु पुराणेष्विदं विस्तरेण निरूपितमस्ति ॥ तत्तत्पुराणादिवचनानि च प्रायः सर्वैरपि शिष्टविद्वद्भिः सर्वसाधारणमहानिबंधकारैरुदाहृतान्येवेति ॥ इदं निःशेषाशंकातूलजालस्य कालनाय म-

हाज्वालाऽनलकल्पं ॥ अथ यदुक्तं मन्वादिग्रंथेषु तद्विधानं नेति किमिति ॥ तत्र ब्रूमः ॥ बहुस्मृतिभिरुक्तं तद्वहुग्रंथेषु वर्णितं ॥ प्रशंसितं च मनुना सर्वाचारप्रशंसनात् ॥ तथाहि ॥ मन्वादीत्यादिशब्देन स्मृतयएव ग्राह्याः॥तुल्यत्वात् ॥ (याज्ञ०अ०१ श्लो०४) मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोंऽगिराइति ॥ (पराशर अ०१ श्लो० १४) श्रुतामे मानवाधर्मागार्गीयागौतमास्तथेत्यादि याज्ञवल्क्यपराशरादिस्मृतिवचोभिस्तथा निश्चयात् ॥ अस्ति च बहुस्मृतिषु ऊर्ध्वपुंड्रविधानं ॥ यथा निर्णयसिंधौ ( परिच्छेद २ ) वृद्धपराशरः ॥ ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुंड्रकं ॥ ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि ॥ निराशाः पितरोयांति दृष्ट्वा चैव त्रिपुंड्रकमिति ॥ इदं पृथ्वीचंद्रोप्युदाजहार ॥ माधवीये च सत्यव्रतः ॥ ऊर्ध्वपुंड्रमृजुसौम्यं ललाटे यस्य दृश्यते ॥सचांडालोऽपि शुद्धात्मा पूज्यएव न संशयइति ॥ इदं मदनपारिजातधर्मप्रवृत्तिपरमानंदमंदारकमलाकराह्निकादिष्वपि संगृहीतं॥आचारार्के व्यासः ॥ वामहस्ते जलं कृत्वा सावित्र्या चाऽभिमंत्रितं॥ तद्विष्णोरितिमंत्रेण मर्दयेन्मृत्तिकां ततः ॥ अतोदेवेतिसूक्तेन तिलकं धारयेत्सदा इत्याह ॥ परमानंदमंदारे गौतमः ॥ अंबरीष महाघस्य क्षयार्थं कुरु वीक्षणं ॥ ललाटे यैः कृतं नित्यं गोपीचंदनपुंड्रकमिति ॥ तत्रैव व्यासः ॥ आदाय पाणिना भक्त्या गंगातीरोद्भवां मृदं ॥ समर्चयति गात्राणि तस्य धर्मोन हीयतइति ॥एवंसंति तत्रतत्रोवात्तानि सुबहून्यूर्ध्वपुंड्रविधायकानि स्मृतिवचनानि ॥ किंच ॥ मनुनाऽपि प्रथमाध्याये ( श्लो० १०८,) आचारः परमोधर्मः श्रुत्युक्तः स्मार्त्तएवच ॥ तस्मादस्मिन् सदा युक्तो-

एवं महाभारते तत्तत्स्मृतिकाराणामपि पराशरादीनां प्रशंसादर्शनात्तत्तत्कृतस्मृतिषु चोऊर्ध्वपुंड्रविधेरुपलभ्यमानत्वात्तस्य भारतादृतत्वमायात्येव ॥ एतत्सर्वमभ्युपेत्यवादेन ब्रूमः ॥ वस्तुतस्तु सर्वसाधारणेषु स्मृतिप्रकाशाचारप्रकाशादिषु धर्मशास्त्रग्रंथेषूर्ध्वपुंड्रविधौ ॥ द्वारावत्युद्भवाद्गोपीचंदनादूर्ध्वपुंड्रकं॥ कारयेन्नित्यमेवंहि पापं हंति दिनेदिनइत्यादीनां स्पष्टतयोर्ध्वपुंड्रविधायकानां महाभारतवचनानां महाभारतस्थत्वलिखनपूर्वकमुदाहृतत्वान्महाभारतेऽपि प्रत्यक्षस्तत्तदुपलंभोऽस्त्येव॥ नीलकंठाह्निकप्रभृतिषु बहुष्वेव ग्रंथेषूर्ध्वपुंड्रविधौ भारते ॥ जान्हवीतीरसंभूतां मृदं मूर्ध्ना बिभर्ति यः ॥ बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलमिति वचनमुक्तं ॥कमलाकरभट्टरघुनाथभट्टभट्टोजिदीक्षिताह्निकग्रंथेषु तूर्ध्वपुंड्रविधिप्रक्रमे महाभारते॥ द्वारावतीमहाक्षेत्रे गोपीवापीसमुद्भवां॥ मृदमंगेन वहते न यमं पश्यते कदा ॥कदाचिदपीत्यर्थः ॥पुनरपि ॥ जान्हवीतीरसंभूतां मृदं भाले बिभर्तियः॥बिभर्त्ति रूपंसोऽर्कस्य तमोनाशाय केवलमिति श्लोकद्वयमप्युपन्यस्तं ॥एवं सर्वसाधारणेषु ग्रंथांतरेष्वपि द्रष्टव्यं ॥ अथ प्रश्ने भारतादीत्यादिशब्देन पुराणानि ग्राह्याणि ॥तुल्यकोटिकत्वात्॥तेषु चोपलभ्यतएव प्रत्यक्षतयोर्ध्वपुंड्रविधिरित्ययुक्तः प्रश्नः॥उपलब्धिस्तु दिङ्मात्रेण यथा बृहन्नारदीयेपुरुषोत्तममाहात्म्ये विंशेऽध्याये (श्लो० ११) ब्राह्मे मुहूर्त्ते चोत्थाय परं ब्रह्म विचिंतयेदत्यादिना आन्हिककथनमुपक्रम्योच्यते॥ (श्लो० २९ ) आचम्य तिलकं कुर्याद्गोपीचंदनमृत्स्नया ॥ ऊर्ध्वपुंड्रमृजुं सौम्यं दंडाकारं प्रकल्पयेत् ॥ २९ ॥ ऊर्ध्वपुंड्रं त्रिपुंड्रं वा मध्ये छिद्रं प्रकल्पयेत् ॥ निवसत्यूर्ध्वपुंड्रे तु श्रिया सह हरिः

स्वयं ॥ ३० ॥ त्रिपुंड्रे धूर्जटिः साक्षादुमया सह सर्वदा ॥ विना लिंद्रं तु तत्पुंड्रं शुनः पादसमं विदुः ॥ ३१ ॥ इत्यादि ॥ नचेदं तन्मासव्रतांगमेवेति शंक्यं ॥ वचनांतरैर्नित्यत्वावगमात् ॥ तत्राह्निकप्रसंगादवगम्यमानं तन्मासव्रतांगत्वं तु नित्यस्याऽपिसिद्ध्येत् ॥ नित्यस्याप्युपवीतस्य तैत्तिरीयसंहितायां उपव्ययतइति श्राविनदर्शांगत्ववत्॥अन्यथा तत्रोक्तानां संध्यावंदनादीनामपि प्रसंगात्तन्मासव्रतांगत्वावगमेन नित्यत्वं भज्येतेत्यलं ॥ किंच तत्रैव प्रथमाध्याये ( श्लो० ११।२० ) ऊर्ध्वपुंड्रधरं श्रीमन्नाममुद्राविराजितं ॥ शंखचक्रधरं दिव्यं गोपीचंदनमृत्स्नया ॥ लसच्छ्रीतुलसीमालं जटामुकुटमंडितं॥जपंतं परमं मंत्रं हरेः शरणमद्भुतमिति सूतवर्णनेनोर्ध्वपुंड्रकरणादेः स्पष्टमेव प्राचीनाऽऽचारत्वं बोध्यते ॥ अपिच ब्रह्मांडपुराणे ॥ ऊर्ध्वपुंड्रं मृदा कुर्यात्त्रिपुंड्रं भस्मना सदेत्यादिना निरूपितम्॥ तत्परिमाणं च आदित्यपुराणे दशांगुलप्रमाणं यदुत्तमोत्तममुच्यते इत्यादिनोक्तं ॥ ब्रह्मांडपुराणे ॥ अंगुष्ठः पुष्टिदः प्रोक्तोमध्यमाऽऽयुःकरी भवेत्॥अनामिकाऽन्नदा नित्यं मुक्तिदाच प्रदेशिनी ॥ एतैरंगुलिभेदैश्च कारयेन्न नखं स्पृशेदिति ऊर्ध्वपुंड्रकरणे प्रकारविशेषादिकमपि भगवता प्रतिपादितं ॥ आचारमाधवे प्रथमाध्याये ब्रह्मपुराणे ॥ पूजाकाले जपे होमे सायं प्रातः समाहितः ॥ नामान्युच्चार्य विधिना धारयेदूर्ध्वपुंड्रकमिति ॥ भागवततत्त्वभास्करे पाद्मे ॥ तुलसी कर्णमध्यस्था शंखचक्रं भुजद्वये ॥ऊर्ध्वपुंड्रं तथा भाले नामसंकीर्त्तनं मुखे ॥ रागद्वेषपरित्यागी सर्वत्र समदर्शनः॥विष्ण्वर्पिताखिलाचारः सवै वैष्णवउच्यते ॥ ससर्वभूत-

नित्यं स्यादात्मवान् द्विजइत्यादिना श्रुतिप्रसिद्धस्य च सर्वस्याप्याचारस्य अत्यावश्यकत्वकथनात् श्रुतिस्मृत्युभयप्रसिद्धस्योर्ध्वपुंड्रकरणस्याऽऽवश्यकत्वं तस्याऽप्यभिप्रेतमेव॥ अस्याप्यावश्यकाचारत्वं तु तैस्तैः सुप्रसिद्धैर्माधवादिशिष्टैराचारमाधवाचारार्चितामण्याचारप्रकाशाचारार्काचारमयूखधर्मप्रवृत्त्याचारप्रकरणाचारप्रदीपादिषु तत्रतत्र ग्रंथेषु प्रसिद्धेषु तत्तद्वचनोपन्यासेन प्रपंचितमेवेति किं बहुनोक्तेन ॥ ननु तथाऽपि मनुना स्पष्टं कंठरवेणोर्ध्वपुंड्रस्याऽनिरूपितत्वात्तस्याऽप्रामाणिकत्वमितिचेत् तर्हि भस्मधारण त्रिपुंड्रकरणरुद्राक्षभरणशिवाद्यर्चनादीनामप्यप्रामाणिकत्वं प्रसज्येत॥तद्ग्रंथस्यापि मनुस्मृतावदर्शनात्॥यदितु तेषां प्रमाणांतरे स्पष्टतयोक्तत्वान्नाप्रामाणिकत्वमित्युच्यते तर्ह्यूर्ध्वपुंड्रेऽपि बहुश्रुत्यादिसंमतत्वाद्बहुग्रंथप्रसिद्धत्वाच्च तुल्यमित्यलं ॥ यत्तूक्तं आचारादर्शाद्यान्हिकग्रंथेषु तिलकविधानं नेति किमिति ॥ तत्तु एकग्रंथमात्रप्रदर्शनप्रयुक्ताद्ग्रंथांतरेष्वपि तदनिरूपणभ्रमादेव ॥ (श्लो०१)

यत्रयत्रान्हिकं प्रोक्तं पुराणादिषु विस्तरात्॥शिष्टानां च निबंधेषु तत्रतत्रेदमीरितं ॥ तथाहि ॥ पुराणेषु पाद्मबृहन्नारदीयादिषु आन्हिकप्रस्तावेषु ऊर्ध्वपुंड्रमत्यावश्यकत्वेन निरूपितमेव ॥ तत्तद्वचनानि तु कानिचिदुक्तान्यधस्तात्॥अथ पौरुषेयेष्वपि सर्वदेशप्रसिद्धेषु ग्रंथेषु तत्प्रपंचनमुदाहरामः॥तत्र माधवकृतायां लघुपराशरस्मृतिव्याख्यायां॥चतुर्णामपि वर्णानां किंचित्साधारणं वदेति व्यासप्रश्नोत्तरभूतस्य (श्लो०३९) संध्या स्नानं जपोहोमोदेवतानां च पूजनं॥आतिथ्यं वैश्वदेवं च षट्कर्माणि दिनेदिनइति श्लोकस्य व्याख्याने॥तत्र साधरणाध्ययनादिप्रसंगेन बुद्धिस्थं साधारणमा-

न्हिकं संक्षिप्याहेत्यादिना आन्हिकं प्रस्तुत्य ब्राह्ममुहूर्त्तोत्थाना-
दि स्नानोत्तरवस्त्रधारणांतं निरूप्य अथोर्ध्वपुंड्रविधिर्ब्रह्मपुराणे द-
र्शितः॥पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतइत्यारभ्य सचंडालोऽपि
शुद्धात्मा पूज्यएव न संशयइतीत्यंतमेतत् प्रपंचितं॥एवं धर्मप्रवृत्तौ प्रा
रंभएव॥उषःकाले समुत्थाय चिंतयेदात्मनोहितं॥स्मृत्वा नारायणं
देवं स्तोत्राण्यपिच संजपेदित्यादिनाऽऽन्हिकं प्रक्रम्य स्नानपवित्र-
धारणादिकं निरूप्य अथ तिलकविधिः ॥ ललाटे तिलकं कुर्या-
दित्यारभ्य तर्पणं चापियच्छ्राद्धमन्यथानिष्फलंभवेदित्यंतं ऊर्ध्वपुं-
ड्रकरणं विधाय तदनंतरमेव संध्यादिनित्यकर्माणि व्याख्यातानि॥
मदनपारिजाते तृतीयस्तवकारंभे ॥ अथ गृहस्थस्तवकानंतरं गृह-
स्थोपयोगित्वादान्हिकमारभ्यते इति प्रतिज्ञायाऽग्रे॥अथ क्रमप्रा-
प्ततिलकविधिः ॥ ब्रह्मांडपुराणे ॥ भगवानुवाच ॥ अंगुष्ठः पुष्टिदः
प्रोक्तोमध्यमाऽऽयुःकरी भवेदित्यारभ्य अर्द्धचंद्रं तु वैश्यस्य वर्त्तुलं
शूद्रजातिष्वित्यंतं ऊर्ध्वपुंड्रकरणं प्रत्यहं स्पष्टतयोदितं ॥ स्मृतिप्र-
काशेऽप्याचारप्रकाशे प्रथमप्रकरणे ॥ अथप्रबोधः ॥ अंगिराः॥उ-
त्थाय पश्चिमे यामे रात्रिवासः परित्यजेत् ॥ प्रक्षाल्य हस्तपादा-
स्यमुपस्पृश्य हरिं स्मरेदित्यादिनाऽऽन्हिकमुपक्रम्य शुद्धवस्त्रधार-
णांतमुक्त्वा अथ तिलकं ब्राह्मे ॥ ऊर्ध्वपुंड्रं मृदा कुर्यादित्यारभ्य
मर्त्योमर्त्यो न विज्ञेयः सनूनं मामकी तनुरित्यंतेन ऊर्ध्वपुंड्रकरणं
विधाय ततोमुद्राधारणं च विधाय तदुत्तरमेव संध्यावंदनादिकं नि-
रूपितं॥आचारार्के च आन्हिकप्रस्तावे अथ तिलकं॥ललाटे तिलकं
कृत्वा संध्याकर्म समाचरेदित्यारभ्य अतोदेवेतिसूक्तेन तिलकं
धारयेत्सदा इत्याह॥एवं यथासंप्रदायं तिलकं कुर्यादित्यंतं तद्विस्तरे-

णोक्तं॥धर्माब्धिसारे तृतीयपरिच्छेदे आन्हिकनिरूपणे॥अथ तिलकविधिः॥प्रातः पुंड्रं मृदा कुर्यादित्यारभ्य मृदा तिलकोविधेयइत्यंतेन तदेव विधाय संध्यावंदनाद्युक्तं॥स्मृतिसंग्रहे॥ब्राह्मे मुहूर्ते स्वगुरुं विबुद्धं नत्वा ऽथ संचिंत्य गृहस्थकृत्यमित्यादिनाऽऽन्हिककथनं प्रकृत्य स्नानांतमुक्त्वा ॥ द्वारावतीपर्वतसिंधुतीर्थतीरात्समादाय मृदं तुलस्याः ॥ अनामिकाद्यंगुलिभिर्विहाय कनिष्ठिकां द्वादशनामभिश्च ॥ अथोर्ध्वपुंड्रं बिभृयाल्ललाटे ततश्च नाभौ हृदये च कंठे ॥ पार्श्वे च कर्णांतरपार्श्वबाहुमूले श्रुतौ पृष्ठगलोत्तमांगे ॥ ततोऽरजन्यां दिवसे च संधौ संध्यामुपासीत दिवा न रात्राविति तदेवाभिहितं ॥ एवमेव हेमाद्र्याचारचिंतामणिपृथ्वीचंद्रोदयनिर्णयसिंधुभागवततत्त्वभास्कराचारमयूखप्रयोगपारिजातचतुर्विंशतिमतव्याख्यानीलकंठान्हिकवह्वृचान्हिकनागदेवान्हिकरघुनाथभट्टान्हिकस्मृतिदर्पणगोविंदार्णवकृष्णभट्टपद्धतिमदनरत्नपरमानंदमंदारकमलाकरान्हिकप्रभृतिभिः सर्वसाधारणैर्बहुशिष्टसंमतैरखिलग्रंथदुंदुभिसंदोहैरमंदमुद्घुष्टोयमूर्ध्वपुंड्रविधिरिति ग्रंथानामनंतत्वाद्विरम्यते लेखनप्रयासात् ॥ किंचोर्ध्वपुंड्रकरणस्य शिष्टाचारोऽप्यनादिसिद्धः सर्वदेशप्रसिद्धएव ॥ अतएव प्राञ्चोमहाकवयोऽपीदमवर्णयन् ॥ यथा जान्हवीतीरसंभूतामित्यस्याऽर्थउपनिबद्धः पंडितराजजगन्नाथेन गंगालहर्यां ॥(श्लो०) ललाटे या लोकैरिह खलु सलीलं तिलकिता तमोहंतुं धत्ते तरुणतरमार्त्तंडतुलनाम् ॥ विलुंपंती सद्योविधिलिखितदुर्वर्णसरणिं त्वदीया सा मृत्स्ना मम हरतु कृत्स्नामपि शुचमिति ॥ एवमितरत्राऽपि द्रष्टव्यं ॥ ननु तथापि ॥ दीक्षितोरणयज्ञेषु विबुधानंददायिषु ॥ हरिरब्धिसुतावक्त्र-

सोमपीती पुनातुवइत्यादिस्यकवनेन दर्शितविष्ण्वेकभक्तिरप्याचा॰
रादर्शकारः कथमूर्ध्वपुंड्रं न निरूपितवान् ॥ यतश्च सतन्ननिरूपि॰
तवानतोऽप्रामाणिकमेव तदिति चेन्नैवं ॥ नह्येकग्रंथाऽनिरूपितत्वे॰
न बहुश्रुत्यादिमूलकस्य सर्वग्रंथसंमतस्य तस्याऽप्रामाणिकत्वं वक्तुं
शक्यं ॥ यदिच तावता तच्छक्यं तर्हि त्रिपुंड्रादीनामपि तत्स्यात् ॥
तत्राऽनिरूपितत्वात् ॥ किंच प्रसिद्धसर्ववेदशाखाव्याख्यात्रा सर्व॰
शास्त्रनिपुणेन श्रौतस्मार्त्तोभयमीमांसादिपारीणेन सर्वजनीनमहा॰
पांडित्यप्रभावेण माधवेन पराशरस्मृतिव्याख्यायामाह्निकनिरू-
पणे विस्तरेणोर्ध्वपुंड्रस्याऽऽवश्यकत्वनिरूपणात् त्रिपुंड्रस्य च ना॰
म्नोऽप्यलिखनात् कमलाकरभट्टकृतवह्वृचाह्निकादिष्वपि ग्रंथवि॰
शेषेपूर्ध्वपुंड्रमात्रस्य विहितत्वात् त्रिपुंड्रकरणगंधस्याऽप्यभावाच्च प्र॰
त्युत तस्यैवाऽमाप्राणिकत्वं सर्वथा वक्तुं शक्येत ॥ वस्तुतस्तु ऊर्ध्व॰
पुंड्रस्य सर्वसाधारणत्वादाचारादर्शस्य च वाजसनेयिशाखीयाना॰
मेव प्रत्यहकर्त्तव्यधर्मप्रपंचनार्थं प्रवृत्तत्वात्तत्र तदनिरूपणेऽपि न
क्षतिः ॥ प्रतिज्ञातं चेदं तेनैवारंभे ॥ अहोरात्राश्रितोधर्मइह वाज-
सनेयिनां ॥ निवध्यते निवद्धोयोधर्मशास्त्रनिवंधिभिरिति॥नचैता॰
वता वाजसनेयिनामपि तदनावश्यकत्वं शंक्यं ॥ नागदेवकृताचा॰
रप्रदीपादिषु तच्छाखीयानामेवाह्निकनिरूपकग्रंथांतरेषु तस्याऽ॰
त्यावश्यकत्वप्रतिपादनात् ॥ अतश्चजनाः ॥ चित्तं तिलकनैर्मूल्या॰
शंकापंककलंकितं ॥ क्षालयंत्वार्षवाग्रूपैः शीतलैर्विमलैर्जलैः॥१॥

## ॥ अथ षष्ठोऽवांतरः प्रश्नः ॥ ६ ॥

अतएव तिलकावश्यकतायाश्च किं प्रयोजनं ॥ ४६ ॥

( अयमस्याशयः॥अत्र अतएवेत्यनेन पूर्वोक्तं भारतादिग्रंथानुक्तत्वं तत्सिलंतसर्वनाम्ना हेतुत्वेन परामृश्यते॥ तथाच यद्यूर्ध्वपुंड्रमावश्यकं स्यात्तर्ह्युक्तग्रंथेषु विहितं स्यात् नत्वेवं अतोनैतदावश्यकमिति ॥ )

## ॥ उत्तरं ॥

दत्तोत्तरस्तव प्रश्नः पूर्वप्रश्नोत्तरेण मे॥ग्रंथेष्वविहितत्वं हि प्रश्नबीजमिहेक्ष्यते ॥ १ ॥ सर्वग्रंथेषु तु मया विहितत्वं विवेचितं ॥ हेत्वभावादतः प्रश्नोऽवतरीतुं न सोऽर्हति ॥ २ ॥ तथाऽप्युत्तरदानस्यौत्सुक्याद्वक्ष्यामि किंचन॥प्रच्छकाभावतोऽतोपोवैष्णवानां यतोमहान् ॥ ३ ॥ सर्वान्हिकेषु संध्यादिवन्नित्यत्वनिरूपणात् ॥ तद्राहित्ये च वैफल्यश्रावणात्सर्वकर्मणां ॥ ४ ॥ अग्निहोत्रेण तौल्यातिदेशाद्दोषादधारणे ॥ सर्वेषामूर्ध्वपुंड्रं तदत्यावश्यकमिष्यते ॥५॥ तत्र सर्वत्राऽऽन्हिकग्रंथेषु निरूपितत्वेन नित्यत्वं प्रागेवाऽनुपदं प्रपंचितं॥अथोपवीतादिराहित्यवदूर्ध्वपुंड्रराहित्येपि कृतानां नित्यानामपि संध्यावंदनादिसर्वकर्मणां नैष्फल्यकथनात्तस्यावश्यकत्वं निर्विचिकित्सं सिध्यति ॥ तथाहि ॥ स्कांदे मार्गशीर्षमाहात्म्यचतुर्थाध्याये ब्रह्माणं प्रति भगवान् ॥ ( श्लो० १३ ) तस्माद्धार्या प्रयत्नेन माला तुलसिसंभवा ॥ पद्माक्षनिर्मिता भक्त्या फलैर्धात्र्याः सुपुण्यदा ॥ तदूर्ध्वपुंड्रशंखाद्यैर्युक्तस्तुलसिभूषणैः ॥ १४ ॥ संध्यो-

पास्यादिकं कुर्यात् कुशपाणिर्हिमां स्मरन् ॥ कृतसंध्यादिकोभक्त-स्ततः संपूजयेच्च मामिति ॥ आचारमाधवे प्रथमाध्याये ब्रह्मांडे ॥ पूजाकाले जपे होमे सायं प्रातः समाहितः॥नामान्युच्चार्य विधिना धारयेदूर्ध्वपुंड्रकमिति॥नीलकंठान्हिकादिषु चेदमुदाहृतं॥ आचारार्केच प्रयोगपारिजाते॥ललाटे तिलकं कृत्वा संध्याकर्म समाचरेत्॥अकृत्वा भालतिलकं तस्य कर्म निरर्थकमिति॥कमलाकरान्हिकस्मृतिदर्पणादिषु चेदमुपन्यस्तं ॥ तत्रैव बृहन्नारदीये॥स्नानं दानं जपोहोमः संध्या स्वाध्यायकर्म च ॥ ऊर्ध्वपुंड्रविहीनेन तत्सर्वं निष्फलं भवेत् ॥ कमलाकरान्हिके तु स्नानंदानमितिबृहन्नारदीयवचनमुक्त्वा ॥ ऊर्ध्वपुंड्रविहीनस्तु द्विजः संध्यादिकं चरेत् ॥ तत्सर्वं राक्षसैर्नीतं नरकं चाधिगच्छतीति तत्रत्यमेव वचनांतरमुदाहृतं॥गोविंदार्णवे कृष्णभट्टपद्धतौच॥इह प्रथमश्लोकोत्तरार्द्धं कृतमितिशेषः॥ क्वचिद्विहीनस्येतिपाठः ॥ परमानंदमंदारे मदनपारिजाते कमलाकरकृतवह्वृचान्हिके हेमाद्रौ च ब्रह्मपुराणे॥ यागोदानं तपोहोमः स्वाध्यायः पितृतर्पणं॥भस्मीभवति तत्सर्वमूर्ध्वपुंड्रं विना कृतमिति॥ इदमेव वाक्यं स्कांदे मार्गशीर्षमाहात्म्येऽपि दृश्यते॥ हेमाद्रौ ॥जपे होमे तथा दाने स्वाध्याये पितृकर्मणि ॥ तत्सर्वं नश्यति क्षिप्रमूर्ध्वपुंड्रं विना कृतमिति ॥ धर्मप्रवृत्तौ ॥ जपोहोमस्तथा दानं स्वाध्यायः पितृतर्पणं ॥ व्यर्थं भवति तत्सर्वमूर्ध्वपुंड्रं विना कृतं ॥ ललाटे तिलकं धृत्वा कुर्य्युः शैवाश्च वैष्णवाः ॥ तर्पणं चाऽपि यच्छ्राद्धमन्यथा निष्फलं भवेदिति ॥ स्मृतिसंग्रहे पि ॥ अथोर्ध्वपुंड्रं विभृयाल्ललाटे ततश्च नाभौ हृदये च कंठे ॥ पार्श्वे च कर्णांतरपार्श्वबाहु-

मूले श्रुतौ पृष्ठगलोत्तमांगे ॥ ततोरजन्यां दिवसे च संधौ संध्यामुपासीत दिवा न रात्रौ ॥ माध्यान्हिकी चेद्दिवसस्य मध्ये त्वध्यर्धयामादपराह्णतः प्रागिति ॥ अत्रापि ततइति तच्छब्देनानुपदविहितस्योर्ध्वपुंड्रधारणस्यैव परामर्शात्तद्धारणानंतरमेव त्रैकालिकसंध्यात्रयं कर्त्तव्यमिति निश्चीयते ॥ धर्मप्रवृत्तौ च स्मृतिसारसमुच्चये ॥ स्वाध्यायजपहोमादि संध्यादानादिकं च यत् ॥ ऊर्ध्वपुंड्रं विना कुर्यात्तत्सर्वं निष्फलं भवेत् ॥ आचारप्रकाशे मुद्राप्रकरणे ब्रह्मांडे ॥ तदूर्ध्वपुंड्रशंखाद्यैर्युतस्तुलसिभूषणैः ॥ संध्योपास्त्यादिकं कुर्यात्कुशपाणिर्हरिं स्मरेत् ॥ निर्णयसिंधौ बृहन्नारदीये ॥ यज्ञोदानं जपोहोमः स्वाध्यायः पितृकर्म च ॥ वृथा भवति विप्रेंद्राऊर्ध्वपुंड्रं विना कृतमिति ॥ आचारमयूखे च शौनकः ॥ ऊर्ध्वपुंड्रं शिवस्यैवं विष्णोः कुर्युश्च वा बुधाः ॥ मूर्ध्नि मूलेन मंत्रेण शेषं द्वादशनामभिः ॥ स्थानेष्वेषु द्विजः स्नात्वा नमोंतैः प्रणवेन चेति ॥ भट्टोजिकमलाकराद्याह्निकग्रंथेषु चेदं संगृहीतमस्ति॥अतः शैवानां वैष्णवानां च सर्वेषामपि क्रियमाणनित्यनैमित्तिकादिनिःशेषकर्मसाफल्यार्थमुपवीतादिवदूर्ध्वपुंड्रधारणमपि सर्वथा आवश्यकमेव ॥ तत्राऽपि त्रैवर्णिकानांतु अग्निहोत्रादिवन्नित्यश्रौतकर्मरूपत्वान्नित्यादिसर्वकर्मसाफल्यकरत्वाच्च तद्धारणमत्यंततराऽऽवश्यकमेव ॥ तथाच धर्मप्रवृत्तिस्मृत्यर्थसारनिर्णयसिंधुप्रभृतिषु स्मृतिः ॥ ऊर्ध्वपुंड्रं द्विजातीनामग्निहोत्रसमोविधिरिति ॥ ननु तथापि श्राद्धकाले नेदं भाले धार्यं ॥ यथाऽऽह हेमाद्रौ देवलः ॥ ललाटे पुंड्रकं दृष्ट्वा स्कंधे मालां तथैवच ॥ निराशाः पितरोयांति दृष्ट्वा च वृषलीपतिमिति ॥ संग्रहे ॥ ऊर्ध्वपुंड्रं द्विजातीनामग्निहोत्रसमोविधिः॥

श्राद्धकाले तु संप्राप्ते कर्त्ता भोक्ता च तत्त्यजेत् ॥ वामहस्ते च दर्भास्तु गृहे रंगवलिं तथा ॥ ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताइति ॥ इत्थं निषेधदर्शनादितिचेन्मैवं ॥ देवलवचने पुंड्रं वर्त्तुलमेवेत्यपरार्कमदनरत्नसिंध्वादिभिरंगीकारात् ॥ पृथ्वीचंद्रस्तु पुंड्रं त्रिपुंड्रं॥ऊर्ध्वं च तिलकं कुर्यान्नकुर्याद्वै त्रिपुंड्रकं॥ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि॥निराशाः पितरोयांति दृष्ट्वा चैव त्रिपुंड्रकमिति बृहत्पराशरोक्तेरित्याह॥तस्मादूर्ध्वपुंड्रं तु कर्तृभोक्तृभ्यामवश्यं कार्यमेव॥ऊर्ध्वपुंड्रधरं विप्रं यः श्राद्धे भोजयिष्यति ॥आकल्पकोटिपितरस्तस्य तुष्टान संशयः॥ऊर्ध्वपुंड्रधरोयस्तुश्राद्धं कुर्याच्छुभानने ॥ कल्पकोटिसहस्राणि गयाश्राद्धफलं लभेदिति पाद्मात् ॥ यत्तु कर्त्ताभोक्ताचतत्त्यजेदित्युक्तं ॥तदवैष्णवानां काम्यश्राद्धादिविषयं ॥ स्कांदपाद्मयोः ॥मद्भक्तोधारयेन्नित्यमूर्ध्वपुंड्रं भवाऽपहमिति वैष्णवस्य नित्यं तद्विधानात्॥भवाऽपहमित्यनेन भगवद्भक्तातिरिक्तानां तस्य काम्यानुपयोगित्वबोधनाच्च ॥नित्येषु श्राद्धतर्पणादिपितृकर्मसु ऊर्ध्वपुंड्रावश्यकतायादह पूर्वोपन्यस्ताद्यनेकवचनसमुदायैर्मुहुर्मुहुरभ्यस्तत्वाच्च ॥ आचारमयूखभट्टोजिकृताह्निकप्रभृतिषु मद्भक्तोधारयेन्नित्यमूर्ध्वपुंड्रं विना तु तत्॥ यत्कर्म कारयेन्नित्यं तत्सर्वं निष्फलं भवेदिति वैष्णवानां तु विशेषतएव विपक्षेबाधोपलब्धेश्च ॥ तस्मादिदं वैष्णवानां सर्वथा श्राद्धादिकालेऽप्यत्याज्यमेव॥अतएव निर्णयसिंधौ श्राद्धप्रकरणे॥ऊर्ध्वपुंड्रनिषेधमाशंक्य अत्राऽऽचाराद्व्यवस्थेत्युक्तं॥ऊर्ध्वपुंड्रं च तुलसीं श्राद्धे नेच्छंति केचनेति बृहन्नारदीये केचनेत्यनेन श्राद्धे तदधारणस्य स्वल्पैकदेशिमात्राचारत्वबोधनात् ॥ ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च

कर्मणीतिबृहत्पराशरादिभिस्तस्य सार्वत्रिकत्वोक्तेश्च ॥ नचैतावता शैवानां संध्यावंदनादिषु वैफल्यवारणायोर्ध्वपुंड्रस्याऽऽवश्यकत्वेऽपि श्राद्धकाले तु तेषां तदनावश्यकं ॥ विधेर्वैष्णवपरत्वेन निषेधस्यच शैवपरत्वेनोपसंहारे व्यवस्थितिसामंजस्यादितिवाच्यं ॥ ललाटे तिलकं धृत्वा कुर्युः शैवाश्च वैष्णवाः॥तर्पणंचाऽपि यच्छ्राद्धमन्यथानिष्फलं भवेदिति धर्मप्रवृत्तौ श्राद्धकालेऽपि शैवानां वैष्णवानां चोभयेषामपि कंठरवेणोद्दिष्टानां तदावश्यकत्वविधानात् ॥ नचाऽत्र तिलकशब्दस्य त्रिपुंड्रपरत्वेनाऽपि निर्वाहः शंक्यः ॥ अप्रसिद्धत्वात् ॥ पृथ्वीचंद्रोदयादिषु वृद्धपराशरादिभिर्दैवपित्र्ययोस्तन्निषेधाच्च ॥ आचारमयूखचतुर्विंशतिमतव्याख्यादिषु ॥ ऊर्ध्वपुंड्रं शिवस्यैवं विष्णोः कुर्युश्च वा बुधाः॥मूर्ध्नि मूलेन मंत्रेण शेषं द्वादशनामभिरिति शौनकेन सर्वकालेपूभयेषामपि स्पष्टतयोर्ध्वपुंड्रविधानाच्च ॥ ललाटे तिलकं दृष्ट्वा निराशाः पितरोगताइति संग्रहोक्तिस्तु पिंडदानात् प्राक् चंदनतिलकविषया ॥ निर्णयसिंधौ ॥ प्राक् पिंडदानाद्गंधाद्यैर्नालंकुर्यात् स्वविग्रहमित्याश्वलायनोक्तेः ॥ अतएव धर्मसिंधौ उत्तरार्धे॥चंदनतिलकस्तु पिंडदानात्प्राक्कर्तुर्वर्ज्यः भोक्तुस्तु भोजनकालात्प्राग्वर्ज्यइति श्राद्धप्रकरणे उक्तं ॥ अतएवच सांप्रदायिकाः श्राद्धे चरणामृतमृत्तिकयोर्ध्वपुंड्रं कुर्वंति ॥ कर्ता भोक्ता च तत्त्यजेदितिनिषेधः पिंडदानात्प्राक्कर्तृशैवपरोवा अस्तु॥ऊर्ध्वपुंड्रं त्रिपुंड्रं वा चंद्राकारमथाऽपिवा ॥ श्राद्धकर्ता न कुर्वीत यावत्पिंडान्न निर्वपेदिति निर्णयसिंधौ विश्वप्रकाशे च वचनात् ॥ पूर्वोक्तपाद्मस्कंदादिवचननिचयैकवाक्यतया ऽस्य शैवपरत्वेनैवोपसंहरणीयत्वाच्च॥भोक्तुस्तु शैवश्राद्धेऽपि नोर्ध्वपुंड्रनिषेधः॥

अतएव धर्मा॰ब्धिसारे श्राद्धप्रकरणे॥कर्तुर्ललाटे ऊर्ध्वपुंड्रादेर्विकल्पः॥ भोक्तुस्तु भवत्येवेत्युक्तं॥पिंडदानात् प्राक् शैवस्य निषेधः वैष्णवस्य तु तन्नित्यत्वात्सार्वदिकमेवेत्येवं व्यवस्थितोविकल्पइत्यर्थः॥वचनाऽनुगृहीतत्वात्॥तथैव सार्वत्रिकशिष्टाचाराच्च॥शैवभिन्नैस्तु कर्तृभिरपि श्राद्धोपक्रमएवोर्ध्वपुंड्रं कार्यं॥ अतएव निर्णयासिंधौ श्राद्धोपक्रममुक्त्वा ततः कर्त्ता ऊर्ध्वपुंड्रं कुर्यादित्यारभ्य सविस्तरं कर्त्तुरपि तदावश्यकत्वं निर्णीतं॥ भोक्तुस्तु सर्वस्याऽपि सर्वत्राऽऽरंभादेवोर्ध्वपुंड्रमावश्यकं॥ निरतिशयपितृतृप्त्यादिफलकत्वात्॥ तद्रहितस्य मुखदर्शननिषेधाच्च॥ तदग्रे व्याख्यास्यामः॥ किंतु भोक्तॄणां त्रिपुंड्रादिकमेव निषिद्धं॥ अतएव कमलाकरभट्टेन श्राद्धे ब्राह्मणपूजानिरूपणमुपक्रम्य गंधदानांतं निरूप्य गंधेन ब्राह्मणभाले किमूर्ध्वपुंड्रमेव कार्यं पुंड्रांतरमपि वा विधेयमिति संशयवारणार्थं विप्राणां गंधेन वर्तुलं त्रिपुंड्रं वा न कार्यमित्यादिना त्रिपुंड्रादिनिषेधपूर्वकमूर्ध्वपुंड्रस्यैवाऽऽवश्यकत्वं व्याख्यातमिति कृतं प्रसक्तानुप्रसक्त्या॥ तदधारणे प्रत्यवायं च पुरस्तात्पुनः किंचित्प्रपंचयिष्यामः॥ नचैवमकरणे प्रत्यवायजनकतया नित्यत्वे महापुण्यजनकत्वनिरूपकवचनविरोधः शंक्यः॥ अकरणे प्रत्यवायोत्पादकत्वेन नित्यानामप्यग्निहोत्रादीनां स्वर्गादिफलकत्ववन्नित्यस्याप्यूर्ध्वपुंड्रधारणस्य फलांतरसमर्पकत्वसंभवेन नित्यत्वबाधायोगात्॥ वचनविरोधाभावात्॥ सर्वसाधारणग्रंथेष्वेवमावश्यकं मतं॥ ऊर्ध्वपुंड्रं तु शैवानां वैष्णवानां च सर्वदा॥ १ ॥ समुदाहृतमद्वाक्यसमुदायादिदं बुधाः॥ समुदारेण मनसा समुदाऽरं विबुध्यतां॥ २ ॥

## ॥ अथ सप्तमोऽवांतरःप्रश्नः ॥७॥

विजातीयतिलकनिंदायां च किं प्रमाणं ॥ ४७ ॥

## ॥ उत्तरं ॥

अरविंदाक्षचरणारविंदमकरंदपाः ॥ न निंदामोविजातीयं वयं तु तिलकादिकम् ॥ १ ॥ न नियमपि निंदंति शिष्टाअद्वैतवादिनः ॥ किमु शास्त्रोदितं तर्हि गर्हणीयं भवेद्धितैः ॥ २ ॥ शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥ इति न्यायेन नाचार्यैः किंचिदप्यस्ति निंदितम् ॥ ३ ॥ न भजामोविजातीयमन्यधर्मतयो वयं ॥ स्वधर्मे निधनं श्रेयः परधर्मोभयाऽऽवहः ॥ ४ ॥ अधारणात्कृता निंदेतिचेन्नैवं स्वशाखया ॥ विहितस्य कृतौ नाऽन्यशाखानिंदा प्रसज्यते ॥ ॥ ५ ॥ तथाऽपि किंचिद्वक्ष्यामोभवत्प्रश्नानुसारतः ॥ सुरूपं वा कुरूपं वा तादृक् दृश्येत दर्पणे ६॥ ब्राह्मणैस्तु सर्वैरावश्यकत्वादूर्ध्वपुंड्रमेव धार्यं तस्यैव विष्णुचिन्हत्वात् नतु देवतांतरचिन्हानि त्रिपुंड्रादीनि तेषां विष्णुचिन्हमात्रधारणविधानात् ॥ त्रिपुंड्रादिधारणे बहुलनिषेधोपलब्धेश्च ॥ तथाहि॥ आचारमाधवे द्वितीयाध्याये बौधायनः ॥ ब्राह्मणानामयं धर्मोयद्विष्णोर्लिंगधारणं ॥ राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचइति ॥ तत्रैव स्मृत्यंतरे ॥ मुखजानामयं धर्मोयद्विष्णोर्लिंगधारणं ॥ बाहुजातोरुजातानां नाऽयं धर्मोविधीयतइति ॥ नचोर्ध्वपुंड्रस्य कथं विष्णुचिन्हत्वमिति शंकनीय ॥ तत्र विष्णुचिन्हत्वस्य तच्चरणतुल्याकारत्वविधानादिवहुहेतुपुरःसरस्य सर्वजनीनत्वात् ॥ किंच ब्रह्मरात्रे ऊर्ध्वपुंड्रविधिमुपक्र-

म्य योन धारयते.मत्यौमामकं चिन्हमीदृशमित्यधारणे प्रत्यवायं वदता भगवता कंठरवेणैव तस्य स्वचिन्हत्वं निरूपितमेवमन्यत्राऽपि द्रष्टव्यं॥अतोब्राह्मणैस्तु तदेव धार्यं नतु त्रिपुंड्रादिकं ॥ तस्य वर्णांतरपरत्वात्॥अतएव मदनपारिजाते. भागवततत्त्वभास्करे च ब्रह्मपुराणे॥ऊर्ध्वपुंड्रं द्विजः कुर्यात्क्षत्रियस्तु त्रिपुंड्रकं॥अर्धचंद्रं तु वैश्यस्य वर्तुलं शूद्रजातिष्विति॥सारसंग्रहे च ब्रह्मरात्रे॥ ब्राह्मणस्योर्ध्वपुंड्रं च क्षत्रियस्यार्द्धचंद्रकं ॥ वैश्यस्य वर्तुलाकारं शूद्रस्यैव त्रिपुंड्रकमिति ॥ पाद्मे ॥ विप्राणामूर्ध्वपुंड्रं स्यात्तिलकं तु महीभृतः ॥ पत्राकारं तु वैश्यानां शूद्राणां तु त्रिपुंड्रकमिति॥एवमादिषु वचनेषु स्पष्टमेव ऊर्ध्वपुंड्रं निर्दिश्य ब्राह्मणस्य तु तदेव नियमितं॥नन्वेवंसति क्षत्रियादीनां तु त्रिपुंड्रादिकमेव सित्स्यति नतु कदाचिदप्यूर्ध्वपुंड्रं॥ माधवीये ॥ राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचइति बाहुजातोरुजातानां नाऽयं धर्मोविधीयतइति क्षत्रियवैश्ययोर्विष्णुलिंगधारणनिषेधात् ॥ अतः कथं भवत्सांप्रदायिकैः क्षत्रियादिभिरपि ऊर्ध्वपुंड्रमेव धार्यतइतिचेत्नैवं॥ब्राह्मणानां तु सर्वेषामयमेव जात्या सिद्धोधर्मोयद्विष्णोर्लिंगधारणमिति नियमार्थत्वाद्वाक्यस्य ॥ तथाच क्षत्रियवैश्ययोस्तु नायं जात्या सिद्धोधर्मइत्यर्थः ॥ क्षत्रियत्वादिजातिमात्रेणैव शस्त्रधारणपशुपालनादिवन्नविधीयतइति यावत् ॥ किंच क्षत्रियस्य त्रिपुंड्रमेवनियतमिति न वक्तुं शक्यं॥वचनांतरोक्तार्द्धचंद्रादिना विकल्पात् ॥ एवं वैश्यस्याऽपि वर्तुलार्द्धचंद्रपत्राकाराणां विकल्पोद्रष्टव्यः ॥ एतदप्यवैष्णवपरं ॥ वैष्णवास्तु क्षत्रियादयस्त्रयोप्यूर्ध्वपुंड्रमेव धारयेयुः ॥ यथोक्तं पाद्मे ॥ ऊर्ध्वपुंड्रं तु सर्वेषां न निषिद्धं कदाचन ॥ धारयेयुः क्षत्रियाद्याविष्णु-

भक्ताभवंति ये इति ॥ ब्रह्मरात्रेऽपि ॥ धारयेत्क्षत्रियाद्योऽपि विष्णुभक्तोभवेद्यदीतिभिन्नोत्तरार्द्धपाठमिदमेव वाक्यं दृश्यते ॥ तथा च वैष्णवानां तु क्षत्रियादीनामप्यूर्ध्वपुंड्रमेव॥अन्येषां तु वैकल्पिकं त्रिपुंड्रादिकमिति फलति ॥ वस्तुतस्त्वग्निहोत्रसंध्यावंदनादिकर्मसु त्रयाणामपि वर्णानामधिकृतत्वाद्वैष्णवयोरपि क्षत्रवैश्ययोः कर्मकाले तु तद्वैफल्यवारणायोर्ध्वपुंड्रमावश्यकमेव सर्वेष्वपि त्रैवर्णिकसाधारणान्हिकग्रंथेषु तदातदावश्यकतायाः सुप्रपंचितत्वात्॥ क्षत्रियस्तु त्रिपुंड्रकमित्यादिवाक्यानां कर्मातिरिक्तकाले लब्धावकाशतया तैरस्य बाधायोगाच्च ॥ पृथ्वीचंद्रोदये निर्णयसिंधौ च॥ ऊर्ध्वं च तिलकं कुर्यान्नकुर्याद्वै त्रिपुंड्रकं ॥ ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि इति वृद्धपराशरेण कर्मकाले त्रिपुंड्रकनिषेधपूर्वकमूर्ध्वपुंड्रकरणस्यैव विहितत्वाच्च ॥ अतएव ऊर्ध्वपुंड्रं द्विजातीनामग्निहोत्रसमोविधिरिति निर्णयसिंध्वाद्युदाहृतस्मृतौ त्रैवर्णिकवाचकं द्विजातिपदमुक्तं ॥ (अ० ३) संन्यासविधौ (श्लो० ६) भयं हृत्वा च भूतानामन्तीभवति द्विजइत्यादियाज्ञवल्क्यादिवचनेष्विव अत्राऽपि द्विजपदस्य माधवेन त्रैवर्णिकपरत्वमुक्तं ॥ ऊर्ध्वपुंड्रमृजुं सौम्यं कनिष्ठांऽगुलिवत् स्मृतं ॥ नासादिकेशपर्यंतं प्रयत्नाद्धारयेद्द्विजइत्यादिषु भट्टोजिकृतान्हिककमलाकरान्हिकाचारमयूखनीलकंठान्हिकप्रभृतिधृतवचनांतरेष्वपि द्रष्टव्यं ॥ अथ पूर्वोदाहृतबौधायनस्मृत्यंतरवचोभ्यां क्षत्रवैश्ययोर्विष्णुलिंगधृतिनिषेधस्तु संन्यासविषयकएवेति माधवादयोवहवः ॥ तथा च क्षत्रियवैश्ययोस्तन्निषेधाभावादग्निहोत्रतौल्याच्च तन्नित्यमेव ॥ नचैवंसति ब्राह्मणस्योर्ध्वपुंड्रमेवेति नियमो नसिध्येदिति

शक्यं ॥ ऊर्ध्वपुंड्रं द्विजः कुर्यादित्यादिभिरेव तत्सिद्धेः ॥ अपिच ब्राह्मणानां त्रिपुंड्रादिधारणे निषेधमपि बहुलमुपलभामहे ॥ यथा तत्वभास्करादिषु पाद्मोत्तरखंडे ऊर्ध्वपुंड्राध्याये॥विप्राणां नैव धार्यं स्यात्तिर्यक्पुंड्रादिधारणं ॥ नारायणात्परब्रह्मादन्येषामर्चनं नहि ॥ ब्राह्मणः कुलजोविद्वान् भस्मधारी भवेद्यदि ॥ वर्जयेत्तादृशं देवि मद्योच्छिष्टघटं यथा ॥ त्रिपुंड्रं शूद्रकल्पानां शूद्राणां च विधीयते ॥ त्रिपुंड्रधारणाद्विप्रः पतितः स्यान्न संशयइति ॥ सारसंग्रहकारप्रभृतयस्तु त्रिपुंड्रनिषेधे वाक्यांतराण्यपि उदाजव्हुः॥ तानि यथा ब्रह्मरात्रे ॥ न त्रिपुंड्रं द्विजैर्धार्यं पट्टाकारं तथैवच ॥ नचान्यदेवताभक्तिरापद्यपि कदाचन ॥ त्रिपुंड्रस्य धरं विप्रं पट्टाकार धृतं तथा ॥ श्वपाकमिव पश्येत न संभाषेत कर्हिचित्॥त्रिपुंड्रं ब्राह्मणोविद्वान् लीलयाऽपि न धारयेत् ॥ त्रिपुंड्रधारणाद्विप्रः पतत्येव न संशयः ॥ तिर्यक्पुंड्रधरं विप्रं चांडालमिव संत्यजेत्॥ सोऽनर्हः सर्वकृत्येषु सर्वलोकेषु गर्हित॥ त्रिपुंड्रधारिणोनित्यं भस्मोद्धूलितविग्रहाः ॥ भविष्यंति त्रयीबाह्यायथा ज्ञानप्रलापिनः ॥ ब्राह्मणस्योर्ध्वपुंड्रं च क्षत्रियस्याऽर्धचंद्रकम्॥ वैश्यस्य वर्तुलाकारं शूद्रस्यैव त्रिपुंड्रकम्॥ऊर्ध्वपुंड्रं तु सर्वेषां न निषिद्धं कदाचन॥धारयेत्क्षत्रियाद्योऽपि विष्णुभक्तोभवेद्यदि ॥ रुद्राक्षधारिणं विप्रं सदा भस्मानुलेपनं ॥ सकुलं तं त्यजेन्नित्यं सर्वधर्मबहिष्कृतं॥ तिर्यक्पुंड्रधरोविप्रः पंक्तिमध्ये स्थितोयदि॥सापंक्तिर्ब्रह्महत्यायां युज्यते नात्र संशयः॥तिर्यक्पुंड्रधरोविप्रोयत्र तिष्ठतिदुर्मतिः ॥ सदेशः पापसंभूतः श्मशानसदृशोभवेत् ॥ सम्यक्कृत्वा ललाटे तु ऊर्ध्वपुंड्रं पुनः

स्वयं ॥ यश्छिनत्ति त्रिपुंड्रेण सपापी श्वपचाधमः ॥ विष्वक्सेन-संहितायां॥ न धारयेज्जटाभारं भस्म चैव न धारयेत्॥ वाह्यलिंगा-नि चिन्हानि संत्यजेद्यावदायुषं ॥ जटिलामुंडिताश्चैव तिर्यक्पुंड्र-धरास्तथा ॥ भविष्यंति त्रयीबाह्यामिथ्याज्ञानप्रलापिनः॥ कपाल-केशभस्मास्थिशक्तिपाषाणधारिणं ॥ त्रिपुंड्रधारिणं विप्रं चांडाल-मिव संत्यजेत् ॥ स्वच्छंदप्रेतवेषाश्च मिथ्यालिंगधरास्तथा ॥ ब्रह्म-कोपाग्निनिर्दग्धारुद्रभक्ताजटाधराः ॥अग्निदं गरदं चैव लिंगपापा-णधारिणम्॥ त्रिपुंड्रधारिणं विप्रं चांडालमिव संत्यजेत्॥वाराहेपि॥ कुलीनोब्राह्मणोविद्वान् भस्मधारीभवेद्यदि॥ वर्जयेत्तादृशं देवि म-द्योच्छिष्टंघटं यथेति ॥ पाद्मेप्येतत्सदृशमेव वाक्यमित्युक्तमधस्ता-त्.॥ केचित्त्वेवं हारीतवचनान्यप्युदाहरंति ॥ ऊर्ध्वपुंड्रविहीनस्तु संध्याकर्म समाचरेत् ॥ तत्सर्वं राक्षसैर्नीतं नरकं सच गच्छति ॥ नित्यं नैमित्तिकं काम्यं त्रिविधं श्रुतिनोदितम्॥ऊर्ध्वपुंड्रविहीनस्य सर्वं तन्निष्फलं भवेत् ॥ब्राह्मणः श्रोत्रियोविद्वान् भस्मधारी भवेद्य-दि॥ सजीवन्नेवशूद्रत्वं नरकं चाधिगच्छति॥रुद्रार्चनं त्रिपुंड्रस्य धा-रणं यत्र दृश्यते॥शूद्राणां च विधिः प्रोक्तोन द्विजानां कदाचन ॥ तिर्यक्पुंड्रधरं विप्रं पट्टाकारधृतं तथा॥श्वपाकमिव पश्येत न संभा-षेत् कदाचनेति॥तस्मात् ब्राह्मणानामूर्ध्वपुंड्रमेवोचितं॥ननूक्तवचनैः शूद्राणां तु वर्त्तुलं त्रिपुंड्रं वा सिध्यति नतूर्ध्वपुंड्रमिति वैष्णवस्या-ऽपिशूद्रस्य तु नतद्युक्तमिति चेन्नैवं ॥पाद्मे॥वर्त्तुलं तिर्यगच्छिद्रं ह्र-स्वं दीर्घं तनुं ततं ॥ वक्रं विरूपं बद्धाग्रं छिन्नमूलं पदच्युतमित्या-द्युक्त्वा पुंड्रमाहुरनर्थकमिति वर्त्तुलत्रिपुंड्रयोरानर्थक्यकथनात् ॥ अयं च निंदाबोधितोवर्तुलनिषेधः शूद्रेष्वेव पर्यवस्यति ॥ प्राप्त-

त्वात् ॥ नचाऽस्यशूद्रविषयकत्वे वर्त्तुलं शूद्रजातिष्वित्यस्याऽनक-
काशत्वापत्त्या विधिः शूद्रविषयोनिषेधश्च ब्राह्मणादिविषयइति
समंजसमिति वाच्यं ॥ निषेधस्य प्राप्तिपूर्वकत्वनियमेन ब्राह्मणा-
दिषु च तदप्राप्त्या निषेधायोगात् ॥ नच भूमावग्निश्चेतव्योनांत-
रिक्षेनदिवीत्यादिषु अप्राप्तस्यापि स्वर्गांतरिक्षाधिकरणकाग्निच-
यनादेर्निषेधदर्शनान्नायं नियमइति शंक्यं ॥ बादरायणाचार्येण
समन्वयाध्यायतृतीयपादे तदुपर्यपिबादरायणः संभवादित्यादिना
देवतानामपि कर्माधिकारस्य मीमांसितत्वेन तासां च स्वर्गांतरि-
क्षयोरपि चयनस्य प्राप्तत्वेन तत्राऽपि प्राप्तस्यैव निषेधात् ॥ ननु
निर्यासस्यनाश्यंब्रह्महत्यायेसेपवर्णइति नकलंजंभक्षयेदित्यादिषु
रागतः प्राप्तस्याऽपि ब्रश्चनोत्थलोहितनिर्यासकलंजभणादेर्निषेध-
वद्ब्राह्मणानां रागतः प्राप्तवर्तुलनिषेधसंभवेन माऽसौ शूद्रेषु प्रस-
ज्यतामितिचेन्नैवं वक्तुं युक्तं ॥ भक्षणवद्वर्तुलादेरागतः प्राप्त्यसंभ-
वात् ॥ अथ संभवेऽपि सामान्यतोमांसभक्षणे रागतः प्राप्तेऽपि
पंचपंचनखाभक्ष्याइति परिसंख्यया पंचनखेतरतद्भक्षणनिषेधव-
त् सामान्यतः प्राप्तेऽपि नानाविधपुंड्रधारणे ब्राह्मणस्योर्ध्वपुंड्रंत्वि-
त्यादिनैव तदितरनिषेधसंभवात् ॥ अथ पंचनखेतरभक्षणेप्राय-
श्चित्तविधानवदत्रापि प्रायश्चित्तबोधनार्थं वचनप्रवृत्तिरितिचेन्न॥
वचने प्रायश्चित्तानुल्लेखात् ॥ प्रत्युतानर्थक्यमात्रकथनेन चैत्यवं-
दनादिवत् प्रायश्चित्ताभावद्योतनात् ॥ अयंच प्रायश्चित्ताभावः
शूद्रेष्वेव संगच्छते नतु ब्राह्मणादिषु ॥ उक्तवचनसमुदायव्याकोप-
पात् ॥ तस्मादयं निषेधोब्राह्मणादिविषयः विधिश्वशूद्रविषयकइ-
ति न युक्तं किंतूभावपि शूद्रविषयावेवेति ॥ नन्वेवंसत्येकविष-

स्वयं ॥ यश्छिनत्ति त्रिपुंड्रेण सपापी श्वपचाधमः ॥ विष्वक्सेन-
संहितायां॥ न धारयेज्जटाभारं भस्म चैव न धारयेत्॥ बाह्यलिंगा-
नि चिन्हानि संत्यजेद्यावदायुषं ॥ जटिलामुंडिताश्चैव तिर्यक्पुंड्र-
धरास्तथा ॥ भविष्यंति त्रयीबाह्यामिथ्याज्ञानप्रलापिनः॥ कपाल-
केशभस्मास्थिशक्तिपाषाणधारिणं ॥ त्रिपुंड्रधारिणं विप्रं चांडाल-
मिव संत्यजेत् ॥ स्वच्छंदप्रेतवेषाश्च मिथ्यालिंगधरास्तथा ॥ ब्रह्म-
कोपाग्निनिर्दग्धारुद्रभक्ताजटाधराः॥अग्निदं गरदं चैव लिंगपाषा-
णधारिणम्॥ त्रिपुंड्रधारिणं विप्रं चांडालमिव संत्यजेत्॥वाराहेपि॥
कुलीनोब्राह्मणोविद्वान् भस्मधारीभवेद्यदि॥ वर्जयेत्तादृशं देवि म-
द्योच्छिष्टंघटं यथेति ॥ पाद्मेप्येतत्सदृशमेव वाक्यमित्युक्तमधस्ता-
त् ॥ केचित्त्वेवं हारीतवचनान्यप्युदाहरंति ॥ ऊर्ध्वपुंड्रविहीनस्तु
संध्याकर्म समाचरेत् ॥ तत्सर्वं राक्षसैर्नीतं नरकं सच गच्छति ॥
नित्यं नैमित्तिकं काम्यं त्रिविधं श्रुतिनोदितम्॥ऊर्ध्वपुंड्रविहीनस्य
सर्वं तन्निष्फलं भवेत् ॥ब्राह्मणः श्रोत्रियोविद्वान् भस्मधारी भवेद्य-
दि॥ सजीवन्नेवशूद्रत्वं नरकं चाधिगच्छति॥रुद्रार्चनं त्रिपुंड्रस्य धा-
रणं यत्र दृश्यते॥शूद्राणां च विधिः प्रोक्तोन द्विजानां कदाचन ॥
तिर्यक्पुंड्रधरं विप्रं पद्माकारधृतं तथा॥श्वपाकमिव पश्येत न संभा-
षेत् कदाचनेति॥तस्मात् ब्राह्मणानामूर्ध्वपुंड्रमेवोचितं॥ननूक्तवचनैः
शूद्राणां तु वर्त्तुलं त्रिपुंड्रं वा सिध्यति नतूर्ध्वपुंड्रमिति वैष्णवस्या-
ऽपिशूद्रस्य तु नतद्युक्तमिति चेन्नैवं ॥पाद्मे॥वर्त्तुलं तिर्यगच्छिद्रं ह्र-
स्वं दीर्घं तनुं ततं ॥ वक्रं विरूपं बद्धाग्रं छिन्नमूलं पदच्युतमित्या-
द्युक्ता पुंड्रमाहुरनर्थकमिति वर्त्तुलत्रिपुंड्रयोरानर्थक्यकथनात् ॥
अयं च निदाबोधितोवर्तुलनिषेधः शूद्रेष्वेव पर्यवस्यति ॥ भाग-

त्वात् ॥ नचाऽस्यशूद्रविषयकत्वे वर्त्तुलं शूद्रजातिष्वित्यस्याऽनव-
काशत्वापत्त्या विधिः शूद्रविषयोनिषेधश्च ब्राह्मणादिविषयइति
समंजसमिति वाच्यं ॥ निषेधस्य प्राप्तिपूर्वकत्वनियमेन ब्राह्मणा-
दिषु च तदप्राप्त्या निषेधायोगात् ॥ नच भूमावग्निश्चेतव्योनांत-
तरिक्षेनदिवीत्यादिषु अप्राप्तस्यापि स्वर्गांतरिक्षाधिकरणकाग्निच-
यनादेर्निषेधदर्शनान्नायं नियमइति शंक्यं ॥ बादरायणाचार्येण
समन्वयाध्यायतृतीयपादे तदुपर्यपिबादरायणः संभवादित्यादिना
देवतानामपि कर्माधिकारस्य मीमांसितत्वेन तासां च स्वर्गांतरि-
क्षयोरपि चयनस्य प्राप्तत्वेन तत्राऽपि प्राप्तस्यैव निषेधात् ॥ ननु
निर्यासस्यनाश्यंब्रह्महत्यायेस्रेपवर्णइति नकलंजंभक्षयेदित्यादिषु
रागतः प्राप्तस्याऽपि व्रश्चनोत्थलोहितनिर्यासकलंजभक्षणादेर्निषेध-
वद्ब्राह्मणानां रागतः प्राप्तवर्तुलनिषेधसंभवेन माऽसौ शूद्रेषु प्रस-
ज्यतामितिचेन्नैवं वक्तुं युक्तं ॥ भक्षणवद्वर्तुलादेरागतः प्राप्त्यसंभ-
वात् ॥ अथ संभवेऽपि सामान्यतोमांसभक्षणे रागतः प्राप्तेऽपि
पंचपंचनखाभक्ष्याइति परिसंख्यया पंचनखेतरतद्भक्षणनिषेधव-
त् सामान्यतः प्राप्तेऽपि नानाविधपुंड्रधारणे ब्राह्मणस्योर्ध्वपुंड्रंत्वि-
त्यादिनैव तदितरनिषेधसंभवात् ॥ अथ पंचनखेतरभक्षणेप्राय-
श्चित्तविधानवदत्रापि प्रायश्चित्तबोधनार्थं वचनप्रवृत्तिरितिचेन्न॥
वचने प्रायश्चित्तानुल्लेखात् ॥ प्रत्युतानर्थक्यमात्रकथनेन चैत्य
दनादिवत् प्रायश्चित्ताभावद्योतनात् ॥

यकत्वाद्विधिनिषेधयोः कथं व्यवस्थेतिचेत् ॥ इत्थं ॥ शूद्रेषु वर्तु-
लत्रिपुंड्रयोर्विधानं वैष्णवेतरविषयं निषेधस्तु वैष्णवविषयइति ॥
नचैवमपि शूद्रस्योर्ध्वपुंड्राप्राप्त्या तदयुक्तमिति शंक्यं॥धारयेयुः क्ष-
त्रियाद्याविष्णुभक्ताभवंति यइत्यादिपाद्मादिवचोभिस्तस्याऽपि
तत्प्राप्तेः ॥ अत्र बहुवचनांताद्यशब्देन वैश्यशूद्रयोरपि संग्रहात् ॥
प्रत्युत विष्णुभक्ताभवंतियइत्यनेन विशेषोल्लेखेन सामान्ययोर्वर्त्तु-
लत्रिपुंड्रयोरवैष्णवविषयत्वं बोध्यतइति सर्वं समंजसं॥इदमेवाभि-
प्रेत्य वासुदेवोपनिषदि मद्भक्तैर्ब्राह्मणादिभिर्धृतमित्याम्नायते॥अत्रा-
प्यादिशब्देन शिष्टास्त्रयोऽपि वर्णा गृह्यंते ॥ संकोचे मानाभावा-
त् ॥ पाद्माद्युपबृंहणसिद्धत्वाच्च ॥ अतएव पुराणेषु प्रतिलोमजा-
नामपि सूतादीनां वैष्णवत्वादूर्ध्वपुंड्रधारणं वर्ण्यते ॥नन्वेतावता इ-
दं सिध्यति॥वैष्णवानां तु सर्वेषामपि ऊर्ध्वपुंड्रमेव ॥ तदतिरिक्त-
स्याऽपिब्राह्मणसामान्यस्य चोर्ध्वपुंड्रमेव॥ क्षत्रियादीनां च स्वस्व-
योग्यादृष्टार्थशास्त्रीयकर्मकाले ऊर्ध्वपुंड्रं कालांतरे त्वैच्छिकस्तत्त-
ज्जातिविहितत्रिपुंड्रार्द्धचंद्रादीविकल्पइति ॥ नैतद्युक्तं ॥ भूतिधार-
णस्य सर्वेषामावश्यकत्वात्तद्रहितस्य कर्मवैफल्यस्मरणाच्चेतिचे
त्तर्हि भस्मत्रिपुंड्रादिसाधकवाक्यान्यप्युदाहृत्य तद्व्यवस्थादिकम-
पि विचारयिष्यामः ॥ यतोहि वयं शास्त्रीयविषये न मनसि दुरा-
ग्रहं रोचयामहे ॥ तत्र कस्मिंश्चिदाधुनिकेनकेनचिद्भवदीयेन कृते
शैवसुधाकराख्ये ग्रंथे ॥ विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनः॥
इति पंच नामानिपंचभिर्हेतुभिर्भृशं॥ऐश्वर्यकरणाद्भूतिर्भस्म सर्व-
ग्रहात् ॥ भासनात् भसितं प्रोक्तं क्षारणात् क्षारमापदां॥रक्षा
च रक्षणात्परिकीर्त्तितं ॥ देवीभागवते ॥ कीकटेष्वपि

देशेषु यत्र भूतिविभूषणः ॥ मानवस्तु वसेन्नित्यं काशीक्षेत्रसमं हि तत् ॥ नचाऽत्र ब्राह्मणपदाभावात् पूर्वोक्तवचनरीत्या शूद्रपरत्वं शंक्यं॥नाऽस्य ज्ञानं परीक्षेत न कुलं न व्रतं तथा॥ त्रिपुंड्रांकितभालेन पूज्यएव हि नारद ॥ तथा ॥ छद्मनाऽपि चरेद्योहि भूतिशासनमैश्वरं ॥ सोऽपि यां गतिमाप्नोति न तां यज्ञशतैरपि ॥ ये घोराराक्षसाः प्रेतायेचान्ये क्षुद्रजंतवः ॥ त्रिपुंड्रधारिणं दृष्ट्वा पलायंते न संशयः॥अत्र यज्ञकरणादिरूपत्रैवर्णिकलिंगदर्शनात्॥ किंच ॥ आचारार्के संग्रहे ॥ अग्निहोत्राग्निजं भस्म विरजाहोमजं तथा ॥ औपासनसमुत्पन्नं समिदग्निसमुद्भवं ॥ समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणा ॥ शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवं ॥ अन्येषामपि सर्वेषां धार्यं दावानलोद्भवमिति ॥ एवमादिषु चतुर्णां वर्णानामंत्यजानां च तद्धारणमुच्यते ॥ किंच ॥ तद्रहितस्य कर्मवैफल्यमपिस्मर्यते ॥ तथाच बृहज्जाबाले ॥ ये भस्मधारणं त्यक्त्वा कर्म कुर्वंति मानवाः॥तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिरिति ॥ तत्रेदमुच्यते ॥ एतत् सर्वं क्षत्रियपरमेव कुतोन भवति ॥ बृहज्जाबालोपनिषदि चतुर्थब्राह्मणे भस्मस्नानतदुद्धूलने उपक्रम्य॥ सर्वांगोद्धूलनं कार्यं राजन्यस्य यथाविधीतिकथनात् ॥ इतः पूर्ववर्णांतरस्य नाम्नोप्यनुच्चारणाच्च॥अथ तत्रैवाग्रे उद्धूलयेन्मुखं विप्रः क्षत्रियस्तच्छिरोधिकमिति॥तथा ॥पंचमब्राह्मणारंभे॥त्रियायुषाणि कुरुते ललाटे च भुजद्वये॥नाभौ शिरसि हृत्पार्श्वे ब्राह्मणः क्षत्रियः सदा॥त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवमित्यादिना सर्वेषामपि भस्मधारणमुक्तं ॥ अतोन क्षत्रियपरमितिचेत्सत्यं ॥ तथापि मुख्यतयेदं शैवचातुर्वर्णिकपरमेवेति ब्रूमः ॥ तथाहि ॥ कालाग्निरुद्रो-

पनिषदि ॥ अथ कालाग्निरुद्रं भगवंतं सनत्कुमारः पप्रच्छाधीहि भगवंस्त्रिपुंड्रविधिं सतत्त्वं किंद्रव्यं कतिप्रमाणमित्यादिना प्रश्नं निरूप्य तस्होवाच भगवन् यद्द्रव्यं तदाग्नेयं भस्मेत्यादिना सांगं त्रिपुंड्रविधिं व्याख्यायांते तिर्यक्तिस्रोरेखाः प्रकुर्वीत व्रतमेतच्छांभवमित्युपसंहारेण तस्य शैवपरत्वं निश्चितं ॥ किंच बृहज्जाबालेपि चतुर्थब्राह्मणे त्रिपुंड्रस्य षोडशस्थानानि निरूप्योच्यते ॥ जपेतत्राधिदेवताः ॥ शिवं शक्तिं च सादाख्यमीशं रुद्राख्यमेवच ॥ वागादिनवशक्तीश्च एताः षोडशदेवताइति॥एवमग्रेपि ललाटे ब्रह्मणेनमइत्यारभ्य सर्वांगे सदाशिवायनमइत्यंतेन तस्य शिवदेवताकत्वमेव दृढीकृतं॥अग्रेच ध्यानं ॥ भूतिर्भूतिकरी पवित्रजननी पापौघविध्वंसिनी सर्वानंदकरी सदाशिवकरी सर्वार्थसंपत्करी ॥ रक्षोभूतपिशाचराक्षसमहाक्षोभैकसंत्रायिणी तेजोराज्यविशेषमोक्षकरणी भूतिः सदा धार्यतामिति काम्यत्वमपि दर्शितं ॥ उपरिष्टात्॥एतानि तानि शिवमंत्रपवित्रितानि भस्मानि कामदहनांगविलेपनानि ॥ त्रैपुंड्रकाणि रचितानि ललाटपट्टे लुंपंति दैवलिखितानि दुरक्षराणि ॥ श्रीकरं च पवित्रं च शोकरोगनिवारणं ॥ लोकवश्यकरं पुण्यं भस्म त्रैलोक्यपावनं॥त्रिनेत्रं त्रिगुणाधारं त्रयाणां जनकं विभुं ॥ स्मरन्नमःशिवायेति ललाटे तु त्रिपुंड्रकं ॥ ईशानाभ्यां नमेत्युक्त्वा पार्श्वयोश्च त्रिपुंड्रकमित्यादिना नीलकंठाय शिरसि क्षिपेत्सर्वात्मने नमइत्यंतेन श्रीकामाद्यधिकारिकत्वप्रदर्शनपूर्वकं तस्य शिवमंत्रविधेयत्वं शिवदैवत्यत्वं चेत्येव स्फुटीकृतं ॥ एवं तत्रैव पंचमब्राह्मणेऽपि शिवाग्निजं शिवयोगिनामित्यंतेन भस्मभेदानुक्त्वा शिवालयस्थं तल्लिंगलिप्तं मंत्रसंस्कारदग्धं वेति सर्वाधिकार-

कं भस्मोदितं ॥ ततः श्लोकेषुच ॥ त्रिपुंड्रं ये विनिंदंति निंदंति शिवमेवते ॥ धारयंति तु ये भक्त्या धारयंति तमेव ते इत्यादिना रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्त्तितमित्यंतेन तस्य शिवस्वरूपत्वं शिववीर्यत्वं चोक्तं ॥ एवं पट्ब्राह्मणात्मिकायास्तस्याउपनिषदः समाप्तावपि रुद्रजापकशतमेकमेकेनाथर्वशिरःशिखाध्यापकेन तत्समं अथर्वशिखाध्यापकशतमेकमेकेन बृहज्जाबालोपनिषद्ध्यापकेन तत्समं बृहज्जाबालोपनिषद्ध्यापकशतमेकमेकेनतत्क्रियाचरणेन तत्समं तद्वाएतत्परं धाम बृहज्जाबालोपनिषज्जपशीलस्य यत्रनसूर्यस्तपति यत्रनवायुर्वाति यत्रनचंद्रमाभाति यत्रननक्षत्राणिभांति यत्रनाग्निर्दहति यत्रनमृत्युःप्रविशति यत्रनदुःखानिसंति सदानंदं परमानंदं शांतं शाश्वतं सांबं सदाशिवं कामेश्वरं ब्रह्मादिवंदितं योगिध्येयं परं पदं यत्र गत्वा न निवर्त्तंते योगिनः तदेतदृचाभ्युक्तं॥तद्विष्णोः परमं पदं सदा पश्यंति सूरयः॥दिवीव चक्षुराततं॥तद्विप्रासोविपन्यवोजागृवांसः समिंधते॥विष्णोर्यत्परमंपदं ॥ ॐसत्यं ॐसत्यं नसपुनरावर्त्तते नसपुनरावर्त्तते ॐसत्यं इति फलंश्राव्यते॥ एवं शिवदैवत्यत्वात् शिवमंत्रैकसाध्यत्वात् शिवस्वरूपत्वात्तन्मंत्रदीक्षावतां तदेकभक्तानां शैवानामेवेदमावश्यकमिति स्पष्टमेव सिध्यति ॥ तत्रत्योपक्रमसंहारादिपरिचिंतनेन च शिवमाहात्म्यातिशयदर्शनादिना इदं स्पष्टतयैवावगम्यते॥ अपिच फलश्रुतावपि एकेन तत्क्रियाचरणेनेत्यादिना तस्यामुपनिषदि उक्ता या क्रिया भस्मधारणादिरूपा जंबीराघ्राणवृत्तांतानुसारेण शिवनैवेद्यादिवर्जनरूपाच तदाचरणकर्तुः पुरुषस्य शांतं शाश्वतं सांबं सदाशिवं कामेश्वरं ब्रह्मादिवंदितं योगिध्येयं परं पदमित्यादिना स-

र्वदा त्रिगुणात्मकशक्तिसहितस्य काम्यवस्तुजातमात्रदानसमर्थस्य परशिवस्य प्राप्तिः फलत्वेनोक्ता॥ परशिवस्य च श्रीमत्पुरुषोत्तमधामभूताक्षरब्रह्मस्वरूपत्वं कंठरवेणैव वर्णितं॥ अतः क्षराक्षरातीतपुरुषोत्तमप्राप्तिरूपनिर्गुणफलप्रेप्सूनां आत्मनोनिर्गुणभावाकांक्षिणां तद्भक्तानां नात्रोक्तत्रिपुंड्रादिष्वधिकारः किंतु रुद्रपदाद्यवांतरसगुणफलप्रेप्सूनामेव तत्राधिकारइति निर्विवादं सिद्धं॥परशिवस्यापि सर्वदा सगुणत्वं शश्वच्छक्तिसाहित्यं त्रिलिंगत्वं भगवद्धामाक्षरब्रह्मात्मकत्वं चेति तुपंडितकरभिदिपालाद्यनेकग्रंथेषु महता प्रबंधेन प्रपंचितमेव पुरुषोत्तमचरणादिभिरिति किमिह तद्विचाररूपेणाकांडपांडित्येन॥ अन्यच्च ॥ शैवत्वं वैष्णवत्वंचेत्यादि हि शास्त्रोक्तविधानात्तत्तन्मंत्रग्रहणादेव भवतीति सुप्रसिद्धं तत्तत्संप्रदायांगीकर्तुस्तद्भिन्नसंप्रदायस्थमंत्रादेर्नोपयोगइति बहुशास्त्रसंमतं॥ एवंचसति प्रकृते भवतां सुधासिंधुप्रभृतिग्रंथेषूपन्यस्तैः त्रिपुंड्रकं सदा कुर्यान्मंत्रपूतेन भस्मना॥ मंत्रहीनं तु यः कुर्यात् पापभागीभवेन्नरइत्यादिभिर्वचनैस्त्रिपुंड्रादीनि शिवमंत्रैरेव कार्याणि नतु तान्विनेति तेषां शिवमंत्रैकविधेयत्वसिद्धेः ॥ बृहज्जाबालादिषु एतानितानिशिवमंत्रपवित्रितानीत्यादिभिस्तथैव निश्चयात् ॥ मंत्ररहितनत्करणे प्रत्युतदोषकथनाच्च ॥ पारंपरिकतन्मंत्रग्रहणवतां शैवानामेवात्राधिकारो नतु तदग्रहणवतामन्येषामिति निर्विचिकित्सं सिध्यति ॥ तस्मादेतच्छैवपरमेव ॥ अतएवाऽन्यत्राऽप्यथर्वशिरसि॥ अग्निरित्यादिना भस्म गृहीत्वा विमृज्यांगानि संस्पृशेदित्यादिनोक्तप्रकारकस्य भस्मोद्धूलनादेः व्रतमेतत् पाशुपतं पशुपाशविमोक्षायेति स्पष्टमेव शैवव्रतत्वं श्राव्यते ॥ पशुपतिः शिवस्तत्संबंधि-

त्वात्पाशुपतमिति ॥ अतएव भूतिशासनमैश्वरमिति शैवसुधाकरो-
दाहृतवचनेऽपि तस्य शिवव्रतत्वमुच्यते ॥ ईश्वरः शर्वईशानइति
कोशादृतरूढ्याऽत्रेश्वरशब्दस्य शिवपरत्वप्रतीतेः॥उक्तादिश्रुतिषु त-
स्य स्फुटतया शैवव्रतत्वकथनाच्च ॥ तस्मात्तदेकभक्तानामेवावश्य-
कं ॥ केचित्तु ॥ त्रिपुंड्रादिषु शिवव्रतत्वस्य श्रुत्यादिसिद्धत्वात् भव-
व्रतधरायेच येच तान् समनुव्रताः ॥ पाखंडिनस्ते भवंतु सच्छास्त्र-
परिपंथिनइति तद्व्रतधारणे भृगुशापेन पाखंडित्वसच्छास्त्रद्वेषित्व-
योरवश्यं प्राप्त्या तद्वारणाय नेदमिदानीं धार्यं ॥आवश्यकतानिरू-
पकस्तद्विधिस्तु शापप्राक्कालिकविषयइत्यप्याहुः ॥अपिच सर्वदा
शिवपूजनं शैवानामेव नित्यमित्यपिमप्रश्नोत्तरेषु प्रपंचयिष्यते ॥
अतस्तदंगत्वात् भस्मरुद्राक्षधारणमपि तेषामेव नित्यं॥भस्मरुद्राक्ष-
रहितस्य शिवपूजावैयर्थ्यात्॥यथोक्तं तिथितत्वे लैंगे॥विना भस्म-
त्रिपुंड्रेण विना रुद्राक्षमालया ॥ पूजितोऽपि महादेवोन स्यात्तस्य
फलप्रदइति॥एवमाधुनिके भवदीयकृतशैवसुधाकरग्रंथेऽपि॥विभू-
तिधारणं त्यक्त्वा त्यक्त्वा रुद्राक्षधारणं॥मा मांपूजय विश्वेशं शिव-
लिंगस्वरूपिणं॥सनत्कुमारसंहितायामपि ॥ यथैव चांडालोच्छिष्टं
श्राद्धार्थं नोपयुज्यते ॥ पूतिपर्युषितं यच्च निर्भस्मैवं शिवार्चनं ॥
दायादहीनोन पुनर्मृतः पिंडमवाप्स्यति ॥ तथा भस्मविहीनोऽपि
शिवार्चनफलं परं ॥ यथा कृशानुरहितोह्यध्वरोनैव शोभते ॥
अशेषसाधनोपेतं भस्महीनं शिवार्चनमिति ॥ तस्मान्नित्यं शिवा-
र्चननियमवतां शैवानामेव तद्वैयर्थ्यवारणाय तदावश्यकं ॥ तादृ-
शमेवास्य फलमाहाचारप्रकाशे पुलस्त्यः॥करोति शिवमंत्रेण य-

वंदा त्रिगुणात्मकशक्तिसहितस्य काम्यवस्तुजातमात्रदानसमर्थस्य परशिवस्य प्राप्तिः फलत्वेनोक्ता॥ परशिवस्य च श्रीमत्पुरुषोत्तम-धामभूताक्षरब्रह्मस्वरूपत्वं कंठरवेणैव वर्णितं ॥ अतः क्षराक्षराती-तपुरुषोत्तमप्राप्तिरूपनिर्गुणफलप्रेप्सूनां आत्मनोनिर्गुणभावाकां-क्षिणां तद्भक्तानां नात्रोक्तत्रिपुंड्रादिष्वधिकारः किंतु रुद्रपदाद्य-वांतरसगुणफलप्रेप्सूनामेव तत्राधिकारइति निर्विवादं सिद्धं॥पर-शिवस्यापि सर्वदा सगुणत्वं शश्वच्छक्तिसाहित्यं त्रिलिंगत्वं भगव-द्धामाक्षरब्रह्मात्मकत्वं चेति तुपंडितकर्णभिदिपालाद्यनेकग्रंथेषु मह-ता प्रबंधेन प्रपंचितमेव पुरुषोत्तमचरणादिभिरिति किमिह तद्वि-चाररूपेणाकांडपांडित्येन॥ अन्यच्च ॥ शैवत्वं वैष्णवत्वंचेत्यादि हि शास्त्रोक्तविधानात्तत्तन्मंत्रग्रहणादेव भवतीति सुप्रसिद्धं तत्तत्संप्र-दायांगीकर्तुस्तद्भिन्नसंप्रदायस्थमंत्रादेर्नोपयोगइति बहुशास्त्रसंमतं॥ एवंचसति प्रकृते भवतां सुधासिंधुप्रभृतिग्रंथेषूपन्यस्तैः त्रिपुंड्रकं सदा कुर्यान्मंत्रपूतेन भस्मना॥ मंत्रहीनं तु यः कुर्यात् पापभागी-भवेन्नरइत्यादिभिर्वचनैस्त्रिपुंड्रादीनि शिवमंत्रैरेव कार्याणि नतु ता-न्विनेति तेषां शिवमंत्रैकविधेयत्वसिद्धेः ॥ बृहज्जाबालादिषु एता-नितानिशिवमंत्रपवित्रितानीत्यादिभिस्तथैव निश्चयात् ॥ मंत्ररहि-ततत्करणे प्रत्युतदोषकथनाच्च ॥ पारंपरिकतन्मंत्रग्रहणवतां शैवा-नामेवात्राधिकारो नतु तदग्रहणवतामन्येषामिति निर्विचिकित्सं सिध्यति ॥ तस्मादेतच्छैवपरमेव ॥ अतएवाऽन्यत्राऽप्यथर्वशिरसि॥ अग्निरित्यादिना भस्म गृहीत्वा विमृज्यांगानि संस्पृशेदित्यादिनो-क्तप्रकारकस्य भस्मोद्धूलनादेः व्रतमेतत् पाशुपतं पशुपाशविमो-क्षायेति स्पष्टमेव शैवव्रतत्वं श्राव्यते ॥ पशुपतिः शिवस्तत्संबंधि-

त्रिपुंड्रकं॥सर्वपापविनिर्मुक्तः शिवेन सहमोदते इत्युक्ता ऽनुपदं सत्यं शौचं जपोहोमइत्युच्यते॥अत्रापि पूर्ववचने शिवसायुज्यरूपनियतफलकथनात् अनुपदं द्वितीयवचनोक्तं तद्राहित्येन कृतकर्मवैयर्थ्यमपि रुद्रपदप्राप्तिलक्षणमोक्षकांक्षिणः शैवस्यैव नान्यस्येति स्पष्टमेव सिध्यति॥अनेनैव शैवसुधाकरोदाहृतानि संध्याशिवार्चनादीनि कर्माण्येतानि वस्तुतः॥वैदिकानि तनस्तेषु कर्त्तव्यं भस्मधारणं ॥ तथा ॥ नसंविशंति पापानि भस्मनिष्ठे ततः सदा ॥ कर्त्तव्यमतियत्नेन ब्राह्मणैर्भस्मधारणं ॥ यत्कृतं भस्मनिष्ठेन महादेवस्य पूजनं ॥ तत्सर्वाभीष्टदं तस्मात्कर्त्तव्यं भस्मधारणं ॥ उद्धूलनत्रिपुंड्राभ्यामलंकृततनुः शिवं ॥ योऽर्चयिष्यति तत्तुल्योभुवि कोवा भविष्यतीत्यादीनि शिवरहस्यवचनान्यपि समाहितानि वेदितव्यानि ॥ शिवार्चनादिसाहचर्येण स्फुटमेव तदर्चननियमवच्छैवपरत्वनिश्चयात् ॥ पौर्वापर्यपरिचिंतनेन च प्रायः सर्वेषामपि शिवरहस्योक्तानां धर्माणां शैवमात्रपरत्वनिश्चयात् ॥ सर्वैरपि विद्वद्भिस्तथैव स्वीकाराच्च॥तत्रोक्तस्य विभूतेर्यज्ञोपवीततौल्यातिदेशस्याऽपि शैवपरत्वेनोपसंहारउचितः ॥ उपवीतादिवद्धार्याः शंखचक्रगदादयइति यज्ञोपवीतवद्धार्यातुलसीमालिका द्विजैरित्यादि पद्मपुराणाद्युक्तातिदेशानां वैष्णवपरत्वेनोपसंहारवत् ॥ नन्वेवं त्रिपुंड्राहित्येन कर्मवैयर्थ्यं शैवपरमेवेति तु सम्यगुपपादितं ॥ तथाप्येतस्य सर्वपरत्वाश्रयणे कावा क्षतिरितिचेदुच्यते ॥ एतस्य सर्वसाधारणत्वे ब्राह्मणः कुलजोविद्वानित्यादिनिषेधोनिरवकाशः स्यात्॥ किंचोर्ध्वपुंड्रस्य सर्वेष्वपि कर्मस्वावश्यकत्वमनेकेषु सर्वसाधारणेष्वाह्निकादिधर्मशास्त्रग्रंथेषु बहुवचनोपन्यासपुरःसरं सुप्रपंचितमेव ॥

त्रिपुंड्रं द्विजोत्तमः ॥ त्र्यक्षः शूलधरः सौम्यः शिवलोके महीयत-
इति॥एवं सिद्धेऽस्य शैवपरत्वे ॥ यत्त्वाचारार्के कात्यायनः ॥ श्रा-
द्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने ॥ धृतत्रिपुंड्रः पूतात्मा मृत्युं-
जयति मानवइति॥क्रियासारे॥ वामहस्ततले भस्म क्षिप्त्वाऽऽच्छा
द्याऽन्यपाणिना ॥ अग्निरित्यादिमंत्रेण स्पृशन् भस्माभिमंत्र्यचेति॥
स्मृतिसंग्रहे ॥ मध्यांगुलित्रयेणैव स्वदक्षिणकरस्य च ॥ त्रिपुंड्रं धा
रयेद्विद्वान् सर्वकर्मसु सर्वदाइति ॥ यच्चाचारप्रकाशे भविष्ये ॥ स-
त्यं शौचं जपोहोमस्तीर्थं देवादिपूजनं ॥ तस्य व्यर्थमिदं सर्वं य-
स्त्रिपुंड्रं न धारयेदिति ॥ तदेतत् सर्वं त्रिपुंड्राहित्येन कर्मवैफल्य-
मिति शैवानामेवेत्यवसीयते ॥ त्रिपुंड्रादेः शैवमात्राधिकारकत्वस्य
पूर्वमेव व्युत्पादितत्वात्॥ अपिच॥ कात्यायनभविष्यवचनयोः सु-
रार्चनदेवपूजनशब्देन शिवपूजैव विवक्षितेति ज्ञायते ॥ उक्तलैंगा-
दिवचनैकवाक्यतया तथैवोपसंहाराध्यवसायात् ॥ सर्वदेवसाधा-
रणत्वाश्रयेण ऊर्ध्वं च तिलकं कुर्यात्कुर्याद्वैत्रिपुंड्रकं ॥ ऊर्ध्वं च
तिलकं कुर्याद्दैवे पित्र्ये च कर्मणीति पृथ्वीचंद्रोदयनिर्णयसिंध्वा-
द्युदाहृतवृद्धपराशरादिवचनानां निरवकाशत्वप्रसंगात् ॥ कात्या-
यनभविष्यवचनयोरुपसंहारकलैंगादिवचनवदस्योपसंहारकवच-
नांतरालाभात् ॥ उक्तपाद्मादिवचनविरोधाच्च तस्मादेतत्त्रिपुंड्रा-
हित्येन कृतकर्मवैयर्थ्यं रुद्रपदमोक्षाकांक्षिशैवपरमेव ॥ अतएव-
कात्यायनवचने मृत्युंजयतिमानवइति मृत्युंजयवत् शिववदाच-
रति शिवसारूप्यं गच्छतीत्यर्थः॥त्र्यक्षः शूलधरः सौम्यःशिवलोके
महीयतइत्युदाहृतपुलस्त्यवचनेन तथैव निश्चयात्॥एवमेवाऽऽचा-
रार्के कमलाकराह्निके च भविष्ये॥सितेन भस्मना कुर्यात्त्रिसंध्यं च

त्रिपुंड्रकं॥सर्वपापविनिर्मुक्तः शिवेन सहमोदते इत्युक्त्वा ऽनुपदं सत्यं शौचं जपोहोमइत्युच्यते॥अत्रापि पूर्ववचने शिवसायुज्यरूपनियतफलकथनात् अनुपदं द्वितीयवचनोक्तं तद्राहित्येन कृतकर्मवैयर्थ्यमपि रुद्रपदप्राप्तिलक्षणमोक्षकांक्षिणः शैवस्यैव नान्यस्येति स्पष्टमेव सिध्यति॥अनेनैव शैवसुधाकरोदाहृतानि संध्याशिवार्चनादीनि कर्माण्येतानि वस्तुतः॥वैदिकानि ततस्तेषु कर्त्तव्यं भस्मधारणं ॥ तथा ॥ नसंविशंति पापानि भस्मनिष्ठे ततः सदा ॥ कर्त्तव्यमतियत्नेन ब्राह्मणैर्भस्मधारणं ॥ यत्कृतं भस्मनिष्ठेन महादेवस्य पूजनं ॥ तत्सर्वाभीष्टदं तस्मात्कर्त्तव्यं भस्मधारणं ॥ उद्धूलनत्रिपुंड्राभ्यामलंकृततनुः शिवं ॥ योऽर्चयिष्यति तत्तुल्योभुवि कोवा भविष्यतीत्यादीनि शिवरहस्यवचनान्यपि समाहितानि वेदितव्यानि ॥ शिवार्चनादिसाहचर्येण स्फुटमेव तदर्चननियमवच्छैवपरत्वनिश्चयात् ॥ पौर्वापर्यपरिचिंतनेन च प्रायः सर्वेषामपि शिवरहस्योक्तानां धर्माणां शैवमात्रपरत्वनिश्चयात् ॥ सर्वैरपि विद्वद्भिस्तथैव स्वीकाराच्च॥तत्रोक्तस्य विभूतेर्यज्ञोपवीततौल्यातिदेशस्याऽपि शैवपरत्वेनोपसंहारउचितः ॥ उपवीतादिवद्धार्याः शंखचक्रगदादयइति यज्ञोपवीतवद्धार्यातुलसीमालिकाद्विजैरित्यादि पद्मपुराणाद्युक्तातिदेशानां वैष्णवपरत्वेनोपसंहारवत् ॥ नन्वेवं त्रिपुंड्रराहित्येन कर्मवैयर्थ्यं शैवपरमेवेति तु सम्यगुपपादितं ॥ तथाप्येतस्य सर्वपरत्वाश्रयणे कावा क्षतिरितिचेदुच्यते ॥ एतस्य सर्वसाधारणत्वे ब्राह्मणः कुलजोविद्वानित्यादिनिषेधोनिरवकाशः स्यात्॥ किंचोर्ध्वपुंड्रस्य सर्वेष्वपि कर्मस्वावश्यकत्वमनेकेषु सर्वसाधारणेष्वाह्निकादिधर्मशास्त्रग्रंथेषु बहुवचनोपन्यासपुरःसरं सुप्रपंचितमेव ॥

तद्यदि त्रिपुंड्रं सर्वसाधारणं स्यात्तर्हि तन्निरवकाशं स्यात्॥नचास्य वैष्णवमात्रे सावकाशत्वमितिवाच्यं॥बहुग्रंथविरोधात्॥सार्वदेशिक- स्मार्त्तादिसर्वशिष्टाचारविरोधात्॥ऊर्ध्वपुंड्रं शिवस्यैवं विष्णोः कुर्युश्च वा बुधाइत्यादिमयूखादिधृतवचनेषु शैववैष्णवयोरुभयोरपि तदा- वश्यकत्वस्यविरोधाच्च॥नन्वेवंसत्युभयोरप्यावश्यकत्त्वात्संध्यावंदना दिकाले उभयोरपि धारणमस्त्विति चेन्नैवं॥शिवकेशवचिन्हभूतयो- रनयोर्युगपद्धारणस्यायोग्यत्वात् ॥ शिवकेशवयोश्चिन्हं चक्रशू- लादिकं द्विजः ॥ नधारयेत मतिमान् वैदिके वर्त्मनि स्थितइत्यादि- भिराश्वलायनपष्ठाध्यायवचनैस्तन्निषेधात् ॥ ईदृशवचनानां युग- पद्धारणनिषेधपरत्वस्य बहुनिबंधसंमतत्वात् ॥ स्कांदे त्रयोविंशा- ध्याये ॥ ऊर्ध्वपुंड्रे त्रिपुंड्रं यः कुरुते तु नराधमः ॥ भंक्त्वा विष्णुगृ- हं पुण्यं सयाति नरकं ध्रुवं ॥ त्रिपुंड्रे यस्य विप्रस्य ऊर्ध्वपुंड्रं प्रदृ- श्यते ॥ तं दृष्ट्वा प्यथवा स्पृष्ट्वा सचैलं स्नानमाचरेदितिस्पष्टमेव त- योर्युगपद्धारणस्य प्रतिषिद्धत्वाच्च ॥ तस्माद्धार्यंत्वन्यतरदेव ॥ त- थाच सति उभयोरावश्यकत्ववचनं बाध्येतैवेति व्यवस्थासामंज- स्याभावात् ॥ उक्तयुक्त्या त्रिपुंड्रादिकं शैवपरमेव तेषामेवच तद्रा- हित्येन कृतकर्मवैयर्थ्यमपीति सर्वं सुस्थं ॥ अतएव कौर्मे सर्वेषाम- पि शैवानां तदेव मुख्यत्वेनोच्यते ॥ सर्वेषामेव भक्तानां शंभोर्लिं- गमनुत्तमं ॥ सितेन भस्मना कार्यं ललाटे तु त्रिपुंड्रकमिति ॥ स- र्वेषामेव चतुर्णामपि वर्णानां शंभोर्भक्तानां अर्थाच्छैवानां शं- भोश्चिन्हं भस्मत्रिपुंड्रमेवानुत्तमं मुख्यमित्यर्थः॥शंभोरिति देहली- दीपकन्यायेनोभयत्रान्वेति ॥ नचात्र सर्वेषामेव देवानां भक्तानां शंभोर्लिंगमेव धार्यमित्येवार्थोऽस्त्विति शंक्यं॥ अपिमवाक्यचयवि-

रोधात् ॥ तथाच तत्रैव ॥ यस्तु नारायणं देवं प्रपन्नः परमं पदं ॥ धारयेत्सर्वदा पुंड्रं ललाटे गंधवारिभिः॥ प्रपन्नाये जगद्बीजं ब्रह्माणं परमेष्ठिनं ॥ तेषां ललाटे तिलकं धारणीयं तु सर्वदा ॥ इह शूलमितिकाचित्कपाठस्तु सगुणोपासकपरत्वेन व्यवस्थापितएवावतारवादावल्यां ॥ तस्मात्त्रिपुंड्रं शैवानामेवेति सिद्धं॥ यत्तूक्तमधुना केनचिच्छैवसुधाकराख्ये स्वग्रंथे॥ नित्यत्वाच्च भस्म सदा धार्यं ॥ तथाचैतत्तिरीयकश्रुतिः ॥ भूत्यै न प्रमदितव्यमिति ॥ रावणभाष्ये भूतिशब्दार्थोभस्मेति स्पष्टमुक्तम् ॥ सूतसंहितायां च तदेवोपबृंहितं ॥ तद्यथा ॥ सत्याद्धर्मादपि कुलाद्भस्मनोद्धूलनादपि ॥ त्रिपुंड्रधारणाच्चै व सदा न प्रच्युतोभवेदिति ॥ तन्न ॥ भूतिशब्दस्याऽत्र समृध्यर्थकत्वात् ॥ शिष्यस्य ब्रह्मचारिणो विवाहाद्यनेकमांगलिककार्योपजीव्यत्वेन तद्विपये प्रमादाभावस्यावश्यविधेयत्वात्॥पौर्वापर्यपर्यालोचनेनापि तथैव निश्चयात् ॥ शंकराचार्यैरपि तथैवव्याख्यातत्वाच्च॥ तथाहि॥वेदमनूच्याचार्योंतेवासिनमनुशास्तीत्युपक्रम्येदं पठ्यते ॥ तत्राधीतवेदस्य स्नातुमिच्छोः शिष्यस्य प्रथमं गुरुदक्षिणादानपूर्वकोद्वाहार्थं तदनु पुत्रपौत्रोत्पत्त्याद्यर्थं मनुष्यसंव्यवहारार्थं द्रव्यसाध्यावश्यककुटुंबभरणपंचमहायज्ञादिनिर्वाहार्थं गृहस्थाश्रमोपजीव्यकेतराश्रमत्रयस्य यथाशक्ति सत्कारार्थं च द्रव्यसंपत्तिरवश्यमपेक्षितैव ॥ तद्यथा ॥ याज्ञवल्क्यः ॥ (अ० १) विवाहप्रकरणे ॥ गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया ॥ वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा॥ अविप्लुतब्रह्मचर्योलक्षण्यां स्त्रियमुद्वहेदिति ॥ तृतीयाध्याये मनुरपि ( श्लो० ४ ) गुरुणाऽनुमतः स्नात्वा समावृत्तोयथाविधि ॥ उद्वहेत द्विजोभार्यां सवर्णां लक्ष-

णान्वितामितिविवाहस्याऽऽवश्यकत्वमाह ॥ अतएव प्रकृतानुवाके- पि॥ आचार्याय प्रियं धनमाहृत्य प्रजातंतु माव्यवच्छेत्सीरित्यनु- शिष्यते ॥ व्याख्यातं चात्र शंकराचार्यैः ॥ आचार्यायाचार्यार्थं प्रियमिष्टं धनमाहृत्यानीय दत्वा विद्यानिष्क्रयार्थमाचार्येणचानु- ज्ञातोऽनुरूपान् दारानाहृत्य प्रजातंतुं संतानं माव्यवच्छेत्सीः प्र- जासंततेर्विच्छित्तिर्नकर्त्तव्येति ॥ एतदर्थमपि भूतिरपेक्षितैव ॥किं- च तदनु पुत्रपौत्राद्यर्थोयत्नः कार्यः मनुष्यसंव्यवहारश्च पाल्यः ॥ इतः पूर्वं नवमानुवाके प्रजाचस्वाध्यायप्रवचनेच प्रजनश्चस्वा- ध्यायप्रवचनेच प्रजातिश्चस्वाध्यायप्रवचनेचेति वाक्यत्रयेण प्र- जोत्पादनस्य कृतौ भार्यागमनस्य पुत्रविवाहं कृत्वा तद्द्वारा पौत्रो- त्पादनस्य चावश्यकत्वश्रावणात् मानुषंचस्वाध्यायप्रवचनेचेत्यने- न लौकिकसंव्यवहारस्यापि तथात्वश्रावणाच्च ॥ अतएव तदर्थम- पि समृद्धिरपेक्षितैव ॥ अपिच वृद्धौ च मातापितरौ सती भार्या शिशुः सुतः ॥ अप्यकार्यशतं कृत्वा भर्तव्यामनुरब्रवीत् ॥ अतिथिं वैश्वदेवं च षट्कर्माणि दिनेदिनइत्यादि मनुपराशरादिवचनेभ्यो गृहस्थस्य तत्सर्वमावश्यकमेव ॥ अतएव नवमानुवाके ॥ अति- थयश्चस्वाध्यायप्रवचनेचेत्याद्युच्यते॥प्रकृतानुवाकेऽपि मातृपित्रा चार्यातिथिषु देवत्वबुद्धिना भवितव्यमिति विधीयते ॥ अतस्तद- र्थमपि समृद्धिरपेक्षितैव ॥ अन्यच्च तृतीयाध्याये मनुः ॥ ( श्लो० ७७ ) यथा वायुं समाश्रित्य वर्तंते सर्वजंतवः ॥ तथा गृहस्थमा- श्रित्य वर्त्तंते सर्वआश्रमाइत्यादि ॥ दक्षः ॥ देवैश्चैव मनुष्यैश्च ति- र्यग्भिश्चोपजीव्यते॥ गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठोगृहाश्रमी ॥ त्रयाणामाश्रमाणांच गृहस्थोयोनिरुच्यते इत्यादि॥ एवमाद्यनेक-

श्रुतिवचनैर्यथाशक्त्याश्रमत्रयसत्कारआवश्यकएव॥अतएव प्रकृताऽनुवाकेऽपि श्रद्धयादेयमित्यादि श्रूयते॥अतस्तदर्थमपि समृद्धिरपेक्षितैव॥तस्मादत्रैवोक्तानेककार्यसिध्यर्थं तदुपजीव्यायाः समृद्धेः संपादनेऽपि त्वया प्रमादोन कर्त्तव्यइत्येव गुरुणाऽनुशिष्यते॥अतएव प्रथमाध्याये आन्हिकं वदन्नाह याज्ञवल्क्यः॥ उपेयादीश्वरं चैव योगक्षेमार्थसिद्धयइति॥ अन्यथा भवन्मते भस्मरुद्राक्षयोरुभयोरपि तुल्यत्वात् रुद्राक्षधारणान्नप्रमदितव्यमित्यप्यत्रश्रूयेत तदश्रवणाच्च रुद्राक्षधारणस्याऽनित्यत्वमपि प्रसज्येत॥तस्मान्न किंचिदेतत्॥ एतत्सर्वमभिप्रेत्य शंकराचार्यैरपि अनेकमांगलिककर्मोपयोगिनी समृद्धिरेवाऽत्र भूतिशब्देन व्याख्याता॥ यत्तूक्तं रावणभाष्ये तथा अर्थः स्फुटइति॥ तद्यदितद्भाष्ये तथा भवेत्तदाऽपि अप्रसिद्धस्य भगवद्विमुखविविधाधर्मविधायिसर्ववेदोपद्रवकारिशैवमतैकधुरायहिराक्षसविशेषकृतव्याख्यानस्याऽऽहत्य तत्त्वतः प्रामाण्यं सर्वथा वक्तुमयुक्तं॥ यदिच तस्यैव तत्त्वतः प्रामाण्यं स्यात्तर्हि पुनर्वेदव्याख्यानाय सायनमाधवादयोन प्रवर्त्तेरन्॥ बहुस्थलेषु तद्विरुद्धं च न व्याकुर्वीरन्॥तस्माद्भवतां तु स्वाचार्यशंकरविद्यारण्यादिविरोधेन रावणभाष्यं नादर्त्तुमुचितम्॥ यत्तूपबृंहणवाक्यमुक्तं॥तत्समूलं चेत्तदापि नेदमस्याः श्रुतेरुपबृंहणं भवितुमर्हति॥तदुक्तार्थाननुवादकत्वे सति तदनुक्तार्थाभिधायकत्वात्॥अत्रहिसत्याद्धर्मादपिकुलादिति कुलशब्देन तदुपलक्षितकुलाचारादप्रच्युतिर्विधीयते॥ सचप्रकृतश्रुत्यनुक्तः॥ श्रुतौ च कुशलान्न प्रमदितव्यमित्यनेनोक्त आत्मरक्षणे प्रमादाभावोमध्ये पतितत्वादवश्यमनूदितव्योऽपि न तद्वाक्येनाऽनूद्यते॥ नच श्रुतौ कुशल-

शब्देन कुलाचारएवविवक्षितोऽतोन दोषइति वाच्यं॥शंकराचार्यैर प्यत्र कुशलशब्देन आत्मरक्षणस्यैव व्याख्यातत्वात् ॥ किंच श्रुतौ भूत्यैनप्रमदितव्यमित्येकमेववाक्यं॥इहतु भस्मनोद्धूलनादपि त्रिपुं ड्रधारणाच्चैवेति द्वयमुच्यते ॥ अतोयद्यत्र त्रिपुंड्रान्नप्रमदितव्यमि त्यपि वाक्यांतरं श्रूयेत तदेदं तदुपबृंहणत्वेन शक्येत वक्तुं ॥ तदेव तु नाऽस्तीतिन तथा ॥ नच भूत्यैनप्रमदितव्यमित्यस्यैव वाक्यस्य प्रपंचोऽयमिति मंतव्यं॥सत्यादीनां प्रपंचस्याऽकृतत्वेन प्रक्रमविरो धापत्तेः॥एतन्मात्रप्रपंचने व्यासस्याऽऽग्रहाऽतिशये बीजाऽभावेन तथा वक्तुमयुक्तत्वाच्च॥प्रत्युत एतन्मात्रप्रपंचनदर्शनेनान्यथाशंको दयाच्च॥तस्मान्नास्य तदुपबृंहणत्वज्ञापकं किंचिल्लिंगमस्ति॥नन्वस्ति सत्याद्धर्मादिति पदद्वयोच्चारणमितिचेन्नैषदोषः ॥बृहन्नारायणादि ष्वनेकत्र सत्यधर्मयोस्साहचर्येण निरूपणदर्शनात् प्रकृतानुवाको क्तयोरेव तयोरिहाऽनुवादइति प्रतिपत्तुमशक्यत्वात् ॥ अतः प्रकृत श्रुत्युक्तार्थाननुवादकत्वात्तदनुक्तार्थाभिधायकत्वाच्च नेदं तदुपबृं हणत्वेन शक्यं शंसितुमिति न तद्बलादत्रत्यभूतिशब्दस्य भस्मार्थ कत्वं कल्प्यं॥किंतु वाचा वक्तव्यत्वेन कायेनाऽनुष्ठेयत्वेन च भि न्नयोरदृष्टार्थयोस्सत्यधर्मयोः प्रथमं प्रमादाभावोऽनुशिष्यते ॥ ए वमेवांऽतरंगबहिरंगत्वभेदभिन्नयोस्सत्यादिनिर्वाहकयोर्दृष्टार्थयोरा त्मरक्षणसमृद्ध्योरपि प्रमादाभावः कुशलान्नप्रमदितव्यं भूत्यैनप्रम दितव्यमितिवाक्यद्वयेनाऽनुशिष्यते॥तदनु द्रव्यसमृद्धस्य वृत्त्यर्थं प्रव चनानुपयोगात्॥तथासति च तादृक्स्वाध्यायोपस्थितेरप्ययोगात्त योरुच्छेदः स्यात्तद्वारणाय नवमानुवाके ऋतसत्यादिसर्वसाहचर्ये णाभ्यस्तस्यस्वाध्यायप्रवचनाऽऽवश्यकत्वस्य पुनः स्मारणाय तत्र

प्रमादाज्ञात्रश्रोयते स्वाध्यायप्रवचनाभ्यांनप्रमदितव्यमिति॥एवं-
स्मारयित्वा समृद्धिविषये अप्रमादोन स्वतएव पुरुषार्थभूतः किंतु
आमुष्मिकाणां देवादीनां ऐहिकानां मातापित्रादीनां च द्रव्यज-
न्यसत्कारद्वारेवेति ज्ञापनाय देवपितृकार्याभ्यांनप्रमदितव्यं मातृदे-
वोभव पितृदेवोभवेत्यादि विधीयते॥तस्मादिहोपक्रमोपसंहारादिप
रिचिंतनेन यांज्ञवल्क्यादिस्मृत्यनुसारेण च भूतिशब्दस्समृद्ध्यर्थ-
कएवेतिनिश्चीयते॥किंच॥इह भस्मार्थकत्वे सत्यांद्धर्मादितिवत् भूते-
र्नप्रमदितव्यमित्येववदेत्॥ धर्मशब्दलक्षितात्तदनुष्ठानादिव भूतिश-
ब्दलक्षितात्तद्धारणात्प्रमादाभावाऽभ्यनुज्ञासंभवात् ॥ वदति तु भू-
त्यैइति ॥ तेन पंचमीप्रायपाठपठिता चतुर्थीश्रुतिर्भूतेरर्थपुरुपार्थ-
त्वेन भेदबोधनायैवेति ज्ञायते ॥ श्रुतेर्लिंगवाक्यप्रकरणादिसर्वापे-
क्षया बलिष्ठत्वस्य पारदौर्बल्यसूत्रे जैमिनिनांऽगीकारात् ॥ तथाच
फलेभ्योयातीतिवत् क्रियार्थोपपदस्यचकर्मणिस्थानिनइत्यनुशा-
सनात्सत्यधर्माद्यविरोधेन समृद्धिं संपादयितुं न प्रमदितव्यमित्ये-
वार्थः समंजसः प्रतीयते ॥ शंकराचार्यादिभिस्तथैव व्याख्यातइति
न भस्मार्थः सः ॥ विशेषश्च मत्कृतोपनिषद्भाष्यात्सेस्स्यत्येवेति सर्वं
सुस्थं ॥ यत्तु कैश्चित्सकलब्रह्मविद्यांगत्वं भस्मोद्धूलनस्य केनचि-
त्प्राचोद्दुष्टं ॥ यच्च कैश्चित् शिरोव्रतत्वादिकमस्य दर्शितं॥ तत्तु प्रा-
गेव पुरुषोत्तमचरणैस्सम्यक् निराकृतमिति किं तयाऽत्र चिंतया॥
यच्च बृहज्जाबालादिषु पापनाशकत्वमस्योक्तं ॥ तदपि शुद्धांतःक-
रणशैवविषयकं नतु तस्य चित्तशोधकत्वमितिभाति ॥ अंतःकरण-
शुद्धाये तान्विभूतिः पवित्रयेत्॥पावनाः किं प्रकीर्त्यते रासभाभस्म

धूसराइति काशीखंडवाक्येऽस्य चित्तशुध्युत्तरकालएव पापनाश कत्वनिश्चयात् ॥ अलमनेन विचारेण॥तथाचेयं व्यवस्था प्रतिभाति॥वैष्णवानां तु चतुर्णामपि वर्णानां सर्वदोर्ध्वपुंड्रमेव ॥ पाद्मादिपु पुंड्रांतरनिपेधात्॥अधारणे प्रत्यवायाच्च॥शैवानां च त्रिपुंड्रमेव मुख्य मितिशिवार्चनादिपु तदेव कर्त्तव्यं॥श्राद्धादिकर्मकाले तु तेपामूर्ध्वपुंड्रस्यापिविकल्पः ॥कुर्युःशैवाश्चवैष्णवाइत्यादिवाक्येभ्यः ॥शैववैष्णवव्यतिरिक्तानां त्वेवं निर्णयः॥तत्रत्रैवर्णिकानामूर्ध्वपुंड्रं नित्यमग्निहोत्रतौल्यातिदेशात्॥ब्राह्मणस्य च जातिप्रयुक्तत्वादपिनित्यं॥अतः प्रातः स्नात्वा तद्धार्यमेव॥कमलाकरभट्टाह्निकादिपु॥धारयेदूर्ध्वपुंड्राणि स्नात्वा ऽऽचम्य यथाविधि ॥ संकर्षणादिभिः कृष्णे शुक्ले वै केशवादिभिरित्यादिशौनकादिवचनेभ्यः ॥ शिवार्चनकाले च त्रिपुंड्रमेव धार्यं ॥ अन्यथा तद्वैफल्यस्मरणात् ॥ एवं शैवमंत्रजपेऽपि॥भगवत्पूजने चोर्ध्वपुंड्रमेव विधेयं॥कमलाकराह्निकभागवततत्त्वभास्करादिपु वाराहे द्वात्रिंशदपराधकथने ॥ तिर्यक्पुंड्रधरोभूत्वा यः कुर्यान्मम पूजनमिति पूजाकाले त्रिपुंड्रधारणस्य प्रथमापराधत्वनिरूपणात् ॥ अथ होमादिसर्वश्रौतस्मार्तकर्मसु बहुभिर्वचनैरूर्ध्वपुंड्रस्यावश्यकत्वं तद्राहित्येन कर्मवैफल्यं च प्रतिपाद्यते॥ तथा क्वचित्त्रिपुंड्रस्यावश्यकत्वं दृश्यते ॥ तयोर्युगपद्धारणं च निषिद्धं ॥ अतस्तत्रस्वस्वकुलाचारानुसारादन्यतरद्धारणीयं ॥ येनाऽस्य पितरोयातायेन याताः पितामहाइत्यादिमिताक्षराद्युदाहृतमन्वादिवचनेभ्यः ॥ अतएव आचारप्रकाशे ऊर्ध्वपुंड्रत्रिपुंड्रविधीव्याख्यायोच्यते ॥एवमुक्तयोस्तिलकभस्मधारणयोर्यथास्वकुलसंप्रदायमङ्गभेर्व्यवस्था श्रूयते॥श्रोणामेकउदके०॥उपावतुरिति० ॥

अत्र प्रथमः पादोगोपीचंदनादेस्तिलकं द्वितीयोगोरोचनायास्तृतीयोभस्मधारणं चतुर्थः स्वकुलसंप्रदायानुरोधं चैषां धारणे प्रतिपादयतीति दिगिति॥येषांच न तादृशोनियतः कुलाचारस्तैस्तु शास्त्राऽविरोधेन स्वमनोनुरोधेनैव तद्विधेयं ॥मनुयाज्ञवल्क्यादिभिः श्रुतिस्मृतिसदाचारानवसरे आत्मतुष्टेरपि धर्मप्रमाणत्वस्मरणात् ॥ अतोवैष्णवसांप्रदायिकैस्तु स्वसंप्रदायानुसारि ऊर्ध्वपुंड्रमेव कार्यं नत्वन्यत् ॥ आचारार्कादिपूर्ध्वपुंड्रविधिव्याख्यानांते यथासंप्रदायं तिलकं कुर्यादित्युक्तेः ॥ कमलाकराह्निकेऽपि ऊर्ध्वपुंड्रं त्रिपुंड्रं वा यथासंप्रदायं कुर्यादित्युक्तेश्च ॥ इतरधारणेऽत्यंततरदुरितभरप्रसरस्मरणाच्चेत्यलं बहुलेखनेन ॥ अतोन वयं विजातीयं पुंड्रं निंदामइति नास्मास्वयं प्रश्नोऽवतरति ॥ नचाधारणादेव तन्निंदितमिति वाच्यं ॥ शास्त्रानुसारादधारणे प्राप्ते तावतैव निंदा कृतेति वक्तुमशक्यत्वात् ॥ अन्यथेतरशाखीयकर्मपरित्यागपूर्वकं स्वशाखीयकर्माचरतोऽपि वेदनिंदा दोषः प्रसज्येत ॥ शाखामात्रस्याऽपि वेदत्वाविशेषात् ॥ तस्मान्न किंचिदेतत् ॥ निंदाकृतिं न विद्मोविजातीयेऽपि यद्वयं ॥ अतोनिंदाप्रमाणस्यान्वेषणे किं प्रयोजनम् ॥ १ ॥

## ॥ अथाष्टमोऽवांतरः प्रश्नः ॥ ८ ॥

॥ तदनंगीकारे दोषस्य च किं प्रमाणं ॥ ४८॥

## ॥ उत्तरं ॥

तिलकावश्यकत्वे किं प्रयोजनमिति त्वया ॥ पृष्टं तस्योत्तरे सम्यक् तदावश्यकतोदिता ॥ १॥ तेनैवायं गतार्थोऽपि प्रश्नोयस्मात् पु

नाऽकृतः ॥ अकस्मादुत्तरं तस्मादस्माभिः पुनरुच्यते ॥ २ ॥ विहितस्यावश्यकस्याऽधारणं दोषकारणं ॥ प्रायश्चित्तं रवेर्दृष्टिसद्धीनाननलोकने ॥ ३ ॥ अत्यंतं चोच्यते दोषस्तेनैतद्रहितस्य तु ॥ तद्धीनं च त्यजेत्कृष्णोवक्तव्यं किमतः परं ॥ ४ ॥ तथाहि ॥ गौतममुनिकृताचारसूत्रे प्रथमप्रश्ने अथाऽऽचारान् प्रवक्ष्यामीत्याचारकथनं चतुःपुरुषार्थसाधकत्वेनाऽऽवश्यकत्वनिरूपणपुरःसरं प्रतिज्ञाय तत्र प्रथमं प्रत्यहकर्त्तव्यत्वेन नित्यत्वात् उत्थायपश्चिमेयामइत्यादिना आन्हिकं निरूपयन् स्नानपर्यंतं निरूप्य जपादिसर्वनित्यकर्मनैष्फल्याभावाय नित्यमूर्ध्वपुंड्रमाह ॥ (खंडः ८) जपोहोमोदानं यागः स्वाध्यायः पितृकर्म चोर्ध्वपुंड्रं विना तत्सर्वं भस्मीभवति अनाचारोऽशुचिर्वा पापं मनसा चरन् ऊर्ध्वपुंड्रांकितः शुचिरेवभवेदित्यादि ॥ सारसंग्रहे मात्स्ये ॥ योविना चोर्ध्वपुंड्रेण यत्कुर्यात्कर्म वैदिकं ॥ निष्फलं तस्य तत्कर्म भस्मन्येवाहुतिः यथा ॥ तत्रैव हारीते ॥ ऊर्ध्वपुंड्रविहीनस्तु संध्याकर्म समाचरेत् ॥ तत्सर्वं राक्षसैर्नीतं नरकं सच गच्छति॥नित्यं नैमित्तिकं काम्यं त्रिविधं श्रुतिनोदितं ॥ ऊर्ध्वपुंड्रविहीनस्य सर्वं तन्निष्फलं भवेदिति ॥ एवमादिवचनसहस्रैस्तस्याऽऽवश्यकत्वं त्वस्त्येव ॥ किंचास्तीदं ब्राह्मणानां संध्यावंदनादिवन्नित्यं ॥ यथोक्तं ब्रह्मांडपुराणे॥ शंखचक्रोर्ध्वपुंड्रादि धारयेद्ब्राह्मणः सदा॥श्राद्धादिसर्वकर्माहेदरयुक्तं किमतः परमिति ॥ अग्निहोत्रातिदेशस्मृतौ च त्रैवर्णिकानामेतन्नित्यमिति दर्शितं ॥ एवंविधैर्विविधमहानिबंधधृतवचनव्यूहैनित्यत्वेन विहितस्याऽत्यावश्यकस्याऽस्याऽनंगीकारे महत्तरएव दोषोभवेदेवेति किमत्र कंठशोषणकारिणा बहुभाषणेन॥अतएवैका

दशाध्याये प्रायश्चित्तानि निरूपयन्नाह मनुः ॥ (श्लो० ४४) अकुर्वन्विहितं कर्म निंदितं च समाचरन् ॥ प्रसक्तश्चेंद्रियार्थेषु प्रायश्चित्तीयते नरइति ॥ केचिच्चेदं पाराशरस्मृतिवचनमप्याहुः॥ शंखचक्रोर्ध्वपुंड्रादिरहितोब्राह्मणाधमः ॥ सजीवन्नेव चांडालः सर्वधर्मबहिष्कृतइति ॥ किंचोर्ध्वपुंड्ररहितस्य मुखावलोकनेऽपि प्रायश्चित्तं स्मर्यते आचारार्के सारसमुच्चये कमलाकराह्निकेच॥ऊर्ध्वपुंड्रविहीनस्य श्मशानसदृशं मुखं ॥ अवलोक्य मुखं तस्य श्रीसूर्यमवलोकयेदिति ॥ एवं तद्रहितमुखद्रष्टुरपि विधीयमानप्रायश्चित्तानुमीयमानदोषबोधने सति तदधारयितुः कियान् दोषोभवेदिति नाहं त्ववधारयितुं शक्तः ॥ किंच शिवादिसर्ववृंदारकवृंदवंदितचरणारविंदोऽखिलेश्वरोयदुनंदनोऽपि ऊर्ध्वपुंड्रानंगीकारिणं नांगीकरोतीति किमतः परं वक्तव्यं निःशेषदोषपोषवत्वं हरिरोषजोपभूतसर्वसुकृतस्य तस्य ॥ उक्तंच सारसंग्रहे ब्रह्मरात्रे भगवतैव ॥ प्रणवेनैव मंत्रेण मृदा वै मामनुस्मरन् ॥ललाटे धारयेन्नित्यं विष्णुसालोक्यमाप्नुयात् ॥ योन धारयते मर्त्यो मामकं चिन्हमीदृशं॥ तं त्यजामि दुरात्मानं मदीयाऽज्ञातिलंघिनम् ॥ व्यालं दृष्ट्वा यथा लोके दर्दुराभयकंपिताः ॥ ऊर्ध्वपुंड्रांकितं तद्वत्कंपते यमकिंकराः॥ऊर्ध्वपुंड्रेण संयुक्तोम्रियते यस्तु मानवः ॥ चांडालोऽपि विशुद्धात्मा विष्णुलोके महीयते॥केवलस्योर्ध्वपुंड्रस्य धारणादपि मानवाः॥ देहजैः पापसंघातैर्मुच्यते नाऽत्र संशयइति॥ नचैवमूर्ध्वपुंड्रधारणमात्रेण सर्वपापप्रलोपपूर्वकं भगवल्लोकाधिगमे संभवति सति तदतिरिक्तानां संध्यावंदनभगवत्सेवनादीनामपि वैयर्थ्यं प्रसज्येत तच्चायुक्तमिति वाच्यं ॥ आवश्यकतयो-

र्ध्वपुंड्रं विधेयमित्येव तात्पर्यवत्त्वाद्वाक्यानां ॥ अन्यथा भवतां शैवसुधाकरे छद्मना त्रिपुंड्रकर्त्तुः सर्वपापक्षयबोधकवचनानि लिखितानीति श्रद्धया त्रिपुंड्रधारिणां युष्माकं तु सुतरामितर-सर्वकर्मवैयर्थ्यं प्रसज्ज्येतेति ॥ किंच विष्णुधर्मोत्तरादिष्वपि ऊ-र्ध्वपुंड्ररहितस्य भगवत्प्राप्त्यभावः स्मर्यते ॥ शंखचक्रोर्ध्वपुंड्राद्यैश्चि-न्हैः प्रियतमैर्हरेः॥ रहितः सर्वधर्मेभ्यः प्रच्युतोनैनमाप्नुयादिति ॥ इदं दूषणोद्धारेऽपि संगृहीतं ॥ पुनः सारसंग्रहे नारदपंचरात्रे ॥ तु-लसीमालिका चैव राज्ञां चामरच्छत्रवत्॥ऊर्ध्वपुंड्रं सदा धार्यं शि-खायज्ञोपवीतवदिति॥ एवमनेकनिबंधेषु परःशतश्रुतिस्मृतिपुराण-वचनोपन्यासपुरःसरं सविस्तरं तत्रतत्रोर्ध्वपुंड्राऽनंगीकारिणोविशे-षतोऽशेषदोषपोषप्रमाणानि प्रपंचितान्येवेति तदनवलोकनमूल-काय नमोऽस्तु प्रश्नाय ॥ अथैवं निर्विचिकित्सनित्यत्वमप्यूर्ध्वपुंड्रं निरवधिविविधजनिपरंपराजनितकर्मधोरणीपरतंत्रतया चिराद्भ्र-रणिचैररितैरंगीक्रियतां मावा ॥ अस्माभिस्तु सर्वैरपि वैष्णवै-राप्राकृतमापंडितमाबालमावृद्धं च स्वस्वामिचरणसरोजमुदाश्रिते-न सदा सर्वदा तदावश्यकतया धार्यमेव ॥ अतएव सारसंग्रहे हा-रीतः ॥ अविद्योवा सविद्योवा शंखचक्रोर्ध्वपुंड्रधृक् ॥ नृणां हंति समस्ताघं तमः सूर्योदये यथेति॥परमानंदमंदारे गारुडे॥योमृत्तिकां द्वारवतीसमुद्भवां करे समादाय ललाटदेशे॥करोति नित्यं त्वथचो-र्ध्वपुंड्रं क्रियाफलं कोटिगुणं तदा भवत्॥ क्रियाविहीनं यदि मंत्र-हीनं श्रद्धाविहीनं यदि कालवर्जितं॥कुर्याल्ललाटे यदि गोपिचंदनं प्राप्नोति तत्कर्मफलं तदाक्षयं ॥ दूषणोद्धारे च नारदपंचरात्रे ॥ऊ-र्ध्वपुंड्रं द्विजः कुर्याद्दंडाकारं सुशोभनं ॥ मध्ये छिद्रं वैष्णवस्तु

नमोंतैः केशवादिभिः ॥ सांतरालमृजुं सौम्यं सुपार्श्वं सुमनोहरं ॥ यः करोत्यूर्ध्वपुंड्रं सममातीव प्रियोभवेत् ॥ विपुलान्यूर्ध्वपुंड्राणि सांतरालानि योनरः ॥ करोति विपुलं तत्र मंदिरं मे करोति सः ॥ ऊर्ध्वपुंड्रस्य मध्ये तु विशालेऽतिमनोहरे ॥ लक्ष्म्या सार्द्धं समासीनोरमेऽहं तत्र नित्यतइति॥ तथा ॥ सारसंग्रहे पाद्मे ॥ तस्माच्छिद्रान्वितं पुंड्रं महाछिद्रं शुभान्वितम् ॥ धारयेद्ब्राह्मणोनित्यं हरिसालोक्यसिद्धये ॥ मध्यच्छिद्रेण संयुक्तं तद्धि वै हरिमंदिरम् ॥ ऊर्ध्वपुंड्रमृजुं सौम्यं सुपार्श्वं सुमनोहरं ॥ एकांतिनोमहाभागाः सर्वभूतहितेरताः ॥ सांतरालं प्रकुर्वंति पुंड्रं हरिपदाकृतिम् ॥ तस्माच्छिद्रान्वितं पुंड्रं दंडाकारं सुशोभनम् ॥ नीलकंठाह्निके भट्टोजिदीक्षिताह्निके च स्मृतिसारसमुच्चये ब्रह्मांडे ॥ अशुचिर्वाऽप्यनाचारोमनसा पापमाचरन् ॥ शुचिरेव भवेन्नित्यमूर्ध्वपुंड्रांऽकितोनरइति ॥ बह्वृचाह्निकाचारमाधवादिषु ॥ ऊर्ध्वपुंड्रमृजु सौम्यं ललाटे यस्य दृश्यते ॥ सचंडालोऽपि शुद्धाऽऽत्मा पूज्यएव न संशयइति ॥ एवमूर्ध्वपुंड्रावश्यकताख्यफलजनकास्संत्यनंताएव श्रुत्यादिवचनसंतानाइति किं तैरुदाहृतैः ॥ एकोपि चक्षुष्मान् पश्यतीतिन्यायेन निर्मत्सराणां सतामल्पैरपि समूलवचनैः संशयोच्छेदसंभवात् ॥ अथ द्वेषविषविशेषकलुषितरोषकषायकषणविषण्णाशयानां तु परः सहस्रश्रुतिवचनैरपि नांतःकरणसंतोषः संभवति॥ शतमप्यंधानपश्यंतीति न्यायात् ॥ तदलं बहुविलेखनेन ॥ इत्थंच ॥ संगतस्योर्ध्वपुंड्रांशे त्वंगभश्चैः सहाष्टभिः ॥ भंगः प्रश्नस्य रचितोमंगलं ददतोत्तरम् ॥ १ ॥

---

## ॥ अथ सप्तमः प्रधानः प्रश्नः ॥ ७ ॥

॥ सर्वशास्त्रसंमतः शिवविष्ण्वोरभेदोभवत्संमतोनवा ॥ ७ ॥

### ॥ उत्तरं ॥

क्षराक्षराभ्यां परमोभगवान् पुरुषोत्तमः ॥ सनिर्गुणोऽनंतगुणोऽत्यः चिंत्यानंतशक्तिमान् ॥ १ ॥ नित्यानंतनिजाभिन्नाऽचिंत्यधर्माश्रयोमहान् ॥ सएव सच्चिद्गणिताऽऽनंदमात्रोऽक्षरः स्मृतः ॥ २ ॥ मुंडके बृहदारण्ये कठवल्ल्यां स्फुटं श्रुतः ॥ अक्षरं तूपदधते सत्वाद्याः प्राकृतागुणाः ॥ ३ ॥ स्यात्सत्वोपहितोविष्णू रजसोपहितोविधिः ॥ तमसोपहितः शंभुर्ब्रह्मैवैकमभूत्त्रिधा ॥ ४ ॥ उपाधिभेदाद्भिन्नास्ते त्वभिन्नाब्रह्मभावतः ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ ५ ॥ भक्त्यैकलभ्योभगवान्निर्गुणः सर्वकारणं ॥ दास्यवद्भिरुपास्यः सोऽस्माभिः प्राप्य यथाश्रमं ॥ ६ ॥ तथाहि ॥ यदिह चोदितमभेदः संमतोनवेति ॥ तत्रतु ससंमतएवेति ब्रूमः ॥ उभयोरपि गुणावतारत्वेन तत्रतत्रोपहितस्य ब्रह्मचैतन्यस्यैकत्वात् ॥ एवमेव पद्मासनेऽपि बोद्धव्यं ॥एतेषां गुणावतारत्वं तूक्तं श्रीभागवते प्रथमस्कंधद्वितीयाध्याये ॥ (श्लो० २३) सत्वं रजस्तमइति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुषएकइहाऽस्य धत्ते॥ स्थित्यादये हरिविरंचिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युरिति ॥ एवं नारायणोपनिषद्यपि ॥ सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवं ॥विश्वं नारायणं देवमक्षरं परमं पदमित्युपक्रम्य सब्रह्म सशिवः सहरिः सेंद्रः सोऽक्षरः परमः स्वराडिति पुरुषोत्तमस्यैवाऽक्षरात्मकस्य ब्रह्मवि-

सकाशादित्यर्थः

ष्णुमहेश्वरभावउक्तः ॥अतएवैषामुत्पत्तिप्रलयौ श्रुतिस्मृतिपुराणेषु वर्ण्येते ॥ यथाह प्रथमाध्याये लघुपराशरः ॥ (श्लो० २०) कल्पेकल्पे क्षयोत्पत्त्या ब्रह्मविष्णुमहेश्वराइति॥एतद्व्याख्यायां माधवः ॥ तदेवं ब्रह्मविष्णुमहेश्वराः एतस्मिन्महाकल्पावसाने क्षीयंते पुनस्तत्र महाकल्पादावुत्पद्यंते इति सिद्धं॥अक्षरार्थस्तु क्षयसहिता उत्पत्तिः क्षयोत्पत्तिः तयोपलक्षिता भवंति इति व्याचख्यौ॥ तत्रैव पुराणे ॥ त्रिशतैः षष्टिभिः कल्पैर्ब्रह्मणोवर्षमीरितं ॥ वर्षाणां यच्छतं तस्य तत्परार्द्धमिहोच्यते॥ ब्रह्मणोंऽते मुनिश्रेष्ठामायायां लीयते जगत् ॥ तथा विष्णुश्च रुद्रश्च प्रकृतौ विलयं गतौ ॥ ब्रह्मणश्च तथा विष्णोस्तथा रुद्रस्य सुव्रताः ॥ मूर्तयोविविधास्तेषु कारणेषु लयं ययुः ॥ माया च प्रलये काले परस्मिन्परमेश्वरे ॥ सत्यबोधसुखानंतब्रह्मरुद्रादिसंज्ञितइति॥ तथा कौर्मे ब्रह्मविष्ण्वादिलयानंतरं पंचभूतादिलयः पठ्यते॥ संस्थितेष्वेव देवेषु ब्रह्मविष्णुपिनाकिषु ॥ गुणैरशेषैः पृथिवी विलयं याति वारिषु ॥ सवारितत्त्वं सगुणं ग्रसते हव्यवाहनः ॥ तेजस्तु गुणसंयुक्तं वायौ संयाति संक्षयं ॥ आकाशे सगुणे वायुः प्रलयं याति विश्वभृत् ॥ भूतादौ च तथाऽऽकाशोलीयते गुणसंयुतः ॥ इंद्रियाणि तु सर्वाणि तैजसे यांति संक्षयं ॥ वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः ॥ त्रिविधोऽयमहंकारोमहति प्रलयं व्रजेत् ॥ महांतमेभिः सहितं प्रकृतिर्जायते द्विजाइति ॥ एवंविष्णुपुराणादिषु प्राकृतलयोद्रष्टव्यः ॥ तथा ॥ उत्पत्तिप्रकरणेऽपि तस्माद्वाएतस्मादात्मनआकाशः संभूतइति तैत्तिरीयश्रुतिमुदाहृत्योच्यते माधवेन ॥ अन्नात्पुरुष-

इति ॥ तत्र पुरुषशब्देन शिरःपाण्याद्याकृतियुक्तोदेहोऽभिधीयते सच देहोब्रह्मादिस्तंबांतोबहुप्रकारः तत्र ब्रह्मदेहस्य निरतिशयपुण्यपुंजफलरूपत्वादितरसकलदेहकारणत्वेनाऽनादित्वं॥तथाच हिरण्यगर्भःसमवर्त्ततात्रेभूतस्यजातःपतिरेकआसीदितिश्रुतिः ब्रह्मादेवानांप्रथमःसंबभूवविश्वस्यकर्त्ताभुवनस्यगोप्तेतिच ॥ सवैशरीरीप्रथमःसवैपुरुषउच्यते ॥ आदिकर्त्तासभूतानांब्रह्माग्रेसमवर्त्ततेति ॥ एतेन विष्णुमहेश्वरदेहयोरप्यादित्वं व्याख्यातं ॥ एकेनैव चैतन्येन गुणत्रयव्यवस्थार्थं देहत्रयस्य स्वीकृतत्वात्॥तथाच मैत्रशाखायां श्रूयते तस्य प्रोक्ता अग्र्यास्तनवोब्रह्मा रुद्रोविष्णुरित्यथ योह खलु वाचाऽस्य राजसोऽशोसौसयोयं ब्रह्मा अथोहखलु वाचाऽस्य तामसोंऽशोऽसौसयोऽयं रुद्रोऽथ योह खलु वाचाऽस्य सात्विकोंऽशोऽसौ सयोऽयंविष्णुः ॥ सवा एषएकस्त्रिधा भुवइति ॥ तथोत्तरतापनीये मायां प्रकृत्य श्रूयते ॥ सैषा चित्रा सुदृढा बह्वंकुरा स्वयं गुणाभिन्नांकुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिचैतन्यदीप्ता तस्मादात्मनएव त्रैविध्य सर्वत्रेति ॥ अथ ईक्षत्यधिकरणे विज्ञानेंद्रभिक्षुभाष्ये ॥ मत्स्यपुराणे ॥ गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयोदेवाविजज्ञिरे ॥ एका मूर्त्तिस्त्रयोदेवाब्रह्मविष्णुमहेश्वराः ॥सात्विकोराजसश्चैव तामसश्च त्रिधा महानिति ॥ बुध्याख्यसमष्टिमहत्तत्त्वं हि त्रिगुणात्मकरज्जुवत्त्रिगुणात्मकमेकमेव ॥ सत्वाद्यंशभेदेन त्रयाणां देवानां च शरीरं भवतीत्येका मूर्त्तिरित्युच्यते हरिहरात्मकदेहवत् ॥ अतएव चैतन्यः सूक्ष्मशरीराधारभूतं विराडाख्यं स्थूलशरीरमेकमेवेति त्रयाणामेव विश्वरूपत्वमुपपद्यते॥ त्रयश्च देवाश्चेतनरूपाभिन्नाएव ॥ अतएव त्रयाणामेकपिंडतया वातपित्तकफवत्

परस्परसापेक्षत्वात् ॥ अन्योन्यमनुरक्तास्ते ह्यन्योन्यमनुजीविनः ॥ अन्योन्यं प्रणताश्चैव लीलया परमेश्वरादिति मत्स्यादिवाक्यमप्युपपन्नं ॥ एतेन त्रयाणां भेदाभेदावपि व्याख्यातौ वेदितव्यौ ॥ ननु तेषां कार्योपाधिकत्वेऽपि त्रिधा कृत्वात्मनोदेहं सोंतर्यामीश्वरः स्थितइति स्मृतेर्योगिकायव्यूहवल्लीलावतारत्वमेवास्तु ॥ किमर्थं विष्णवादीनां चेतनांतरत्वं कल्प्यतइतिचेन्न ॥ कौर्मे ॥प्रधानं पुरुषं चैव प्रविश्याशुमहेश्वरः ॥ क्षोभयामास योगेन परेण परमेश्वरः ॥ प्रधानात्क्षोभ्यमाणाच्च तथा पुंसः पुरातनात् ॥ प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मकमित्यनेन तथा विष्णुपुराणादिषुच पुराणांतरेण सह प्रकृतिं संयोज्यैव परमेश्वरस्तदुभयात्मकं देवतात्रयरूपं महांतं सृजतीत्यवगमात् ॥ ब्रह्मादीनां त्रयाणां तु स्वहेतौ प्रकृतौ लयः ॥ प्रोच्यते कालयोगेन पुनरेव समुद्भवइति मात्स्यादिभ्यस्तेषामुत्पत्तिलय सिद्धेश्च ॥ अतः त्रयाणामेकभावानांयोनपश्यतिवैभिदामित्यादिभिस्त्रयाणामेव देवानां स्वाभाविकब्रह्मात्मभावसाम्यमित्युक्तं ॥यत्तु भिक्षोः तेषां लीलावताररूपत्वादिकमसंमतं ॥ तत्तु युक्तंनवेत्यन्यदेतत् ॥ भाष्यप्रकाशे श्रुतत्वाच्चेतिसूत्रे भैक्षवमतखंडनप्रस्तावे पराशरपुराणे ॥ वैष्णवानिपुराणानि समस्तानि महामुने ॥ त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परं पदं ॥ प्रवदंतीति साम्यस्मरणं ॥ अतोगुणावतारयोर्हरिहरयोस्तत्तद्गुणोपहितब्रह्मचैतन्यस्यैकत्वात्तादात्म्यरूपोऽभेदोऽस्माकं संमतएव॥ शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ॥ शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ॥ यथा शिवमयोविष्णुरेवं विष्णुमयः शिवः॥ यथांऽतरं न पश्यामि तथा मे स्वस्तिरायुषीत्यादिप्रमाणसिद्धत्वात्॥

इति ॥ तत्र पुरुपशब्देन शिरःपाण्याद्याकृतियुक्तोदेहोऽभिधीयते सच देहोब्रह्मादिस्तंबांतोबहुप्रकारः तत्र ब्रह्मदेहस्य निरतिशयपुण्यपुंजफलरूपत्वादितरसकलदेहकारणत्वेनाऽनादित्वं॥तथाच हिरण्यगर्भःसमवर्त्तताग्रे भूतस्यजातःपतिरेकआसीदितिश्रुतिः ' ब्रह्मा देवानांप्रथमःसंबभूवविश्वस्यकर्त्ताभुवनस्यगोप्तेतिच ॥ सवैशरीरी प्रथमःसवैपुरुपउच्यते ॥ आदिकर्त्तासभूतानांब्रह्माग्रेसमवर्त्ततेति ॥ एतेन विष्णुमहेश्वरदेहयोरप्यादित्वं व्याख्यातं ॥ एकेनैव चैतन्येन गुणत्रयव्यवस्थायै देहत्रयस्य स्वीकृतत्वात्॥तथाच मैत्रशाखायां श्रूयते तस्य प्रोक्ता अग्र्यास्तनवोब्रह्मा रुद्रोविष्णुरित्यथ योह खलु वाचाऽस्य राजसोंऽशोसौसयोयं ब्रह्मा अथोहखलु वाचाऽस्य तामसोंऽशोऽसौसयोऽयं रुद्रोऽथ योह खलु वाचाऽस्य सात्विकोंऽशोऽसौ सयोऽयंविष्णुः ॥ सवा एपएकस्त्रिधा भुवद्दति ॥ तथोत्तरतापनीये मायां प्रकृत्य श्रूयते ॥ सैपा चित्रा सुदृढा बव्हंकुरा स्वयं गुणाभिन्नांकुरेप्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिचैतन्यदीप्ता तस्मादात्मनएव त्रैविध्यं सर्वत्रेति ॥ अथ ईक्षत्यधिकरणे विज्ञानेंद्रभिक्षुभाष्ये ॥ मत्स्यपुराणे ॥ गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयोदेवाविजज्ञिरे ॥ एका मूर्त्तिस्त्रयोदेवाब्रह्मविष्णुमहेश्वराः ॥सात्विकोराजसश्चैव तामसश्च त्रिधा महानिति ॥ बुध्याख्यसमष्टिमहत्तत्त्वं हि त्रिगुणात्मकरज्जुवत्त्रिगुणात्मकमेकमेव ॥ सत्वाद्यंशभेदेन त्रयाणां देवानां च शरीरं भवतीत्येका मूर्त्तिरित्युच्यते हरिहरात्मकदेहवत् ॥ अतएव चैतत् सूक्ष्मशरीराधारभूतं विराडाख्यं स्थूलशरीरमेकमेवेति त्रयाणामेव विश्वरूपत्वमुपपद्यते॥ त्रयश्च देवाश्चेतनरूपाभिन्नाएव ॥ अतएव त्रयाणामेकपिंडतया वातपित्तकफवत्

परस्परसापेक्षत्वात् ॥ अन्योन्यमनुरक्तास्ते ह्यन्योन्यमनुजीविनः ॥ अन्योन्यं प्रणताश्चैव लीलया परमेश्वरादिति मत्स्यादिवाक्यमप्युपपन्नं ॥ एतेन त्रयाणां भेदाभेदावपि व्याख्यातौ वेदितव्यौ ॥ ननु तेषां कार्योपाधिकत्वेऽपि त्रिधा कृत्वात्मनोदेहं सांतर्यामीश्वरः स्थितइति स्मृतेर्योगिकायव्यूहवल्लीलावतारत्वमेवास्तु ॥ किमर्थं विष्ण्वादीनां चेतनांतरत्वं कल्प्यतइतिचेन्न ॥ कौर्मे ॥प्रधानं पुरुषं चैव प्रविश्याशुमहेश्वरः ॥ क्षोभयामास योगेन परेण परमेश्वरः ॥ प्रधानात्क्षोभ्यमाणाच्च तथा पुंसः पुरातनात् ॥ प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मकमित्यनेन तथा विष्णुपुराणादिषुच पुराणांतरेण सह प्रकृतिं संयोज्यैव परमेश्वरस्तदुभयात्मकं देवतात्रयरूपं महांतं सृजतीत्यवगमात् ॥ ब्रह्मादीनां त्रयाणां तु स्वहेतौ प्रकृतौ लयः ॥ प्रोच्यते कालयोगेन पुनरेव समुद्भवइति मात्स्यादिभ्यस्तेषामुत्पत्तिलय सिद्धेश्च ॥ अतः त्रयाणामेकभावानांयोन्नपश्यतिवैभिदामित्यादिभिस्त्रयाणामेव देवानां स्वाभाविकब्रह्मात्मभावसाम्यमित्युक्तं ॥यत्तु भिक्षोः तेषां लीलावताररूपत्वादिकमसंमतं ॥ तत्तु युक्तंनवेत्यन्यदेतत् ॥ भाष्यप्रकाशे श्रुतत्वाच्चेतिसूत्रे भैक्षवमतखंडनप्रस्तावे पराशरपुराणे ॥ वैष्णवानिपुराणानि समस्तानि महामुने ॥ त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परं पदं ॥ प्रवदंतीति साम्यस्मरणं ॥ अतोगुणावतारयोर्हरिहरयोस्तत्तद्गुणोपहितब्रह्मचैतन्यस्यैकत्वात्तादात्म्यरूपोऽभेदोऽस्माकं संमतएव॥ शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ॥ शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ॥ यथा शिवमयोविष्णुरेवं विष्णुमयः शिवः॥ यथांतरं न पश्यामि तथा मे स्वस्तिरायुषीत्यादिप्रमाणसिद्धत्वात्॥

स्कांदे च काशीखंडे पूर्वभागे सप्तविंशाध्याये ॥( श्लो० १८१ )
विष्णुरुद्रांतरं ब्रूयाद्यः श्रीगौर्यंतरं तथा ॥तद्भ्रांतिकस्य मूर्खस्य वाक्यं शास्त्रविगर्हितमिति ॥ एवं श्रीभागवतादिवचनान्यपि ॥त्रयाणामेकभावानां योन पश्यति वै भिदाम् ॥ नते मय्यच्युते ऽजे च भिदामण्वपि चक्षते इत्यादीनि द्रष्टव्यानि॥ सर्वकारणभूतस्य श्री पुरुषोत्तमस्य तु न केनापि साम्यं कर्तुं शक्यं ॥ यथाह दशमस्कंधे विधिः ॥ क्रीडार्थमात्मनइदं त्रिजगत्कृतं ते साम्यं तु तत्र कुधियः परईश कुर्युरिति॥ पाद्मोत्तरखंडे पाखंडोत्पत्तिकथनाध्याये पार्वतीं प्रति शिवः॥ यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः॥ समत्वेनैव वीक्षेत सपाखंडी भवेत्सदेति ॥ तैत्तिरीये श्रूयते ॥ नारायणपरं ब्रह्म तत्त्वं नारायणः परइति ॥ एवं एकोहवैनारायणआसेत्याद्याआथर्वणादिश्रुतयोऽप्यनुसंधेयाः ॥ नारदपंचरात्रेऽपि द्वितीयरात्रतृतीयाध्याये शिवः॥ गुणांतरं तीर्थकीर्त्तेः कोवा वक्तुं क्षमोमुने ॥ नाहं ब्रह्मा च शेषश्च धर्मः सूर्यस्तथैवच ॥ ३ ॥ नारायणर्षिर्भगवान् नरर्षिः कपिलस्तथा॥ सनत्कुमारोवेदाश्चाऽप्यन्यः कोवा न भारती ॥ ४ ॥ परमात्मा यथा दृष्टः सीमा च नभसस्तथा ॥ यथा दृष्टं मनश्चाऽपि बुद्धिर्ज्ञानं विवेचनं ॥ ५ ॥ तथा गुणश्च कृष्णस्य सर्वाज्ञातश्च नारद ॥ तथापि वक्ति तज्ज्ञानं पंडितश्च यथागमं ॥ ६ ॥ कलाः कलांशास्तस्याऽपि येये संतश्च योगिनः ॥ ते महांतश्च पूज्याश्चाप्यंशं वक्तुं च कः क्षमः ॥ ७॥ नैव कृष्णात् परोदेवोनैव कृष्णात्परः पुमान् ॥ नैव कृष्णात्परोज्ञानी न योगी च ततः परः ॥ ८ ॥ नैव कृष्णात्परः सिद्धस्तत्परोऽपि नहीश्वरः ॥ न तत्परश्च जनकोविश्वेषां परिपालकः ॥ ९ ॥ नतत्परश्च

बलवान् बुद्धिमान् कीर्तिमांस्तथा ॥ नतत्परः सत्यवादी दयावान् भक्तवत्सलः ॥ १० ॥ नतत्परश्च गुणवान् सुशीलश्च जितेंद्रियः॥ शुद्धाशयश्च शुद्धश्च न तस्माद्भक्तवत्सलः ॥ ११ ॥ नहि तस्मात् परोधर्मो प्रदाता सर्वसंपदां ॥ नहि तस्मात्परः शांतोलक्ष्मीकांतात्परश्च कः ॥ १२ ॥ अनंतकोटिब्रह्मांडामोहिताभायया यया ॥ सा चाऽतिभीता पुरतो यमेव स्तोतुमक्षमा ॥ १३ ॥ सरस्वती जडीभूता यमेव स्तोतुमक्षमा ॥ महालक्ष्मीश्चातिभीता पादपद्मं निषेवते ॥ १४ ॥ प्रत्येकं प्रतिविश्वेषु महाविष्णोश्च लोमसु॥ कोटिशः कोटिशः संति देवाब्रह्मादयोमुने ॥ १५ ॥ यथा रेणुरसंख्यश्च तथा विश्वानि नारद॥ एतेषामीश्वरश्चैकोराधेशः प्रकृतेः परइति॥ गीतायां ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ उत्तमः पुरुषस्त्वन्यः पुरुषस्तुपरःपार्थ मत्तःपरतरंकिंचिन्नान्यदस्तिधनंजय एवमादिषु पुरुषोत्तमस्य तु सर्वावधिकोत्कर्षवत्त्वं स्फुटमेव॥अतोरुद्रादीनां तदंशभूतानां नतत्साम्यं ॥ नतत्समश्चाभ्यधिकश्चदृश्यतइतिश्वेताश्वतरश्रुतेः ॥ निरस्तसाम्यातिशयेनराधसेतिपुराणाच्च ॥ विस्तरस्तु मत्कृते षूपनिषद्व्याख्यानेष्ववगंतव्यः ॥ शिवादीनां भगवत्कलात्वं तु वर्ण्यते श्रीभागवतादिषु ॥ यथाह सप्तमस्कंधे ॥ ( अ० १०श्लो० ३१) ततः संपूज्य शिरसा ववंदे परमेष्ठिनं ॥ भवं प्रजापतीन् देवान् प्रल्हादोभगवत्कलाः ॥ तत्रैव ॥ (श्लो० ४८ ) न यस्य साक्षाद्भवपद्मजादिभीरूपं धिया वस्तुतयोपवर्णितमिति पुरुषोत्तमस्य सर्वोत्तमत्वं ॥ दशमस्कंधे च सांबविवाहप्रकरणे बलभद्रः ॥ ब्रह्मा भवोऽहमपि यस्य कलाः कलायाइति सर्वेषां कलात्वमाह ॥ एतस्स

वं महता प्रपंचेन श्रीपुरुषोत्तमचरणादिभिः ब्रह्मवादपंडितकर-भिंदिपालभाष्यप्रकाशप्रभृतिषु महत्तरग्रंथेषु सम्यग्व्यवस्थापित-मेवेत्यलं बहुना ॥ वेदादिवर्णितौ भेदाभेदावित्युदितौ तयोः॥ छेदा य भक्तखेदानां पृथगुक्तः परः पुमान् ॥

## ॥ अथैतत्सप्तमप्रधानप्रश्नावलंबिनोऽष्टौ प्रश्नास्त त्राद्यः ॥ १ ॥

॥ तत्राऽभेदः संमतश्चेत्तदुपदेशः कुतोन क्रियते प्रत्युत शिव-पूजादेः प्रतिषेधः क्रियते तत्कथम् ॥ ४१ ॥

## ॥ उत्तरं ॥

किमत्रोपदेशशब्देनाभेदोपदेशएव विवक्षितः आहोस्वित्तन्मंत्रोप-देशः ॥ तत्राद्यश्चेदुक्तरीतिकस्तयोरभेदोऽस्मदाचार्यादिभिर्भाष्यसु-बोधिनीप्रभृतिषु निर्णीतएव ॥ तत्तद्ग्रंथाध्यापनावसरे स्वशिष्ये-भ्योऽपि सउपदिश्यतएवेति व्यर्थोऽयं तदभावे हेतुप्रश्नः ॥ द्वितीय-श्चेत्तुर्यप्रधानप्रश्नाऽवातरपंचमादिप्रश्नत्रयोत्तरेणैव सर्वमुत्तरितमि-ति श्रीः ॥ यत्तूक्तं शिवपूजादेः कथं प्रतिषेधः क्रियतइति ॥ सत्यं क्रियते ॥ परंत्वस्य प्रश्नस्याऽयमाशयोभवेत् ॥ यदि शिवविष्ण्वो-रभेदएव स्वीक्रियते तर्हि विष्णुरूपाणां रामकृष्णादीनामिव शिव-स्याप्युपासनं भवद्भिः कार्यमेव ॥ विष्णुरूपत्वाविशेषादिति ॥ उ-त्तरं तु तादात्म्यरूपाऽभेदोहि गुणावतारयोरेव तयोरुपपादितः ॥ त यदि वय गुणावतारविष्णूपासकाएवाभविष्याम तर्हि तदभिन्नत्वा-त् शिवस्याप्युपासनं कर्तव्यत्वेनाऽस्मानप्राप्स्यत् नत्वेवं अतोनैवं

अस्माकं तु सर्वकारणभूतस्य सर्वेश्वरस्य श्रीपुरुषोत्तमस्य सेवनेनैव गतार्था सर्वदेवोपासना ॥ उक्तं च श्रीभागवते॥ यथा तरोर्मूलनिषेचनेन तृप्यंति तत्स्कंधभुजोपशाखाः ॥ प्राणोपहाराद्धलिरिंद्रियाणां तथैव सर्वार्हणमच्युतेज्येति ॥ पुनस्तत्रैव ॥ ( स्कंध ८ अ० ५ श्लो० ४९ ) यथाहि स्कंधशाखानां तरोर्मूलाऽवसेचनं ॥ एवमाराधनं विष्णोः सर्वेषामात्मनश्च हीति ॥अन्यत्राऽपि॥आकाशात्पतितं तोयं यथा गच्छति सागरं ॥सर्वदेवनमस्कारः केशवं प्रतिगच्छति॥सर्ववेदेषु यत्पुण्यं सर्वतीर्थेषु यत्फलं ॥ तत्फलंसमवाप्नोति स्तुत्वा देवं जनार्दनं॥ वासनाद्वासुदेवस्य वासितं भुवनत्रयं॥ सर्वभूतनिवासीनां वासुदेवनमोऽस्तुते इति ॥दक्षस्मृतौ च समाधिदशायां ॥ विद्या वा यदि वा ऽविद्या शरणं तु जनार्दनइति ॥ दशमस्कंधे च॥त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणमित्यादि॥ बह्वचाश्चामनंति ॥ इंद्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ॥ एकं सद्विप्रा बहुधा वदंत्यग्नियमंमातरिश्वानमाहुरिति ॥ अतः पुरुषोत्तमसेवनेनैवाऽस्माकं गतार्था सर्वदेवसर्वदेवतोपासना ॥ किंच ॥ देवांतरोपासने योवै स्वांदेवतामतियजतइति तैत्तिरीयसंहिताश्रावितः स्वदेवतातिक्रमदोषः प्रसज्येत ॥ अनन्याश्चिंतयंतोमामित्याद्युक्तं अनन्यत्वं च भज्येत ॥ भगवता च ॥ येऽप्यन्यदेवताभक्ताइति देवतांतरोपासनस्याऽवैधत्वस्मरणात्॥अवैधापेक्षया वैधानुष्ठानमेव श्रेयः ॥ अपिच ॥ कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यंते ऽन्यदेवताइति ॥ ज्ञानशून्यानां सकामानामेव देवतांतरप्रतिपत्तिः ॥ देवान्देवयजोयांति मद्भक्तायांति मामपीति तदुपा-

निवासोसि.

सनया तत्सायुज्यादिकमेव फलं नतु भगवत्प्राप्त्यादिकमिति फल- तारतम्यं च दर्शितं भगवतेति॥ निष्कामानां ज्ञानाग्रहवतां देवतां- तरसायुज्याद्यनाकांक्षिणां भगवच्चरणैकप्रेप्सूनां नैव रुद्रादिदैव- तांतरोपासना युक्ता॥ सारसंग्रहादिषु॥ब्रह्माणं शितिकंठं च या- श्चान्यादेवताः स्मृताः॥ प्रतिबुद्धान सेवंते यस्मात्परिमितं फलमि- ति॥ मुमुक्षवोघोररूपानित्यादिभारतभागवतादिवचनेभ्यः॥ किं- त्वनन्यतया श्रीपुरुषोत्तमसेवनैव तेषां सकलेष्टसंपादिका कल्पल- तिकेत्येतदुपपादितं प्राक् पंचदेवपूजाप्रश्नोत्तरे॥ अन्यच्च॥ अस्ति शिवपूजायाः प्रतिषेधः॥ यथा श्रीभागवते चतुर्थस्कंधे द्वितीया- ध्याये॥ (श्लो० २८) भवव्रतधराये च ये च तान् समनुव्रताः॥ पाखंडिनस्ते भवंतु सच्छास्त्रपरिपंथिनः॥ नष्टशौचामूढधियोऽज- टाभस्माऽस्थिधारिणः॥ विशंतु शिवदीक्षायां यत्र दैवं सुरासवं॥ब्र- ह्म च ब्राह्मणांश्चैव यद्यूयं परिनिंदथ॥ सेतुं विधारणं पुंसामतः पाखंडमाश्रिताः॥ ३०॥ एषएव हिलोकानां शिवः पंथाः सना- तनः॥ यं पूर्वे चाऽनुसंतस्थुर्यत्प्रमाणं जनार्दनः॥ ३१॥ तद्ब्रह्म प- रमं शुद्धं सतां वर्त्म सनातनं॥विगर्ह्य यात पाखंडं दैवं वोयत्र भू- तराडिति॥ तथा॥ प्रथमस्कंधे द्वितीयाध्याये॥ (श्लो० २७) मुमुक्षवोघोररूपान् हित्वा भूतपतीनथ॥ नारायणकलाः शांता- भजंति ह्यनसूयवः॥ रजस्तमःप्रकृतयः समशीलाभजंति वै॥ पि- तृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवइति॥ सारसंग्रहे पद्मपुराणे॥ योऽसौ सर्वगतः श्रीमान् वासुदेवः परात्परः॥ अनादिनिधनोवि- ष्णुः सएव परमेश्वरः॥ शुद्धसत्वमयोयोऽसौ कल्याणगुणवान् प्र- भुः॥ पुंडरीकेक्षणः श्रीमान् श्रीपतिः पुरुषोत्तमः॥ विप्राणां वेद-

विदुषामेकएवाऽर्चितः प्रभुः॥ विप्राणां नेतरे पूज्यारजस्तमोविमोहिताइति ॥ वसिष्ठस्मृतौ॥नारायणं परं ब्रह्म ब्राह्मणानां हि दैवतं॥ सोमसूर्यादयोदेवाः क्षत्रियाणां विशामपि ॥ शूद्रादीनां तु रुद्राद्या अर्चनीयाः प्रयत्नतइति ॥ पाद्मे भृगुवचनानि ॥ शुद्धसत्वमयोविष्णुः कल्याणगुणसागरः ॥ नारायणः परं ब्रह्म विप्राणां दैवतं हरिः ॥सएव पूज्योविप्राणां नेतरः पुरुषर्षभ ॥ मोहाद्यः पूजयेदन्यं सपाखंडी भविष्यति ॥ अशुद्धाब्रह्मरुद्राद्या रजस्तमोविमिश्रिताः॥ नान्यः कश्चिन्नराणां वै पूजनीयः कदाचन ॥ नान्यं देवं निरीक्षेत नान्यंदेवं च पूजयेत् ॥ नचाऽन्यं प्रणमेद्विप्रोनान्यदायतनं विशेदिति॥ वाराहे ॥यत्सत्त्वं सहरिर्देवोहरिस्तत्परमं पदम् ॥ सत्त्वं रजस्तमश्चेति तृतीयं चैतदुच्यते ॥ लिंगपुराणे ॥ हिरण्यगर्भोरजसा तमसा शंकरः स्वयं ॥ सत्त्वेन सर्वगोविष्णुः सर्वात्मा सदसन्मयः ॥ सात्विकैः सेव्यते विष्णुस्तामसैरेव शंकरः॥ राजसैः सेव्यते ब्रह्मा संकीर्णैश्च सरस्वती ॥ बौद्धोरुद्रस्तथा वायुर्दुर्गागणपभैरवाः ॥ यमस्कंदौ नैर्ऋतश्च तामसादेवताः स्मृताः ॥ भागवतेऽपि ॥ सत्त्वं रजस्तमइति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुषएक इहाऽस्य धत्ते॥ स्थित्यादये हरिविरिंचिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्वतनोर्नृणां स्युः ॥ राजसतामसानामेव शिवाद्यर्चनं॥सात्त्विकानां मुमुक्षूणां तु रामकृष्णादिभगवदवतारार्चनमेव विधीयते॥तथा सारसंग्रहे ब्रह्मरात्रे ॥ न त्रिपुंड्रं द्विजैर्धार्यं पट्टाकारं तथैवच॥नचाऽन्यदेवताभक्तिरापद्यपि कदाचनेति ॥ किंच ॥ तिथितत्त्वे लैंगे ॥ विना भस्मत्रिपुंड्रेण विना रुद्राक्षमालया ॥ पूजितोऽपि महादेवोन स्या-

त्तस्य फलप्रदइति ॥ शैवसुधाकरे तु नतस्यफलदोभवेदितिपाठः ॥ तत्रैव सूतसंहितायां कंचिद्ब्राह्मणं प्रति विष्णुवचनं ॥ विभूतिधारणं त्यक्त्वा त्यक्त्वा रुद्राक्षधारणं ॥ मा मां पूजय विश्वेशं शिवलिंगस्वरूपिणं ॥ सनत्कुमारसंहितायामपि ॥ यथैव चांडालोच्छिष्टं श्राद्धार्थं नोपयुज्यते ॥ पूतिपर्युषितं यच्च निर्भस्मैवं शिवार्चनं ॥ दायादहीनोन पुनर्मृतः पिंडमवाप्स्यति ॥ तथा भस्मविहीनोऽपि शिवार्चनफलं परं ॥ यथा कृशानुरहितोऽध्वरोनैव शोभते ॥ अशेषसाधनोपेतं भस्महीनं शिवार्चनमिति ॥ भस्मरुद्राक्षरहितस्य-शिवपूजनं निषिद्धं ॥ तद्धारणं तु वैष्णवानां निषिद्धं ॥ नारायणसारे ॥ रुद्राक्षधारिणं विप्रं सदा भस्माऽनुलेपनं ॥ सकुलं तं त्यजेन्नित्यं सर्वकर्मबहिष्कृतमिति ॥ तत्रैव विष्वक्सेनसंहितायां ॥ स्वच्छंदप्रेतवेषाश्च मिथ्यालिंगधरास्तथा ॥ ब्रह्मकोपाग्निनिर्दग्धारुद्रभक्ताजटाधराः ॥ अग्निदं गरदं चैव लिंगपाषाणधारिणं ॥ त्रिपुंड्रधारिणं विप्रं चांडालमिव संत्यजेत् ॥ तत्रैव हारितः ॥ रुद्रार्चनं त्रिपुंड्रस्य धारणं यत्र दृश्यते ॥ शूद्राणां च विधिः प्रोक्तोन द्विजानां कदाचनेति ॥ पाद्मोत्तरखंडे ऊर्ध्वपुंड्राध्याये ॥ विप्राणां नैव धार्यं स्यात्तिर्यक् पुंड्रादिधारणं ॥ नारायणात्परब्रह्मादन्येषामर्चनं नहीति ॥ अयं च सर्वोऽपि निषेधोमुख्यतया वैष्णवपरएवेत्यवगम्यते ॥ सर्वपरत्वे तद्विधायकशास्त्रैनैरवकाश्यापत्तेः ॥ अतो वैष्णवानां शिवपूजादिप्रतिषेधोयुक्तएव ॥ विधीनां शिवलोककामुकपरत्वेनोपसंहाराच्च ॥ तदर्चनादेः शिवलोकफलत्वं तु यथा तिथितत्त्वे भविष्ये ॥ धत्तूरकैश्च योलिंगं सकृत्पूजयते नरः ॥ सगोलक्षफलं प्राप्य शिवलोके महीयतइति ॥ आचारमयूखादिषु चेद-

मुदाहृतं ॥ चतुर्विंशतिमतव्याख्यामयूखादिषु महाभारते ॥ सदा तं यजते यस्तु श्रद्धया मुनिपुंगव ॥ लिंगे वा स्थंडिले वाऽपि शंकरं विधिपूर्वकं ॥ युगदोषं विनिर्जित्य रुद्रलोके प्रमोदते ॥ आचारमयूखे पार्थिवादिलिंगपूजां प्रक्रम्य भविष्ये ॥ सहस्रमर्चयेल्लिंगं निरयं स न गच्छति॥ रुद्रलोकमवाप्नोति भुक्त्वा भोगाननुत्तमान् ॥ तत्रैव शिवपंचाक्षरं प्रक्रम्य नंदिपुराणे ॥ तन्मंत्रजापी तत्कर्मरतस्तद्गतमानसः ॥ निष्कामः पुरुषोराजन् सरुद्रपदमश्नुते ॥ तत्रैव शिवधर्मे॥लिंगाऽनुलेपनं कार्यं दिव्यगंधैः सुगंधिभिः॥ वर्षकोटिशतं दिव्यं शिवलोके महीयते ॥ पुनर्भविष्ये ॥ बिल्वपत्रैरखंडैश्च योलिंगंपूजयेत्सकृत् ॥ सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥ स्कांदे ॥ एकपत्रं फलं पक्वं यः शंभोर्विनिवेदयेत् ॥ वर्षाणामयुतं भोगैः शिवलोके महीयते ॥ एकं मोचाफलं पक्वं यः शिवाय निवेदयेत् ॥ सर्वमब्दं महाभोगैः शिवलोके महीयते ॥ एवं ग्रंथांतरेष्वपि विविधानि वचनानि द्रष्टव्यानि॥ तथा भस्मत्रिपुंड्रविषये पुलस्त्यः ॥ करोति शिवमंत्रेण यस्त्रिपुंड्रं द्विजोत्तमः ॥ त्र्यक्षः शूलधरः सौम्यः शिवलोके महीयतइति ॥ रुद्राक्षधारणेऽपि ॥ निर्णयसिंधौ तृतीयपरिच्छेदपूर्वार्द्धे ॥ विना मंत्रेण योधत्ते रुद्राक्षं भुवि मानवः ॥ सयाति नरकान् घोरान् यावदिंद्राश्चतुर्दश ॥ पंचामृतं पंचगव्यं स्नानकाले प्रयोजयेत् ॥ रुद्राक्षस्य प्रतिष्ठायां मंत्रं पंचाक्षरं तथेति ॥ प्रजापतिः ॥ योददाति द्विजेभ्यश्च रुद्राक्षं भुवि सन्मुखं॥तस्य प्रीतोभवेद्रुद्रः स्वं पदं च प्रयच्छतीति ॥ स्कांदे ॥ रुद्राक्षदेहसंस्थोऽपि कुक्कुरोम्रियते यदि ॥ सोऽपि रुद्रपदं याति किं पुनर्मानवोगुहेति ॥ अ-

त्र रुद्राक्षस्य शिवलोकप्राप्तिहेतुत्वं स्पष्टमेवेति तत्कामानामेव त-द्धारणं तदर्चनं चोचितं॥ किंच ॥ शैवमंत्रमंतरा धारणे दोषोऽपि दर्शितः॥एवं त्रिपुंड्रविषयेऽपिसुधासिंधौ॥त्रिपुंड्रकं सदा कुर्यान्मंत्रपूतेन भस्मना॥मंत्रहीनं तु यः कुर्यात्पापभागी भवेन्नरइति॥अतोऽपि वैष्णवानां नैतद्युक्तं॥तन्मंत्रोपासनेऽवश्यभाविना शैवत्वेन सांकर्यापत्तेः॥ तज्जपादिवशादवश्यभाविन्यारुद्रपदप्राप्तेर्निर्गुणमोक्षेच्छूनामत्यंताऽनभिलपितत्वाच्च ॥ अपरंच शिवस्याऽपि भगवदंशत्वात् वस्तुतस्तु शिवार्चनमपि तद्रूपस्य विष्णोरेवार्चनमितिसिध्यति॥दशमस्कंधे (अ०४०श्लो०८) त्वामेवाऽन्ये शिवोक्तेन मार्गेण शिवरूपिणं ॥ बव्हाचार्यविभेदेन भगवन् समुपासते॥सर्वएव यजंतित्वां सर्वदेवमयेश्वरमित्यादि भगवंतं प्रति अक्रूरवाक्येभ्यः॥ शैवसुधाकरे सूतसंहितायां कंचिद्ब्राह्मणंप्रति ॥ विभूतिधारणं त्यक्त्वा त्यक्त्वा रुद्राक्षधारणं ॥ मा मां पूजय विश्वेशं शिवलिंगस्वरूपिणमिति विष्णुवाक्यात् ॥ पाद्मे कार्तिकमाहात्म्यप्रथमाध्याये॥ सौराः शैवाश्च गाणेशावैष्णवाः शक्तिपूजकाः ॥ मामेव प्राप्नुवंतीह वर्षाभः सागरं यथेति सत्यभामां प्रति भगवद्वाक्याच्च ॥ अतः सर्वांशिभूतस्य सर्वदेवदेवस्य साक्षाच्छ्रीपुरुषोत्तमस्याऽनन्यतयाऽर्चनतत्पराणामस्मत्सांप्रदायिकानां तु भगवत्सेवयैव शिवार्चनादेर्गतार्थत्वं भवत्येव ॥ यथातरोर्मूलनिषेचनेनेतिन्यायात् ॥ अपिच निर्णयसिंधौ ॥ उत्तरार्द्धे श्राद्धार्हब्राह्मणेषु ॥ शिवभक्तोविष्णुभक्तोभार्यायामृतुकालगः ॥ गुरुभक्तोज्ञाननिष्ठः सोमयाजी च सत्यवाक् ॥ सुशीलस्नातकयतिब्रह्मचारिणउत्तमाइति ॥ अत्र शिवविष्णुभक्तयोः पृथगुपदेशः ॥ एवमन्यत्राऽपि दृश्यं॥यदितु शैवेविष्णु-

मंत्रग्रहणतच्चिन्हधारणादिपूर्वकं विष्णुपूजा अनन्यवैष्णवैश्च शैवमं त्रग्रहणतच्चिन्हादिधारणपूर्वकं शिवार्चा विधीयेत तर्हि शास्त्रसिद्धः शैववैष्णवसंप्रदायभेदएव नस्यात्॥अपरंच मोक्षार्थिनांविष्णवर्च-नमेव युक्तं॥तस्यैव मोक्षदातृत्वस्य प्रागुपपादित्वात्॥अतएवगौतम सूत्रआन्हिकनिरूपके प्रथमप्रश्ने देवतार्चनं प्रक्रम्योच्यते ॥ (खं० १२)आरोग्यंभास्करादिच्छेद्धनमिच्छेद्धुताशनात्॥ऐश्वर्यमीश्वरा-दिच्छेन्मोक्षमिच्छेज्जनार्दनादिति॥तस्माद्वैष्णवैर्भगवदर्चनमेव कार्यं नतु रुद्रादिदेवतांतरार्चनरूपः परधर्मः समाश्रयणीयः॥यथाह दश-माध्याये मनुः ॥ (श्लो० ९७) वरं स्वधर्मोविगुणोन पारक्यः स्व-नुष्ठितः ॥ परधर्मेण जीवन् हि सद्यः पतति जातितइति ॥ भगवा-नप्याह ॥ श्रेयान् स्वधर्मोविगुणः परधर्मात्स्वनुष्ठितात्॥स्वधर्मे नि-धनं श्रेयः परधर्मोभयावहइति॥ आचारमाधवे च तृतीयाध्या-ये श्राद्धवर्ज्यब्राह्मणेषु यमः ॥ सद्भिश्च निंदिताचारः स्वकर्मपरि-वर्जकइति गणयित्वाऽग्ने उपसंहरति ॥ चतुराश्रमबाह्याश्च सर्वे ते पंक्तिदूषकाः ॥ इत्येतैर्लक्षणैर्युक्तास्तान्द्विजान्ननियोजयेदिति ॥ श्रीभागवते सप्तमस्कंधे पंचदशाध्याये ॥ ( श्लो० १२ ) विधर्मः परधर्मश्च आभासउपमाच्छलः ॥ अधर्मशाखाः पंचेमाधर्मज्ञो-ऽधर्मवत्त्यजेत् ॥ धर्मबाधोविधर्मः स्यात् परधर्मोऽन्यचोदितः ॥ उ-पधर्मस्तु पाखंडोदंभोवा शब्दभिच्छलः ॥ १३ ॥ यस्त्विच्छया कृ-तः पुंभिराभासोह्याश्रमात् पृथक् ॥ स्वभावविहितोधर्मः कस्य ने-ष्टः प्रशांतयइति ॥ दक्षस्मृतौ ॥( श्लो० १८ ) स्वकं कर्म परित्य-ज्य यदन्यत्कुरुते नरः॥ अज्ञानादथवा लोभात् सतेन पतितोभवे-दिति ॥ अत्रिस्मृतौ॥तानि कर्माणि कुर्वाणादूरे संतोऽपि मानवाः॥

प्रियाभवंति लोकस्य स्वेस्वे कर्मण्यवस्थिताः ॥ तत्रैव ॥ येऽप्यपेताः स्वधर्माच्चे परधर्मे व्यवस्थिताः ॥ तेषां शास्तिकरोराजा स्वर्गलोके महीयते ॥ आत्मीये संस्थितोधर्मे शूद्रोऽपि स्वर्गमश्नुते ॥ परधर्मोभवेत्त्याज्यः सस्वयं परदारवदिति ॥ नारदपंचरात्रे ॥ ( रात्र २ अ० ७श्लो४०) स्वधर्माचरणं शुद्धं विधर्माच्च निवर्त्तनं ॥ वेदोक्ताचरणं विप्र परं निर्वाणकारणमिति ॥ किंच ॥ स्वकुलाचारात्मसंतोषयोरभावावपि रुद्रादिदेवांतरपूजाप्रतिबंधकावस्माकं वेदितव्यौ ॥ येनाऽस्य पितरोयातायेन याताः पितामहाः ॥ येन यायात्सतांमार्गस्तेन गच्छन्नदुष्यतीति मनुवचनात् ॥ ( अ० २श्लो० ६ ) वेदोऽखिलोधर्ममूलं स्मृतिशीलेच तद्विदाम् ॥ आचारश्चैव साधूनामात्मनस्तुटिरेवचेति ॥ तथा ॥ ( अ० १श्लो० ७ ) श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनइति मनुयाज्ञवल्क्याभ्यामात्मसंतोपस्यापि धर्मप्रमाणत्वस्मरणात् ॥ अतएव याज्ञवल्क्यस्मृतौ ( अ० १ ) श्राद्धप्रकरणे ॥ ( श्लो० ४० ) मृतेऽहनि तु कर्त्तव्यमित्यस्य मिताक्षरायामंते ॥ क्षयाहे एकोद्दिष्टपार्वणयोः वंशसमाचारादेव तदभावे आत्मतुष्ट्यैव च व्यवस्था कृता इति ध्येयम् ॥ पराशरमाधवीये च द्वितीयाध्याये बहुविधान् गृहस्थधर्मान्निरूप्य माधवेन सामान्येन च धर्मं संक्षिप्याऽऽह मनुरित्युक्का ये नाऽस्य पितरइति यत्कर्मकुर्वतोऽप्यस्येति श्लोकद्वयं लिखितं ॥ इत्थं वैष्णवैः क्रियमाणे शिवपूजायाः स्वकर्त्तव्यत्वप्रतिषेधे विशेषतः प्रमाणजिज्ञासाचेत् सा प्रहरत्नपंडितकरभिदिपालप्रभृतिमहत्तरप्राचीनग्रंथावलोकनादेव पूरयितुं शक्यतइत्युपरम्यते ॥ पूज्योनः सरलोदेवोदेवदेवः श्रियः प्रियः ॥ ननु प्रयोजनाभावाद्वामदे-

वादयः परे ॥ १ ॥ देवतांतरविद्वेपस्त्वस्माकं नैवविद्यते ॥ कुर्मः स्व- धर्ममात्रं तु शास्त्राधिकरणोक्तवत्॥२॥ शिवेन गुरुणा स्माकं देवदे वेनकेवलं ॥ अदर्शि यः संप्रदायस्तमेवाऽनुस्सृतावयम् ॥ ३ ॥

## ॥ अथ द्वितीयोऽवांतरः प्रश्नः ॥२॥

भेदश्चेच्छास्त्रोक्तदोपभागिनः स्युः ॥ ५० ॥

## ॥ उत्तरं ॥

येत्रूयुरनयोर्भेदंसंतु ते दोपभागिनः॥तादात्म्यलक्षणाऽस्माभिस्त्वभि- दा वर्णितातयोः ॥ १॥ अथवा न्यूनमेवोक्तं तयोरेवाऽभिदेति यत्॥ ये सर्वं खल्विदं ब्रह्म नेह नानाऽस्ति किंचन ॥ २ ॥ ऐतदात्म्यमि दं सर्वमित्यादिश्रुतिदर्शिनः ॥ पश्यंति शुद्धमद्वैतं दोपः सज्जेत तेषु कः ॥३॥तथाहि ॥ बह्वृचानामैतरेयोपनिपदि ॥ प्रज्ञानंब्रह्म ॥तैत्ति रीयाणाचिरयुपनिपदि ॥ पुरुपएवेदꣳसर्वंयद्भूतंयच्चभव्यं ॥ बृहन्ना- रायणोपनिपदि ॥ अहमस्मिब्रह्माहमस्मीति ॥ कठोपनिपदि ॥ नेह नानास्तिकिंचन॥ काण्वमाध्यंदिनानां मैत्रेयीब्राह्मणे॥ यत्रहिद्वैत मिवभवतितदितरइतरंपश्यतीत्यादिना द्वैतज्ञानफलमुक्त्वा यत्रत्व- स्यसर्वमात्मैवाभूत्तत्केनकंपश्येदिति॥ छंदोगाना शाण्डिल्यविद्यायां सर्वंखल्विदंब्रह्मतज्जलानिति ॥ श्वेतकेतुविद्यायां ॥ ऐतदात्म्यमिदं- सर्वं ॥ आथर्वणानां कैवल्योपनिपदि ॥ तद्ब्रह्माद्वयमस्म्यहमिति ॥ मुंडकोपनिपदि ॥ यथोर्णनाभिःसृजतेगृह्णतेचयथापृथिव्यामोप- धयःसंभवंति ॥ यथासतःपुरुपात्केशलोमानितथाऽक्षरात्संभव- तीहविश्वमिति ॥ स्मृतिपु ॥ अहं सर्वस्य प्रभवोमत्तः सर्वं प्रवर्त्त-

तइति ॥ वासुदेवः सर्वमिति समहात्मा सुदुर्लभइति ॥ चतुर्लक्ष्ण्यां ॥ (अ० ४ पा० १ । सूत्र ३ । ) आत्मेतितूपगच्छंति ग्राहयंतिच ॥ दशमस्कंधे ॥ (अध्याय १० श्लो० २९) व्यक्ताऽव्यक्तमिदं विश्वं रूपं ते ब्राह्मणाविदुरिति ॥ विष्णुपुराणे ॥ भूतानि विष्णुर्भुवनानि विष्णुरिति ॥ एवमादिभिः ॥ श्रुतिस्मृतिन्याय पुराणपुंजैः पश्यंत्यभेदं प्रतिपादितं ये॥ सर्वत्र तेषां क शिवे च विष्णौ संबंधगंधोऽपि भवेद्भिदायाः ॥ शोषाय पंकप्रकरस्य येषामेषां हरेरश्मिततिः सपोषा॥ तोषात्प्रभोस्तेषु कुतोनुदोषारोपादिकानां हृदये प्रमोषात् ॥ अतोये तु ब्रह्मादिभिर्दैवतैरपि वंदनीयममंदश्रुतिसीमंतिनीशिरःसीमंतभूषणं श्रीपुरुषोत्तममेव पशुपतिप्रभृतिदेवतांतरसाम्येन दूषयंति तएव शास्त्रोक्तदोषभागिनःस्युः॥ साम्यंतु तत्र कुधियः परईशकुर्युः ॥ यस्तुनारायणं देवं ब्रह्मरुद्रादि देवतैः ॥ समत्वेनैव वीक्षेत सपाखंडी भवेद्ध्रुवमित्यादि श्रीभागवतपाद्मोत्तरखंडादिवचनेभ्यः ॥ नतु सर्वत्राऽभेदवादिष्वस्मासु दोषगंधोऽपीति शुभं नः ॥

## ॥ अथ तृतीयोऽवांतरः प्रश्नः ॥ ३ ॥

किंच पूर्वाचार्यैर्भारतभागवतादिटीकाकारैर्यथा

विरोधपरिहारः कृतस्तत्प्रमाणमप्रमाणं वा ॥ ५१ ॥

## ॥ उत्तरं ॥

प्रथमतोभारतभागवतादिटीकाकाराणां आचार्यपदवीमनधिरूढानां श्रीधरचतुर्धरप्रभृतीनां पूर्वाचार्यत्वमेव स्वरूपतोऽसिद्धं॥ पूर्वोपन्य

स्तेन आचार्यलक्षणेन अनाक्रांतत्वात्॥नहि पूर्वत्वमात्रेण पूर्वाचार्यत्वं शक्यं वक्तुं ॥ विशेष्याभावप्रयुक्तविशिष्टाभावस्य दुष्परिहरत्वात्॥यदितु पूर्वाचार्यैः शंकरादिभिश्च टीकाकारैः श्रीधरादिभिश्च प्रणीतविरोधपरिहारनिष्ठप्रामाण्याऽप्रामाण्ययोः कतरत् संमतमित्येव विजिज्ञासितं तर्हि प्रश्नवाक्ये भेदावगाहनाय समुच्चयार्थकचकारलेखोऽपेक्षितः॥ अस्त्वामेतत्॥उत्तरं तु ब्रूमः॥पूर्वमेव भेदेषु भवत्संमतिर्नवेत्यस्य उत्तरे अस्माभिरस्मदाचार्याभिमतस्य वेदादिमुख्य प्रमाणचतुष्टयस्य अनुकूलमितरोक्तमपि प्रमाणं तत्प्रतिकूलं चाऽप्रमाणमिति पूर्वेवोपपादितं ॥ अतोभारतभागवतादिटीकास्थविरोधपरिहारस्य श्रुत्यादिविरोधाविरोधाभ्यामप्रामाण्यस्य प्रामाण्यस्य चाभ्युपगमआस्माकीनोऽवगंव्यः ॥ अस्मत्संप्रदाये श्रीमदाचार्यश्रीविठ्ठलाचार्यश्रीपुरुषोत्तमश्रीगिरिधरादिभिः सुबोधिनीटिप्पणीप्रकाशबालबोधिनीप्रभृतयः श्रीभागवतादिव्याख्याः कृताः॥सांप्रदायिकशिष्यैश्च गोपालभट्टबालकृष्णभट्टव्रजनाथभट्टादिभिस्तदनुरोधीनि विवरणांतराणि प्रणीतानि॥तेषु श्रुत्याद्यनुरोधेन विरोधपरिहारः कृतएव सोऽस्माकं प्रमाणमेव ॥ यदितु सर्वेषामपि साकल्येन भागवतादियावट्टीकाप्रामाण्यस्याऽवश्यमभ्युपगमे तट्टीकात्वमेव हेतुस्तर्हि अस्मत्सांप्रदायिकीनामपि श्रीभागवतादिव्याख्यानां साकल्येन प्रामाण्यं भवद्भिः कुतोनांऽगीक्रियते ॥ टीकात्वाविशेषात् ॥ यदिच भिन्नसांप्रदायिकत्वादेव तन्नांगीक्रियतइत्युच्यते तर्ह्यस्माभिरपि कथमस्मत्संप्रदायविरुद्धानां तवपुरुषवदंत्यखिलशक्तिधृतोंशकृतमित्यादौ अंशइवांशः कृतइवकृतइत्यादिरूपाणां

(गी०अ०१६श्लो०६) आसुरं पार्थमेश्रृण्वित्युपक्रम्य,असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमित्यादिषु स्पष्टतया जगदसत्यत्ववादप्रतिषेधपर्यवसायिषु वचनेषु असत्यमिति नास्ति सत्यं वेदपुराणादिप्रमाणं यस्मिन् तादृशं जगदाहुरित्यादिरूपाणांचविचित्राणां,व्याख्यानानां कथं प्रामाण्यमंगीकर्त्तव्यं॥ अतोऽस्माकमस्मदाचार्यादिभिःकृतः श्रुत्याद्यनुसारी विरोधपरिहारएव सर्वांशतः प्रमाणं ॥ इतरैर्व्याख्याकारैः कृतस्तु श्रुत्यादिसंमतास्मत्प्रतितंत्रार्थाविरुद्धएव. प्रमाणमिति निखिलं निरवद्यं॥

## ॥ अथ चतुर्थोवांऽतरः प्रश्नः ॥४॥

प्रमाणं, चेत्तदा भवदीयरचितग्रंथेषु कुतोविरुद्धतया वर्णनं ॥ ५२ ॥

## ॥उत्तरं॥

प्रामाण्यमेव साकल्यान्नाऽस्माभिः स्वीकृतं यतः ॥ तत्स्वीकारेऽवतीर्णोऽयं प्रश्नोनोत्तरमर्हति॥१॥ अनादिरस्मत्सिद्धांतः श्रुतिस्मृत्यादिसमतः ॥ कैश्चिद्वेदपुराणादिव्याख्याते तद्विरोधतः ॥ २ ॥ अतस्तदुपमर्देन सत्सिद्धांतप्रवृत्तये॥ अवतीर्य सदाचार्यैस्तादृग्भगवदाज्ञया ॥३॥ प्रमाणयुक्तिदवतोदग्ध्वा दुर्वादकाननं॥ग्रंथेषु सर्वं निर्णीतं श्रुतिस्मृत्यनुरोधतः॥४ ॥ नन्वेवं भवत्सिद्धांतोवेदादिसंमतोऽनादिसिद्धएव चेत्तर्हि कथमितरैर्ग्रंथकारैस्तद्विरुद्धतया क्वचित्क्वचिद्वर्णितं वेदादिकं च कथमन्यथा व्याख्यातमितिचेत् प्रकृतिवैचित्र्यादेवेति वदामः॥यथा एकादशस्कंधे चतुर्दशाध्याये॥(श्लो०१) वदंति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ॥ तेषां विकल्पप्राधान्य-

मुताहो एकमुख्यतेत्युद्धवप्रश्ने श्रीभगवानुवाच ॥ ( श्लो० ३ ) कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ॥ मयाऽऽदौ ब्रह्मणे प्रोक्ता धर्मोयस्यां मदात्मकः ॥ तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ॥ ततोभृग्वादयोऽगृह्णन् सप्त ब्रह्ममहर्षयः ॥ ४ ॥ तेभ्यः पितृभ्यस्तत्पुत्रादेवदानवगुह्यकाः॥ मनुष्याः सिद्धगंधर्वाः सविद्याधरचारणाः ॥ किंदेवाः किंनरा नागारक्षःकिंपुरुषादयः ॥ बह्व्यस्तेषां प्रकृतयोरजःसत्वतमोभुवः ॥ याभिर्भूतानि भिद्यंते भूतानां मतयस्तथा ॥ यथाप्रकृति सर्वेषां चित्रावाचः स्रवंति हि ॥ एवं प्रकृतिवैचित्र्याद्भिद्यंते मतयोनृणां ॥ पारंपर्येण केषांचित्पाषंडमतयोऽपरे ॥ ८ ॥ मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ॥ श्रेयोवदंत्यनेकांतं यथा कर्म यथारुचीति ॥ अत्र पारंपर्येण केषांचिदिति संप्रदायशब्दवाच्येन परंपरागतसदुपदेशेनेति भगवता स्वाभिमतं निर्दिष्टं ॥ अतोविचित्रप्रकृतिकानां वेदादेरन्यथार्थप्रतीतरन्यथैव तैर्व्याख्यातं ॥ संप्रदायानुसारिणी भक्तिश्च कलिबलान्मध्ये शिथिलाऽभूदिति इदानीं सदाचार्यकृतग्रंथेषु पुनस्तत्प्रवर्त्तकेषु सर्वथा वेदाद्यनुरोधिषु अर्वाचीनजनमोहनार्थमवतीर्णानां रुद्रादिदैवतानां ग्रंथेभ्योविरुद्धतया वर्णनं युज्यतएव ॥ इदानीं रुद्रादिदैवतानां एतदर्थमवतारइतितु पूर्वेव सप्रमाणं दिङ्मात्रेणोपपादितं कस्मैप्रयोजनायेत्यस्योत्तरे ॥ कलिबलान्मध्ये वैष्णवसंप्रदायैकसाध्यभगवद्भक्तिशैथिल्यं पुनर्नारदादिसदाचार्यश्रमेण सर्वत्र बहुलं तत्प्रचरणं चेति तु पाद्मे श्रीभागवतमाहात्म्ये स्फुटं ॥ तथाहि ॥ (अ० १श्लो० ६५ ) यदा मुकुंदोभगवान् क्ष्मां त्यक्त्वा स्वपदं गतः ॥ तद्दिनात्कलिरायातः सर्वसाधनबाधकः ॥ ६५ ॥ दृष्टोदि-

ग्विजये राज्ञा दीनवच्छरण गतः ॥ न मया मारणीयोऽयं सारंग- इव सारभुक् ॥ ६६ ॥ यत्फलं नाऽस्ति तपसा न योगेन समाधि- ना ॥ तत्फलं लभते सम्यक्कलौ केशवकीर्तनात् ॥ ६७ ॥ एकाऽऽ- कारं कलिं दृष्ट्वा सारवत्सारनीरस ॥ विष्णुरातः स्थापितवान् क- लिजाना सुखाय च ॥ ६८ ॥ कुकर्माचरणात्सारः सर्वतोनिर्गतो- धुना ॥ पदार्थाः सस्थिताभूमौ बीजहीनास्तुपायथा ॥ ६९ ॥ वि- प्रैर्भागवती वार्त्ता गेहेगेहे जनेजने ॥ कारिता कणलोभेन कथा सारस्ततोगत. ॥७०॥ अत्युग्रभूरिकर्माणोनास्तिकारौरवाजनाः ॥ तेऽपि तिष्ठति तीर्थेषु तीर्थसारस्ततोगतः ॥ ७१ ॥ कामक्रोधमहा- लोभतृष्णाव्याकुलचेतसः ॥ तेऽपि तिष्ठति तपसि तप.सारस्ततो- गतः ॥ ७२ ॥ पंडितास्तु कलत्रेण रमते महिषाइव ॥ पुत्रस्योत्पा- दने दक्षा अदक्षामुक्तिसाधने ॥ ७४ ॥ नहि वैष्णवता काऽपि सं- प्रदायपुरःसरा ॥ एव प्रलयता प्राप्तोवस्तुसार. स्थलेस्थले ॥७५॥ अय तु युगधर्मोहि वर्तते कस्य दूषण ॥ अतस्तु पुंडरीकाक्षः सह ते निकटे स्थितइत्यादि ॥ अग्रेच पुनस्तत्प्रवृत्तिप्रकारादिक स्फुट मित्यल बहुना ॥ प्राचा ग्रथेषु न श्रौतवाचामेवानुसारिषु ॥ वा- चा विरोधेऽप्यर्वाचा काचार्वाचारतः क्षतिः ॥ १ ॥

## ॥ अथ पंचमोऽवांतरः प्रश्नः ॥५॥

॥ अप्रमाण चेत्तदा ते विज्ञाअज्ञावेति वक्तव्य ॥५२ ॥

## ॥ उत्तरं ॥

अर्थविशेषे विज्ञाएव तत्कृतटीकादिग्रंथेषु स्वस्वमताभिप्रायेण वे-

दादिलापनचातुर्यस्य विरोधपरिहारार्थं विविधयुक्तिकरणस्य स्व-स्वाभ्यस्तविद्याविशेपविषयकपांडित्यप्रदर्शनस्य च प्रत्यक्षतोऽनु-भूयमानत्वात् ॥ नतु सर्वार्थज्ञाः ॥ अर्थविशेषे तदपेक्षया विज्ञैरि-तरैः स्वग्रंथेषु कृतानां तद्दूषणानामपि दृश्यमानत्वात् ॥

## ॥ अथ षष्ठोऽवांतरः प्रश्नः ॥ ६ ॥

॥ विज्ञाश्चेत्तदा तल्लेखः प्रमाणरूपएव ॥ ५४ ॥

## ॥ उत्तरं ॥

ते विज्ञाएव नतु सर्वज्ञाः ॥ अन्यथा तेषामेव परस्परविरोधोन स्यात् ॥ अस्तित्वेवं भवन्मतग्रंथकाराणामपि रत्नप्रभाभामतीनिर्बंधकल्पतरुप्रभृतिषु भाष्यव्याख्यासु परस्परतोविरोधस्य स्वस्वानुगुण्येन भाष्ययोजनस्य च दर्शनात् ॥ तथा कैश्चित् भावत्कैरेव स्वीकृतस्य प्रतिबिंबपक्षस्य अपरैर्यौष्माकीणैरेव अवच्छिन्नत्वपक्षावलंबेन दूष्यमाणत्वात् ॥ एवं न्यायव्याकरणयोरपि दृश्यते प्राचामर्वाचां च बहुतरोमतभेदः ॥ तथा धर्मशास्त्रादिष्वप्युपलभ्यते माधवविज्ञानेश्वरादीनां राद्धांतवैलक्षण्यं ॥ अतोयदि ते सर्वेऽपि सर्वज्ञाएव अभविष्यन् कथं तर्हि परस्परतोऽतीव व्यरोत्स्यन् ॥ कथं च सर्वज्ञस्य एकतरस्य वचनमन्यतरेण दूषयितुं शक्येत ॥ अतोविज्ञत्वेऽपि तेषां सर्वज्ञत्वाभावात् न तल्लेखस्य सर्वांशतः प्रामाण्यं केनाऽपि वक्तुं शक्यं ॥ अतएव पराशरस्मृतिव्याख्यारंभे वक्ति माधवः ॥ कल्पिका मानुषी बुद्धिः सा च न व्यवतिष्ठते ॥ अतएव निबंधेषु दृश्यते नैकवाक्यतेति ॥ एतन्मूलैवेयं विदुषां किंवदंती ॥ सर्वः सर्वं न जानाति सर्वज्ञोनास्तिकश्चनेति ॥ नचाऽन्यतम-

स्यापि सर्वज्ञत्वं वक्तुं शक्यं ॥ अविशेषात्॥ किंचाऽग्रहात् सर्वज्ञत्वांगीकारे ग्रंथविशेषकर्तॄणामस्मत्सांप्रदायिकशिष्याणामपि तथात्वं किं न वक्तुं शक्यं ॥ यथोक्तं माधवेनैव ॥ कपिलोयदि सर्वज्ञः कणादोनेति का प्रमा ॥ इति न्यायः प्रसज्येत बुद्धिमात्रव्यवस्थिताविति ॥ किंच ॥ आस्माकीनानामपि वेदादिप्रमाणोपादानेन सर्वव्यवस्थापनपूर्वकं नवीनग्रंथकरणे तु न क्षतिः ॥ अन्यथा सर्वमूलभूतश्रुतिसत्वे स्मृतिकारान प्रवर्त्तेरन् ॥ स्मृतिसत्वे च तद्व्याख्यातारः व्याख्यासत्वे च निबंधकाराः ॥ अतएवाह सएव ॥ विशेषादर्शनं यावत्तावत्सामान्यदर्शनं ॥ मानमेवाऽन्यथा ते स्यात्सर्वज्ञत्वेऽधिकारिता ॥ गुणोपसंहृतिश्चैवं यथादर्शनमिष्यतां ॥ अदृष्टाऽनुपसंहारे नाकिंचित्करताऽस्ति ते ॥ यथावदृश्यते वाक्यं शक्तिश्चाऽत्राऽस्य यावती ॥ तावत्कार्यं नतूपेक्षा युक्ता वैगुण्यशंकया ॥ प्रायश्चित्ते तथाऽऽचारे यानि स्मृत्यंतराण्यहं ॥ दृष्टवांस्तान्युदाहृत्य संहरिष्ये गुणास्ततः ॥ विषयस्य व्यवस्थां वा मंदव्युत्पत्तिसिद्धये ॥ प्रवक्ष्यामि यथा पूर्वे निबंधनकृतस्तथाइति ॥ अतः॥ नाप्यज्ञा नाऽपि सर्वज्ञाविज्ञाएव तु केवलं ॥ तल्लेखानां प्रमाणत्वं नाऽस्ति सर्वांशतस्ततः ॥ १ ॥

## ॥ अथ सप्तमोऽवांतरः प्रश्नः॥ ७॥

अज्ञाश्चेत्तदा सर्वजगद्विरुद्धवादिनोयूयं के इति विवेचनीयं ॥ ५५ ॥

## ॥उत्तरं॥

नसस्माभिः सर्वथाऽज्ञत्वं तेपूपपादितं ॥ नाऽपि वयं सर्वजगद्विरु-

द्धवादिनः॥अस्मदनुगुणानामपि बहूनामेव जगति सत्वात् ॥ यदि-
तु केषांचिदनभिमतवादमात्रेणैव सर्वजगद्विरुद्धवादित्वं शक्यं व-
क्तुं तर्हि अनादिसिद्धानि वैष्णवमतानि स्वग्रंथेष्वनुवादपूर्वकं दू-
षयित्वा प्रवृत्ते भवन्मतएव तत्प्रसरेत् ॥ किंच ॥ जगतोरज्जुभुजंग
वदसत्यत्वाप्रतिष्ठत्वानीश्वरत्वादिवादिनएव संतु जगद्विरुद्धवादि-
नोनतु जगति भगवत्कार्यत्वताद्रूप्यादिस्वीकारिणोवयं भवेम ॥ य
स्त्वाक्षिप्तं यूयं कइति विवेचनीयमिति ॥ तत्र ब्रूमः ॥ सर्ववेदशा-
स्त्रप्रसिद्धसंप्रदायाभूमंडलेऽपि यावति वेदविभागोऽस्ति यावति च
वर्णविभागः तावति वर्तमानैश्चातुर्वर्णिकैरनंतैः शिष्यैः संपन्नाः शि
वादिसर्ववृंदारकवृंदवंदितपदारविंदश्रीमन्नंदनंदनपन्नलिनमिलिंदाः
श्रीवेदव्यासविष्णुस्वामिश्रीमद्वल्लभाचार्यचरणानुचराः तत्कृपया वे
दादिप्रमाणघोपपक्षपातेन तन्मूलकसद्युक्तिचयचंचुना च विवि-
धविषमहितदुर्वादिपृदाकुभोगविदलनेन सार्थकितद्विजराजभावा-
इदानीतनाअप्यस्मदाचार्यास्तच्चरणरजोधनिनस्तदनुकंपातोवा-
दयुद्धाऽविकंपावयं च किं तवाऽविदिताएव येनैव मनुयुंक्षे ॥
अथवा ॥ युक्तएव हरिभक्तेषु कालानुकूलएषआक्षेपः॥ यथोक्तं
माधवीयाऽचारकांडे प्रथमाध्याये (श्लो० ३०) व्याख्याने ॥
विष्णुपुराणे ॥ यदा यदा सतां हानिर्वेदमार्गानुसारिणां ॥तदा तदा
कलेर्वृद्धिरनुमेया द्विजोत्तमैः ॥ न प्रीतिर्वेदवादेषु पाखंडेषु यदा
रतिः ॥ तदा तदा कलेर्वृद्धिरनुमेयाद्विजोत्तमैरिति ॥ आस्तामेतत् ॥
तथाऽप्यस्माभिस्तु नैतादृशाअकल्याणवादावक्तव्याः॥नाऽपि वितं-
ड्या शुष्कवैरं चोत्पादनीयं ॥ शातातपस्मृतौ ॥ भद्रंभद्रमितिब्रूया-

द्रद्रमित्येव वा पुनः ॥ शुष्कवैरं विवादं च न कुर्यात्केनचित्सहेति तन्निषेधात् ॥

## ॥ अथाष्टमोऽवांतरः प्रश्नः ॥ ८ ॥

यस्त्वां द्वेष्टि समां द्वेष्टि यस्त्वामनु समामनु ॥ त्वदुपासाजगन्नाथ सैवाऽस्तु मम गोपते इत्यादिवाक्यानामर्थोऽपि कया रीत्या भवतीत्यपि विवेचनीयं ॥५६॥

## ॥ उत्तरं ॥

तपोव्रतादिसहितभक्त्या तद्वशतां गतः ॥ शिवादिभ्यः स्वपरमभक्तेभ्योभक्तवत्सलः॥१॥प्रभुरीदृशवाक्यानिप्रवदेच्चित्रमत्रकिं॥पार्थादीनांस्वभक्तानां विषयेऽपि तथा जगौ॥२॥तथाहि॥विष्णोराराधनार्थं मे व्रतचर्यापितामहेत्यादिवचनैर्भगवत्तोपार्थमेव जटाधारणादिव्रतान्याचरतो वैष्णवानांयथाशंभुरित्यादिश्रीभागवतादिवचनैर्वैष्णवाग्रगण्यस्य विश्वाधियोरुद्रोमहर्षिरित्यादिश्रुतिभिः एकदाशंकरोदेवोगतोगोकुलमंडलमित्याद्यार्षसंहितावचनैश्चाऽस्माकीनवैष्णवसंप्रदायाचार्यस्य यच्छौचनिसृतसरित्प्रवरोदकेनतीर्थेनमूर्ध्न्यधिकृतेनशिवःशिवोभूदित्यादिश्रीभागवतवचनैस्तत्पादोदकरूपां सुरसरितंनिरंतरं शिरसि धारयतस्तन्महाप्रसादैकजीवनस्य परमभक्तस्य श्रीमहादेवस्य प्रीतये भगवान् यदा पाद्मे त्वामाराध्यतथाशंभोग्रहीष्यामिवरंसदेति स्वभक्तस्य स्वयमाराधनमपि प्रतिज्ञातवान् रामाद्यवतारेषुतथा कृतवांश्च॥ तदा तस्य यस्त्वांद्वेष्टिसमांद्वेष्टियस्त्वामनुसमामनुइति स्वभक्तं प्रति कथनं नैवाश्चर्यकरम् ॥ अतएवोयो-

गपर्वणि एकनवतितमेऽध्याये भोजनार्थं निमंत्रयंतं दुर्योधनं प्र-
ति भगवान् पांडवविषयेऽप्येवमेवाऽऽह॥ (श्लो० २३) एवमुक्तः
प्रत्युवाच धार्तराष्ट्रं जनार्दनः॥ अभिवीक्ष्य सहाऽमात्यं दाशार्हः प्र-
हसन्निव ॥ नाहं कामान्न संरंभान्न द्वेषान्नार्थकारणात् ॥ न हे-
तुवादाल्लोभाद्वा धर्मं जह्यां कथंचन ॥२४॥ संप्रीतिभोज्यान्यन्ना-
नि आपद्भोज्यानि वा पुनः॥नच संप्रीयसे राजन्नचैवाऽऽपद्गतावय-
म् ॥ २५ ॥ अकस्माद्द्वेष्टि वै राजन् जन्मप्रभृति पांडवान् ॥ प्रिया-
ऽनुवर्त्तिनो भ्रातॄन् सर्वैः समुदितान्गुणैः ॥ २६ ॥ अकस्माच्चैव पा-
र्थानां द्वेषणं नोपपद्यते ॥ धर्मे स्थिताः पांडवेयाः कस्तान्' किं व-
क्तुमर्हति ॥ २७ ॥ यस्तान्द्वेष्टि समां द्वेष्टि यस्ताननु समामनु ॥
ऐकात्म्यं मां गतं विद्धि पांडवैर्धर्मचारिभिः ॥ २८ ॥ तथाच पांड-
वादिवन्छिवस्याऽपिपरमभक्तत्वात् स्वसंप्रदायाचार्यत्वेन सर्वतोऽ-
धिकत्वाच्च तं प्रति यस्त्वांद्वेष्टीत्यादिवचनं भगवतः संगच्छतएव ॥
तथाचाऽयमस्य वाक्यस्यार्थः ॥ हे गोपते शिव मया दत्तस्वसंप्र-
दायाचार्यभावं मत्परमभक्तं त्वां यो द्वेष्टि अयं पिशाचचर्यायु-
क्तोनिंद्यइत्यादिरूपं द्वेषं करोति स मामेव द्वेष्टि ॥ एकादशस्कंधे॥
आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ॥ न मर्त्यबुध्याऽ-
सूयेतेति मयैव कथितत्वात् ॥ मद्भक्तप्रह्लादादिद्वेषिणां हिरण्यक-
शिपुप्रभृतीनां मया स्वद्वेषित्वांगीकाराच्चेतिभावः ॥ तथा यस्त्वाम-
नु मया तुभ्यमुपदिष्टवैष्णवसंप्रदायानुसारेण यस्त्वामनुसरति समा
मनु तत्संप्रदायानुसारिणामत्सेवनादिना मामेवानुसृतोभवति ॥ त-
था यात्वदुपासा शिवोस्माकं परमगुरुर्वैष्णवाऽग्रण्यश्चेत्यादिचित-

नरूपा तवोपासना सा ममैवोपासनाऽस्तु॥ आशिषिलोट्॥तथाचा यं वरः प्रदत्तइति ज्ञायते॥एवंच सा मदुपासनावन्मत्संतोपकारिणी भविष्यतीति भावः॥भगवतोहि स्वार्चनाऽपेक्षया स्वभक्ताऽर्चने नि· रतिशयप्रीत्युदयस्य बहुप्रमाणसिद्धत्वाद्युक्तमेतत् ॥तथाहि ॥सार· संग्रहे पाराशरस्मृतौ॥तदीयाऽऽराधनं पुण्यं वक्ष्यामि मुनिसत्तमाः॥ यदन्वेषणमात्रेण सर्वपापैः प्रमुच्यते ॥ नाऽतः परतरं पुण्यं त्रिषु लोकेषु विद्यते॥ सर्वकामप्रदं पुंसामत्यंताऽतिशयं हरेः॥ तस्मात्पर· तरं श्रेयोनाऽस्ति सत्यं ब्रवीम्यहं॥ सकृत्संपूजनं तेषां मुक्तिदं पापि· नामपि॥ सहस्रवार्षिकी पूजा विष्णोर्भगवतोहरेः॥ सकृद्भागवता· र्चायाः कलां नार्हति षोडशीं ॥ सकृत्संपूजिते पुण्ये महाभागवते गृहे ॥ आकल्पकोटिपितरः परितृप्तान संशयः ॥ यथा तुष्यति दे· वेशोमहाभागवतार्चनात् ॥ तथा न तुष्यति हरिर्विधिवत् स्वार्च· नादपि ॥ षष्टिवर्षसहस्राणि विष्णोराराधने फलं ॥ सकृद्वैष्णवपू· जायां लभते नाऽत्र संशयः ॥ किं तस्य दानैः किं तीर्थैः किं य ज्ञैर्विधिवत्कृतैः ॥ सर्वं संप्राप्यते पुंसां विष्णुभक्ताभिपूजनात् ॥ आराध्यैव जगन्नाथं यथेष्टानपरानपि॥ त्यक्तभक्तार्चनाद्यर्थाआ चाराऊषरांऽबुवत् ॥ वैष्णवोयद्गृहे भुंक्ते तस्य भुंक्ते हरिः स्वयं ॥ हरिर्यस्य गृहे भुंक्ते तस्य भुंक्ते जगत्रयं ॥ तोषयंति च तद्भक्ता· न्पंचकालपरायणान् ॥ सकामास्तत्फलं यांति निष्कामाः परमं पदं ॥ यथा भागवतानां तु पादांभोरुहसेवनात् ॥ तथा स्वाराध ने चापि न प्रीतोभगवान् हरिः ॥ भगवद्वचनं ॥ मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् ॥ तस्मान्मद्भक्तभक्तश्च पूजनीयोविशेषतः॥ अध्वश्रांतमविज्ञातमतिथिं क्षुत्पिपासितं ॥ योन पूजयते भक्त्या

तमाहुर्ब्रह्मघातकं ॥ मद्वंदनाच्छतगुणं मद्भक्तस्य तु वंदनं ॥ मद्भोजनाच्छतगुणं मद्भक्तस्य तु भोजनं ॥ बृहन्नारदीये ॥ योविष्णुभक्तान्निष्कामान् भोजयेत् श्रद्धयाऽन्वितः ॥ त्रिःसप्तकुलमुत्धृत्य स याति हरिमंदिरं ॥ विष्णोः प्रसादमाकांक्षन्वैष्णवान्परितोषयेत् ॥ अन्यथा ऽवाप्तकामोऽसौ नैव केनाऽपि तुष्यति ॥ तस्मात्सर्वप्रयत्नेन वैष्णवानर्चयेत्सदा ॥ सर्वं तरति दुःखौघं महाभागवतार्चनात् ॥ पूजनाद्विष्णुभक्तानां पुरुषार्थोऽस्ति नेतरः ॥ तेषु तद्रूपतः किंचिन्नास्ति नाशनमात्मनः ॥ अतिथिर्यस्य भग्नाशोगृहात् प्रतिनिवर्त्तते ॥ सतस्य दुष्कृतं दत्वा पुण्यमादाय गच्छति ॥ वस्त्राऽलंकारभूषाद्यैर्योभागवतमर्चयेत् ॥ भूष्यते तस्य वंशोऽपि श्रीवृद्धिः पुत्रपौत्रकैः ॥ अंगसिंहासनाद्यैश्च तांबूलैर्व्यंजनैस्तथा ॥तोषयेद्भगवद्भक्तं तुष्यते च जनार्दनः ॥ यः प्रतिष्ठापयेद्विष्णुं वैष्णवंवा गुणान्वितं ॥ न तुल्यमिति मे बुद्धिर्भक्तपूजा शताधिका ॥ पुनः पद्मपुराणे शिवः ॥ तस्मात्सर्वप्रयत्नेन वैष्णवान्पूजयेत्सदा ॥ सर्वं नश्यति दुःखौघं महाभागवतार्चनात् ॥ महाभागवतान् श्रेष्ठान् पूजयेद्गृहमागतान् ॥ मधुपर्कविधानेन यथाशक्ति द्विजोत्तमान् ॥ शुभ्रे पात्रांतरे रम्ये पादौ प्रक्षाल्य भक्तितः ॥ अर्चयेद्गंधपुष्पाद्यैर्वस्त्रैराभरणादिभिः ॥ तांबूलेन फलैर्वाऽपि यथाशक्ति समर्चयेत् ॥ पुनः प्रणम्य भक्त्या च शनैस्तत्र निवर्त्तते ॥ उपचारं भृशं कुर्याद्यथाविधि समन्वितः ॥ वैष्णवान्भोजयेद्विप्रान्भक्त्या . दद्याच्च दक्षिणां ॥ एवमभ्यर्चयेन्नित्यं यावज्जीवमतंद्रितः॥ कुलकोटिं समुत्धृत्य वैष्णवं लोकमाप्नुयात् ॥ आराधनानां सर्वेषां विष्णोराराधनं परं ॥ तस्मात्परतरं देवि तदीयानां च पूजनं ॥ अर्चयि-

त्वा तु गोविंदं तदीयान्नार्चयेत्तु यः ॥ न सभागवतोज्ञेयः केवलं दांभिकः स्मृतः॥ भागवते॥अर्चायामेव हरये पूजां यः श्रद्धयेहते॥ न तद्भक्तेषु चाऽन्येषु सभक्तः प्राकृतः स्मृतः ॥ नवमे भगवद्वचनं॥ अहं भक्तपराधीनोह्यस्वतंत्रइव द्विज ॥ साधुभिर्ग्रस्तहृदयोभक्तैर्भक्तजनप्रियः ॥ महाभारते ॥ तुलसीदलमात्रेण जलस्य चुलकेन च ॥ विक्रीणीते स्वमात्मानं भक्तेभ्योभक्तवत्सलः ॥ अतोभगवतोभक्तवश्यत्वात् स्वोपासनाऽपेक्षयाऽपि स्वभक्तोपासनायां निरतिशयप्रीतिमत्त्वाच्च स्वपरमभक्तं शिवं प्रति युक्तमेवोक्तं त्वदुपासाजगन्नाथसैवास्तुममगोपनइति ॥ अतएव शिवोऽपि भगवद्भक्त संगे स्वस्याऽतिप्रीतिं स्वस्य भगवद्भक्तत्वादिकं च तत्रतत्र वदति ॥ यथा श्रीभागवते चतुर्थस्कंधे चतुर्विंशाध्याये ॥ यः परं रंहसः साक्षात्त्रिगुणाज्जीवसंज्ञितात् ॥ भगवंतं वासुदेवं प्रपन्नः सप्रियोहि मे॥ ॥२८॥ स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिंचितामेति ततः परं हि मां ॥ अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाऽहं विबुधाः कलाऽत्यये ॥ २९ ॥ अथ भागवतायूयं प्रियाःस्थ भगवान्यथा ॥ न मे भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥ ३० ॥ तत्रैव ॥ (श्लो० ५७) क्षणार्धेनाऽपि तुलये न स्वर्गं नाऽपुनर्भवं ॥ भगवत्संगिसंगस्य मर्त्यानां किमुताऽऽशिषः ॥ ५७ ॥ अथाऽनघांऽघ्रेस्तव कीर्तितीर्थयोरंतर्बहिः स्नानविधूतपाप्मनां ॥ भूतेष्वनुक्रोशसुसत्वशीलिनां स्यात्संगमोऽनुग्रहएव नस्तव ॥ ५८ ॥ न यस्यचित्तं बहिरर्थविभ्रमं तमोगुहायां च विशुद्धमाविशत् ॥ यद्भक्तियोगानुगृहीतमंजसा मुनिर्विचष्टे ननु तत्र ते गतिं ॥ ५९ ॥ तत्रैव ॥ (श्लो० ६७) कस्त्वत्पदाब्जं विजहाति पंडितोयस्तेऽवमानव्यय-

मानकेतनः ॥ विशंकयाऽस्मद्गुरुरर्चति स्म यद्विनोपपत्तिं मनवश्च- तुर्दश ॥ ६७ ॥ अष्टमस्कंधे द्वादशाऽध्याये भगवंतं प्रति शिव- एव ॥ ( श्लो० १० ) नाऽहं परायुर्ऋषयोन मरीचिमुख्याजानं ति यद्विरचितं खलु सत्त्वसर्गाः ॥ यन्मायया मुषितचेतसईशदैत्य- मर्त्यादयः किमुत शश्वदभद्रवृत्ताः ॥ १० ॥ तत्रैव शिवं प्रति भ- गवानाह ॥ ( श्लो० ३९ ) कोनुमेऽतितरेन्मायां विषक्तस्त्वदृते पुमान् ॥ तांस्तान् विसृजतीं भावान् दुस्तरामकृतात्मभिः ॥ ३९ ॥ सेयं गुणमयी माया न त्वामभिभविष्यति ॥ मया समेता कालेन कालरूपेण भागशः॥४०॥ इति वरः प्रदत्तः॥ तत्रैव॥ (श्लो० ४२) आत्मांऽशभूतां तां मायां भवानीं भगवान् भवः ॥ शंसतामृषिमु- ख्यानां प्रीत्याऽऽचष्टाऽथ भारत ॥ ४२ ॥ अपि व्यपश्यस्त्वमज- स्य मायां परस्य पुंसः परदेवतायाः ॥ अहं कलानामृषभोविमु- ह्ये यया वशोऽन्ये किमुताऽस्वतंत्राः ॥४३॥ यं मामपृच्छस्त्वमुपे- त्य योगात्समासहस्रांतउपारतं वै ॥ सएषसाक्षात्पुरुषः पुराणोन यत्र कालोविशते न वेदः ॥ ४४ ॥ इति ॥ एवंविधानि शिवस्य भगवद्भक्तत्वे तद्दत्तवरप्रदानेनाऽत्युत्कर्षे भगवदाज्ञया वैष्णवसंप्र- दायविशेषाचार्यत्वप्राप्त्यादौ च प्रमाणभूतानि वचनानि श्रुत्या- दिषु शतशः सहस्रशश्चोपलभ्यंतएवेति विस्तरभिया न लिख्यंते॥ अतोयस्त्वांद्वेष्टीत्यादिवचनानां दर्शितदिशैवाऽर्थोबहुप्रमाणानुरो- धाद्विधेयः॥सएव निर्मत्सराणां सतां मनोरमइति शुभं॥इत्थं ॥ स- प्तसप्तिद्युदिस्थस्य कृपया सप्तमं मया ॥ सद्यउत्तरितं चोद्यमंगैः संगतमष्टभिः ॥१॥

---

## ॥ अथाऽष्टमः प्रधानः प्रश्नः ॥ ८ ॥

॥ भवतामान्हिकं कीदृशं ॥ ८ ॥

### ॥ उत्तरं ॥

वेदेषु स्मृतिषु प्रोक्तं यथाऽऽवश्यकमान्हिकं ॥ यद्यवस्थापितं सूत्रैः शाखाभेदान्महर्षिभिः ॥ १ ॥ यथोदितं च व्यासाद्यैः पुराणेषु पुरातनैः ॥ महानिबंधकारैश्च संप्रदायविभेदतः ॥ २ ॥ वैष्णवानां तु कर्तव्यं निर्णीतं विस्तरेण यत्॥सदाचार्यैः सदा कार्यं यत्प्रमाणैः प्रपंचितम् ॥ ३ ॥ तत्तथैवाऽऽन्हिकं सर्वं स्वस्वशक्त्यनुसारतः ॥ यथा देशं यथाकालं यथावर्णं यथाऽऽश्रमं ॥ ४ ॥ यथास्वसंप्रदायं च यथाशाखं यथामति ॥ अनुतिष्ठंति नः शिष्टाविशिष्टाः श्रद्धया सदा ॥ ५ ॥ उत्थानकालमारभ्य यावच्छयनमत्रतत् ॥ सर्वं न शक्यते वक्तुं महाविस्तरभीतितः ॥ ६ ॥ अतोविस्तरतो जिज्ञासायां तन्निरूपकान् वेदभागान् स्मृतिविभागान् कल्पसूत्रादिखण्डान् पुराणेतिहासदेशांश्च निरीक्ष्याऽवबुध्यताम् ॥ ततोऽप्यनिर्णये मदनपारिजाताचारमाधवहेमान्द्याचारचिंतामणिधर्मप्रवृत्त्याचारार्ककमलाऽकरान्हिकाचारप्रकाशधर्माब्धिसारप्रभृतयः साधारणग्रंथाः स्वमार्गान्हिकप्रभृतयोविशेषग्रंथाश्च निरीक्षितमात्राएव निराकरिष्यंति सुरसरित्पूराश्चिरोपात्तं दुरितभरमिव सकलसंशयप्रसरमस्मदान्हिकविषयकमित्यलम् ॥

ष्ठितानामप्यंगवैकल्येन फलाऽजनकत्वप्रयुक्तवैयर्थ्यानिपायात् ॥ तथाच तत्तद्ग्रंथोक्तयावदंगासमवधानेन कथं भवदाह्निकस्य उक्तसर्वग्रंथानुसारित्वं निश्चेयमितिचेत् ॥ अत्रवदामः ॥ नित्यान्यपि यथाशक्ति शाठ्यवर्जं समाचरेत् ॥ कालादेस्तारतम्याच्चाऽशक्यत्यागेऽप्यदोषतः ॥ तथाहि ॥ पराशरमाधवीये प्रथमाध्याये ॥ (श्लो० २२) व्याख्याने ॥ युगानां स्वरूपमनुष्ठातृपुरुषशक्तितारतम्योपेतं तदनुसारेणानुष्ठानवैषम्यं संभवति यथा शक्नुयात्तथा कुर्यादिति नित्यकर्मसु निर्णीतत्वादित्युक्तं माधवेन ॥ नित्यकर्मस्वेवं निर्णयस्तु पूर्वतंत्रे षष्ठस्य तृतीयपादे ॥ सर्वशक्तौ प्रवृत्तिःस्यात्तथाभूतोपदेशादितिपूर्वपक्षसूत्रेण सर्वांगोपसंहारेणैव नित्यानामनुष्ठेयत्वमाशंक्य अपिवाप्येकदेशेस्यात्प्रधानेह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वादित्यादिना जैमिनिना स्फुटमुक्तः ॥ संक्षिप्तः सूत्रार्थस्तु ॥ बह्वृचब्राह्मणे श्रूयते ॥ यावज्जीवमग्निहोत्रं जुहोति यावज्जीवंदर्शपूर्णमासाभ्यांयजेतेति ॥ नित्यमग्निहोत्रं नित्यौचदर्शपूर्णमासौ ॥ तत्रसंशयः ॥ किं सर्वांगोपसंहारेणैवाऽग्निहोत्रप्रयोगः कर्त्तव्यः आहोस्वित् यावंति शक्येरंस्तावदुपसंहारेणेति ॥ किंतावत्प्राप्तं ॥ सर्वांगशक्तौ सत्यामेव प्रवृत्तिरुपपद्यतइति ॥ कुतः ॥ तथाभूतोपदेशात् यथाभूतं हि तत्कामसंयुक्तं श्रुतं तथाभूतमेव नित्यमप्युपदिश्यते तस्मात् अंगवैकल्ये प्रधानस्य कामितस्वर्गादिफलनिष्पादकत्वादिति निष्कर्षइति पूर्वः पक्षः ॥ सिद्धांतस्तु ॥ अपिवेति पक्षव्यावृत्तिः॥अप्येकदेशेंऽगानां स्यादेवप्रयोगः ॥ यतः सांगस्याऽप्यनंगस्याऽपिप्रयुज्यमानस्य प्रधानादेवायमर्थोनिष्पद्यते इतरदंगजातं तु गुणमात्रम् तदर्थत्वात् प्रधानोपकारकत्वादिति ॥ किं-

चाऽशक्यत्यागक्रिया नित्याऽकरणे प्रत्यवायः स्यात् ॥ तस्य यावज्जीवाधिकारकत्वात् ॥ अतोऽप्यशक्यत्यागे न क्षतिः ॥ इममेवार्थं तत्राग्रिमं सूत्रं बोधयति ॥ तदकर्मणि च दोषस्तस्मात्ततोविशेषः स्यात्प्रधानेनाभिसंबंधात् ॥ विस्तरस्तु शाबरभाष्यादेरवधेयः ॥ अस्याधिकरणस्य संक्षेपस्त्वधिकरणमालायां ॥ नित्ये सर्वांगसंहारः शक्त्यावाऽऽद्यः फलित्वतः॥ शक्त्या त्यागासंभवेन निमित्ते जीवने स्थिते इति ॥ तस्माद्यथाशक्त्येव नित्यान्यनुष्ठीयंते ॥ अतएव बौधायनोऽपि स्मरति ॥ यथाकथंचिन्नित्यानि शक्यवस्त्वनुरूपतः॥ येन केनाऽपि कार्याणि नैव नित्यानि लोपयेदिति॥ आचारमाधवे चोक्तस्थले उक्ताधिकरणं लेशेन बोधयित्वोच्यते॥ पुरुषशक्तितारतम्यकृतमत्रानुष्ठानवैषम्यमिति ॥ नचाऽशक्यांऽगत्यागे फलानिष्पत्तिः शंक्या ॥ परिहृतत्वात् ॥ शास्त्रबलादेव तत्सिद्धेः ॥ अत एव जैमिनीयन्यायमालाव्याख्यायां षष्ठाध्यायतृतीयपादे काम्यकर्मांगशक्त्यशक्तिविचारके द्वितीयाधिकरणे तस्मात्काम्यं कृत्स्नांगोपेतं यदा कर्तुं शक्नुयात्तदा कुर्यात् ॥ नित्यंतु यथा शक्नुयात्तथाकुर्यात् ॥ एतदेवाभिप्रेत्यश्रुतं तदेवयादृक्कीदृग्घोतव्यमितीत्युक्तं ॥ अलमनेन विचारेण ॥ तस्माद्यथाशक्ति श्रुतिस्मृतिकल्पसूत्रसदाचारादिप्राप्तं नित्यं कर्मस्वस्वशाखीयं प्रत्यहं क्रियते नचाऽन्यशाखीयमप्याचरणीयं भवति ॥ धर्मसिंधुतृतीयपरिच्छेदपूर्वार्द्धे ॥ बव्हल्पं वा स्वगृह्योक्तं यस्य यत्कर्म चोदितं॥ तस्य तावति शास्त्रार्थे कृते सर्वः कृतोभवेदि तिस्मृतेः ॥ विशेषस्त्वनुपदमयिमप्रश्नोत्तरएव स्फुटीभविष्यति ॥ अथ त्रिपुंड्रोर्ध्वपुंड्रधारणादीनां वै

वा.

कल्पिकानां तु मध्ये द्वितीयप्रयाजे तनूनपान्नाराशंसवच्छास्त्रव्यवस्थातः स्वस्य प्राप्तमेवाऽनुष्ठीयते ॥ राजन्यवसिष्ठानां नाराशंसो-द्वितीयप्रयाजस्तनूनपादन्येषामितिवदाचारार्कादिपु त्रिपुंड्रोर्ध्वपुंड्रादिनिर्णयाऽनंतरं यथासंप्रदायं तिलकं कुर्यादित्यादिलेखदर्शनादिति दिक्॥अलंबहुना॥ संदेहेंधनसंदोहस्त्वन्हायास्माकमान्हिके ॥ निर्निन्हवं शास्त्रवन्हिज्वालाजालात्समाप्यतां ॥ १॥

## ॥अथैतत्प्रश्नानुरोधिनोऽष्टौ प्रश्नास्तत्राद्यः प्रश्नः॥ १ ॥

प्रातःकृत्यादिसंध्यावंदनांतं कर्म कया श्रुत्या स्मृत्या वा क्रियते ॥ ५७ ॥

## ॥ उत्तरं॥

एतादृशेष्वसंगततरेषु प्रश्नेषु विचारचतुरेण किमुत्तरणीयं ॥ तथाहि॥इमे हि प्रश्नावैष्णवसांप्रदायिकान् सर्वान् प्रति प्रवृत्ताः॥संतिच वैष्णवसंप्रदायेषु सर्वशाखीयाब्राह्मणादयः ॥ अतोयदि बह्वृचाएव वैष्णवाः स्युस्तर्हि ऋक्‌छाखाश्रुत्या आश्वलायनादिसूत्ररूपया-स्मृत्या च क्रियतइत्युत्तरितं स्यात् ॥ यदिवा यजुःशाखीयाएव भवेयुस्तर्हि तैत्तिरीयमाध्यंदिनादिशाखाश्रुत्या आपस्तंबसत्याषाढकात्यायनादिसूत्ररूपया स्मृत्याच क्रियतइत्युत्तरितं भवेत्॥नत्वेवमेकशाखीयाएव वैष्णवाः संति ॥अतः कया श्रुत्या स्मृत्येति जिज्ञासितोनित्यकर्मसाधकतमोनियतःश्रुतिविशेषः स्मृतिविशेषोवा न

वक्तुं शक्यः ॥ इदंतु वदामः॥ अन्यसंप्रदायस्थवदस्मत्सांप्रदायिकै-रपि स्वस्वशाखाश्रुत्यनुसारेण स्वस्वगृह्यसूत्रादिरूपस्मृत्यनुसारेण च सर्वमपि नित्यं नैमित्तिकं च विधीयतइति ॥ स्वशाखास्वसूत्र-योरनुरोधेनैव श्रौतस्मार्तकर्मकरणस्य तदुल्लंघने दोषाऽतिशयस्य च शास्त्रसिद्धत्वात् ॥ तथाहि ॥ स्मृतिप्रकाशस्याऽचारप्रकाशे वै-जवापायनः ॥ बह्वल्पं वा स्वशाखोक्तं यस्य कर्म प्रचोदितं ॥ त-स्य तावति शास्त्रार्थे कृते सर्वः कृतोभवेदिति॥लौगाक्षिरपि ॥ ऊ-नोवाऽप्यतिरिक्तोवा यः स्वशाखोदितोविधिः ॥ तेन संतनुयाद्यज्ञं-न कुर्यात्पारतंत्रिकं ॥ तथा ॥ पराशरमाधवीये(अ० १श्लो० ३७) व्याख्यायां ॥ वसिष्ठः ॥ पारंपर्यागतोयेषां वेदः सपरिबृंहणः॥त-च्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथेति ॥ स्वशाखापरित्यागं सएव निषेधति ॥ यः स्वशाखां परित्यज्य पारक्यामधिगच्छति ॥ सशूद्रवद्बहिः कार्यः सर्वकर्मसु साधुभिः ॥ स्वीया शाखोज्झिता येन ब्रह्म तेनोज्झितं परं ॥ ब्रह्मैव सविज्ञेयः सद्भिर्नित्यं विगर्हित-इति ॥ स्वशाखाध्ययनपूर्वकमन्यशाखाध्ययनं तेनैवांऽगीकृतं ॥ अधीत्य शाखामात्मीयां परशाखां पठेद्द्विजइति ॥ धर्मप्रवृत्तौ वसिष्ठः॥ ( श्लो० ५१) स्वशाखाविधिविमुत्सृज्य त्वन्यस्य विधि-माचरेत् ॥ अप्रमाणमृषिं कृत्वा त्वंधे तमसि मज्जति ॥ ऋक्शा-खी नैव कुर्वीत स्वकीयं परशाखया ॥प्रमादाद्यदिकुर्वीत पुनः सं-स्कारमर्हति ॥ ५३ ॥ यजुःशाखाविधानेन यदि वह्वृचकर्म च ॥ कृतं चाऽपि हि तत्कर्म पुनः कुर्याद्यथाविधि ॥ ५४ ॥ यत्र-नास्ति स्वशाखा चेदृक्शाखोक्तं समाचरेत् ॥ पुनर्नार्हति संस्का-रमन्यथाऽर्हति चेत्पुन. ॥ ५५ ॥ ऋक्शाखाविधिना कर्म यदि-

स्यादन्यशाखिनां ॥ न तत्कर्म पुनः कुर्यादिति यज्ञविदां मतमिति ॥ नचैवंसति अग्निहोत्रादिकर्मणां शाखाभेदेन भिन्नभिन्नविधत्वाच्चोदकवाक्ये ऽग्निहोत्रादिपदैरेकतरशाखीयाऽग्निहोत्रग्रहणमिति स्वीकारे शाखांतरीयाणां तेषामवैधत्वप्रसंगः ॥ सर्वशाखीयानां तेषां ग्रहणमिति स्वीकारे तु आवृत्त्यादिदोषप्रसंगश्चेति वाच्यं ॥ सर्वशाखीये ऽग्निहोत्रे ऽग्निहोत्रत्वस्याविशिष्टत्वेन चोदकवाक्यआवृत्तिमंतरापि अग्निहोत्रपदेन सर्वशाखीयस्य तस्य ग्रहणसंभवात् ॥ यथा न ब्राह्मणं हन्यादिति वाक्यं गुर्जरगौडांध्रादिसर्वब्राह्मणसामान्यस्य वध्यत्वनिषेधं बोधयति॥एवंविधिवाक्यमप्यग्निहोत्रादिकं सामान्यतोविदधत् स्वस्वशाखीयस्यैव तस्य कर्त्तव्यतां बोधयति ॥ अतएवाहुः स्मृतिप्रकाशे केचिदाचार्याः ॥ सर्वत्र प्रत्यभिज्ञानात्संज्ञारूपगुणादिभिः ॥ एककर्मत्वविज्ञानं नं शाखास्वपगच्छतीति ॥ अतएव स्वशाखाऽनुसारेणैव तेषां तेषां नित्यानां नैमित्तिकानां चाऽनुष्ठेयत्वं तत्र तत्रोच्यते ॥ यथा द्वितीयाऽध्याये स्नानप्रकरणे बृहत्पराशरः ॥ ( श्लो० १२७ ) छंदोमुन्यपरैर्युक्तं स्वशाखास्वरसंयुतं ॥ आवर्त्य प्रणवं स्नायाच्छतशोऽर्द्धशतं दशेति ॥ तथा ॥ आचारमाधवे प्रथमाध्याये आन्हिकप्रकरणे ॥ ( श्लो० २९ ) व्याख्याने ॥ उपस्थानं तु स्वशाखोक्तमंत्रैः कार्यं ॥ उपस्थानं स्वकैर्मंत्रैरादित्यस्य तु कारयेदिति वसिष्ठस्मरणात् ॥ तत्रैव लिंगपुराणे ॥ स्वशाखाध्ययनं विप्र ब्रह्मयज्ञइति स्मृतइति ॥ तत्रैव ॥ होमप्रकारः स्वगृह्योक्तविधिना द्रष्टव्यः ॥ तदुक्तं गृह्यपरिशिष्टे ॥ स्वगृह्योक्तेन विधिना होमं कुर्याद्यथाविधीति ॥ तत्रैव तर्पणं प्रक्रम्य अत्रांऽजलिसंख्या यथाशा-

खं व्यवतिष्ठते ॥ यच्च शाखायां न संख्यानियमः श्रुतस्तद्विषयें कूर्मपुराणे ॥ देवानृषीन् पितॄंश्चैव तर्पयेदक्षतोदकैः ॥ पितॄन् भक्त्या तिलैः कृष्णैः स्वसूत्रोक्तविधानतइति ॥ तत्रैव वैश्वदेवमुपक्रम्य ॥ यथास्वशाखं व्यवस्थेत्युक्तं ॥ अत्रैवाऽग्रे कात्यायनः ॥ उद्धृत्य हविषा ऽऽसिच्य हविष्येण घृतादिना ॥ स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेदिति ॥ तत्रैव तृतीयाऽध्याये श्राद्धप्रकरणे ॥ आचमनात्प्रागूर्ध्वं वा ब्राह्मणविसर्जनादूर्ध्वं वा पिंडनिर्वापणमिति पक्षाः शाखाभेदेन व्यवस्थिताइत्युच्यतइति दिक् ॥ एवमन्यत्राप्यनेकत्र प्रामाणिकमहानिबंधेषु प्रसिद्धतरेऽस्मिन् विषये कृतं बहुलेखनेन ॥ तस्मात् स्वशाखास्वसूत्रयोरनुरोधेनैव श्रौतं स्मार्त्तं च प्रातःकृत्यादिकं निखिलमप्यनुष्ठेयं ॥ यत्त्वावश्यकं कर्म स्वशाखायां नैवोपलभ्येत यथा सामशाखीयानामग्निहोत्रं तद्यथा शास्त्रमन्यशाखीयमप्यवश्यमनुष्ठेयं ॥ अतएवाऽऽचारप्रकाशे कार्ष्णाजिनिः ॥ आत्मतंत्रे तु यन्नोक्तं तत्कुर्यात्पारतंत्रिकं॥विशेषाः खलु सामान्यावेदोक्तावेदवादिभिः ॥ यत्तु बैजवापायनवचस्तदसमर्थस्याऽऽनुकूल्यप्रतिपादनार्थं॥यच्च लौगाक्षिवचनं तत्स्वशाखोक्तविरुद्धार्थनिषेधपरं॥एतेन परशाखाविहितं स्वशाखाविहितेन बाध्यतइति श्रुतिलिंगाधिकरणगतवार्त्तिकग्रंथोपि व्याख्यातः॥स्वशाखाविहितविरुद्धवैकल्पिकानुष्ठानेनाऽपि साद्गुण्यसंभवे परशाखाविहितस्याऽनपेक्षणात्॥अमुमेवार्थमभिप्रेत्योक्तं भविष्यपुराणे॥यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ॥ विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथेति ॥ तथा च सर्वोपसंहारेणैव धर्मानुष्ठानमिति स्थितमिति ॥ विस्तरस्तु एकंवासंयोगरूपचोदनाख्याविशेषादिति

शाखांतराधिकरणभाष्यादाववधेयः॥ अतोयथाऽस्मत्सांप्रदायिकभिन्नैरपि द्विजातिभिः स्वस्वशाखानुसारेण स्वस्वसूत्रानुसारेण च श्रौतस्मार्त्तानि सर्वकर्माणि अनुष्ठीयंते तथैवाऽस्मत्सांप्रदायिकैरपि तैस्तानि यथादेशकालं यथाशक्ति यथामति चाऽनुष्ठीयंते इति सर्वं सुस्थं॥

## अथैतत्प्रश्नानुबंधी द्वितीयःप्रश्नः॥ २॥

विधानग्रंथश्च कीदृशः॥ ५८॥

### ॥उत्तरं॥

अयमपि प्रश्नः पूर्वप्रश्नवदसंगततरएव॥ शाखाभेदेन विधानग्रंथानां वैविध्यात्॥ तत्तच्छाखीयैर्वैष्णवैरपि स्वस्वशाखीयविधानग्रंथानामेवाऽऽदर्तव्यत्वेनाऽमुकएव विधानग्रंथइति वक्तुमशक्यत्वात्॥ अत्र प्रश्नवाक्ये विधानग्रंथश्च कइति वक्तव्येऽपि कीदृश इति प्रकारप्रश्नस्तु चातुर्यातिशयात्॥ यदि तु प्रकारएव जिज्ञासितस्तर्हि अस्मद्ग्रंथाः समीचीनप्रकारकाइत्येवोत्तरं॥ अतोमीमांसाद्वयनिवारितसर्वसंदेहास्तास्ताः श्रुतयः स्मृतयः स्वस्वशाखीयगृह्यसूत्राणि चाऽनुष्ठानक्रमनियामकाः कात्यायनकल्पसूत्रतद्भाष्यादयश्च तदनुरोधेन बह्वृचतैत्तिरीयादीनां संस्कारकौस्तुभविश्वप्रकाशवोप्पणभट्टीप्रभृतयश्च श्रौतस्मार्तादिकर्मणां विधानग्रंथास्तथाचारप्रकाशाचारादर्शकमलाकराह्निकनागदेवकृताह्निकप्रभृतयआह्निकग्रंथाश्च संति बहुतराजागरूकाजगत्यां॥ तथा श्रीविठ्ठलाचार्यादिकृतपुष्टिमार्गाह्निकप्रभृतयआस्माकीनाश्च विजयंतएवाऽनंताइत्यलमज्ञबालकर्त्तव्येनेदृशप्रश्नेन॥

## अथ प्रक्रांतप्रश्नाऽनुबंधी तृतीयः प्रश्नः ॥ ३ ॥

गायत्रीजपस्याऽवश्यकता ऽनावश्यकता वा ॥ ५९ ॥

### ॥ उत्तरं ॥

पुरुषोत्तमदेवस्य गूढतत्त्वनिरूपिणी ॥ सर्वाघसंघसंघातकृत्साक्षान्मोक्षदायिनी ॥ १ ॥ जननीसर्ववेदानां परब्रह्ममयी स्वयं ॥ अजापे व्रात्यताहेतुर्बीजं ब्राह्मण्यसत्तरोः ॥ २॥ अगण्यपुण्या गायत्री सर्वत्र विदितैव या॥ तज्जपावश्यकत्वं कोन ब्रूयाद्द्विजवीर्यजः॥ ॥ ३ ॥ तथाहि ॥ आचारमाधवे प्रथमाऽध्याये ॥ गायत्रीजपं प्रशंसति व्यासः॥दशकृत्वः प्रजप्ता सा त्र्यहाद्यच्च कृतं लघु ॥ तत्पापं प्रणुदत्याशु नाऽत्र कार्या विचारणा ॥ शतजप्ता तु सा देवीपापौघशमनी स्मृता ॥ सहस्रजप्ता सा देवी उपपातकनाशिनी ॥ लक्षजापेन च तथा महापातकनाशिनी ॥ कोटिजापेन राजेंद्र यदिच्छति तदाप्नुयादिति ॥ यमोऽपि ॥ गायत्र्यान परं जप्यं गायत्र्यान परं तपः ॥ गायत्र्यान परं ध्यानं गायत्र्यान परं हुतमिति ॥ मनुरपि ॥ योऽधीते ऽहन्यहन्येतां त्रीणि वर्षाण्यतंद्रितः ॥स ब्रह्म परमप्येति वायुभूतः खमूर्त्तिमानिति ॥ गौतमोऽपि ॥ अनेन विधिना नित्यं जपं कुर्यात्प्रयत्नतः ॥ प्रसन्नोविपुलान् भोगान् भुक्ति मुक्ति च विंदतीति ॥ दक्षस्मृतौ आन्हिकमुपक्रम्य ॥ मार्जनं जलमध्ये तु प्राणायामस्ततः स्मृतः ॥ उपस्थानं ततः पश्चात् सावित्रीजपउच्यते॥ सविता देवता यस्यामुखमग्निरुदाहृतः ॥ विश्वामित्रऋपिश्छंदोगायत्री सा विशिष्यते ॥ तत्रैव ॥ अस्नात्वा-

ऽऽशी मलं भुंक्ते त्वजापी पूयशोणितं ॥ अहुत्वा च कृमीन् भुंक्ते ह्यदत्वा ऽमेध्यमेव च ॥ अत्रिस्मृतौ ॥ ( अ० २ ) सहस्रपरमां देवीं शतमध्यां दशावरां ॥ गायत्रीं योजपेद्विप्रोन सपापेन लिप्यते ॥ क्षत्रियोवाहुवीर्येण तरेदापदमात्मनः ॥ धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमइति ॥ तत्रैव ( अ० ३ ) गायत्र्यष्टसहस्रं तु जप्यं कृत्वा स्थिते रवौ ॥ मुच्यते सर्वपापेभ्योयदि न ब्रह्महा भवेत् ॥ लघ्वत्रिः ( अ० ८ ) सर्वेषामेव पापानां संकरे समुपस्थिते ॥ दशसाहस्रमभ्यस्ता गायत्री शोधनं परं ॥ तत्रैव ॥ ( अ० ८) यानि पूर्वप्रणीतानि पवित्राणि महर्षिभिः ॥ तेषां जपैश्च होमैश्च पूयंते कल्मषाऽऽवृताइति ॥ संवर्त्तस्मृतौ ॥ ( श्लो० १९४ ) सप्तव्याहृतिभिर्होमोद्विजैः कार्योमहात्मभिः ॥ उपपातकशुद्ध्यर्थं सहस्रपरिसंख्यया ॥ महापातकसंयुक्तोलक्षहोमं सदा द्विजः ॥ मुच्यते सर्वपापेभ्योगायत्र्या चैवमाचरन् ॥ १९५ ॥ अभ्यसेच्च महापुण्यां गायत्रीं वेदमातरं ॥ गत्वाऽरण्ये नदीतीरे सर्वपापविशुद्धये ॥ ९६ ॥ स्नात्वा च विधिवत्तत्र प्राणात्मानं तु पावयेत् ॥ प्राणायामैस्त्रिभिः पूतोगायत्रीं तु जपेद्विजः ॥ अक्लिन्नवासाः स्थलगः शुचौ देशे समाहितः ॥ पवित्रपाणिराचांतोगायत्र्या जपमारभेत्॥ऐहिकाऽऽमुष्मिकं लोकं पापं सर्वं विशेषतः ॥ पंचरात्रेण गायत्रीं जपमानोव्यपोहति ॥ गायत्र्यास्तु परं नास्ति शोधनं पापकर्मणां ॥ महाव्याहृतिसंयुक्तां प्राणायामेन संयुताम् ॥ २०० ॥ ब्रह्मचारीमिताहारः सर्वभूतहिते रतः ॥ गायत्र्यालक्षजाप्येन सर्वपापैः प्रमुच्यते ॥ १ ॥ अयाज्ययाजनं कृत्वा भुक्त्वा चाऽन्नं विगर्हितं ॥ गायत्र्यष्टसहस्रं तु जपं कृत्वा विमुच्यते ॥ अहन्यहनि योऽधीते गायत्रीं

वै द्विजोत्तमः ॥ मासेन मुच्यते पापादुरगः कंचुकाद्यथा ॥ गायत्रीं यः सदा विप्रोजपेत नियतः शुचिः ॥ सयाति परमं स्थानं वायुभूतः खमूर्तिमान् ॥ प्रणवेन च संयुक्ताव्याहृतीः सप्त नित्यशः ॥ गायत्रीं शिरसा सार्धं मनसा त्रिः पठेद्द्विजः ॥ निगृह्य चाऽऽत्मनः प्राणान् प्राणायामोविधीयते ॥ प्राणायामत्रयं कुर्यान्नित्यमेव समाहितः ॥२०६ ॥ मानसं वाचिकं पापं कायेनैव तु यत्कृतं ॥ तत्सर्वं नश्यते तूर्णं प्राणायामत्रये कृतइति ॥ ७ ॥ प्रायश्चित्ताऽध्याये रहस्यप्रायश्चित्तप्रकरणे स्वयं याज्ञवल्क्यः ( श्लो० ४) शुक्रियारण्यकजपोगायत्र्याश्च विशेषतः ॥ सर्वपापहराह्येते रुद्रैकादशिनी तथा ॥ ४ ॥ यत्रयत्र च संकीर्णमात्मानं मन्यते द्विजः ॥ तत्र तत्र तिलैर्होमोगायत्र्या वाचनं तथा ॥ ५ ॥ वायुभक्षोदिवा तिष्ठन् रात्रिं नीत्वाऽप्सु सूर्यदृक् ॥ जप्त्वा सहस्रं गायत्र्याः शुद्ध्येद्ब्रह्मवधादृते इति ॥ अत्रैव मिताक्षरायां शंखः ॥ शतं जप्ता तु सा देवी सर्वपापप्रणाशिनी ॥ सहस्रं जप्ता च तथा पातकेभ्यः प्रमोचनी ॥ दशसाहस्रजापेन सर्वकल्मपनाशिनी ॥ लक्षं जप्ता तु सा देवी महापातकनाशिनी ॥ सुवर्णस्तेयकृद्विप्रोब्रह्महा गुरुतल्पगः ॥ सुरापश्च विशुद्ध्यंति लक्षजाप्यान्न संशयइति ॥ इदं रहस्यपापप्रायश्चित्तविषयं॥ प्रकाशप्रायश्चित्तविषये गायत्रीजपसंख्या-तु चतुर्विंशतिमते ॥ गायत्र्यास्तु जपन् कोटिं ब्रह्महत्यां व्यपोहति ॥ लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥ पुनाति हेमहर्तारं गायत्र्यालक्षसप्ततिः ॥ गायत्र्यालक्षपष्ट्या तु मुच्यते गुरुतल्पगइति ॥ तथा कृच्छ्रादिलक्षणप्रकरणे ॥ ( श्लो० १४ ) कुर्यात्त्रिपवणस्नायी इत्यस्य मिताक्षरायां पट्त्रिंशन्मते ॥ जपहोमादि य-

किंचित्कृच्छ्रोक्तं संभवेन्नचेत् ॥ सर्वं व्याहृतिभिः कुर्याद्गायत्र्या प्रणवेन वेति ॥ जपसंख्यायां च विशेषोवैशंपायनेनैव दर्शितः ॥ ऋषभं विरजं चैव तथा चैवाऽघमर्षणं ॥ गायत्रीं वा जपेद्देवीं पवित्रां वेदमातरं ॥ शतमष्टशतं वाऽपि सहस्रमथवापरं ॥उपांशु मनसा वाऽपि तर्पयेत्पितृदेवताः ॥ मनुष्यांश्चैव भूतानि प्रणम्य शिरसा ततइति ॥ एवमनेकत्रैव नानाप्रकारैर्गायत्र्याः सर्वपापनाशकत्वं श्रूयते स्मर्यते च तथापि विस्तरभयान्न लिख्यते ॥ अतोगायत्रीजपस्तु द्विजातीनामावश्यकएव ॥ तमंतरा ब्राह्मण्यस्यैवाऽसंभवात् ॥ यथाऽऽह द्वितीयाऽध्याये गायत्रीनिरूपणप्रकरणे बृहत्पराशरः ॥ ( श्लो० १३ ) गायत्रीं योन जानाति ज्ञात्वोपास्ते न योद्विजः ॥ नामधारकमात्रोऽसौ न विप्रः शूद्रएव सः ॥ किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः ॥ सांगैः सावित्रिहीनेन न विप्रत्वमवाप्यते ॥ गायत्रीमेव योज्ञात्वा सम्यगभ्यसते पुनः ॥ इहाऽमुत्र च पूज्योऽसौब्रह्मलोकमवाप्नुयात् ॥ १५ ॥ गायत्री च तथा वेदा ब्रह्मणा तोलिताः पुरा ॥ वेदेभ्योऽपि षडंगेभ्योगायत्र्यतिगरीयसी ॥ ॥ १६ ॥ यदक्षरेषु देवत्वं चतुर्विंशतिपूच्यते ॥ संन्यासं यद्विबोधेन कुर्वन् ब्रह्मत्वमाप्नुयादिति ॥ परब्रह्मप्रतिपादकत्वं च सएवाऽऽह ॥ ( श्लो० ३४ ) हिरण्मये परे कोशे विरजं ब्रह्म निष्कलं ॥ तत् शुद्धं ज्योतिषां ज्योतिस्तयदात्मविदोविदुः॥देवस्य सवितुर्भर्गोवरणीयं च धी महि॥तदस्माकं धियोयस्तुब्रह्मत्वे च प्रचोदयादिति॥एवं ब्रह्माऽभेदेनैव गायत्र्याउपास्यत्वमाह आचारमाधवप्रथमाध्याये (श्लोक ३९) व्याख्याने व्यासः ॥ न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्म-

णा सह ॥ साऽहमस्मीत्युपासीत विधिना येन केनचिदिति ॥ इत्थं स्टटिकर्तृत्वादिभिर्ब्रह्मधर्मैरेव गायत्र्यास्साक्षाद्ब्रह्मरूपत्वं निरूपितं वृहत्पराशरे द्वितीयाध्याये गायत्रीप्रकरणे ( श्लो० ४ ) गायत्री तु परं तत्त्वमित्यादिना ॥ एवं छांदोग्यादिष्वपि॥ ( अ० ५ खंड १२ ) गायत्री वा इदं सर्वं भूतं यदिदं किंचेत्यादौ स्फुटं ॥ तथा॥ गायत्र्याः पुरुषोत्तमैकप्रतिपादकत्वं तु व्यासेन 'जन्माद्यस्य यतोऽन्वयादित्यादौ निर्णीतं ॥ तथैव श्रीमद्वल्लभाचार्यैर्गायत्रीभाष्ये श्रीविठ्ठलाचार्यैस्तत्कारिकासु शंकराचार्यविद्यारण्यादिभिश्च स्वकृतभाष्यादौ परब्रह्मपरत्वेन गायत्री व्याख्यायतइति सर्वं सुस्थं ॥ अतः ॥ ब्राह्मण्यद्रुमबीजं स्वराहित्ये व्रात्यताकरी॥ परब्रह्ममयी साक्षात् पुरुषोत्तमवर्णिनी ॥ १ ॥ तत्र चेतोऽर्पणे हेतुर्वेदमाता ऽखिलैर्द्विजैः॥ अवश्यमेव जप्या सा वैष्णवैः सुतरां पुनः ॥२॥

## ॥ अथैतदनुबंधी चतुर्थः प्रश्नः ॥ ४ ॥

आवश्यकता चेत्तत्र भस्मधारणस्य रुद्राक्षमालया जपस्याऽऽवश्यकता ऽनावश्यकता वा ॥ ६० ॥

### ॥ उत्तरं ॥

नैवाऽऽवश्यकता भस्मधारणस्य कथंचन ॥ नाऽपि रुद्राक्षमालायागायत्र्यास्तु जपे क्वचित् ॥ १ ॥ तथाहि ॥ ब्राह्मणादीनां भस्मधारणस्याऽत्यंतनिषेधकानि विप्राणां नैव धार्यं स्यात्तिर्यक्पुंड्रादिधारणं ॥ नारायणात्परब्रह्मादन्येषामर्चनं नहि ॥ ब्राह्मणः कुलजोविद्वान् भस्मधारी भवेद्यदि ॥ वर्जयेत्तादृशं देवि मद्योच्छिष्टं

घंटं यथा ॥ त्रिपुंड्रं शूद्रकल्पानां शूद्राणां च विधीयते ॥ त्रिपुंड्र-
धारणाद्विप्रः पतितः स्यान्न संशयइत्यादिपाद्मोत्तरखंडीयोर्ध्वपुं-
ड्राध्यायादिवचनानि तेषां वैष्णवपरत्वेनोपसंहारः ॥ तद्विधीनां
व्यवस्थापूर्वकं शैवपरत्वं शैववैष्णवोभयदीक्षाशून्यानां स्मार्तानां
कर्मभेदेनोभयविधपुंड्रधारणव्यवस्थाचेत्यादिकमवांतरप्रश्नाष्टकस-
हितपष्ठप्रधानप्रश्नोत्तरे दिङ्मात्रेण दर्शितमेव ॥ विस्तरतश्च ग्रंथां-
तरे निर्णीतमेवेति नेह पुनः प्रपंचनीयं ॥ यत्तु शैवसुधाकरे शिव-
रहस्ये ॥ सर्वकर्मबहिर्भूतोभस्मधारणवर्जितः ॥ भस्मना रहितं
कर्म वृथा भवति सर्वथा ॥ विभूतिधारणं त्यक्त्वा कुर्वन् हेमतुला-
मपि ॥तत्फलं न समाप्नोति पतितोऽपि भविष्यति ॥ संध्याशिवार्च-
नाऽऽदीनि कर्माण्येतानि वस्तुतः ॥ वैदिकानि ततस्तेषु कर्त्तव्यं भ-
स्मधारणं ॥ यथोपवीतरहितैः संध्या न क्रियते द्विजैः ॥ तथा सं-
ध्या न कर्त्तव्या विभूतिरहितैरपि ॥ विभूतिधारणं त्यक्त्वा यदि सं-
ध्यां करोति सः ॥ प्रत्यवैत्येव वै नाऽसौ नाऽधिकारी तदा द्विजः ॥
यथाऽधीत्यांऽत्यजोवेदान् प्रत्यवैति तथा द्विजः॥प्रत्यवैति न संदेहः
संध्याकृद्भस्मवर्जितः॥न संविशंति पापानि भस्मनिष्ठे ततः सदा॥क-
र्त्तव्यमतियत्नेन ब्राह्मणैर्भस्मधारणं॥यत्कृतं भस्मनिष्ठेन महादेवस्य
पूजनं॥तत्सर्वांऽभीष्टदं तस्मात् कर्त्तव्यं भस्मधारणं॥उद्धूलनत्रिपुंड्रा-
भ्यामलंकृततनुः शिवं॥योऽर्चयिष्यति तत्तुल्योभुवि कोवा भविष्य-
तीति॥शिवगीताटीकायां वसिष्ठः॥न तत्ध्यानं न तज्ज्ञानं न तद्दानं
जपोन सः॥त्रिपुंड्रेण विना येन विप्रेण यदनुष्ठितं ॥ देवीभागवते॥
न गायत्र्युपदेशोऽस्ति भस्मनोधारणं विना ॥ ततोधृत्वैव भस्मांऽगे
गायत्रीजपमाचरेत् ॥ गायत्रीमूलमेवाऽऽहुर्ब्राह्मण्यं मुनिपुंगवाः॥

सा भस्मधारणाभावे न केनाऽप्युपदिश्यते इत्याद्युक्तं ॥तत्र शिवरहस्ये शैवधर्माणामेव बहुतरं निरूपितत्वात्॥संध्याशिवार्चनादीनीति शैवस्याऽवश्यकर्तव्यशिवाऽर्चनसाहचर्यात् अग्रे भस्मसाहित्येन कृतशिवार्चनस्यात्युत्कर्षव्यवस्थापनेन वचनोपसंहाराच्च तद्वचनानि शिवदीक्षावतामेव संध्यावंदनादिषु भस्माऽऽवश्यकताबोधकानि नतु सर्वेषां सर्वथा ॥ एतेन वसिष्ठवचनमपि व्याख्यातं ॥ अन्यथा तन्निषेधस्य निरवकाशत्वापत्तेः॥ वस्तुतस्तु शिवरहस्यं नहि वेदः॥ नापि पुराणेतिहासस्मृतिष्वन्यतमं ॥ अतोन तत्प्रामाण्यं त्वया स्वीकार्यं ॥ यन्नाऽस्ति वेदे न च यत्पुराणइति स्वप्रतिज्ञाविरोधात् ॥बहुभिर्दुराग्रहिशैवैरेव शिवरहस्यमतिविविस्तीर्णं कृतं सूतसंहितायां चाऽत्यंतं प्रक्षेपः कृतइति विद्वत्किवदंतीश्रवणात्तद्वचसामार्षत्वेऽपि सुतरां संदेहः॥ सति समूलत्वे तूक्तैव व्यवस्था ॥ यच्च देवीपुराणवचनं गायत्रीजपे तदावश्यकताबोधकं संगृहीतं तत्तु उपसंहारबलीयस्त्वात् उभयबलीयस्त्वाद्वा प्रक्षिप्तमिवभाति ॥ गायत्रीजपप्रकरणे हेमाद्रिमाधवविज्ञानेश्वरप्रभृतिभिः प्रामाणिकैर्महानिबंधकारैरनुदाहृतत्वात् ॥ जपे भस्मधारणावश्यकतायाअपि तैरनुलेखाच्च ॥ किंच वचने यतोभस्मधारणं विना गायत्र्युपदेशोन केऽनापि क्रियते अतस्तद्धारणमंतरा तज्जपोन कार्यइत्युच्यते ॥ अतोऽपि कल्पितमेवेति भाति ॥ गायत्र्युपदेशकाले उपनीयमानस्य उपनेतुश्च भस्मधारणशिष्टाचारस्य क्वाप्यनुपलब्धेः॥ अथ समूलत्वेऽप्यस्तु रुद्रगायत्रीपरं ॥ एकदेवत्यत्वात् ॥ बृहज्जाबालोपनिषदि समाप्तिदशायां चतुर्थखंडे ॥ सद्योजाताय विद्महे महादेवाय धीमहि ॥ तन्नोघोरः प्रचोदयादि-

ति भस्मगायत्रीति श्रुतश्च ॥ एतेन गायत्र्यावाऽपिदेवर्षइति त्रिपुंड्रकरणे मंत्रविधायकं पुलस्त्यवचनं लिखित्वा गायत्र्यपि प्रसिद्धैवेति वदन् शैवसुधाकरोनिरस्तोवेदितव्यः ॥ नचेह गायत्रीमूलमेवाक्षुर्ब्राह्मण्यमिति मुख्यगायत्रीलिंगविरोधः शंक्यः ॥ प्रशंसापरत्वेनाऽप्युपपत्तेः ॥ अस्तुवा पारंपरिकशैवपरं ॥ भस्मनोधारणं प्रोक्तं नित्यं शैवागमेषुच ॥ उद्धूलनं त्रिपुंड्रं च धारणं द्विविधं मतमिति शैवसुधाकरएवोदाहृताल्लैंगात् ॥ अत्र शैवानामेव तद्धारणनित्यत्वसिध्या इतरेषां तदनित्यमिति फलति ॥ वैष्णवानां तु तन्निषेधएवेत्युपपादितं पुरा ॥ नतु कथंचिदपि तत् सर्वसाधारणं भवितुमर्हति ॥ कथमन्यथा मनुयाज्ञवल्क्यपराशरादीनां महत्तराणां स्मृतिकाराणां महर्षीणामन्यतमोऽपीदं गायत्रीजपनिरूपणावसरे तदंगत्वेन नाऽवक्ष्यत् ॥ अतोवस्तुतस्तु तदुक्तवचने समूलत्वनिश्चये तत्र गायत्रीशब्दोरुद्रगायत्रीपरएव ॥ उक्तजाबालश्रुतौ स्पष्टं तस्याएव भस्मगायत्रीत्वकथनात् ॥श्रुतेश्च सर्वापेक्षया बलिष्ठत्वात् ॥ धृतभस्मकस्यैवोपदेशाधिकारइति वचनोक्तनियमस्याऽपि तथासत्येव सामंजस्यसंभवाच्च ॥ किंचैवं अस्य सर्वसाधारण्ये सति जपादिषु अत्यावश्यकतया प्रतिपादितस्याऽप्यूर्ध्वपुंड्रस्य निरवकाशत्वं प्रसज्येत ॥ तस्य तेष्वत्यावश्यकतायाः प्रतिपादनं तु आचारमाधवप्रथमाध्याये ब्रह्मांडे ॥ पूजाकाले जपे होमे सायं प्रातः समाहितः ॥ नामान्युच्चार्य विधिना धारयेदूर्ध्वपुंड्रकमिति॥ मदनपारिजाते च तृतीयस्तवके ब्राह्मे ॥ यागोदानं तपोहोमः स्वाध्यायः पितृतर्पणं ॥ भस्मीभवति तत्सर्वमूर्ध्वपुंड्रं विना कृतमिति ॥ स्कांदे मार्गशीर्षमाहात्म्येऽपीदमेव वाक्यं॥ धर्मप्रवृत्तौ च स्मृतिसा-

रसमुच्चये ॥ स्वाध्यायजपहोमादि संध्यादानादिकं च यत्॥ ऊर्ध्व पुंड्रं विना कुर्यात्तत्सर्वं निष्फलं भवेदिति॥एवमादिवचनोपन्यासात् प्रागेव समर्थितं॥नच समुच्चयपक्षमाश्रित्य युगपदुभयधारणं विधीयता मिति शंक्यं॥युगपदुभयधारणस्याऽपि आश्वलायनस्मृत्याद्यवलंबेन प्रागेव निराकृतत्वात् ॥एवमूर्ध्वपुंड्रस्य बहुश्रुतिस्मृत्यादिसिद्धत्वे प्रामाणिकसकलनिबंधाऽऽदृतत्वे सर्वशिष्टसंमतत्वे च सत्यपि यत्त्विदानीं शैवसुधाकराख्ये स्वग्रंथे वैष्णवधर्मविद्वेषादेव केन चिदुच्यते ॥ ननु महाभारते ॥ जाह्नवीतीरसंभूतां मृदं मूर्ध्ना बिभर्ति यः ॥ बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलं ॥ १ ॥ सत्यव्रतः ॥ ऊर्ध्वपुंड्रोमृदा शुभ्रोललाटे यस्य दृश्यते ॥ सचंडालोऽपि पूताऽऽत्मा पूज्यएव न संशयइत्यादिवचनैर्मृदोर्ध्वपुंड्रमपि विधीयते ॥ तत्कथं भस्मरुद्राक्षमात्रधारणमेव कर्तव्यतया प्रतिपाद्यतइतिचेदित्थं ॥ तत्र तावत्सति प्रक्षिप्तत्वाऽभावनिश्चये ऊर्ध्वपुंड्रादिकं शूद्रविषयं ॥ अश्रौतमूर्ध्वपुंड्रादि ललाटे श्रद्धया तु ये ॥ धारयिष्यंति मोहेन युगाते समुपस्थिते इति वासिष्ठलैंगे नवमाध्याये अश्रौतमिति विशेषितत्वेन तस्याऽश्रौतत्वात् ॥ तर्हि श्रुतिषु विधानाऽभावादेकादशीव्रतस्याऽपि द्विजेतरविषयत्वमितिचेन्न ॥ प्रत्यक्षश्रुत्यभावेऽप्यनुमितश्रुतेस्तत्र सद्भावात् ॥ तर्ह्यनुमितश्रुतिसद्भावऊर्ध्वपुंड्रेऽप्यस्तु इतिचेन्न ॥ एकादशीव्रतस्य कुत्राऽप्यनिषिद्धत्वादनुमितश्रुतेः संभवात् ॥ ऊर्ध्वपुंड्रस्य तु पुराणेषु बहुशोनिषेधादनुमितश्रुतिसद्भावस्य कल्पयितुमशक्यत्वात्॥तथाहि पाराशरे सांकनं पुंड्रांतरं निराक्रियते ॥ ऊर्ध्वपुंड्रं त्रिशूलं च वर्तुलं चतुरस्रकं ॥ अर्धचंद्रादिकं लिंगं वेदनिष्ठोन धारयेत् ॥ जन्मना लब्ध-

जातिश्च वेदपंथानमाश्रितः॥ पुंड्रांतरं भ्रमाद्वाऽपि ललाटे नैव धारयेत् ॥ तिर्यक्त्रिपुंड्रं संत्यज्य श्रौतं पुंड्रांतरं भ्रमात् ॥ ललाटे धारयन्मर्त्यः पतत्येव न संशयइति ॥ इदमंकितशैवसुधाकरपुस्तके ऽशुद्धमपि वुध्या किंचिच्छोधयित्वा ऽनूदितं ॥ अत्र यत्संदिग्धतयोक्तं प्रक्षिप्तत्वाऽभावनिश्चयइति तत्प्रमादात् ॥ अत्रैवोपन्यस्तस्य जान्हवीतीरइतिवचनस्य हेमाद्रिवकृचान्हिकमदनपारिजातादिपु सत्यव्रतवचनस्य चाऽऽचारमाधवादिपु सर्वशिष्टाऽऽदृतेपु सर्वसाधारणेपु प्रामाणिकनिवंधेपु मूलनामलिखनपूर्वकं स्पष्टतयोदाहृतत्वेन प्रक्षिप्तत्वस्य केनाऽप्यनुन्मत्तेन वक्तुमशक्यत्वात् ॥ ऊर्ध्वपुंड्राऽऽवश्यकतावोधकानेकश्रुतिस्मृत्यादीनां हेमाद्रिमाधवनिर्णयसिंधुमदनपारिजातधर्मसिंध्वाचारप्रकाशाऽऽचारार्कपरमानंदमंदार प्रभृतिप्रामाणिकनिवंधोदाहृतानां वहूनामिहैव मया प्रागुपन्यस्तत्वाच्च ॥ यच्चास्याऽश्रौतत्वाच्छूद्रमात्रविपयकत्वमुक्तं॥ तदप्याचारप्रकाशभागवतत्त्वभास्करायुदाहृतानां धृतोर्ध्वपुंड्रः कृतशंखधारी विष्णुं परं ध्यायति योमहात्मा ॥ स्वरेण मंत्रेण सदा हृदिस्थितं परात्परं योमहतोमहांतमिति ॥ वासुदेवोपनिपदि ॐनमस्कृत्यभगवंतं नारदः सर्वेश्वरं वासुदेवं पप्रच्छ श्रीभगवन्नूर्ध्वपुंड्रविधिं द्रव्य मंत्रसंस्थानादिसहितं मे ब्रूहीत्यादिश्रुतीनामदर्शनादेव ॥ अथ श्रुतिस्मृत्युक्ताया इमंमेगंगेइति जलमादायेत्यादिरूपायावैदिकमंत्रसाध्यायाऊर्ध्वपुंड्रेतिकर्तव्यतायाविस्मरणादेवच ॥तथा शूद्रमात्रविपयकत्वमप्ययुक्तं॥मदनपारिजाते ब्रह्मपुराणे ॥ ऊर्ध्वपुंड्रं द्विजः कुर्यात्क्षत्रियस्तुत्रिपुंड्रकं॥अर्धचंद्रं तु वैश्यानां वर्तुलं शूद्रजातिपु॥ पाद्मे ॥ ऊर्ध्वपुंड्रं तु सर्वेपां न निपिद्धं कदाचन ॥ धारयेयुः क्षत्रि

याद्याविष्णुभक्ताभवंति यद्दति ॥ पृथ्वीचंद्रोदये निर्णयसिंधौ च वृद्धपराशरः ॥ ऊर्ध्वं च तिलकं कुर्यान्नैव कुर्यात्रिपुंड्रकं ॥ ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि ॥ निराशाः पितरोयांति दृष्ट्वाचैव त्रिपुंड्रकमित्यादिवचनोपन्यासपुरःसरं सर्वैरपि प्रामाणिकनिबंधकारैः सर्ववर्णेषु तदावश्यकतायाः सम्यगुपपादितत्वात्॥यत्तु वासिष्ठलैंगवचनमुक्तं॥तच्चश्रौतमिति विशेषणात् युगांते ब्राह्मणादयोऽपि श्रुत्युक्ततदितिकर्तव्यतामंतरैव पाषंडमात्रेण धारयिष्यंतीति भाविवृत्तांतबोधकं ॥ अतः सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायेन श्रुत्यधिकारिभिः श्रुत्युक्तविधिनैव तद्धार्यं नतु तं विनेति तात्पर्यविशिष्टमेतद्वचनं नोर्ध्वपुंड्रं प्रतिषेद्धुं प्रभवति॥यदितु युगांतएवोर्ध्वपुंड्रधारणादिरूपोधर्मः प्रादुर्भविष्यतीति तात्पर्यविशिष्टमेतदित्युच्यते॥तद्दर्शनादिसिद्धश्रुत्यादिवचनैस्तदावश्यकताप्रतिपादकानां बहूनां प्राचीनतरनिबंधानां दृश्यमानत्वेन वदतोव्याघातः स्यात् ॥ सर्वदा युगांताऽभावात् ॥ यानिच पराशरवचनान्युक्तानि तत्राऽऽद्यं युगपद्धारणनिषेधकमस्तु ॥ द्वितीयेच वेदपंथानमित्यस्य शिवमार्गमित्यर्थः ॥ वेदः शिवःशिवोवेदइतिवाक्यात् ॥ अथवाऽस्तु वेदपदमाम्नायपरमेव तथापि ॥ धर्मप्रवृत्तौ स्मृतिसारसमुच्चये ऊर्ध्वपुंड्रविधिं प्रक्रम्य ॥ ललाटे तिलकं कृत्वा कुर्युः शैवाश्च वैष्णवाः ॥ तर्पणं चाऽपि वै श्राद्धमन्यथा निष्फलं भवेदिति ॥ चतुर्विंशतिमतव्याख्यायामाचारमयूखे च शौनकः ॥ ऊर्ध्वपुंड्रं शिवस्यैवं विष्णोः कुर्युश्च वा बुधाः॥ मूर्ध्नि मूलेन मंत्रेण शेषं द्वादशनामभिरिति॥ एवमादिषु वैदिकावैदिकशैवानां प्राप्तमूर्ध्वपुंड्रं वैदिकशैवे निषिध्याऽवैदिकशै-

वपरत्वेन परिसंख्यायते भवदुक्तवचनैः ॥ इमामगृभ्णन्निति मंत्रस्य रशनाग्रहणलिंगादश्वगर्दभोभयरशनाग्रहणविनियोगे प्राप्ते इमामगृभ्णन्नशनामृतस्येत्यश्वाभिधानीमादत्तइति विशेषवाक्येन तस्याऽश्वरशनाग्रहणमात्रे विनियोगवदिति न कोऽपि दोषः ॥ ननु त्रिपुंड्रप्रशंसापराणि तानि वचनानि कथमपि ऊर्ध्वपुंड्रादिनिषेधं कर्तुं शक्तानि ॥ उदिते जुहोत्यनुदिते जुहोतीतिप्रकरणनिष्पन्नान्नहि निंदा निंदितुं प्रवर्तते किंतु विधेयं स्तोतुमिति न्यायात् ॥ अस्य न्यायस्याऽमंत्रकभस्मरुद्राक्षधारणनिषेधकवचनविचारे स्वयमप्यादृतत्वाच्च ॥ तस्मान्न कथमप्यूर्ध्वपुंड्रं निषेद्धुं शक्यं ॥ नापि गायत्रीजपादिषु सर्वेषां त्रिपुंड्रस्यैवाऽऽवश्यकता शक्योपपादयितुं ॥ तदुपन्यस्तवासिष्ठादिवचनानां बहुग्रंथेष्वप्यदृश्यमानत्वेन निर्मूलत्वं समूलत्वं वेति तु चिंत्यं ॥ अपिच सिद्धांतशेखरे श्लोकाः ॥ एतानित्यं नमस्कृत्य त्रिपुंड्रं धारयेच्छुचिः ॥ स्मरन्नमःशिवायेति ललाटे च त्रिपुंड्रकं ॥ स्वच्छाभ्यां नमइत्युक्त्वा धारयेत्तत्प्रकोष्ठयोः॥ भीमायेति ततः पृष्ठे शिवाय जठरेतथा ॥ नीलकंठायशिरसि क्षिपेत्सर्वात्मने नमइति ॥ एवमादिवचनेषु स्पष्टमेव शिवदेवत्यत्वात्तल्लोकप्रापकत्वाच्च शैवानामेवेदमावश्यकं॥इतरेषां तु वैकल्पिकं॥अनन्यवैष्णवानां तु इतरदेवत्यस्य तस्य धारणे तैत्तिरीयसंहितायां तृतीयपंचमाष्टकयोर्द्वितीयप्रश्ने अष्टकभेदेन नवमदशमयोरनुवाकयोः योवैस्वादेवतामतियजते प्रस्वायैदेवतायैच्यवते नपरांप्राप्नोतिपापीयान्भवतीतिश्रूयमाणः स्वदेवतात् प्रच्यावस्तस्यादेवतायाअप्राप्तिर्महत्तरोदोषश्च प्रसज्येत ॥ अतोनैवैतैस्तद्धारणीयं ॥ य

त्तु शैवसुधाकरे वायवीयसंहितायाम् ॥ लिंगं दीपार्धचंद्राभं चतुरस्रं च वर्तुलं ॥ त्रिपुंड्रं चेति कथितं पड्विधं शिवशासनं ॥ वर्तुलं ब्रह्मभक्तानां शाक्तानां चतुरस्रकं ॥ वैष्णवानां दीपसमं ह्यर्धचंद्राभमेवच ॥ सदाशिवस्य भक्तानां लिंगं तिर्यक्त्रिपुंड्रकमिति दीपाकारं भस्मोर्ध्वपुंड्रं वैष्णवानामुक्तं ॥ तत्तु इतरत्र कृतेन भस्मोर्ध्वपुंड्रकर्तव्याकर्तव्यत्वविचारेणैव दत्तोत्तरं ॥ किंच ॥ ब्रह्मभक्तशिवभक्तमध्यपातित्वाद्वैष्णवशब्देनाऽत्र गुणावतारविष्णूपासकाएवाऽभिप्रेताइति निश्चीयते ॥ सहचरितासहचरितयोः सहचरितग्रहणस्यैव युक्तत्वात् ॥ सौराः शैवाश्च गाणेशावैष्णवाः शक्तिपूजकाः ॥ मामेव प्राप्नुवंतीह वर्षाभिः सागरं यथेत्यादिवत् नतु सर्वमूलभूतस्य पुरुषोत्तमस्योपासका अनन्यवैष्णवाइह ग्रहीतुं शक्याः अनन्यत्वभंगप्रसंगात् ॥ सर्वतोवलवतीच श्रुत्यादिविहितस्य गोपीचंदनादिद्रव्यकोर्ध्वपुंड्रस्य निरवकाशत्वापत्तिः ॥ अतोवायव्यसंहितावचनं समूलत्वे सति अर्धजरतीयानां सगुणविष्णूपासकानामेव इच्छया कादाचित्कभस्मधारणविधानार्थं जीविकार्थं यजमानादिप्रतिनिधितया शिवार्चने तदंगभूतभस्मधारणे तेषां प्रकारविशेषबोधकं वाऽस्तु नतु पड्विधं शिवशासनमिति शिवशासनत्वेनोक्तं तत् अनन्यवैष्णवेषु कथमपि प्राप्तुं शक्नोति ॥ किंच ॥ स्वयंतूर्ध्वपुंड्रं शूद्रमात्रस्यैव व्यवस्थापितमिति इह भस्मद्रव्यकदीपाकारोर्ध्वपुंड्रं शूद्रवैष्णवानामेवेति त्वन्मते सित्ध्यति ॥ स्वोपन्यस्तपराशरवचने चतुरस्रादीनां निषेधः इहतु तद्विधिरिति परस्परविरोधोऽपि ॥ अनन्यवैष्णवानां कथमपि भस्मधारणे पाद्मवाराहादिपूपलभ्यमानाः ब्राह्मणःकुलजोविद्वान्भस्मधारीभवेद्यदि ॥ व

र्जयेत्तादृशंदेविमद्योच्छिष्टंघटंयथेत्यादयोऽत्यंतनिषेधाश्च पठप्रधा नप्रश्नोत्तरएव दर्शिताइति कृतं पतितोपरि लत्ताप्रहारकल्पेन ब- हुना ॥ तस्माद्गायत्रीजपे तदंगतया भस्मधारणाऽऽवश्यकत्वं सर्वे- षां कथमपि न सिध्यति ॥ यच्चोक्तं रुद्राक्षमालया जपस्याऽव- श्यकताऽनावश्यकतावेति ॥ तत्रापि ब्रूमः ॥ अस्ति जपे संख्याया एवाऽऽवश्यकत्वं नतु रुद्राक्षमालामणिभिरेव संख्याकरणस्याऽऽव- श्यकत्वं क्वाप्युपलभ्यते ॥ तथाहि ॥ अंगिरःस्मृतौ ॥ विना दर्भे- ण यत्स्नानं यच्च दानं विनोदकं ॥ असंख्यातं तु यज्जप्तं तत्सर्वं नि ष्फलं भवेदिति ॥ स्मृत्यर्थसारे गायत्रीजपप्रस्तावे ॥ नाऽधोरत्निर्ना- न्यमनानच व्यत्यस्तपत्करः ॥ जपेन्न प्रौढपादश्च नाऽवष्टब्धोऽल- सोऽशुचिः ॥ नच क्रामन्न जल्पंश्च न पार्श्वमवलोकयन् ॥ नाऽसं- ख्यातमदर्भश्च नाऽशिखाकरबंधनइति॥नागदेवाऽऽन्हिके च दक्षः॥ अंगुल्यग्रे तु यज्जप्तं यज्जप्तं मेरुलंघने॥असंख्येन च यज्जप्तं तत्सर्वं निष्फलं भवेदिति॥आचारमाधवप्रथमाध्याये चतुर्विंशतिमतव्या- ख्याकमलाकरान्हिकाऽऽचारमयूखाऽऽचारप्रकाशादिषु च गौतमः॥ गच्छतस्तिष्ठतोवाऽपि स्वेच्छया कर्म कुर्वतः॥अशुचेर्वा विनासंख्यं तत्सर्वं निष्फलं भवेदिति॥संवर्तोऽपि ॥ लोकवार्तादिकं श्रुत्वा दृष्ट्वा स्पृष्ट्वा प्रभाषितं॥संख्यां विना च यज्जप्यं तत्सर्वं निष्फलं भवेदिति॥ संख्यार्थं च सामान्यतोऽक्षमालायाएव ग्रहणं वक्ति शंखः ॥ कु- शवृस्यां समासीनः कुशोत्तरीयः कुशपवित्रपाणिः सूर्याऽभिमु- खोवाऽक्षमालामादाय देवतां ध्यायन् जपं कुर्यादिति ॥ नचैवम- पि रुद्राक्षमालया जपे फलाऽऽनंत्यात्तदावश्यकत्वमिति वाच्यं ॥ आनंत्यमात्रेणाऽऽवश्यकतायावकुमयुक्तत्वात् ॥ तया जपाऽकर-

णे प्रत्यवायाऽश्रवणात् ॥ तत्तुल्यफलानां तदधिकफलानां च मालांतराणां शास्त्रे निरूप्यमाणत्वेन निरतिशयफलाऽभावाच्च ॥ तत्र तुल्यफला यथा ॥ पराशरमाधवीये प्राह गौतमः ॥ अंगुल्या जपसंख्यानमेकमेकमुदाहृतं ॥ रेखयाऽष्टगुणं पत्रजीवैर्दशगुणाधिकं ॥ शतं स्याच्छंखमणिभिः प्रवालैश्च सहस्रकं ॥ स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥ पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते ॥ कुशग्रंथ्या च रुद्राक्षैरनंतं फलमुच्यतइति॥भट्टोजिकृताऽऽन्हिककमलाकरान्हिकमयूखादिषु चेदमुदाहृतं ॥ आचारप्रकाशेत्विदमेव शिवपुराणवचनत्वेनोपन्यस्तं ॥ अत्र रुद्राक्षवत्कुशग्रंथिमालायाअपि फलाऽऽनंत्यकथनान्न रुद्राक्षमालायाएव निरतिशयमाधिक्यं ॥ तदधिकफला यथा ॥ गायत्रीजपमेव प्रक्रम्य द्वितीयाध्याये बृहत्पराशरेण ॥ ( श्लो० ४० ) अप्समीपे जपं कुर्यात् ससंख्यं तद्भवेद्यथा ॥ असंख्यमासुरं यस्मात्तस्मात्तद्गणयेद्ध्रुवं ॥ ४० ॥ स्फाटिकाऽब्जाऽक्षरुद्राक्षपत्रजीवसमुद्भवैः ॥ अक्षमाला प्रकर्त्तव्या प्रशस्ताचोत्तरोत्तरेति ॥ रुद्राक्षाऽपेक्षयाऽपि गायत्रीजपविषये पत्रजीवमालायाउत्कर्षउक्तः ॥ भवदत्यादृते अचारादर्शेतु इदमेव वचनं स्फाटिकेंद्राक्षरुद्राक्षेतिपाठभेदेनोपन्यस्तं ॥ तथा पराशरमाधवीये कमलाकरान्हिकचतुर्विंशतिमतव्याख्याऽऽचारमयूखप्रभृतिषु च विविधाएवाऽक्षमालावक्ति हारीतः ॥ शंखरूप्यमयी माला कांचनस्फाटिकोत्पलैः ॥ पद्माक्षैश्च रुद्राक्षैर्विद्रुमैर्मणिमौक्तिकैः॥तुलसीद्राक्षकैर्माला तथैवांऽगुलिपर्वभिः॥ पत्रजीवमयी माला शस्ता वै जपकर्मणीति ॥ अत्रापिरुद्राक्षस्याऽनन्यसाधारण्यं तदपेक्षया पत्रजीवमय्याउत्कर्षश्चाऽभिहितः॥स्र-

त्यर्थसारे हस्तेनावर्तयेद्देवीमक्षसूत्रमथापिवा ॥ सौवर्णैराजतैस्ताम्रैः स्फाटिकैरत्नजैस्तथा ॥ अरिष्टैः पुत्रजीवोत्थैरिंद्राक्षैः शंखसंभवैः॥ रुद्राक्षैरपि पद्माक्षैः कुशग्रंथिभिरेवच ॥ मणिभिस्त्वक्षसूत्रं स्या-त्तदष्टशतसंख्यया ॥ चतुःपंचाशता वाऽपि सप्तविंशतिभिस्तथेति॥ अत्राऽपि सर्वासां तौल्यं दृश्यते॥त्रिविधा मालासंबंधिमणिसंख्या तु मयूखचतुर्विंशतिमतव्याख्याकमलाकराह्निकादिष्वपीत्थमेव वाक्यांतरोपन्यासेन नीर्णीतेत्यन्यदेतत् ॥ तथाऽऽचारादर्शे॥ सूर्याऽ-भिमुखोऽक्षमालामादाय देवतां ध्यायन् जपं कुर्यात् सुवर्णमणिमु-क्ताफलस्फाटिकपद्माक्षेंद्राक्षपुत्रजीवकानामन्यतमामक्षमालां कु-र्वीत कुशग्रंथिकृतां वा हस्तोपयामैर्वा गणयेदिति सर्वासामवि-शेषउक्तः ॥ किंच गौतमतंत्रे-चतुर्दशाध्याये जपांगमालाविधिमु-पक्रम्य ॥ ( श्लो० ४२ ) रुद्राक्षसंभवा माला अनंतफलदा भवे-त् ॥ पुंडरीकभवा माला गोपालमनुसिद्धिदा ॥ पत्रजीवभवा यातु पुत्रं वितनुते ऽचिरात् ॥ कुचंदनभवा माला राज्यभोगाऽपवर्गदा ॥ प्रवालनिर्मिता यातु सर्वसत्त्ववशंकरी ॥ कुशग्रंथिभवा माला ध-र्मवृद्धिकरी मता॥आमलकीभवा माला सर्वसिद्धिप्रदा मता ॥ तु-लसीसंभवा यातु मोक्षं वितनुते ऽचिरात्॥४५॥ अष्टोत्तरशतमणि-निर्मिता यातु मालिका ॥ राज्यं वितनुते नृणां देहांते मोक्षदायि-नीति ॥ अत्र सर्वांते तुलसीकाष्ठमालायाएव मोक्षदत्वकथनात् रुद्राक्षस्योक्तमपि फलाऽऽनंत्यं काम्यविषयकमेवेति सिद्ध्यति ॥ अतएव धर्मप्रवृत्तौ स्मृतिः॥स्फाटिकी मोक्षदा माला रुद्राक्षा सर्व-कामदा॥मुक्तिदा तुलसीमाला विद्रुमा धनवृद्धिदेति॥एतेन रुद्राक्षमु-पक्रम्य शतकोटिगुणं पुण्यं धारणाल्लभते नरः॥लक्षकोटिसहस्राणि

लक्षकोटिशतानि च॥जपाच्च लभते नित्यं नाऽत्र कार्या विचारणेति बृहज्जाबालोपनिषदपि व्याख्याता वेदितव्या ॥ यत्तु शैवसुधाकरे स्कांदे॥स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने॥प्रायश्चित्ते तथा श्राद्धे दीक्षाकाले विशेषतः ॥ अरुद्राक्षधरोभूत्वा यत्किंचित्कर्म वैदिकं॥ कुर्याद्विप्रस्तु मोहेन नंसवामोति तत्फलमित्यादि ॥ तत्समूलत्वे सति शिवदीक्षावतामेव तद्धारणाऽऽवश्यकत्वविधायकं नतु तन्मालया जपस्याऽऽवश्यकत्वं विधातुं शक्नोति ॥ शिवदीक्षावतामेव तद्धारणावश्यकत्वं तु मया ग्रंथांतरे प्रपंचितं ॥ इहाऽपि दीक्षाकाले विशेषतइति शैवदीक्षाग्रहणकाले विशेषतस्तद्धारणाऽऽग्रहोऽप्येवमेव संगच्छते ॥ वैष्णवानां तद्धारणनिषेधस्तु प्राग्दर्शितः॥किमनेन प्रासंगिकेन ॥ अतोगायत्रीजपे तु न कथमपि रुद्राक्षमालया जपस्याऽऽवश्यकत्वं ॥ तस्माद्वैष्णवानां तु अष्टोत्तरशतमणिघटिता तुलसीकाष्ठमालैव जपे मुख्या ॥ रामार्चनचंद्रिकायां ॥ तुलसीकाष्ठघटितैर्मणिभिर्जपमालिका॥सर्वकर्मणि सर्वेषामीप्सितार्थफलप्रदेति ॥ तत्र धर्मप्रवृत्तौ च॥तुलसीमणिभिश्चैव गणितं चाक्षयं भवेदिति ॥ अगस्त्यस्य संहितायां षष्ठाध्याये ॥ यःकुर्यात्तुलसीकाष्ठैरक्षमालांसुरूपिणीं ॥ कर्णमालांप्रयत्नेनकृतं तस्याऽक्षयं भवेत् ॥ कमलाकराह्निके ॥ तुलसीकाष्ठसंभूतैर्दशकोटिरुद्राक्षता ॥ आचारप्रकाशे स्कांदे ॥ प्रवालमुक्तास्फटिकैर्जप्तं कोटिफलप्रदं ॥ तुलसीमणिना येन गणितं चाऽक्षयं भवेत्॥तत्रैवागस्त्यसंहितायां ॥ तुलसीकाष्ठघटितैर्मणिभिर्जपमालिका॥ सर्वकर्मणि सर्वेषामीप्सितार्थफलप्रदा ॥ पद्मकोदुंबरश्चैव विल्वश्चैव कुशस्तथा ॥ पलाशोजपमालायाअभावे समुदाहृतइत्येवमादिवा-

क्येभ्यः ॥ यत्त्वेवं शास्त्रसिद्धामपि तुलसीकाष्ठाक्षमालां केचन शै-
वादयोनिंदंति ॥ तत्तु विद्वेषादेव ॥ यथोक्तं धर्मसिंधौ ॥ द्वितीयप-
रिच्छेदे कार्त्तिकमासनिर्णये तुलसीकाष्ठमालाधारणस्य अत्या-
वश्यकतां निर्णीय ॥ रामार्चनचंद्रिकादौ तुलसीकाष्ठमालया ज-
पविधिवाक्यानि तुलसीकाष्ठघटितैर्मणिभिर्जपमालिकेत्यादीनि
स्पष्टानि ॥ एवं ग्रंथांतरेषु बहूनि वाक्यान्युपलभ्यंते ॥ सर्वदेशीय-
वैष्णवेषु तुलसीकाष्ठमालाधारणजपाचारश्चोपलभ्यते ॥ भस्मादि-
धारणद्वेषिवैष्णवस्पर्धया शैवागमाग्रहिभिः केवलं द्विष्यतइत्यलं
बहुनेति दिगिति ॥ एवं कंठेऽपि तुलसीकाष्ठमालैव वैष्णवैः सर्वदा
धार्या ॥ सारसंग्रहे भारद्वाजसंहितायां ॥ पूजाकाले हरिध्याने सं-
ध्यादिवंदने तथा॥तुलसी धार्यते कंठे ते भक्ताहरिवल्लभाः॥श्रवणे
कीर्तने चैव मंत्रजापे च वैष्णवैः ॥ धार्यते तुलसी कंठे महाभाग-
वतोत्तमैः ॥ सदा संधारयेद्यस्तु तुलसीमणिमालिकां॥भूतप्रेतपिशा-
चास्तु वर्त्तंते न समीपतः॥न धारयंति ये मालां तुलसीकाष्ठसंभवां॥
विष्णुकोपाग्निना दग्धास्ते यांति यममंदिरमिति॥वादावल्यां स्कांदे
मार्गशीर्षमाहात्म्ये भगवद्वाक्यानि ॥ अतः परं प्रवक्ष्यामि तुलसी-
मालिकाफलं॥अन्यासामपि माहात्म्यं श्रुणु ब्रह्मन् सुशोभनं॥तुल-
सीकाष्ठजां मालां कंठस्थां वहते तु यः॥अप्यशौचोऽप्यनाऽऽचारो
मामेवैति न शयः॥धात्रीफलकृता मालातुलसीकाष्ठसंभवा॥दृश्यते
यस्य देहे तु सवै भागवतोत्तमः॥तथा॥तुलसीकाष्ठसंभूतां योमालां
वहते नरः ॥ फलं यच्छाम्यहं तस्य प्रत्यहं द्वारकोद्भवं ॥ तुलसी-
काष्ठमालाभिर्भूषितः पुण्यमाचरेत् ॥ पितॄणां देवतानां च पुण्यं
कोटिगुणं कलौ ॥ धारयंति न ये मालां हैतुकाः पापबुद्धयः ॥ न

रकान्न निवर्त्तंते दग्धाः कोपाऽग्निना ममेति ॥ येच तुलसीका-ष्ठमालाधारिणं तन्मालया जपकारिणं वा निंदंति तेषां स्वरूपं गा रुडाज्ज्ञेयं ॥ कृष्णायुधांकितं विप्रं तुलसीकाष्ठभूषितं ॥ दृष्ट्वा निं-दापरोयस्तु सबौद्धोनतु वैष्णवः ॥ तथा ॥ धारयंति न ये मालां है तुकाः पापबुद्धयः ॥ नरकान्ननिवर्त्तंते दग्धाः कोपाग्निना हरेः ॥ तुलसीकाष्ठमालोक्य कंठे वा मस्तके करे ॥ निंदां कुर्वंति ये मूढा म्लेछजास्ते न संशयः ॥ अत्राऽतिशयमालोक्य तुलसीं दूषयंति ये ॥ बहुनोक्तेन किं पार्थ सर्वे ते ह्यन्यवीर्यजाः ॥ तुलसीकाष्ठ धृग्विप्रान् वैष्णवान् दूषयंति ये ॥ सर्वे ते रौरवं यांति संशयोना-ऽस्ति नारदेति॥आस्तामेतत् ॥ प्रकृतमनुसरामः ॥ अथ गायत्रीज-पविषये कचिन्मालांतरनिषेधपूर्वकमंगुलिपर्वभिरेव जपकरणं वि-धीयते ॥ यथाह धर्मप्रवृत्तौ शौनकः ॥ प्रातस्तिष्ठन् जपेद्देवीं सा यं चैवोपविश्य च ॥ उपविश्य तु मध्यान्हे जपकर्म समाचरेत् ॥ ॥ ५९ ॥ अंगुष्ठानामिकामूलप्रदक्षिणमतंद्रितः ॥ मध्यमामूलपर्यं-तं गायत्रीजपईरितइति ॥ तत्रैव ॥ गायत्र्यावेदमूलत्वाद्वेदः पर्वसु गीयते॥पर्वभिस्तु जपेद्देवीं न मालाभिः कदाचनेति ॥ स्मृत्यर्थसा-रे ॥ ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् ॥ वानप्रस्थोयतिश्चै-वाऽष्टाधिकं तु सहस्रकं ॥ यद्यापत्सु जपेद्देवीमष्टाविंशतिरष्टवा ॥ सदर्भपाणिराहोमाद्दर्भस्थस्तूक्तसंख्यया ॥ हस्तेनाऽऽवर्तयेद्देवीमक्ष-सूत्रमथाऽपि वेति ॥ अत्राऽथापिवेत्यनेनाऽक्षसूत्रस्य गौणत्वमुच्य ते ॥ बृहत्पराशरस्तु अक्षमालायाआभावे पाणिना जपं विधत्ते॥ यथाह द्वितीयाऽध्याये गायत्रीजपप्रकरणे ॥ ( श्लो० ४२ ) अ-भावे त्वक्षमालायाः कुशग्रंथ्याऽथ पाणिना यथाकथंचिद्गणयेत्स

संख्यं तद्भवेद्यथेति ॥आचारप्रदीपे च योगीश्वरः ॥ अभावे त्वक्ष-
मालायाः कुशग्रंथ्याऽथ पाणिना॥ जपएव तु कर्तव्य एकाग्रमन
सा सदा ॥ कृत्वोत्तानौ करौ प्रातः सायं चाधोमुखौ करौ॥ मध्ये
तिर्यक्करौ प्रोक्तौ जपन्यासउदाहृतइति ॥ तदेवाह॥आचारप्रका-
शे च कल्पचिंतामणौ नारसिंहेप्याद्यश्लोकोऽस्ति ॥ अतोयथा
संप्रदायं यथाकुलाचारं च अक्षमालया अंगुलिपर्वभिर्वा गाय-
त्रीजपः कार्यः॥धर्मसिंध्वादिपु तथा विकल्पादरणात् ॥ वैष्णवादि-
सर्वशिष्टेपूभयविधस्याचारस्य दर्शनाच्च॥अथ वर्ज्यावर्ज्यमालास्तु॥
अक्षुद्राः समग्राश्च परिपूर्णादृढानवाः ॥ निश्चलाग्रंथिताश्चैव अ
न्योन्यं घृष्टिवर्जिताः ॥ सशब्दा चंचला यातु त्रुटिता ग्रंथिता त
था ॥ छिन्नसूत्रेण ग्रथिता पाखंडाख्या पुरातना ॥ मालादुःखप्र-
दायिन्योयथितानियतंतुषु॥तस्मात्तु तादृशामालावर्जनीयाः प्रय-
त्नतः॥एवमादिवचनोपन्यासेन नागदेवाह्निकप्रभृतिषु निरूपिता-
एव ॥ अथाऽऽचारार्काऽऽचारमयूखयोर्वृद्धमनुः॥ वस्त्रेणाऽऽच्छाद्य-
तु करं दक्षिणं यः सदा जपेत् ॥ तस्य स्यात्सफलं जाप्यं तद्धीन-
मफलं स्मृतमिति ॥ अतएव शिष्टागोमुखाकारे वस्त्रे करं प्रवेश्य
जपंति ॥ उक्तंचैतद्वचनादग्रेऽनुपदमेवाऽऽचारार्के ॥ अतएव तिर्य-
क्संचिका कल्पिता केनचिद्बुद्धिमता वृद्धेन जपशीलेन जपार्थं
साच गोमुखीति व्यवह्रियते लोकैरिति ॥ आस्तामेतत्॥अथ ज
पविषयेऽस्माकं तु गायत्रीजपोंऽगुलिपर्वभिर्वैष्णवमंत्रजपश्च तुल-
सीकाष्ठमालयेत्येव मुख्यः शिष्टाचारः ॥ आचारार्के जपमाला-
निर्णयानंतरं ॥ एतच्च गायत्रीजपातिरिक्तजपे ज्ञेयं ॥ उक्तंच मा-

लाकरणं ब्रह्मयामले गायत्रीकल्पेच ॥ पर्वभिस्तु जपेद्देवी माला चाऽन्यजपे स्मृता॥ गायत्र्यावेदमूलत्वाद्वेदः पर्वसु गीयते ॥ आरभ्याऽनामिकामध्यं पर्वाण्युक्तान्यनुक्रमात् ॥ तर्जनीमूलपर्यंतं जपेद्दशसु पर्वसु ॥ मध्यमांऽगुलिमूले तु यत्पर्वद्वितयं भवेत्॥ तं वैमेरुं विजानीयाज्जपे तंनाऽतिलंघयेत् ॥ आरभ्याऽनामिकामूलात् प्रादक्षिण्येन वै क्रमात् ॥ मध्यमामूलपर्यंतं जपेद्दशसु पर्वस्वित्यादिवचनाऽनुगृहीतत्वात्॥अतः कथमपि न रुद्राक्षमालायाएव गायत्रीजपे सर्वेषामावश्यकत्वं सिध्यतीति व्यर्थोऽयं प्रश्नः॥अतः॥न भस्मधारणं नाऽपि जपोरुद्राक्षमालया ॥ आवश्यकस्तु सर्वेषां वैष्णवानां कुतस्तराम् ॥ १ ॥

## अथैतत्प्रधानप्रश्नाऽनुबंधी पंचमः प्रश्नः॥५॥

भगवत्पूजनसमये कानि पात्राणि शस्तानि ॥ ६१ ॥

### ॥उत्तरं॥

पुराणे पंचरात्रादौ पूजायाः प्रक्रमे प्रभोः॥प्रोक्तानि यानि पात्राणि पवित्राणि पुरातनैः॥१॥स्वसंप्रदायप्राप्तानि रचितान्युचितानि तु ॥ सुवर्णताम्रदुर्वर्णकांस्याद्यैः शुद्धधातुभिः ॥ २ ॥ यथाकालं यथाकर्म यथाशक्ति यथाऽश्रमं ॥ प्रशस्तानि समस्तानि शास्त्राचाराऽविरोधतः ॥ ३ ॥ अथ पात्रनिर्णयस्य नारदपंचरात्रादिग्रंथेषु विस्तीर्णत्वेऽपि भवत्संतोषार्थं किंचिदुच्यते ॥ तत्र स्कांदे मार्गशीर्षमाहात्म्यनवमाध्याये स्वनैवेद्यनिर्णयमुपक्रम्य ब्रह्माणं प्रति भगवान् ॥ (श्लो० ३) आदौहिरण्मयं पात्रं तदभावे च राजतं ॥

तदभावे च पालाशं विस्तीर्णं बहुसुंदरं ॥ कचोलाः शतशः कार्याः पात्रे वै परितोऽनघ॥तन्मध्ये व्यंजनादेयानानाफलमयाः शुभाः॥ तथा ॥ ( श्लो० ६ ) नानाव्यंजनसंरुद्धं त्रिभिः पंक्तिभिरेव च॥ निम्बूरसेन चोड्रेण फलमूलयुतेन च॥तथा ॥ ( श्लो०९ ) प्रहेल नास्तथा कार्याः कचोलशतसंकुलाः॥तथा ॥ ( श्लो०१२ ) कचोले सुप्रभे वत्स स्थितं कांचनसुप्रभम्॥घृतं सुवासितं प्रीत्या देहि त्वं मम भोजने इत्यादि॥नारदपंचरात्रे चतुर्थरात्रे नवमाध्याये श्री महादेवः॥(श्लो०१)परिभाषामथो वक्ष्ये उपचारविधौ हरेः॥द्रव्याणां यावनी संख्या पात्राणां द्रव्यसंगतिरित्युपक्रम्य॥हाटकं राजतं ताम्रमारकूटं मृदादिना ॥ उपचारविधावेतद्द्रव्यमाहुर्मनीषिणइति॥ आरकूटं पित्तलं ॥ रीतिः स्त्रियामारकूटइत्यमरोक्तेः ॥ तथा तत्रैव॥( श्लोक५ ) प्रोक्तमाचमनं कांस्ये॥इदमशक्तविषयं ॥ तत्रैव ॥ स्वर्णाद्याभरणान्येव मुक्तारत्नयुतानि च ॥ चंदनागुरुकर्पूरपङ्कगंधपलावधि ॥ नानाविधानि पुष्पाणि पंचाशदधिकानि च ॥ कांस्यादिनिर्मिते पात्रे धूपगुग्गुलुकर्मभागिति ॥ संप्रदायेतु चंदनधूप एव प्रसिद्धः ॥ बहुवचनप्रशस्तत्वादित्यन्यदेतत् ॥ तथा ॥ कार्याः ताम्रादिपात्रे तत्प्रीतये हरिमेधसइति ॥ अयं सर्वोऽपि पात्रनियमोविभवविषयकः ॥ यथोक्तं तत्रैवोपसंहारे ॥ ( श्लो० १४ ) तस्त्वतोऽयं विधिः प्रोक्तोविभवे सति सर्वदा ॥ एषामभावे सर्वेषां यथाशक्त्यभिपूजयेत्॥सर्वभोगान्वितोभूत्वा व्रजेदंते हरेः पुरमिति॥एवं गौतमतंत्रेऽपि तत्रतत्र भगवत्पूजोपयोगिपात्रनिर्णयोऽस्ति ॥ यथा नवमाध्याये ॥ (श्लो०५९) तद्दक्षिणे तु शंखं वा ताम्रं चाऽप्यथ मार्तिकं॥पात्रमेकं निधायाऽथ तथा जलेन पूरयेत् ॥ ताम्रपात्रं च

विभवे विष्णोरतिप्रियं मतं॥तत्रैव सर्वपात्राणां मुख्यं शंखं प्रकी-र्तितं ॥ मृत्पात्रं च तथा प्रोक्तं सुवर्णं राजतं तथा ॥ पंचपात्रं हरेः शुद्धं नाऽन्यत्तत्र नियोजयेदिति॥तथा तत्रैव दशमाध्याये॥(श्लो० ११७) एवं वा पूजयेत् कृष्णं यथावित्तानुसारतः॥ इह भुक्त्वा-वरान् भोगानंते तु हरितां व्रजेत्॥ अगुरूशीरगुग्गुलसितामधुसुचं-दनैः॥ ११८॥ सारांगारे विनिक्षिप्तैर्नासाधोधूपमर्पयेत् ॥ वन-स्पतिरसोत्पन्नोगंधाढ्योगंधउत्तमः॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यतां ॥ वर्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ॥१२०॥ संस्थाप्य स्वर्णपात्रादौ सुदीप्तशिखया ततः॥ अर्घोदकेन संस्कृत्य तंदजाय निवेदयेत्॥उत्तार्य दृष्टिपर्यंतं घंटां वामदिशि स्थितां॥वा-दयन् वामहस्तेन दक्षहस्तेन चाऽर्पयेत्॥सुप्रकाशोमहातेजाः सर्वत्र तिमिरापहः॥ सबाह्याभ्यंतरं ज्योतिर्दीपोऽयं प्रतिगृह्यतां॥ स्वर्णे वा ताम्रपात्रे वा रौप्ये वा पांकजे दले॥सितोपदंशशाल्यन्नं सगुडं म-धुना युतं ॥ दधिदुग्धघृतोपेतं कदल्यादिफलान्वितं ॥ आनीय दे-वपुरतोऽर्घतोयंच विनिक्षिपेदिति ॥ सारसंग्रहे हारीतः ॥ योनि-त्यमर्चयेद्देवं यावज्जीवमतंद्रितः॥ गंडकी गोमतीचक्रं तुलसी ता-म्रभाजनं ॥ घंटानादं शंखतोयमष्टमं चानुलेपनं ॥ सर्वेषामप्य-लाभे तु शंखमेकं विशिष्यते ॥ शंखोदकं सदा पूतमतिप्रियतरं ह-रेरिति ॥ कमलाकरभट्टाऽऽह्निके ॥ शंखतीर्थं क्षिपेन्मूर्ध्नि विष्णुपा-दोदकं पिबेत् ॥ पादोदकप्रकारः ॥ उदकं चंदनं चक्रं शंखश्च तु-लसीदलं ॥ घंटा पुरुषसूक्तं च ताम्रपात्रमथाऽष्टमं ॥ शालग्राम-शिला मुख्या नवभिस्तीर्थमुत्तममिति ॥ तत्रैव स्मृतिः॥शंखोदके-न स्नानं तदतिप्रियतमं हरेः॥शंखोदकेन संप्रोक्ष्य पूजोपकरणानि

वै॥दक्षिणे घृतदीपं च वामे तैलस्य दीपकमिति॥तत्रैव वसिष्ठः॥धूपे दीपे च नैवेद्ये स्नाने चैव विशेषतः ॥ घंटानादं प्रकुर्वीत नानावादित्रकं तथेति॥पुनर्गौतमतंत्रे षोडशाऽध्याये॥(श्लो० ४६)सितोपदंशमन्नं च स्वर्णपात्रे निवेदयेत्॥अथवा रौप्यपात्रे च ताम्रपात्रे ऽथवा पुनः॥अभावात् पद्मपत्रे वा अन्यथा नरकं व्रजेत्॥सुवर्णचषके वाथ रौप्ये वा विधिना ततः॥सशर्करं पक्वदुग्धमन्नं व्यंजनपायसं॥नानाविधोपहाराणि गोविंदाय निवेदयेदिति ॥ पुनस्तत्रैव षोडशाऽध्याये॥( श्लो० ७० ) रजताऽऽरचिते पात्रे खंडदुग्धं निवेदयेदिति ॥ तत्रैव ॥ ( श्लो० ९० ) एवमभ्यर्च्य विधिना कांस्ये वा राजताऽन्विते ॥ पात्रे दुग्धं निवेश्याऽथ मिथुनेभ्यस्तथाऽर्पयेदिति ॥ मिथुनेभ्यः राधिकाद्येकैकपत्नीसाहित्येन प्रक्रांतेभ्योभगवद्युग्मेभ्यः ॥ पराशरमाधवीये तृतीयाऽध्याये श्राद्धप्रकरणे ॥ राजतं पात्रं पित्र्ये विनियुज्यते न दैवे ॥ तदाह मत्स्योराजतं पात्रमधिकृत्य ॥ शिवनेत्रोद्भवं यस्मादतस्तत्पितृवल्लभं ॥ अमंगलं तद्यत्नेन देवकार्येषु वर्जितमिति॥इति देवकार्ये रजतनिषेधः सतु मत्स्यपुराणे श्राद्धं प्रक्रम्योक्तः ॥ माधवेनाऽपि श्राद्धप्रकरणएवोदाहृतइति विश्वदेवकार्यविषयकएव ॥ भगवत्पूजायां तत्रतत्र स्मृतिपुराणेषु रजतपात्राणामपि विधीयमानत्वात् ॥ आचाराऽऽदर्शे देवपूजानिरूपणात् प्राक् योगियाज्ञवल्क्यः ॥ सौवर्णं राजतं ताम्रं मुख्यं पात्रं प्रकीर्तितं ॥ तदभावे स्मृतं पात्रं स्रवते यन्न धारितमिति ॥ आचारप्रकाशे धूपदीपांतां विष्णुपूजां निरूप्य अथ नैवेद्यपात्रं स्कांदे ॥ हैरण्यं राजतं कांस्यं ताम्रं मृन्मयमेव च॥पालाशं पद्मपत्रं वा पात्रं विष्णोरतिप्रियं॥वाराहे॥सौवर्णं राजतं कांस्यं येन दीयेत प्रापणं॥

तानि सर्वाणि संत्यज्य ताम्रं तु मम रोचतइत्युक्तं॥तत्र जलार्पणे द्विमुखमेव रजतादिपात्रं भृंगारशब्दवाच्यं प्रसिद्धं॥यज्ञपात्रत्वात्॥पूजाक्रमेऽपि प्रशंसितत्वाच्च॥देवतास्नापनं तु सुवर्णरूप्यताम्रान्यतमपात्रैरेव कार्यं नतु कांस्यपात्रेण॥प्रजापतिस्मृतौ॥ कांस्यपात्रच्युतं वारि स्नाने च देवतार्चने॥श्वानमूत्रसमं तोयं पुनः स्नानेन शुध्यतीति तन्निषेधात्॥लोहपात्रे तु नान्नं निवेदनीयं॥तत्र भोजने दाने च निषेधात्॥यथाह स्वस्मृतौ वृद्धात्रिः॥(श्लो० ४३) आयसेन तु पात्रेण यदन्नमुपदीयते॥ श्वानविष्ठासमं भुंक्ते दाता च नरकं व्रजेदिति॥ नचैवं कांस्यपात्रस्याऽपि भोजने निषिद्धत्वान्नैवेद्यादिषु तन्निषेधप्रसंगः॥ तत्र भोजननिषेधस्य यतिविषयकत्वात्॥ यथाह सएव॥ नच कांस्येषु भुंजीयादापद्यपि कदाचन॥ मलाशाः सर्वएवैते यतयः कांस्यभोजनाः॥ ४८॥ कांस्यकस्य च यत्पात्रं गृहस्थस्य तथैवच॥कांस्यभोजी यतिश्चैव प्राप्नुयात्किल्बिषं परमिति॥ आचारार्के पूजाप्रकरणे पाद्मे॥ नैवेद्यपात्रं वक्ष्यामि केशवाय महात्मने॥हैरण्यं राजतं कांस्यं ताम्रं मृन्मयमेव च॥ पालाशं पद्मपत्रं वा पात्रं विष्णोरतिप्रियं॥ हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करं॥ नैवेद्यं देवदेवाय यावकं पायसं तथा॥ नैवेद्यवस्त्वलाभेतु फलानि विनिवेदयेत्॥ फलानामप्यलाभे तु तोयान्यपि निवेदयेदिति॥ धर्मप्रवृत्तौ पूजाप्रक्रमे॥ मृन्मये भिन्नपात्रे च पाषाणे लोहकाष्ठजे॥ पल्लवे करभूमौ च नैवेद्यं नच दापयेत्॥ सौवर्णं राजतं ताम्रं कांस्यं पालाशमेवच॥ नैवेद्यायतपत्रं च पात्रं विष्णोरतिप्रियमिति॥ कमलाकराह्निके व्राहपुराणे भगवतोक्तेषु द्वात्रिंशदपराधेषु॥ मृन्मये भिन्नपात्रे वा पालाशे

लोहकाष्ठजे ॥ पल्लवे करभूम्योर्वा नैवेद्यं मम चार्पयेदिति तथा निवेदनमपराधत्वेनोक्तं ॥ इह मृन्मयनिषेधः शक्तविषयः शाल्यादिमुख्यान्नानां नित्यं निवेदनविषयोवेत्यन्यत्र विस्तरः ॥ कमलाकरभट्टाह्निके भगवत्पूजाप्रक्रमे स्मृतिः ॥ अर्घ्यं पुष्पफलैश्चैव चंदनेन समन्वितं ॥ ताम्रपात्रस्थितं तोयं हरये तन्निवेदयेत् ॥ तथा तत्रैव नैवेद्यपात्रमुक्तं स्कांदे ॥ हिरण्यं राजतं कांस्यं ताम्रं पालाशपत्रकं ॥ नैवेद्यार्थं प्रशंसंति पूर्वाऽभावे परंपरमिति॥ एवं दिङ्मात्रेणेह किंचिद्दर्शितं॥विस्तरतस्तु ग्रंथांतरेषु पात्रनिर्णये कृतएव ॥ मयाऽपि स्वतंत्रतया ऽन्यत्र कर्तव्यएवेति नेह तन्यते ॥ एवं ॥ पूजोपयोग्यपात्राणि पंचरात्रादिषु स्फुटं ॥ प्रोक्तानि संप्रदाये स्वे यानि सम्मानितानि च ॥ १ ॥ तैर्यथार्हैं हिरण्यादिशुद्धधातुजभाजनैः ॥ सभाजनं भगवतोनिर्णीतं नः सभाजनैः ॥ २ ॥

## अथ प्रक्रांतप्रधानप्रश्नाऽनुबंधी षष्ठः प्रश्नः ॥ ६ ॥

गंगाजलेन भगवतः स्नानं समीचीनं न वा ॥ ६२ ॥

( अस्याऽयमाशयोभवेत् ॥ पाद्मगोदामाहात्म्यादिषु विवाहसमये पार्वतीदर्शनात् स्कन्नरेतसोवेधसः पापापनोदाय शिवेन सर्वतीर्थजलपूर्णः कमंडलुस्तस्मै दत्तः ॥ तेनैव जलेन ब्रह्मणा त्रिविक्रमावतारे भगवतश्चरणः क्षालितइति प्रसिद्धं ॥ श्रीभागवतपंचमस्कंधादिषु च तदा भगवन्नखेन ब्रह्मांडभेदे बाह्यजलधाराऽपि प्राप्तेत्युच्यते ॥ अतएव विष्णुपुराणादिषु द्वितीयांशद्वितीयाध्याये ॥ ( श्लो० ३१ ) विष्णुपादविनिष्क्रांता प्लावयित्वेंदुमंडलं ॥ समंताद्ब्रह्मणः पुर्यां गंगा पतति वैदिवइत्यादिषु सर्वत्रैव भगवच्चरणोदक-

रूपत्वं तस्यानिरूपितमिति तद्भक्तानां शिवादीनामेव स्वमूर्ध्नि वि-
ष्णुपद्यास्तस्याधारणमुचितं ॥ उक्तंच श्रीभागवते द्वितीयस्कंधे ॥
यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शि-
वोऽभूदिति॥नतु भगवतः स्वचरणोदकेन स्नानादिकं योग्यमिति॥)

## ॥ उत्तरंतुब्रूमः ॥

भगवतोऽवयवविभागप्रदर्शनमैच्छिकमेव ॥ वस्तुतस्तस्य सर्वतः
पाणिपादांतत्वात्॥तैत्तिरीये॥विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतो-
हस्तउतविश्वतस्पादिति सर्वतः पाणिपादांतं सर्वतोऽक्षिशिरोमुखं॥
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठतीत्यादिश्रुतिस्मृतिभ्यः ॥ श्वे-
ताश्वतरे तु सर्वतः पाणिपादंतदिति पाठः॥अतः सर्वत्रैव सच्चिदा-
नंदपूर्णत्वाऽविशेषात् अवयवविभागप्रदर्शनस्यैच्छिकत्वाद्वस्तुतः
सर्वतः पाणिपादांतत्वाच्च भगवदवयवेषु नित्यसिद्धसच्चिदानंदरूपे-
ष्वनौपाधिकेषु न प्राकृतमनुष्याद्यवयववदुत्तमाधमभावोवक्तुं श-
क्यइति चरणवत्तदुदकस्याऽऽधिदैविकरूपत्वात्तेन तदर्चनादौ न
कोऽपि दोषः ॥ एवमेवच सति वटपत्रपुटशायिना भगवता स्वमु-
खे निक्षिप्य स्वचरणांगुष्ठश्चूष्यतइति पुराणप्रसिद्धिः संगच्छते ॥
कथमन्यथा अत्युत्तमावयवे मुखे प्राकृतदृष्ट्या ऽधमावयवस्य च-
रणस्य निक्षेपोयोग्यः स्यात् ॥ किंचाऽस्ति गंगायामाधिदैविका-
दिभेदेन त्रैरूप्यं ॥ चरणोदकस्य स्वल्पत्वात् बाहुल्यार्थं चर्मण्व-
त्यादिनद्यंतरोदकवर्षोदकादिप्रवेशश्च ॥ तत्राऽऽधिदैविक्यादेवता-
रूपायाः संबंधात् पवित्रतमेन सर्वतीर्थोत्तमेनाऽऽध्यात्मिकजलेन
भौतिकजलेन च भगवत्पूजादिकरणे न कोपि शंकाऽवकाशः ॥

शास्त्रेषु ब्रह्मद्रवत्वकथनाच्च॥अतएव पुराणादिषु भगवत्पूजायां त-
ज्जलस्योत्कर्षो निरूप्यते॥यथा निर्णयसिंधौ तृतीयपरिच्छेदपूर्वार्द्धे
बृहन्नारदीये॥वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम्॥न वर्ज्यं तुल
सीपत्रं न वर्ज्यं जान्हवीजलमिति॥स्कांदे मार्गशीर्षमाहात्म्याऽष्ट-
माध्यायेऽपि भगवत्स्नानाऽचमनाद्युपयोगिजलपत्रपुष्पादिनिर्णये
इदमेव वाक्यं दृश्यते॥आचारप्रकाशे च पारिजाते॥जलं पर्युषितं
त्याज्यं पत्राणि कुसुमानि च ॥ तुलस्यगस्त्यबिल्वानि गांगं वारि
न दुष्यतीति ॥ धर्मप्रवृत्तौ चेदं विष्णुपूजायामुदाहृतं॥आचारार्के
पूजाप्रकरणे स्कांदे ॥ गंगाजलं त्र्यहाद्ग्राह्यं पूजने भक्तिसंयुतैः ॥
सारसंग्रहे स्कांदे॥न विप्रसदृशं पात्रं न दानं सुरभीसमं ॥ नच गं-
गासमं तीर्थं न पत्रं तुलसीसमं ॥ नारदपंचरात्रे च प्रथमरात्रत्र-
योदशाध्याये ॥ (श्लो० १७) पूतश्च पावनोवन्हिर्जलं च तुल-
सीदलं ॥ पूतान्येव हि तीर्थानि गंगादीनि च गायकेति॥तत्रैव द्वि-
तीयरात्रतृतीयाध्याये ॥(श्लो०८९)पवित्राणि च तीर्थानि तुलसी
चाऽपि जान्हवीति ॥ कमलाकरभट्टाह्निके भगवत्पूजानिरूपणे ॥
आसनं कल्पयेद्धैमं नानारत्नविभूषितं ॥ पाद्यं देवाय दातव्यं गं-
गातोयं सचंदनमिति ॥ तत्रचाऽऽचारप्रदीपे॥ जलं पर्युषितं त्याज्यं
पत्राणि कुसुमानि च ॥ तुलस्यगस्त्यबिल्वादि गंगावारि न दुष्यती
ति॥एवं तत्र तत्र भगवत्पूजाप्रक्रमे प्रशंसितस्य गंगाजलस्य तत्स्ना
नाद्यर्थमेवोपयोगोऽभिप्रेतइति निश्चीयते ॥ किंच ॥ साधारणज-
लेष्वपि गंगायमुनाद्यावेशेनैव भगवत्पूजोपयोगित्वं भवतीति ज्ञा-
यते ॥ तत्रतत्र ग्रंथेषु पूजोपयोगिजले मंत्रैस्तदाव्हानस्य विधाना

त् ॥ यथा कृष्णाराधनपद्धतौ शंखतोये गंगेचयमुनेऽचैवेत्याव्हानं कलशे किंचिज्जलनिक्षेपश्च निरूपितः ॥ देवपूजाग्रंथे तु कलश-एव तदावाहनमुक्तं ॥ इदं सर्वत्र प्रसिद्धमेवेति किं बहुना ॥ अ-पिच ॥ तत्रैव पंचामृतस्नानोत्तरं ॥ श्रीखंडं चंदनोपेतं कस्तूर्यादि-समन्वितं ॥ गंगाजलविमिश्रं च गंधस्नानं समर्पयेदिति वचनोप-न्यासपूर्वकं स्पष्टमेव गंगाजलेनाऽभ्यंगसमर्पणमुक्तं ॥ एवं कंठरवे-ण स्नानादौ गंगाजलोपयोगविधायकानि वचनांतराण्यपि तत्र-तत्र प्रसिद्धान्येव ॥ अन्यच्च ॥ यदि सर्वथा चरणोदकत्वेन भगव-दनुपयोगित्वमेव तस्य स्वीक्रियेत तर्हि तेन तत्तर्पणमयुक्तं स्यात्॥ विधीयते च तद्गौतमतंत्रे चतुर्विंशाऽध्याये ॥ ( श्लो० १०० ) म त्स्यंडीकदलीदुग्धगुडपायसतच्छ्रिया ॥ तर्पयेदयुतं मंत्री गांगेयेन जलेन वै इति ॥ अत्रैव पंचविंशाऽध्याये ॥ (श्लो० १०) पलाशैः कुसुमैर्हुत्वा दिव्यज्ञानमवाप्नुयात् ॥ पूर्ववत्तर्पणं कुर्यात्सर्वाभीष्टानि साधयेदिति॥पूर्ववद्गंगाजलेन ॥ अपिच यद्दिलतया भगवच्चरणसं-बंधित्वात्तदनुपयोगित्वमेवाऽस्य यद्युच्येत तर्हि पद्भ्यांभूमिर्दिशःश्रो-त्रात् भूर्लोकःकल्पितःपद्भ्यां द्यौःशीर्ष्णआशाश्रुतिरंघ्रिरुर्वीत्यादिश्रुति-पुराणादिवचनेभ्योभूमिलोकस्य भगवच्चरणोत्पन्नत्वात्तद्रूपत्वाच्चा-ऽत्रोत्पन्नानां सर्वपदार्थानां भगवत्पूजाऽनुपयोगितयाऽस्मिँल्लोके भगवत्पूजादिसन्मार्गाएवोच्छिद्येरन् ॥ तथाच सति न कस्याऽपि मोक्षादिकमपि स्यादिति नैतत् सारं ॥ अतआधिदैविकरूपत्वाद्गं-गाजलेन भगवत्सेवनादौ न कोपि दोषलेशोऽपीति संक्षेपः ॥ वि-स्तरस्तु विष्णोर्नुकंवीर्याणि चस्कंभयःस्वरहसा यावैलसच्छ्रीतु लसीविमिश्रेत्यादीनां व्याख्यानात् प्रहस्तवादादेश्चाऽवगंतव्यः॥अ-

तएवैतत् सर्वं हृदि कृत्याहुः पंचमस्कंधनिबंधे श्रीमदाचार्याः ॥ ( श्लो० ७८ ) जलेनाऽप्युत्तमा सेयमिति गंगाऽवतारणं ॥ सर्वत्र तस्याः संबंधइति भेदानिरूपिताः ॥ ऊर्ध्वपादाद्विनिष्क्रांता जघने पतति स्फुटं ॥ चरणस्याऽऽधिदैवत्वान्न दूषणमिहाऽण्वपि ॥ गंगाजलेन पूजादि सर्वं कार्यमिति स्थितिरिति ॥अतः समयमव्ययं मंगलं नः ॥ उत्तमाऽधमभावस्याऽभावात्प्राकृतवद्धरौ ॥ पुराणादौ प्रभोः पूजाप्रक्रमेषु प्रशंसनात् ॥ १ ॥ आधिदैवादिभेदेन वैविध्याज्जान्हवीभवं ॥ मुरारिस्नापने वारि पुण्यकारि विचारितं ॥ २ ॥

## ॥ अथैतत्प्रश्नाऽनुबंधी सप्तमः प्रश्नः ॥ ७॥

भवत्संप्रदायरहितविद्वत्तादिगुणयुक्तब्राह्मणेन दृष्टमन्नं भोज्यं नवा ॥ ६३ ॥

## ॥ उत्तरं ॥

आहारस्य रहस्यत्वविधानाच्छादिते स्थले ॥ कर्त्तव्यताविधानाच्च तत्तादृग्व्रतवत्तया ॥ १ ॥ तथैवाऽस्मत्कुलाचाराल्लोकाद्दृग्दोषरूपणात् ॥ तथैव चाऽऽत्मसंतोषात् पाकेदेवार्चनादिषु ॥ २ ॥ दृष्ट्यंतरालचैलानां निर्बंधनविधानतः॥केनाऽपि नः संप्रदाये स्थितेनाऽप्यस्थितेन वा ॥ ३ ॥ विदुषाऽविदुषावाऽपि दृष्टमन्नं न भुज्यते ॥ पूर्वैर्भुक्तं तु यद्दृष्टं तद्दृष्टं खलु भुज्यते ॥ ४ ॥ तथाहि ॥ पराशरमाधवीये प्रथमाध्याये आन्हिकप्रकरणे हारीतः ॥ आहारंतु रहः कुर्यात् विहारं चैव सर्वदा ॥ गुप्ताभ्यां लक्ष्मीयुक्तः स्यात्

---

१ तथाभोजनस्यलोकविद्विष्टत्वात् २ इदमुत्तरत्वान्वेति

प्रकाशे हीयते श्रियेति ॥ मदनपारिजाते तु भोजनविधौ देवलो-
हारीतश्च ॥ गुप्ताभ्यां लक्ष्म्युपेतः स्यात् प्राकाश्ये हीयते श्रियेति॥
पूर्वार्द्धं तदेव ॥ आचारार्के स्मृतिचंद्रिकायामाचारप्रदीपे कमला-
कराह्निकादिषु चेदमुपन्यस्तं ॥ आचारमाधवेऽपि भोजनविधौ
बौधायनः॥सर्वाऽऽवश्यकावसानेषु प्रक्षालितपाणिपादोऽपआचम्य
शुचौ संवृते देशे प्राङ्मुखउपविश्येत्यादि प्रजापतिं मनसा ध्याये-
दित्यंतं ॥ अत्र अन्ने दृष्टिपातवारणाय संवृते देशे इति वस्त्रभि-
त्त्याद्यन्यतमाच्छादितत्वं देशविशेषणं ॥ अत्रैवाऽग्रे ॥उशना ॥ना-
ऽदत्वा मृष्टमश्नीयाद्बहूनां चैव पश्यतां॥अश्नीयुर्बहवश्चैव तथा नै-
कस्य पश्यतइति ॥ तत्रैव तृतीयाऽध्याये श्राद्धप्रकरणे याज्ञव-
ल्क्यः ॥ परिश्रिते शुचौ देशे दक्षिणाप्रवणे तथेति॥ परिश्रिते परि-
तः प्रच्छादिते शुचौ गोमयादिनोपलिप्ते इति माधवोव्याचख्यौ ॥
अत्र परिश्रितइति दृष्टिदोषवारणार्थं ॥ किंच ॥ केनाऽपि दृष्टम-
न्नं नाऽस्माभिर्भोज्यमित्यस्माकं व्रतं ॥ नहि तल्लोपोयोग्यः ॥ उप-
पातकरूत्वात् ॥ यथाह तृतीयाऽध्याये उपपातकगणनायां याज्ञ-
वल्क्यः ॥ ( श्लोक ३२ ) कौटिल्यं व्रतलोपनमिति ॥ अत्र व्रत-
शब्दस्य ईदृशवैष्णवादिधृतनियमपरत्वं नतु स्नातकादिव्रतपरत्व-
मिति मिताक्षरायां स्पष्टं भाति ॥ अपिच ॥ अस्माकं कुलपरंपरा-
प्राप्तोऽयमितरदृष्टान्नाभोजनरूपोधर्मः सोऽप्यवश्यं पालनीयः॥य-
थोक्तमाचारमाधवप्रथमाध्याये महाभारते आनुशासनिके पर्वण्यु
मामहेश्वरसंवादे ॥ धर्माश्चतुर्विधालोके श्रुतिभेदमुखोद्भवाः ॥ दे-
शधर्माश्च दृश्यंते कुलधर्मास्तथैव च ॥ जातिधर्मावयोधर्मागुण-
धर्माश्च शोभने॥ शरीरकालधर्माश्च आपद्धर्मास्तथैवच ॥ एतद्ध-

र्मस्य मान्यत्वं क्रियते लोकवासिभिरिति ॥ अतएव श्राद्धादिष्व-
पि वंशधर्मानुसारः स्मर्यते ॥ यथाह निर्णयसिंधौ पृथ्वीचंद्रोदये
च वृद्धपराशरः ॥ मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि इत्यु
क्त्वाह ॥ देशधर्मं समाश्रित्य वंशधर्मं तथा ऽपरे॥सूरयः श्राद्धमिच्छं
ति पार्वणं च क्षयाऽन्ह्यपीति ॥ एवमितरदृष्टान्नभोजनरूपोऽपि वं
शधर्मोऽनुल्लंघनीयः ॥ अतएव मनुरप्याह चतुर्थाध्याये ॥ (श्लो०
१७८ ) येनाऽस्य पितरोयातायेन याताः पितामहाः ॥ तेन या-
यात्सतां मार्गं तेन गच्छन्नरिष्यतइति ॥ मिताक्षरायां तु न दुष्यती
ति पाठः ॥ अतोराज्ञाऽपि नैतद्विषये बलात्कारः कार्यः ॥ शास्त्रवि
रोधाऽभावात् ॥ यथाह आचाराऽध्याये राजधर्मप्रकरणे याज्ञव-
ल्क्यः ॥ (श्लो० १५ ) यस्मिन्देशे यआचारोव्यवहारः कुलस्थि-
तिः ॥ तथैव परिपाल्योऽसौ यदा वशमुपागतइति ॥ पुनस्तत्रैव ॥
( श्लो० ५२ ) कुलानि जातीः श्रेणीश्च गणान् जानपदानपि ॥
स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथीति ॥ विनीय यथा
ऽपराधं दंडयित्वा ॥ तथाच येषां यः कुलधर्मस्तत्रैव ते राज्ञा प्रव
र्त्तनीयाः ॥ किंच ॥ अस्माकं तद्भोजनमेव पारंपरिकलोक-
संग्रहादपि धर्मत्वेन प्राप्यते ॥ उक्तंच पराशरमाधवीये प्रथमाध्या
ये आनुशासनिके पर्वणि ॥ धर्मं जिज्ञासमानानां प्रमाणं परमं श्रु
तिः ॥ द्वितीयं धर्मशास्त्रं तु तृतीयं लोकसंग्रहइति ॥ अतोलोकवि
द्वेषादपि सर्वलोकदृष्टान्नं नाऽस्माभिः स्वीकर्तव्यं ॥ लोकविद्विष्ट-
स्य धर्मस्याऽप्यननुष्ठेयत्वात् ॥ उक्तंच मनुना ॥ अस्वर्ग्यं लोक-
विद्विष्टं धर्ममप्याचरेन्नत्विति ॥ एतदेवाऽऽश्रित्य मिताक्षरायां प्रथ
माध्याये गृहस्थप्रकरणे ॥ ( श्लो० १३ ) महोक्षं वामहाजं वेत्यत्र

मधुपर्के पशुवधस्य ॥ तथा तृतीयाध्याये ( श्लो० १८ ) त्रिरात्रं दशरात्रं वेत्यत्र चतुर्थे दशरात्रं स्यादित्यस्यच विगानं स्वीकरोति विज्ञानेश्वरः ॥ अतएव च शिष्टयाज्ञिकाआनुवंध्याख्यमैत्रावरुण- पशोः स्थाने मैत्रावरुणीमामिक्षामेव कुर्वंति॥पुनश्चतुर्थाऽध्याये म नुः ॥ ( श्लो० १७६) परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ॥ धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च इति॥ पराशरमाधवीये च प्रथमाऽध्याये प्रातःप्रबोधकालविचारे विष्णुपुराणे ॥ परित्यजेदर्थ कामौ धर्मपीडाकरौ नृप॥ धर्ममप्यसुखोदर्कं लोकविद्विष्टमेवचेति॥ अपिच बहुभिरनुष्ठीयमानस्योच्यमानस्य वा धर्मशास्त्राऽप्रसिद्ध- स्याऽप्याचारस्याऽस्तिप्रामाणिकत्वं किंपुनस्तत्प्रसिद्धस्य॥उक्तंच स्व स्मृतावत्रिणा (श्लो० ३०२) हास्येऽपि वहवोयत्र विना धर्मं वदंति हि॥विनाऽपि धर्मशास्त्रेण सधर्मः पावनः स्मृतः॥अन्यच्चैतद्भोजनेऽ- स्मदीयैः सद्भिरपि निंदा क्रियते ॥ पराशरमाधवीये तृतीयाध्याये श्राद्धवर्ज्यब्राह्मणेषु मनुः॥ आचारहीनः क्लीवश्च नित्यं याचनक- स्तथा॥कृषिजीवी शिल्पजीवी सद्भिर्निंदितएवचेति॥अत्रैव यमः ॥ सद्भिश्च निंदिताऽऽचारः स्वकर्मपरिवर्जकइति गणयित्वा ऽग्रे उ- पसंहरति॥चतुराश्रमबाह्याश्च सर्वे ते पंक्तिदूषकाः॥इत्येतैर्लक्षणैर्यु- क्तास्तान् द्विजान्नियोजयेदिति॥अतः क्वाऽपि स्थित्वा नाऽयं स्वा- चारोऽस्माभिर्लंघनीयः ॥ (अ० १श्लो० ४७) उषित्वा यत्रतत्राऽ- पि स्वाचारं न विवर्जयेदिति वृहत्पराशरोक्तेः ॥ दक्षोऽप्याह्निकमु- पक्रम्याऽऽह ॥ ( श्लो० १७ ) उदयास्तमनं यावन्न विप्रः क्षणि- कोभवेत् ॥ नित्यनैमित्तिकैर्युक्तः काम्यैश्चाऽन्यैरगर्हितैरिति ॥ अ- गर्हिताचाराश्च प्रकृतसदृशाः ॥ अपरं चाऽस्मिन्दुस्तरतरेऽवसरे न-

हि सर्वजनानां रहस्यानि प्रकाशानि च सुकृतदुष्कृतानि ज्ञातुं श-
क्यंतइति नहि सर्वैः सह दृष्टस्पृष्टाऽन्नभोजनादिरूपोव्यवहारइदानीं
योग्यः ॥ तादृशपातकिदृष्टान्नभोजने निषेधं त्वाह संवर्तः ॥ अन्नं
पर्युषितं भुक्त्वा केशकीटैरुपद्रुतं ॥ पतितैः प्रेक्षितं वाऽपि पंचगव्यं
द्विजः पिबेदिति॥मनुरपि चतुर्थाध्याये ॥ ( श्लो० १०७ ) मत्तक्रु-
द्धातुराणां च न भुंजीत कदाचन ॥ केशकीटाऽवपन्नं च पदा स्पृ-
ष्टं च कामतः ॥ भ्रूणघ्नावेक्षितं चैव संस्पृष्टं चाऽप्युदक्ययेत्यादि ॥
कमलाकराह्निकादिषु च याज्ञवल्क्यः ॥ भुक्तं पर्युषितोच्छिष्टं
श्वस्पृष्टं पतितेक्षितं ॥ उदक्या स्पृष्टसंदुष्टं पर्यायान्नं विवर्ज-
येदिति ॥ सारसंग्रहे तु अवैष्णवादिभिरपि दृष्टान्नस्य निषेधउ-
क्तः ॥ यथा हारीतः ॥ यच्छास्त्रेषु निषिद्धं तु तत्प्रयत्नेन वर्जयेत् ॥
भावदुष्टं कालदुष्टं क्रियादुष्टं तथैव च ॥ संसर्गदुष्टमपि च वर्जये-
द्यज्ञकर्मणीत्युपक्रम्य कालदुष्टादिस्वरूपाणि कथयन्नाह ॥ शैव-
पाखंडपतितैर्विकर्मस्थैर्निरीश्वरैः ॥ अवैष्णवैर्द्विजैः शूद्रैर्हरिवासर-
भोक्तृभिः ॥ श्वकाकसूकरोष्ट्राद्यैरुदक्यासूतिकादिभिः ॥ पुंश्चली-
भिश्च नारीभिर्वृषलीपतिभिस्तथा ॥ दृष्टं स्पृष्टं च दत्तं च भुक्तशे-
षं तथैवच॥अभक्ष्येण च संयुक्तं सांसर्गं दुष्टमुच्यतेइति॥संसर्गदुष्ट-
स्य च निषेधोधर्मप्रवृत्तावपि प्रायश्चित्तप्रकरणे दर्शितः॥संसर्गदुष्टं
यच्चाऽन्नं क्रियादुष्टमकामतः ॥ भुक्त्वा स्वभावदुष्टं च तप्तं कृच्छ्रं
समाचरेदिति ॥ एवमितरत्राऽप्यनेकत्र संसर्गदुष्टनिषेधः स्पष्टएव॥
नारदपंचरात्रे च द्वितीयरात्रे द्वितीयाध्याये ऽवैष्णवैर्दृष्टस्पृष्टान्नभो-
जनादिसंसर्गं वैष्णवानां निषेधति महादेवः ॥ हरिभक्तिप्रदं ज्ञानं
ज्ञानं पंचविधेषु च॥विदुषां वांछिता मुक्तिः सततं परमा सतां॥१

साच श्रीकृष्णभक्तेश्व कलांनार्हति षोडशीं ॥ श्रीकृष्णभक्तसंगेन भक्तिर्भवति नैष्ठिकी॥२॥अनिमित्ता च सुखदा हरिदास्यप्रदाशुभा॥ यथा वृक्षलतानां च नवीनः कोमलांऽकुरः ॥३ ॥ वर्द्धते मेघवर्षेण शुष्कः सूर्यकरेण च॥तथैव भक्तालापेन भक्तिवृक्षनवांऽकुरः ॥४॥ वर्द्धते शुष्कतां याति चाभक्ताऽऽलापमात्रतः ॥ तस्माद्भक्तैः सहाऽऽलापं कुरुते पंडितः सदा ॥ ५ ॥ यात्येवाऽभक्तसंसर्गाद्दुष्टात् सर्पाद्यथा नरः ॥ आलापाद्गात्रसंस्पर्शाच्छयनात् सहभोजनात् ॥ ॥ ६ ॥ संचरंति च पापानि तैलबिंदुरिवांऽभसि ॥ संसर्गजागुणादोषाभवंत्येव हि जीविनां ॥ ७ ॥ तस्मात्सतां हि संसर्गं संतोवांछंति संततं ॥ मुने संसर्गजोदोषो वस्तूनां प्रभवेदिह ॥ ८ ॥ हीनंधातुप्रसंगेन स्वर्णे दोषः प्रजायते॥तस्माच्च हीनसंसर्गं न वांछंति मनीषिणः ॥ ९ ॥ तस्माद्वैष्णवसंसर्गं कुर्वते वैष्णवाः सदा ॥ कुर्वंति वैष्णवाः शश्वत् षड्विधं भजनं हरेः ॥ १० ॥ स्मरणं कीर्तनं चैव वंदनं पादसेवनं ॥ पूजनं सततं भक्त्या परं स्वात्मनिवेदनमित्यादि॥ एवं रहस्यादिपापसंचरणभयादेव सर्वेषामेकपंक्तिभोजनमपि नाद्रियंते शिष्टाः ॥ उक्तंच चतुर्विंशतिमतव्याख्याचारमयूखाचारप्रकाशाचारादर्शादिषु कात्यायनेन ॥ अप्येकपंक्त्यां नाश्नीयाद्ब्राह्मणैः स्वजनैरपि ॥ कोहि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ॥ एकपंक्त्युपविष्टानां दुष्कृतं यद्दुरात्मनां ॥ सर्वेषां तत्समं तावद्यावत्पंक्तिर्न भिद्यते ॥ अग्निना भस्मना चैव स्तंभेन सलिलेन च ॥ द्वारेणैव च मार्गेण पंक्तिभेदोबुधैः स्मृतइति ॥ आस्तामेतत्॥ अपरंच ॥ ( अ० २श्लो० ६ ) वेदोऽखिलोधर्ममूलं स्मृतिशीले च तद्विदां ॥ आचारश्चैव साधूनामात्मनस्तुष्टिरेवच॥(अ० १श्लो० ७)

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ॥ सम्यक् संकल्पजः कामोधर्ममूलमिदं स्मृतमित्यादिमनुयाज्ञवल्क्यादिवचनेष्वात्मसंतोषस्याऽप्यस्ति धर्मे प्रामाण्यं॥तथा आचाराऽध्याये श्राद्धप्रकरणे ( श्लो० ३७।३८ ) गंधोदकतिलैरिति येसमानाइति च श्लोकयोर्मिताक्षरायां ॥ येनाऽस्य पितरोयातायेन याताः पितामहाः॥येन यायात्सतां मार्गं तेन गच्छन्न दुष्यतीति वंशपरंपराऽऽयातसमाचारेण व्यवस्था ॥ एवंविधविषयव्यतिरेकेणाऽस्य वचनस्य विषयांतराऽभावात् ॥ यत्र पुनः शास्त्रतोन व्यवस्था नाऽप्याचारस्तत्राऽऽत्मनस्तुष्टिरेवचेतिवचनादात्मनस्तुष्टिरेव व्यवस्थापिका ॥ यथा गर्भाऽष्टमे ऽष्टमे वा ऽब्दइतीति विज्ञानेश्वरः ॥ इतरदृष्टान्तयोजने च नाऽस्माकमात्मातुष्यतीति नैतद्बोध्यं ॥ अतएव चतुर्थाऽध्याये मनुः अभक्ष्याऽन्नेषु ॥ (श्लो० २०९) गणाऽन्नं गणिकाऽन्नं च विदुषां च जुगुप्सितमिति ॥ विद्वद्भिर्निंद्यमानस्येतरदृष्टादेरप्यभक्ष्यत्वमुक्त्वा अतुष्टिकरस्य पृथगभक्ष्यतामाह (श्लो० २१७) अनिर्दशं च प्रेताऽन्नमतुष्टिकरमेव चेति ॥ पुनः सएव एकादशाऽध्याये ॥ ( श्लो० ५६ ) ब्रह्मोज्झतावेदनिंदा कौटसाक्ष्यं सुहृद्वधः ॥ गर्हिताऽनाद्ययोर्जग्धिः सुरापानसमानि षडिति ॥ अत्र नभोक्ष्यतइति संकल्प्य यद्भुज्यते तदनाद्यमिति मेधातिथिः॥ पुनस्तत्रैव ॥ ( श्लो० १६० ) अभोज्यमन्नं नाऽत्तव्यमात्मनः शुद्धिमिच्छता॥अज्ञानभुक्तं तूत्तार्यं शोध्यं वाऽप्याशु शोधनैः ॥ एषोऽनाद्यादनस्योक्तोव्रतानां विविधोविधिरिति॥अत्राऽभोज्यस्य विवेचनाऽभावात् पूर्वोक्तान्येवाऽतुष्टिकरांतानि पात्राणि॥ याज्ञवल्क्यो

ऽपि तृतीयाऽध्याये ब्रह्महत्यादिप्रायश्चित्तप्रकरणे ॥ (श्लो०२०३) निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतं ॥ रजस्वलामुखास्वादः सुरापानसमानि तु ॥ निषिद्धं लशुनादिकं तस्य मतिपूर्वं भक्षणमिति मिताक्षरा ॥ नन्वेवं सत्यतुटिकरस्य कदाचिदमत्या भक्षणे सुरापानप्रायश्चितमुचितं नचैतत्क्वचिदपि व्यवहारे दृष्ट श्रुतचरमिति चेत्सत्यं ॥ सुरापानपापातिऽदेशेऽपि प्रायश्चित्तलाघवस्य अमत्यैतानि षट् जग्ध्वा कृच्छ्रं सांतपनं चरेत्॥यतिचांद्रायणं वाऽपि शेषेषूपवसेदहरिति मनु वचनेन विहितत्वात् ॥ वचनबलान्महतोऽपि पापस्य क्षयसंभवाच्च प्रकृताऽन्नभोजने उपवासएवैकः शिष्टाऽऽचारसंमतः॥ अतएवोपपातकप्रायश्चित्तानि सर्वाणि व्याख्याय पश्चात्तानि महता विस्तरेण व्यवस्थापयन् अभक्ष्यप्रायश्चित्तव्यवस्थायां प्राह विज्ञानेश्वरः ॥ एवमादौ च यत्र प्रतिपदोक्तं प्रायश्चित्तं न दृश्यते तत्र शेषेषूपवसेदहरिति साधारणप्रायश्चित्तं मनूक्तं द्रष्टव्यमिति ॥ अभ्यासे तु प्रायश्चित्तावृत्तिस्तेन पूर्वमेवोक्ताऽतोन कोऽपि शंकाऽवकाशः ॥ किंच वैष्णवसंप्रदायेषु पाककरणं भगवत्सेवनं तन्निवेदनादिकं ततः प्रसादभोजनादिकं च भित्त्यावृतस्थले तदभावे च सर्वतश्चैलावरणवेष्टिततयाऽन्यदृष्टिपाऽतायोग्ये स्थलएव कार्यमिति शास्त्रसिद्धा रीतिः ॥ अतस्तन्मूलभूतवचनान्यप्यनेकत्र ग्रंथेषूपलभ्यंते ॥ यथा सारसंग्रहे पाराशरे ॥ श्वानवायसचांडालदृष्टिदोषं परित्यजेत् ॥ प्रपन्नः परमैकांतोभोजने पाककर्मसु ॥ चांडालाः शाक्तकाः शैवास्तथा भैरवपूजकाः ॥ येऽप्यन्यदेवताभक्तास्तेषां दृष्टिं विवर्जयेत् ॥ अत्युष्णमतिरूक्षं च भुक्तं पर्युषितं तथा ॥ आघ्रातमितरैर्दृष्टं प्रयत्नेन

विवर्जयेत् ॥ विष्णोर्नैवेद्यकालेषु चैलावरणमाचरेत् ॥ त्यक्त्वाऽऽवृतिपचेदन्नं समूढोनरकं व्रजेत् ॥ आवृतिं यः परित्यज्य नैवेद्यं कुरुते यदि ॥ सचांडालोमहापापी रौरवं नरकं व्रजेत् ॥ जैनबौद्धादिकैः सम्यक् श्वानमार्जारवायसैः ॥ देवतांतरभक्तैश्च दृष्टं दोषात्परित्यजेत् ॥ नैवेद्यपाककाले च भोजने च विशेषतः ॥ असद्दृष्टिं परिहरेदच्युतस्य निवेदने ॥ काकं दृष्ट्वा प्रपन्नश्च नाऽश्नीयाल्लोभतोऽपिवा ॥ अवैष्णवानां दृष्टं च भोजनं वैष्णवस्त्यजेत् ॥ पुनः पाराशरे ॥ एकशय्यासने पंक्तिभांडपक्वाऽन्नमिश्रितम् ॥ यजनाऽध्यापने योनिस्तथैव सह भोजनं॥नवधा संकरः प्रोक्तोन कुर्यात्त्वाऽधमैः सह ॥ वर्जयेद्विधवापाकमनर्चककृतं तथा ॥ अधमान्नं तथा सम्यग्वर्जयेत्सर्वकर्मसु ॥ पंचसंस्काररहितः शिखाकौपीनवर्जितः ॥ वैष्णवाचाररहितोह्यनर्चकइतिस्मृतः ॥ मोक्षधर्मे ॥ न नग्नामीक्षते नारीं न नग्नान् पुरुषानपि ॥ मैथुनं शयनं गुप्तमाहारं च समाचरेत् ॥ सायं प्रातर्मनुष्याणामशनं देवनिर्मितम् ॥ पाखंडपतिताऽशुद्धविकर्मस्थानवेक्षितम्॥हारीते ॥ पैशाचिकानां यक्षाणां शाक्तानां लिंगधारिणां॥द्वादशीविमुखानां च दृष्टिदुष्टं विवर्जयेत्॥ अवैष्णवानां दृष्टिः स्यात् पाकपात्रे तथा जले ॥ तत्पाकं तु परित्यज्य पात्रशुद्धिं च कारयेत् ॥ सुदर्शनसंहितायाम् ॥ नीलाद्रौ चित्रकूटे च व्रजे शेषे हिमालये ॥ अंतर्वेद्यां तथा राजन् दृष्टिदोषोन विद्यते ॥ वृद्धवासिष्ठे ॥ पूजानैवेद्यकालेषु यान्यद्रव्याण्यशेषतः ॥ तिरोधाय च वस्त्रेण अलक्ष्यं प्राकृतैर्यथा ॥ जयसंहितायां ॥ पिदधीत तथा क्षेत्रमायागात्पाकभूमिकाः ॥ वस्त्रपर्णकुशाद्यैर्वा यथाऽलक्ष्यमवैष्णवैः ॥ वृद्धपाराशरे ॥ विष्णो-

रिज्यां सर्वे कुर्याद्योऽर्वान वसनादिभिः ॥ पूज्यते हरिरव्यक्तस्तत्र लक्ष्म्या समोदते ॥ विप्रोवा वैष्णवोवा स्यादनुपाकादिकर्मसु ॥ तिरस्कुर्याद्विधानेन नाऽन्यथा हरिरिज्यते ॥ यागभूमौ च यागान्नपाकयोगादिकर्मसु ॥ तिरस्कुर्याद्ध्रुवं तेषां नाऽन्यथा शुद्धिमाप्नुयात् ॥ अनाच्छाद्यं तथा क्षेत्रं यागादौ यः करोति सः ॥ सिद्धिं नैव समाप्नोति प्रत्युत प्रच्युतोभवेदिति ॥ वसनादिभिराच्छादयेदितिशेषः ॥ तिरस्कुर्यात् तिरस्करणिकाभिराच्छादयेदित्यर्थः ॥ एवंवचनांतराण्यपि तत्रतत्र द्रष्टव्यानि ॥ तस्मात् शास्त्रव्याकोपात् संप्रदायविरोधाच्च एतादृशभोजने ऽस्माकं लज्जाऽभ्युदेति नाप्यात्मा परितुष्यतीति नह्यन्येन केनापि दृष्टमन्नमस्माभिर्भोज्यं ॥ तादृशभोजनस्यासात्त्विकत्वात् ॥ उक्तंच द्वादशाऽध्याये मनुना॥(श्लो० ३७) त्रयाणामपि चैतेषां गुणानां त्रिषु तिष्ठताम्॥इदं सामासिकं ज्ञेयं क्रमशोगुणलक्षणं ॥ यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जति ॥ तज्ज्ञेयं विदुषां सर्वं तामसं गुणलक्षणं ॥ येनाऽस्मिन्कर्मणा लोके ख्यातिमिच्छंति पुष्कलां ॥ नच शोचत्यसंपत्तौ तद्विज्ञेयं तु राजसं ॥ यत्सर्वेणेच्छति ज्ञातुं यन्नलज्जति चाचरन् ॥ येन तुष्यति चात्मास्य तत्सत्वगुणलक्षणमिति ॥ अग्रेच सर्वतः सत्वगुणोत्कर्षमुक्त्वा त्रिविधकर्माचरणे पृथक् फलकथनं प्रतिज्ञायाह ॥ देवत्वं सात्त्विकायांति मनुष्यत्वं च राजसाः॥तिर्यक्त्वं तामसानित्यमित्येषा त्रिविधा गतिरिति ॥ तस्मान्नैतादृशं सर्वथाऽशनीयं ॥ इत्थंच ॥ आहारस्य रहस्यत्वमाच्छन्नस्थलकार्यता॥तादृग्व्रतं कुलाचारोदृष्टिदोषस्तथात्मनः॥१॥असंतोषः प्रावरणविधिः-पाकादिकर्मसु ॥ दृष्टान्नाऽभोजने त्वेते हेतवोऽत्र समर्थिताः ॥२॥

अन्येपि बहवोऽनेकशास्त्रारण्यविहारिभिः॥स्वतः सुधीकेसरिभिरुपलप्स्यंतएव ते ॥३॥ तस्मादस्माभिऽरुचितं स्वाचाररुचितश्चिरात्॥ स्थले भित्त्यादिनाऽऽच्छन्ने प्रावृतद्वारि वाससा ॥ ४ ॥ प्रवासे पटवासेषु सेवापाकादि चाशनं ॥ विधीयते किं बहुलादलं लेखात्फलं परम् ॥ ५ ॥

## ॥ अथै तत्प्रक्रांत प्रधानप्रश्नाऽनुबंधी अष्टमः प्रश्नः ॥ ८॥

भवत्संप्रदायस्थसर्ववर्णदृष्टमन्नं भुज्यते न वा ॥ ६४॥

## ॥ उत्तरं ॥

अयं दत्तोत्तरः प्रश्नः पूर्वप्रश्नोत्तरेण तु ॥ केनाऽपि दृष्टं नाऽस्माभिर्भोज्यमित्थं समर्थितं ॥ १॥तथापि कथ्यते किंचित्तथ्यं पथ्यं तदुत्तरं ॥ वैष्णवत्वेऽपि शूद्रादिजातिभेदो न नश्यति ॥ २ ॥ तस्माद्भोज्यं न तद्दृष्टं शूद्रदृष्टान्नसेधनात् ॥ कुलाचाराऽप्यभावाच्चाऽज्ञेयत्वाद्धूर्तचेतसाम् ॥३॥ तथाहि ॥ अस्ति शूद्रादिदृष्टानामन्नानामपावित्र्यं ॥ अतएव निर्णयसिंधौ तृतीयपरिच्छेदे श्राद्धप्रकरणे पराशरः ॥ तद्विष्णोरितिमंत्रेण गायत्र्या च प्रयत्नतः ॥ प्रोक्षयेदन्नजातं तु शूद्रदृष्ट्यादिशुद्धये इति ॥ एवमादिषु तद्दोषवारणाय प्रोक्षणादिकमुच्यते ॥ धर्मसिंधौ तृतीयपरिच्छेदपूर्वार्द्धे ॥ शूद्राऽन्नं शूद्रदत्तब्राह्मणाऽन्नं रात्रिपर्युषितं रजस्वलाचांडालपतितादिदृष्टं काकादिपक्ष्युच्छिष्टमभोज्यमिति ॥ आदिशब्देन शूद्रादिसंग्रहः ॥ अतस्तद्दृष्टमभोज्यमेव ॥ एवं कलौवर्णद्वयमतमित्यादिवाक्येभ्य इदा-

नीतनयोः क्षत्रियवैश्ययोरपि शूद्रप्रायत्वात्तन्निरीक्षितमपि नाऽत्तव्यम् ॥ तथा स्वसंप्रदायवर्तिब्राह्मणेष्वपि बाह्यचिन्हधारणमात्रेण कलिकालवर्तिनां धूर्तानामंतःकरणस्य तत्त्वतोज्ञातुमशक्यत्वान्नहि सर्वेषामेकांततोवैष्णवत्वं निश्चेतुं शक्यते ॥ अतएवोक्तं केनचित् ॥ अंतः शाक्ताबहिः शैवाः सभामध्ये च वैष्णवाः ॥ विचरंति महाधूर्तानानारूपधराः कलाविति ॥ अतः सर्वांशेन याथार्थ्यादांतरवैष्णवपरीक्षायाः कर्तुमशक्यत्वान्नहि सर्वैः स्वसांप्रदायिकवैष्णवब्राह्मणैरपि दृष्टं स्पृष्टं वाऽन्नमशनीयं ॥ तथासति मनसोबाहिर्मुख्यापत्त्या कदाचित्तत्तादृगनन्यवैष्णवत्वभंगप्रसंगात् ॥ मनसोऽन्नपरिणामत्वेन तदनुरूपतायास्तत्राऽवश्यभावित्वात् ॥ यथा छांदोग्ये ऽष्टमप्रपाठके श्रूयते ( खंड ५ ) अन्नमशितं त्रेधा भवति तस्य यः स्थविष्ठोधातुस्तत्पुरीषं भवति योमध्यमस्तन्मांसं योऽणिष्ठस्तन्मनइति ॥ तथा ॥ ( खंड ६ ) दध्नः सोम्य मथ्यमानस्य योणिऽमा सऊर्ध्वः समुदिषति तत्सर्पिर्भवति एवमेव खलुसोम्याऽन्नस्याऽश्यमानस्य योऽणिमा सऊर्ध्वः समुदिपति तन्मनोभवतीत्यादिना हेतुसमर्थनपूर्वकं पुनराम्नायते अन्नमयं हि सोम्यमनः आपोमयः प्राणस्तेजोमयी वागिति ॥ तस्मात् पूर्वाचार्यैर्याः शुद्धब्राह्मणज्ञातयःप्रायः साकल्येनाऽस्मत्संप्रदायनिष्ठाः स्वगृहे भगवत्सेवाधिकारितया परिगृहीताः एकादशस्कंधाद्युक्तरीत्या विविधमहोत्सवादिविस्तारस्य भगवत्सेवाप्रकारस्यैकेन स्वयं निर्वोढुमशक्यत्वात् तज्ज्ञातीयेष्वपि येऽस्मद्गृहेषु भगवत्सेवां नियमेन स्थित्वा कुर्वंति तैरेव भगवत्सेवाद्यवसरे निरीक्षितोऽपि भगवत्प्रसादोभुज्यते ॥ श्रीमज्जगन्नाथपुरीद्वारावतीप्रभृतिषु चेतरनि-

दीक्षितोऽपि तत्रत्यप्रसादोयथासंप्रदायं भुज्यते॥अत्र प्रमाणं तु साधुसदाचारएव॥तस्याऽपि धर्मे प्रमाणत्वात्॥यथा शिक्षोपनिषदि वेदमनूच्याचार्योंतेवासिनमनुशास्तीत्युपक्रम्य श्रूयते॥ अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्॥येते ब्राह्मणाः संमर्शिनः॥युक्ताअयुक्ताः॥अलूक्षाधर्मकामाःस्युः॥यथाते तत्र वर्त्तेरन्॥ तथा तत्र वर्त्तेथाइति॥मनुरप्याह द्वितीयाध्याये॥(श्लो० ६) वेदोऽखिलोधर्ममूलं स्मृतिशीले च तद्विदाम्॥ आचारश्चैव साधूनामात्मनस्तुष्टिरेवचेति॥ तथा॥ (श्लो० १२) वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः॥ एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणं॥ याज्ञवल्क्योऽपि प्रथमाध्याये॥(श्लो० ७) श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः॥ सम्यक्संकल्पजः कामोधर्ममूलमिदं स्मृतमिति॥ आचारमाधवप्रथमाध्याये (श्लो० ३९) व्याख्याने आपस्तंबः॥ धर्मज्ञसमयः प्रमाणं वेदाश्चेति॥ मिताक्षरादिबहुनिबंधेषु ब्रह्मांडपुराणे॥ साधूनां समयश्चाऽपि प्रमाणं वेदवद्भवेदिति॥ महाभारते चाजगरपर्वणि युधिष्ठिरः॥ तर्कोऽप्रतिष्ठः श्रुतयोविभिन्नानैकोमुनिर्यस्य वचः प्रमाणं॥ धर्मस्य तत्त्वं निहितं गुहायां महाजनोयेन गतः सपंथाइति॥ जैमिनिनाऽपि पूर्वमीमांसाप्रथमाध्यायतृतीयपादे शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणे॥ (सू० ९) शास्त्रस्थावातन्निमित्तत्वात् इति सूत्रे शिष्टाचारस्य वस्तुनिर्णायकत्वं स्वीकृतम्॥ अत्रैव शाबरभाष्ये॥ कः पुनरत्र निश्चयः॥ यः शास्त्रस्थानां सशब्दार्थः॥ केशास्त्रस्थाः॥ शिष्टाः॥ तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च तेन शिष्टानिमित्तं श्रुतिस्मृत्यवधारणे॥ इत्यादिना तदेव प्रकाशितं॥

इतः पूर्वाधिकरणेच ॥ शिष्टाचारस्य प्रामाण्यं विचारितम् ॥ उक्तं च जैमिनीयाधिकरणमालायां ॥ सदाचारोऽप्रमा मा वा निर्मूल-त्वादमानता ॥ अष्टकादेरिवैतस्य समूलत्वात् प्रमाणतेति ॥ इत-रदृष्टान्नस्याभोज्यत्वविषये विस्तरश्चाऽनुपदमतीतस्य प्रश्नस्योत्तरे दर्शितएवेत्यलं ॥ अतोयथासंप्रदायमेवेतरैर्दृष्टमदृष्टं वा श्रीमद्रा-धावरवदनारविंदाधरामृतमकरंदास्वादादमंदप्रामोदनिवेदकं सद-न्नं सदास्माभिर्भोक्तव्यमिति सकलं मंगलं नः ॥ शूद्रादिदृष्टसेधा-न्वाऽवोध्यत्वान्छ्मनः कलौ ॥ संप्रदायविरोधाच्च दृष्टमन्नं न भु-ज्यते ॥ १ ॥ इत्थं ॥ अष्टमं सहितमष्टभिरंगैश्चोद्यतं यदिह चोद्यम द्यं ॥ तस्य वैदिकसुयुक्तितरंगैरुत्तरं बहुतरं व्यतरंते ॥ १ ॥

## ॥ अथैतत्प्रश्नपत्रांऽते लिखितमस्ति ॥

॥ एतेषामुत्तरं सप्रमाणं देयं प्रमाणंच ॥ श्लोकः ॥ यन्नाऽस्ति वेदे-
न च यत्पुराणे रामायणे भारतसागरे वा ॥ मन्वादिशास्त्रेषु च
यन्न वोक्तं तन्नास्ति नास्तीति न तेन कार्यं ॥

## ॥ उत्तरं ॥

यदस्ति वेदेऽस्ति च यत्पुराणे रामायणे भारतसागरे यत्॥मन्वादिशा स्त्रेषु च यद्बहूक्तं तदेव सर्वं विमलं व्यलेखि॥१॥यत्त्वस्मिन्भवच्छ्लो के सर्वशास्त्रमूर्धन्यानामपि ब्रह्ममीमांसादीनामपरिगणनं तत्तु तद-नभ्यासात्॥कथमन्यथा एतावत्सु प्रश्नेषु वेदांताचार्यान् प्रत्येव प्र-वृत्तेषु एकोऽपि वेदांतगर्भितः प्रश्नोन स्यात्॥यच्च स्वपरिगणितशा स्त्रातिरिक्तोक्तं नाऽस्त्येव प्रामाणिकमित्यवादि ॥ तदपि प्रमादात् ॥

तदतिरिक्तायामपि ब्रह्ममीमांसायां प्रतिपादितस्याऽर्थस्य केनाऽपि सदास्तिकेन प्रतिषेद्धुमशक्यत्वात्॥नच वेदोक्तार्थएव व्यासेन निर्णीतइति वेदसंग्रहादेव संगृहीता सेति वाच्यं ॥ तथासति श्रौतानेवार्थान् स्मरतां मन्वादीनां शास्त्राणि स्त्रीशूद्रार्थं वेदार्थमेवानुवदन्महाभारतं च तेनैव संगृहीतमिति पृथगुल्लेखस्य पुनरुक्तित्वापत्तेः॥किंच वेदपदेन सांगस्य तस्य ग्रहणमभिप्रेतं सांगोपांगस्य वा॥ आद्ये पूर्वोत्तरमीमांसयोरसंग्रहः ॥ तयोरुपांगत्वात् ॥ द्वितीये पुराणेतिहासपरिगणनं पुनरुक्तिः स्यात् ॥ उपांगत्वाविशेषात् ॥ चरणव्यूहे अंगानि गणयित्वा ऽनुपदं छंदोभाषाधर्मोमीमांसान्यायस्तर्कइत्युपांगानीत्युक्तेः ॥ नचमन्वादीत्यादिपदेन तत्संग्रहः ॥ मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोंऽगिरादत्यादिस्मृतिप्रसिद्धानां स्मृत्यंतरकाराणामेव तौल्येन संग्रहसंभवात् ॥ तादृशस्य प्रधानतरस्य शास्त्रस्य सर्वथा पृथङ्निर्देष्टुमौचित्याच्च ॥ आस्तामेतत् ॥ नहि भवद्भिरस्मत्सिद्धांते प्रमाणविषये संदेग्धव्यं किंचिदपि ॥ वेदेषु सर्वेषु तथास्मृतिष्वपि पुरापुराणेषु चयन्महर्षिभिः॥ श्रुतं स्मृतं वीक्षितमस्ति नोऽखिलं तदेव जागर्ति मते समुज्ज्वलं ॥ १ ॥ युग्मं ॥ दुष्टप्रपंचप्रलयप्रसंगादत्युन्मदानष्टविनष्टदृष्टीन् ॥ सदंतदैर्घ्यान् गिरिवर्यभावभ्रांत्युद्भवान् भ्रभ्रगजांस्तदित्थं ॥ २ ॥ सद्युक्तिशूलेन निर्विध्य लोके यथाभिधोन्मत्यतु शंकरोयं ॥ परप्रमाणाख्यतृतीयने-

---

१ विनष्टज्ञानयेभ्य. पक्षे मदेनांधमायान् २ संतोयेअनाः स्वशेषभूतान्यष्टाष्टवाक्यानितैर्दैर्घ्यंयेपांतान्॥अतंस्वरूपेनाशेनानस्त्रीशेषेतिकेत्रिष्वितिमेदिनी॥पक्षे दतदैर्घ्यसहितान् ३गिरिवाचिविषयेमहुवंयंभावभ्रांतिकरान् पक्षे मोच्चपर्वतभ्रमदान् ४वेदादि-

त्रज्वालाऽवलीवेगवलीढमोहः ॥ ३ ॥ इत्यष्टमूर्तिमतवर्तिकृताष्टः चोद्यध्वांतप्रशांतयउदेदयमुष्णरश्मिः ॥ उल्लास्य हृद्यनलिनानि सतां सतांवंद्यामांस्तमोष्टहरितां हरतां प्रतापी ॥ ४ ॥ अपिच ॥ श्रीमद्वल्लभविठ्ठलेशचरणच्छायाश्रयान्निर्भयावेदारण्यविचारिणोऽत्रनखैरवादैः प्रमाणोज्वलैः॥दुर्वादोद्धतहस्तिमस्तदलने शार्दूलविक्रीडितं संतः संततमाचरंतु सुधियोऽनंताअनंतातले॥ ५॥इदानींच॥ श्रीमद्वल्लभवंशमौक्तिकमणिर्यः सूरिरत्नाग्रणीः प्रोद्यत्स्वप्रभया च दुर्मततमः पुंजप्रणाशप्रणीः॥ सत्सूत्रप्रवणः सतां हृदि मुदं तन्वन्नर्घ्यश्रिया हेतुर्जीवनसंपदां विजयतां श्रीजीवनेशः प्रभुः ॥ ६ ॥ शारीरनयनहैन्यं नाऽभूदैन्यस्य साधनं किल मे ॥ यद्दयया शास्त्रदृशोनिजजनकं तं भजे घनश्यामं ॥ ७ ॥ कृष्णयजुस्तरुशाखा सुमनःश्लक्ष्णा ऽस्ति तैत्तिरीयाख्या॥तां सेवते मधुरवागापस्तंबद्विजातिकुलं॥८॥तत्रोद्भूतोमतिमान् वाधूलसगोत्रवारिधेश्चंद्रः॥तैलंगवेल्लनाटी ज्ञातिविद्वत्सभारत्नं ॥ ९॥ यः पंचनद्युपाह्वयगोपीनाथांगजोघनश्यामः॥ गोवर्द्धनाभिधोऽहं तत्सूनुस्तन्मुखाऽधिगतविद्यः ॥ ॥१०॥ग्रंथोऽयं रचितोमया सत्हृदयाःश्रीजीवनेशाऽऽज्ञया श्रीमत्पंचनदाऽन्ववायजनुपा गोवर्द्धनाख्याजुपा ॥ श्रीमद्वल्लभनाममात्रविदुषा ऽत्रोक्तं भवेद्यन्मृषा तच्छोध्यं कृपया भवद्भिरितैरराक्षिप्यतां मा रुषा ॥ ११ ॥ वेदोल्मा जडभावेशोपणकैरोदोपैर्न्ध्यपोपा-

---

१ वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्यकारलोपः २ ग्रंथः ३ अष्ट ४ परिचितकाः विशेषणचारिणश्च ५ अकठिनैः नखैश्च ६ कुलं वेणुश्च ७ ज्ञातिश्रेष्ठाः मणयश्च ८ पुष्पा कांश्याच ९ अज्ञानं अंधकारश्च १० ब्रह्मसूत्रादितत्परः तंतुमोतंच ११ चित्ते वक्षोदेशेच १२ जीविका जलंच १३असत्हृदयैः१४ वेदमूलकः त्रयीतनुश्च १५ मौर्ख्यं शैत्यंच डलयोरैक्याज्जलं वा १६ कर्ता किरणाश्च १७ पापानि रात्रिश्च

न्हरन्दुष्टोलूककुलांऽध्यकद्विमलयन्मार्गानिनंताश्रयः ॥ आराध्यश्च सदाग्रहैः प्रतिदिनं सोऽयं प्रभातोदयोमार्तंडः कृतनीरजस्फुटरुचिश्चंडः समुद्वीक्ष्यतां॥ ११ ॥श्रुति४ दृङ्२ नंद९ शशि १मितेऽब्दवैक्रमे वै क्रमेण वर्षेऽस्मिन्॥रविवासरान्वितायां तपस्यमास्यऽमलसप्तम्यां ॥ १२ ॥ श्रीबालकृष्णमंदिरआस्थाने जीवनेशविभोः ॥ हरिगुरुचरणसरोजनिसपर्यया पर्यपूर्यत निबंधः ॥ १३ ॥ इतिश्रीमद्वेदव्यासविष्णुस्वामिमतपुंडरीकमंडलमंडनमार्तंडश्रीमद्वल्लभाचार्यचरणाब्जचंचरीकचित्तेन मोक्षगुरुगोस्वामिश्रीव्रजवल्लभचरणाऽनुचरेण तैलंगज्ञातीयविद्वद्वरपंचनद्युपनामकघनश्यामभट्टात्मजेन वेदांतचिंतामण्याद्यनेकशास्त्रग्रंथनिर्मायिणा रुक्मिणीचंप्वादिविविधकाव्यप्रबंधविधायिना गोवर्द्धनाऽऽशुकविना विरचितः सत्सिद्धांतमार्तंडः संपूर्णः ॥ ॥ श्रीः ॥ ॥ ५ ॥

धीमान्साहित्यवेदांतधर्मशास्त्रादिमर्मवित् ॥
मंदरःपाणिनीयाब्धेर्नारायणतनूभवः ॥ १ ॥
नासिकक्षेत्रवास्तव्यःस्तव्यसारल्यभाजनम् ॥
आत्मारामाभिधोविद्वान्ग्रंथमेतमशोधयत् ॥ २ ॥

---

१ भक्त्यादिमार्गान् संचरांश्च २ भगवान् आकाशश्च ३ अद्भुतग्रहैः सदाऽष्टखेटैश्च ४ मकर्षणदीप्त्याभ्युदयः प्रात.कालोदयश्च ५ निर्गतरजस्कानां खर्परेश रिविसर्गलोपः पक्षे कमलाना ६ भीति.शोभाच ७ विक्रमशकसंवधिनि ८ फाल्गुनशुक्लसप्तम्यां.

॥ श्री ॥

# सत्सिद्धांत मार्तंडस्य

## परिभाषेयं

श्री०॥ ॥ अथाऽस्मिन्नस्मद्गुरुकृते ग्रंथे उपन्यस्तार्षवचनानां नैर्मूल्यशंकापंकक्षालनाय तत्तन्मूलग्रंथाध्यायश्लोकाद्यंकाइह(अ० श्लो० ) इत्येवमाद्याक्षरनिर्देशपूर्वकं मया स्वबुद्ध्यैव तत्तद्ग्रंथाऽनवलोक्य प्रायेण सर्वत्र कृताः ॥ यानितु प्रामाणिकनिबंधेभ्यो वचांसि गृहीतानि तत्र नांकाः संति॥यत्र च आचारमाधवे मदनपारिजाते इत्येवं निबंधनाम निर्दिश्य अनुपदं मनुः याज्ञवल्क्यः विष्णुः इत्येवं पंक्तिशोयानि वचांसि लिख्यंते तत्र तानि सर्वाण्यपि तन्निबंधस्थानि ज्ञेयानि ॥ यत्रच तस्यामेव वचनपंक्तौ स्वयं स्मृत्यादिषूपलब्धं वचनं लिख्यते तत्र अमुकसंख्याकाध्याये अमुकर्षिः स्वस्मृतावमुकार्षिः इत्येवं भेदकं दर्श्यते॥ एवं विविधाएवाऽन्नाऽस्मद्गुरोर्लेखनिबंधाश्चातुर्यस्थापकाः संति ते सूक्ष्ममतिभिः सुकृतिभिः स्वयमेवावगंस्यंतइति किंबहुलविलेखेन ॥ स्वयमेव मया त्वरावशात्कृतेष्वध्यायश्लोकाद्यंकेषु कचित्प्रमादश्चेत्तत्क्षंतव्योगुणैकपाहिभिरिति शिवम् ॥ श्लो० ॥ श्रीगोवर्द्धनशिष्येण महाराष्ट्रद्विजन्मना ॥ मया मयूरभट्टेन परिभाषा व्यलेख्यसौ ॥ ॥

# शुद्धिपत्र.

| पृ० | पं० | अशुद्ध. | शुद्ध. |
|---|---|---|---|
| १ | १९ | गिरिनाम | नाथोनाम |
| ३ | ७ | सर्वं | सर्व |
| ३ | १२ | गृण्हत | गृण्हीत |
| ४ | १८ | मेमय | ममेय |
| ८ | १२ | पछ | पृच्छ |
| ८ | १९ | हित्यो | हित्यु |
| १३ | ६ | पेक्षया॥ | पेक्षया |
| १६ | १२ | चा।नद् | च तद् |
| १७ | ४ | गृह | ग्रह |
| १८ | १० | मत्युप | मत्यौप |
| १९ | १५ | कामद् | काम ३ इ |
| १९ | १५ | शुश्राव | शुश्राव |
| २१ | ११ | ग्रह | गृह |
| २३ | ५ | पिरूप्या | निरूप्या |
| २५ | १५ | आद्भमक रणेतृतीय परिच्छेदे | तृतीयपरि च्छेदेश्वाद्ध मकरणे |
| २८ | ११ | संगानुशनैः | संगाच्छनैः |
| ४८ | २० | तानंकिय न्म | तान:कि यान्म |
| ५६ | ११ | पठेदिति | पठेद्विजइति |
| ५७ | १३ | श्लो०रु | श्लो०५रु |
| ६६ | १३ | वैश्ये | वैश्यस्य |
| ६७ | २१ | स्कारौ | स्कारो |
| ७० | ४ | दाय | दाया |
| ७१ | ६ | त्वाम | त्वाम्म |
| ७५ | १२ | नामिमे | ना।।इमे |
| ७८ | ११ | देननिर्दिश्य | दर्त्तिदर्श्य |
| ८३ | ४ | मुखैः | मखैः |
| ८३ | २३ | वचानात् | वचनात् |
| ८४ | ४ | भिरतो | निरतो |
| ८४ | २१ | सादिस | सादिज्ञानस |
| ९३ | १९ | वश्य | वश्यक |
| ९८ | ६ | चांद्रयण | चांद्रायण |
| १०९ | १९ | ब्रह्मावार्य | ब्रह्मावर्णा |
| ११३ | २ | मर्त्व | मत्त्वं |
| ११४ | ५ | वशिष्ठा | वसिष्ठ |
| ११४ | २३ | द्वितीया | द्वितीयरात्रे द्वितीया |
| १२० | १६ | दया | दाय |
| १३० | २१ | धर्मणा | कर्मेव |
| १३३ | २३ | वल्क्यावि का | वल्क्यो एका |
| १३४ | १६ | कल्पत् | कलनत्वात् |
| १४५ | २१ | ज्ञेय | ज्ञेये |
| १४९ | ६ | सिद्ध | प्रसिद्ध |
| १५१ | ५ | मांत | मांते |
| १५१ | १० | शक्ये | शक्या ॥ शक्येवे |
| १५७ | २१ | दाराश्च | दारांश्च |
| १५८ | २ | तात्विकं | तात्त्विकं |
| १६० | १३ | अ० | अ०१४ श्लो०२६ |
| १६३ | ७ | आज्ञाता | अज्ञाता |
| १६४ | १६ | किंचिन्ना न्यदस्ति | नान्यकिंचि चिदस्ति |
| १६४ | १९ | कुकयो | कवयो |
| १६५ | ९ | न्न तथा | न्नतथा |
| १६६ | २० | तत्व | तत्त्व |
| १६७ | १० | वेकर्मार्पणं | वेर्पणं |
| १७२ | ५ | श्रुणु | शृणु |
| १७४ | १३ | न्नागृहेभ | न्नाभ |
| १७७ | १३ | लिखितुं | लेखितुं |
| १७८ | २ | व्याघ्र | व्याघ्रव्या घ्रपाद |
| १७८ | १६ | मात्र | मातृ |
| १८४ | १० | लिखि | लेखि |
| १९० | २१ | स्यैसा | स्यैवसा |
| २०१ | ६ | संग | संघ |
| २०१ | ८ | चातुर्था | चतुर्थी |
| २०५ | १० | द्वेयु | द्वेपु |
| २०५ | १२ | श्लोय | श्लोक |
| २०७ | १७ | नियमितं | नियमितवान् |
| २०९ | ५ | नत्र | तत्र |

| पृ. | पं. | अशुद्ध. | शुद्ध. |
|---|---|---|---|
| २१० | ११ | योम्य | योग्य |
| २१२ | २२ | सत्कर्म | तत्कर्म |
| २१३ | ७ | संकीर्तन | संकीर्तित |
| २१९ | १२ | भग | भगव |
| २१९ | १६ | यथा | यथास्तितथा |
| २२४ | १३ | संपदं | संपदः |
| २३१ | ७ | भत्तयान्य | भक्तयन्य |
| २३५ | १७ | वल्क्यो | वल्क्यः |
| १३७ | १७ | कुर्मतः | कुर्वतः |
| २३८ | ७ | स्ततत्रै | स्तत्रै |
| २३९ | ५ | लभेत्त | लभेत |
| २४० | [illegible] | स्थाना | स्नापना |
| २४० | [illegible] | संमति | संमत |
| २४१ | २२ | कार | कारक |
| २५२ | ३ | पर्वेव | गाणे |
| २५३ | २ | यय | त्रय |
| २६५ | १० | परा | पारा |
| २६८ | ४ | लिख | लेख |
| २६८ | १३ | त्यय | त्यत्र |
| २६८ | २१ | सम | गीतासम |
| २६९ | २ | प्रशंस्य | प्रशस्य |
| २७२ | ७ | सर्वदा | सर्वतः |
| २७५ | १५ | अशुद्ध | अशुद्धा |
| २७५ | १८ | यत्सत्वं४ | यत्सत्त्वं४ |
| २८५ | १३ | भग | भव |
| २९५ | ३ | फलं | दुष्फलं |
| २९५ | २० | चार्या | चर्या |
| २९८ | १६ | छिधि | छिधि |
| ३०० | ४ | लिखने | लेखने |
| ३०० | १३ | लिख | लेख |
| ३०७ | ९ | शाक्तेभ्यः स्नानीये | शाक्येभ्य स्तायिने |
| ३११ | ६ | सता | सत्ता |
| ३११ | २१ | त्वतत्त्वा | स्वतत्वा |
| ३१८ | १७ | तत्रैव | तेनैव |
| ३२० | २२ | देव | दैव |
| ३२१ | ५ | मत्या | अमत्या |
| ३२२ | १५ | निर्माल्यं पद्विपं | निर्माल्येप द्विपे |
| ३२२ | २० | होच्य | ह्याप्युच्य |
| ३२३ | १० | रोधात् | रोधः |
| ३३२ | ६ | ग्रणे | ग्रहणे |
| ३३२ | २१ | दश | दशा |
| ३३३ | १९ | शीलानुभ | शीलाभ |
| ३३५ | १७ | योन | योऽनु |
| ३३६ | २२ | धोविसं | धोनेसं |
| ३४१ | १५ | मोतित्यु | मोतीत्यु |
| ३५० | ४ | भूतं | भूत |
| ३५० | ११ | सदशे | सदशे |
| ३५३ | १८ | यत्तु | यानितु |
| ३५५ | २ | वर्ति | वर्ति |
| ३५६ | ४ | कृति | कृतिः |
| ३५६ | १५ | दूर्ध्य | दूर्ध्व |
| ३५८ | १८ | मथमा | द्वितीया |
| ३५८ | १९ | त्रिशल्लक्षं | षष्टिलक्षं |
| ३६० | २ | चोऊर्ध्व | चोर्ध्वं |
| ३६२ | ८ | मद्भक्तो | मद्भक्तो |
| ३६२ | १५ | मूर्ध्न्या | मूर्ध्ना |
| ३६४ | १ | श्रुतिमसि द्धस्यच | श्रुतिमसिद्ध स्यस्मृतिम सिद्धस्यच |
| ३६४ | ९ | भरण | भरभरण |
| ३६४ | २० | व्याख्यायां | व्याख्यायां |
| ३६७ | ७ | रीणे | रंगे |
| ३६७ | १० | लिख | लेख |
| ३६७ | १२ | वाऽमामा | वाऽभा |
| ३६९ | १० | वत्सर्व | तत्सर्व |
| ३७२ | २२ | स्कद | स्कांद |
| ३७३ | २१ | मह्रा | सह्रा |
| ३७६ | २३ | वेनि | वृति |
| ३७९ | १० | येहे | येहे |
| ३८२ | ३ | भगवन् | भगवान् |
| ३८२ | ५ | सहा | संहा |
| ३८३ | १८ | मसं | मोपसं |
| ३८६ | १० | मिति | मपि |
| ३८६ | १४ | श्रयेण | श्रयणे |
| ३८८ | ४ | नेषु | नोक्तस्य |
| ३९८ | १८ | दये | दयो |

| पृ. | पं. | अशुद्ध. | शुद्ध. |
|---|---|---|---|
| ४०२ | १० | अथोह् | अथयोह् |
| ४०२ | ११ | चाचा | वाचा |
| ४०६ | २१ | अस्मानभा | अस्मानुभा |
| ४०७ | १९ | वैधत्व | वैधस्वार्चनत्व |
| ४०९ | २ | नारायणं | नारायणः |
| ४१२ | ११ | दि | दिभ्यो |
| ४१७ | ९ | मितिपुरैवोप | मित्युप |
| ४१८ | १ | क्रम्य | क्रमे |
| ४२० | १६ | न | नः |
| ४२३ | २२ | ड्या | डया |
| ४२५ | २२ | ग्रण्यः | ग्रगण्य |
| ४२६ | १६ | नाव्द्य | नाव्य |
| ४२७ | १९ | तंते | तंयेत् |
| ४३१ | १९ | फल | फला |
| ४४२ | ३ | पराशरे | पराशरेण |
| ४४४ | २१ | देव | दैवं |
| ४:५ | १ | श्रुतश्च | श्रुतेश्च |
| ४४७ | ६ | तीर | तीरे |
| ४४७ | १४ | तत्व | तत्त्व |
| ४४९ | १६ | देव | दैव |
| ४५४ | १६ | गस्त्यस्य | गस्त्य |
| ४५७ | १२ | दशा | दशो |
| ४५९ | १५ | धूप | धूपो |
| ४६१ | ११ | परा | यस्तुपरा |
| ४६२ | ८ | निर्णये | निर्णयः |
| ४६२ | १० | योग्य | योगि |
| ४६७ | ७ | आधि | अधि |
| ४६८ | १५ | रूत्वात् | रूपत्वात् |
| ४७६ | १५ | च्छति | च्छति |
| ४७७ | ४ | वासे | वादे |
| ४७८ | १० | नमसो | मनसो |
| ४७९ | ४ | येते | येतत्र |
| ४७९ | ५ | अयुक्ताः | आयुक्ताः |
| ४८२ | ७ | र्माण | मणी |
| ४८२ | १८ | रितैर | रितरे |

गुरोरवसराभावात्सकृद्दृष्टाऽऽद्यपुस्तकं ॥ शुद्धिपत्रंयथाबुद्धि च्छात्रोस्यात्रेयगोत्रजः ॥ १ ॥ गोपीनाथसुतोकार्पीद्देवकीनंदना भिधः ॥ त्वरायाःपूर्वपुस्तस्यमद्दृद्धेर्वापिदोषतः ॥२ ॥ यद्वृथाशोधि तंशुद्धमशुद्धंवानशोधितं ॥ क्षमंतांतत्सहृदयाःसदयागुणदर्शिनः॥ ॥ ३ ॥ तस्यकवेर्श्वेमेसंतिप्रार्थनाश्लोकाः ॥ वेदानुयायिविदुषःपर भक्तिनिष्ठान्विज्ञापयामिचरणौपरिगृह्यनम्रः ॥ उद्यद्दयागुणदृशो न्यपरिश्रमज्ञाअस्मिन्प्रमादशतकानिममक्षमध्वं ॥ ४ ॥ अंधोस्म्य हंनिजकरेणनलेखशक्तस्तल्लेखितंनिखिलमेवकरैःपरेषां ॥ भ्रांत्या दयोजगतिमानुषबुद्धिधर्माःसर्वांशतोनपरिहर्तुमिमेचशक्याः ॥ ५॥ प्रच्छकंप्रतिचेदमन्यदपिवदामः ॥ भ्रातःशुश्रूषुपकृतंभवतावनादःस्म त्यादयःस्मृतिपथंयदिमेपुनर्मे ॥ प्रश्नच्छलेनगमिताअमितानुरक्तिः स्वल्पाक्षरैःपरमयुक्तिभरैरकारि ॥ ६ ॥ तत्त्वप्रबोधनपटुर्घटनासुसं विद्वैशयदाप्युभयवादिविनोदहेतुः ॥ प्रश्नप्रवृत्तिरुचितैवविदामुदा रापृच्छेत्किमेवकिमुचोत्तरयेदविद्वान् ॥ ७ ॥ धर्माधर्मपरीक्षणेक्षण मपिक्ष्मेशानदत्तेक्षणास्तेनालस्यमुपेत्यभूमिवलयेवाचंयमाःसूरयः॥ भूयस्तान्व्यवसायिनोविरचयन्नृत्वानगीटागमान्नानाप्रश्नमिषेण जीवतुसदाश्रीरामसिंहोनृपः ॥ ८ ॥